॥ श्रीः ॥

# श्रीमद्विष्णुपुराणम् ।




## पूर्वभागः ।

द्वैताद्वैतविशिष्टाद्वैतपरैः पञ्चभिर्व्याख्यानरत्नैः समलङ्कृतः ।

### प्रथमांशः १.

श्रीकुम्भघोणनगरनिवासिना श्रीवेङ्कटेशभवनपुस्तकालयाधिपतिना
पूर्वंमहाभारतरामायणाद्यनेकग्रन्थानां प्रकाशकर्त्रा

**टी. आर्. व्यासाचार्येण**

अनेकेषां विदुषां साहाय्येन नानादेशोपलब्धपूर्वकोशानुसारेण
संशोध्य

मुम्बापुर्यां
तुकाराम जावजी इत्येतेषां सुप्रसिद्ध "निर्णयसागर" मुद्रणयन्त्रे
मुद्रयित्वा प्रकाशितम् ।

शाके १८३६ आनन्दनामसंवत्सरे ।

# अथ श्रीमत्पाराशर्योपपुराणोक्तश्रीमद्विष्णुपुराणमहिमासारः ॥

श्रीवेदव्यासाय नमः ॥

अथैकदा ते मुनयः प्रातर्हुतहुताशनाः ।
पराशरं मुनिवरं पप्रच्छुः प्रणता मुदा ॥ १ ॥

मुनय ऊचुः ॥

भगवन्भवतः श्रुत्वा श्रीरामायणवैभवम् ।
विभागं च पुराणानां धन्याः स्मो मुनिसत्तम ॥२॥
सात्त्विकानि पुराणानि यान्युक्तानि त्वया मुने ।
कतमत्तेष्वपि श्रेयस्तच्च श्राव्यं कथं भवेत् ॥ ३ ॥
कथनाराधनं तस्य का वृत्तिस्तत्प्रवक्तरि ।
उपक्रमे कथान्तेऽस्य किं कार्यं श्रोतृभिर्मुने ॥ ४ ॥
एतत्सर्वमशेषेण शुश्रूषूणां वद प्रभो ॥ ५ ॥

श्रीपराशर उवाच ॥

साधु पृष्टं महाभागाः श्रूयतां यद्ब्रवीमि वः ।
सात्त्विकानि पुराणानि श्रेयांसि निखिलान्यपि ।
तत्र भागवतं श्रेष्ठं ततो वैष्णवमुत्तमम् ॥ ६ ॥
पुराणमेतत्सदृशं नह्यन्यदुपपद्यते ।
आदौ मध्ये तथाऽन्ते च गीयतेऽत्र हरिर्मुहुः ॥ ७ ॥
तावत्पुराणर... अन्ये भान्ति ततस्ततः ।
यावच्छ्रीवैष्णवाभिख्यपुराणार्को न दृश्यते ॥ ८ ॥
भान्त्यत्र व्यापका मन्त्रास्तदर्थाश्च पदेपदे ।
तस्मान्मुमुक्षुभिः सर्वैः श्रोतव्यमिदमादरात् ॥ ९ ॥
व्यापको वैष्णवो मन्त्रो यस्तु ख्यातः षडक्षरः ।
भूयसा तद्विवरणं पुराणं वैष्णवं विदुः ॥ १० ॥
षडक्षरस्वरूपास्ते ये षडंशाः प्रकीर्तिताः ।
षडङ्गयोगतुल्यानां प्रयच्छन्ति गतिं नृणाम् ॥ ११ ॥
वर्णद्वैगुण्यतोऽर्थैश्च द्वादशाक्षरसंज्ञकः ।
मन्त्रस्तु वासुदेवस्य षड्वर्णविवृतिर्भवेत् ॥ १२ ॥
द्वादशाक्षरमन्त्रस्याप्ययमर्थोऽस्मिन्विवृतो मुहुः ।
यस्य ज्ञानात्करस्थं स्यात्तद्विष्णोः परमं पदम् ॥१३॥
अत्रार्थपञ्चकं स्पष्टं तत्रतत्र समीरितम् ।
तदेतद्भगवत्प्रातिकामैस्सेव्यमिहादरात् ॥ १४ ॥

आदौ श्रीविष्णुमाराध्य शुचिर्नियतमानसः ।
शृणुयान्नियमात्प्रोक्तमाचार्येण महर्षयः ॥ १५ ॥
नाल्पेन तपसा लभ्यं पुराणमिदमुत्तमम् ।
अथैतदुपदेष्टाऽपि नाल्पपुण्येन लभ्यते ॥ १६ ॥
श्रोतुमेतत्पुराणं च बहुजन्मतपःफलम् ।
प्रायेण मन्दभाग्यानामुत्कण्ठाऽपि न जायते ॥१७॥
लब्ध्वा मानुष्यकं जन्म शृणुयाद्यो न वैष्णवम् ।
मन्दभाग्यः कथं सोऽपि पदमाप्नोति वैष्णवम् ॥१८॥
यस्य स्याच्चरमं जन्म भगवद्भक्तिशालिनः ।
तस्य श्रुतिपथं याति पुराणं वैष्णवं परम् ॥१९॥
भोग्यं तदेतद्भक्तानां प्रपन्नानां रसायनम् ।
तैरेतदादरात्पेयं वैलभ्यं वैष्णवं पदम् ॥ २० ॥
पुराणं वैष्णवं सर्वैः सर्वत्राख्यायते नृभिः ।
तत्त्वयाथात्म्यवेदासिन्दुर्लभास्त्विमेवीम्यहम् ॥ २१ ॥
वरदानाद्वसिष्ठस्य देवतापारमार्थ्यवित् ।
मैत्रेयायान्वकथयं तदेतदहमादरात् ॥ २२ ॥
वैष्णवस्य पुराणस्य तत्त्वं वेद्म्यहमेव हि ।
मैत्रेयश्च तथा व्यासो भुवनेऽन्योऽस्ति वा न वा २३
यो वदेद्वैष्णवं विद्वान्सोऽहमेव न संशयः ।
शृणुयाद्यः पुमांल्लोके स मैत्रेयो न संशयः ॥२४॥
इदं ये शृणुयुर्भक्त्या नारायणपरायणाः ।
स्त्रियो वैश्याश्च शूद्राश्च सर्वे यान्ति परां गतिं ॥२५॥
न सेतुर्न गया गङ्गा न काशी न च पुष्करम् ।
अर्हन्ति वैष्णवस्यास्य कलां कोटितमामपि ॥ २६ ॥
एकत्र यज्ञांस्तीर्थानि पुराणमिदमेकतः ।
विन्यस्य तुलितं देवैः पुराणं गुरुतामगात् ॥ २७ ॥
सर्वव्यापकमन्त्रार्थयाथात्म्यपरिपोषणम् ।
केदं पुराणममलं केष्टापूर्तादिकं फलम् ॥ २८ ॥
यज्ञान्सहस्रं कुर्याद्वा पर्यटेद्वा धरातलम् ।
तीर्थेषु विनिमज्जेद्वा ज्ञानं त्वेतत्सुदुर्लभम् ॥ २९ ॥
वसन्ति मत्स्यास्तीर्थेषु दिव्यक्षेत्रेषु पक्षिणः ।

विना ज्ञानेन कां सिद्धिं गता भुवि तपोधनाः ॥३०॥
तस्मादार्जयितुं ज्ञानं शुद्धं वैष्णवमुत्तमम् ।
इतिहासपुराणानि सदा श्राव्याणि मानवैः ॥ ३१ ॥
इतिहासपुराणानां तत्त्वं नारायणः परः ।
यैर्न ज्ञातो मन्दभाग्यैः पशुप्राया हि ते मताः ॥३२॥
तेषां दानानि सर्वाणि यज्ञाः सर्वे तपांसि च ।
तीर्थाटनं च पूर्ताश्च निष्फलानि न संशयः ॥ ३३ ॥
दानयज्ञादिकं सर्वं यत्कृतं ज्ञानपूर्वकम् ।
तद्धि वीर्यसमं प्रोक्तं सर्ववेदैः पुनः पुनः ॥ ३४ ॥
किमत्र बहुनोक्तेन पुराणस्यास्य वैभवम् ।
नारायणः परं ब्रह्म यः स शक्नोत्युदीरितुम् ॥३५॥
पुराणं वैष्णवादन्यन्महन्नामास्ति किञ्च न ।
न विष्णोः परमं दैवं लोके वेदे च दृश्यते ॥३६॥
इत्येतत्सर्वमुद्दिष्टं यत्पृष्टं भगवत्तमैः ।
अत्र निःसंशयैर्भाव्यं किमन्यच्छ्रोतुमिच्छथ ॥३७॥
इति किल परमार्थतो मयोक्तं
वितनुत जात्विह नार्थवादबुद्धिम् ।
प्रभवति महिमा परोऽस्य यावा-
न्प्रणिगदितुं न तु शक्यते हि तावान् ॥३८॥

इति श्रीमत्पाराशर्योपपुराणोक्तश्रीमद्विष्णुपुराणमहिमासारः समाप्तः ॥

श्रीवेदव्यासाय नमः । श्रीकृष्णार्पणमस्तु ॥


ब्रह्मा
श्रीशेषशायी
श्रीलक्ष्मी।
नारद।
सनकादय।
ध्रुव।

श्रीः ।

# श्रीमद्विष्णुपुराणम् ।

## पूर्वभागः ।

### मतत्रयव्याख्यानरत्नसमलंकृतः ।

### प्रथमांशः १ ।

श्रीवेदव्यासाय नमः ॥

जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ॥
यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥ १ ॥

### प्रथमोऽध्यायः ॥ १ ॥

आदौ मङ्गलाचरणम् ॥ १ ॥ पराशरेण मैत्रेयं निमित्तीकृत्य विष्णुतत्त्वप्रतिपादकस्य विष्णुपुराणस्य कथनोपक्रमः ॥ २ ॥ पराशरमति मैत्रेयकृताः "जगद्यथाबभूव" इत्यादिद्वादशविंशतिप्रश्नाः ॥ ३ ॥ मैत्रेयप्रश्नानां प्रतिवचने स्वस्वसामर्थ्यमस्तीति पूर्वं स्वेनारब्धरक्षोविनाशकरसत्रे पुलस्त्यवसिष्ठप्रसादप्राप्तस्मृतिप्रकारकथनम् ॥ ४ ॥ सर्वप्रश्नोत्तरतया "विष्णोस्सकाशात्" इत्यनेन श्लोकेन सङ्क्षेपतः पुराणार्थकथनं च ॥ ५ ॥

---

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । | नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ १ ॥

---

*चित्सुखीयम् ।

अथ श्रीमच्चित्सुखीयव्याख्या—यत्साक्षात्सच्चिदानन्दं प्रत्यगनित्यमद्वयम् ॥ तन्नमामि नृसिंहस्य योगिगम्यं परं पदम् ॥ १ ॥ ज्योतिर्दक्षिणामूर्तिं व्यासशङ्करशब्दितं ॥ ज्ञानोत्तमाख्यं तं वन्दे

श्रीधरीयम् ।

अथात्मप्रकाशाख्यश्रीश्रीधरीयव्याख्या—सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ॥ नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥ श्रीबिन्दुमाधवं वन्दे परमानन्दविग्रहं ॥ (वाचं विश्वेश्वरं गङ्गां)

विष्णुचित्तीयम् ।

अथ श्रीविष्णुचित्तीयव्याख्या—यस्मादिदं जगदजायत यत्र तिष्ठत्यन्ते समस्तमिदमस्तमुपैति यत्र ॥ तस्मै नमस्सदसदादिविकल्पशून्यचैतन्यमात्रवपुषे पुरुषोत्तमाय ॥ १ ॥ विश्वेश्वं विदुषामि-

दत्तात्रेयीयम् ।

अथ सुबोधिन्याख्यश्रीदत्तात्रेयीयव्याख्या—श्रियःपतिं पूर्णगुणैकसारं भक्तेष्टदं भक्तभवापहं प्रभुं ॥ अजादिसंसेवितपादपल्लवं वन्दे मुकुन्दं मरुदंशवल्लभं ॥ १ ॥ सदागमाम्भोरुहकोरकाणां यदु-

रत्नगर्भीयम् ।

अथ श्रीरत्नगर्भीयव्याख्यासारः—स जयति निरुपमबोधः श्रीधरकारुण्यपूर्णेन्दुः । विलसति यदुदयवर्धितधीवार्धौ तत्त्वरत्नश्रीः ॥ १ ॥ जयति श्रुतिकावेर्यां वाक्यश्रीरङ्गभासितं(मह) । विधान-

---

* एतेषु चित्सुखीयादिषड्व्याख्यानेषु चित्सुखीय—श्रीधरीय—रत्नगर्भीयव्याख्यानानि अद्वैतमतानुयायीनि । विष्णुचित्तीयं विशिष्टाद्वैतपरम् । दत्तात्रेयीयं द्वैत( माध्व )मतानुसारि व्याख्यानमिति च बोध्यम् ।

[पा०] १ 'जितते' इत्यारभ्यचत्वारः श्लोका ज. झ ट. ठ ड. चिह्नितपुस्तकेषु आदिमश्लोकतया वर्तन्ते । क. ख., ग. घ. ङ, च. छ च कोशेषु 'पराशरंमुनिवरं' इतिप्रथमश्लोकमारभ्यैव उपक्रमो दृश्यते.

चित्सुखीयम् ।

सत्यानन्दपदोदितम् ॥ २ ॥ प्रणिपत्य पुरा पराशरं निखिलज्ञानमयं मुनीश्वरम् ॥ गुरुमाराध्य च चि-

श्रीधरीयम् ।

तथापुराणतत्त्वज्ञान्पराशरमुखान्मुनीन् ॥ २ ॥ श्रीमच्चित्सुखयोगिमुख्यरचितव्याख्यां निरीक्ष्य स्फुटं तन्मार्गेण सुबोधसङ्ग्रहवतीमात्मप्रकाशाभिधाम् ॥ श्रीमद्विष्णुपुराणसारविवृतिं कर्ता यतिः श्रीधरस्वामी सद्गुरुपादपद्ममधुपः साधुस्वधीशुद्धये(स्वसंसिद्धये) ॥ ३ ॥ श्रीमद्विष्णुपुराणस्य व्याख्या:(ख्यां) स्वल्पातिविस्तरा:(रां) ॥ प्राचामालोच्य(क्य) तद्व्याख्या मध्यमेयं विरच्यते (विधीयते) ॥४॥ अस्मिन् विवक्षितं यत्तु वस्तु तद्ब्रह्मनात्मकं ॥ मुनिर्भक्त्योपनिषदा कृत्वं बध्नाति मङ्गलं ॥ ५ ॥ जितंत्वइति । तत्रांशे प्रथमेऽध्याये मैत्रेयेण पराशरे । प्रवृत्त्यर्थं पुराणस्य प्रश्ना द्वाविंशतिः कृताः ॥ इह खलु पुराणानां ईश्वरनिश्वसितस्वरूपत्वेन वेदमूलत्वेन इदानीन्तनानां व्यासवसिष्ठपराशरादीनां स्मृतिरूपत्वेन च प्रमाणत्वं प्रयोजनवत्त्वंच दुरपह्नवमेव । तथाप्यज्ञानां च तत्तदर्थाभासनिरासतत्त्वार्थप्रकाशकत्वपरत्वेन प्रयोजनवत्त्वं पुराणत्वाविशेषेऽपि उपाख्यानलघुत्वेन जगज्जीवात्मपरमात्मनामैकात्म्यप्रतिपादनात्यासवशादस्मिन्नेव पुराणे मुमुक्षूणां प्रवृत्तिरुचितवमेत्येतदेव व्याख्यायते । तत्र च सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितानां तदपवादेन मुक्तेश्च प्रतिपादनं । सदाचारभूगोलभरतोपाख्यानादिनिरूपणस्य साक्षात् परंपरया वा मुक्तावेवोपयोगो द्रष्टव्यः । पुण्डरीकाक्षेति हृदयाख्यं पुण्डरीकं अश्नुते व्याप्नोतीति तथा । यद्वा पुण्डरीके इव अक्षिणी यस्येति । अत्र श्वेतत्वमविवक्षितं लोहितत्वेनैव सयनोत्कर्षात् । शिवाराधनार्थं पुण्डरीकीकृतमक्षि येनेतिवा । "पुण्डरीकं परं धाम अक्षमव्ययमुच्यते"—इत्यादिश्लोकोक्तव्युत्पत्त्या पुण्डरीकाक्षेति संबोधनमितिवा । ते इति संबन्धे षष्ठी । तव जितं जयोऽस्त्वित्यर्थः । यद्वा ते त्वया जितं सर्वोत्कर्षेण स्थितमिति । एतेन नमस्कार आक्षिप्तः । विश्वभावन विश्वोत्पादक । हृषीकाणामिन्द्रियाणामीश तत्प्रवृत्तिनिवृत्तिहेतुत्वात् । "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः" इतिश्रुतेः । महापुरुषेति जीवव्यवच्छेदाय । महत्त्वंच "द्वासुपर्णासयुजासखाया" इत्यादिश्रुतेः । नित्यमुक्तस्वभावत्वाच्च । पुरि शरीरे शयनात्पुरुषत्वं । विश्वोत्पादकत्वे हेतुः पूर्वजेति । सृष्टेः पूर्वमेव स्वतः प्रादुर्भूतत्वेनानन्यथासिद्धत्वेनान्येषां तदधीनत्वात् । नन्वेकस्मादेव नमस्कारान्मङ्गलसिद्धौ कृतं बहुभिर्नमस्कारैरितिचेन्न । अस्य शास्त्रस्यातिश्रेयःसाधनत्वेन बहुविघ्नसंभावनया मङ्गलबाहुल्यस्यावश्यकत्वात् । अथवा पुण्डरीकाक्षत्वादिपञ्चविशेषणैः "भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः" इतिपञ्चमांशोक्तपञ्चात्मा हरिरीरितइति । तत्र पुण्डरीकाक्षेति भूतात्मा । विश्वभावनेति प्रधानात्मा । हृषीकेशेति इन्द्रियात्मा । महापुरुषेति परमात्मा । पूर्वजेत्यात्माभिहितः ॥ १ ॥ ओतुमप्रस्य[illegible]-

विष्णुचित्तीयम् ।

ष्टदायिने तार्क्ष्यवाधिने ॥ नमस्तुरङ्गतुण्डाय स्वात्मने जगदात्मने ॥ २ ॥ अंशैष्षड्भिस्समाकीर्णमद्वैदंगिवापरम् ॥ पुराणं वैष्णवं चक्रे यस्तं वन्दे पराशरम् ॥ ३ ॥ तत्त्वेन यश्चिदचिदीश्वरतत्स्वभा-

रत्नगर्भीयम् ।

स्वयो भानुकरा विकासे ॥ तं पूर्णबोधं भुवनैकबन्धुं वन्दे गुरुं बुद्धिविकासनाय ॥ २ ॥ अद्वैतसि-

मध्वार्थसिद्धान्तमहीभवासी ॥ वेदान्तनिर्णीतगुणानुवादसिद्ध्वनिः पातु जयार्य-

रत्नगर्भीयम् ।

सचित्सुखस्संज्ञं निजं(द्वि)गदः ॥ २ ॥ श्रीश्रीनिदानं गुणवत्तराजितं पराशरज्ञानसुधांबुधिं

यदक्षरं ब्रह्म य ईश्वरः पुमा-
न्गुणोर्मिसृष्टिस्थितिकालसंलयः ।
प्रधानबुद्ध्यादिजगत्प्रपञ्चसूः
स नोऽस्तु विष्णुर्मतिभूतिमुक्तिदः ॥ २ ॥

प्रणम्य विष्णुं विश्वेशं ब्रह्मादीन्प्रणिपत्य च ।
गुरुं प्रणम्य वक्ष्यामि पुराणं वेदसम्मितम् ॥३॥
इतिहासपुराणज्ञं वेदवेदाङ्गपारगम् ।
धर्मशास्त्रादितत्त्वज्ञं वसिष्ठतनयात्मजम् ॥ ४ ॥

विष्णुचित्तीयम् ।

सुधो मुनिः कुरुते विष्णुपुराणटिप्पणम् ॥ ३ ॥ वेदसम्मितं वेदेन तुलितं तदेकार्थत्वात् ॥ ३ ॥

श्रीधरीयम् ।

संबन्धं प्रयोजनंच प्रतिपादयितुमाह—सदक्षरमिति । सोऽतिप्रसिद्धो विष्णुर्व्यापनशीलो देशकाल-स्वरूपतो व्यवच्छेदाभावात् । विशतेर्वा विष्णुः प्रवेशनशीलः "तत्सृष्ट्वा तदेवानुप्राविशत्"इतिश्रुतेः । मतिभूतिमुक्तिदोऽस्तु मतिभूत्या तत्त्वज्ञानोद्रेकेण मुक्तिदः । यद्वा अधिकारिभेदात् । मतिं उत्तमां बुद्धिं भूतिं ऐश्वर्यं मुक्तिंच ददातीति तथा । विष्णुपदस्य प्रवेशनशीलार्थत्वे मूर्तत्वं प्राप्तं निराक-रोति—ब्रह्मेति । पूर्णमित्यर्थः । तदपि कुत इत्यत आह । सत् सर्वानुस्यूतं । इदंसदिदंसदिति सर्वत्र प्रतीयमानत्वात् । अनष्टमितियावत् । अक्षरमिति । विकारं निराकरोति । पुमान् कूटस्थः । कुतस्त-र्हि सत्वादिमत्त्वमतआह—ईश्वरइति । ईश्वरः कर्तुमकर्तुमन्यथाकर्तुं समर्थः । तदपि कुत इत्यत आह—गुणेति । गुणाः सत्वरजस्तमांसि तेषामूर्मयः क्षोभजनिताः सृष्टिस्थितिकालाः कालः संहारः तेषां संलयः संश्लेषोऽध्यासो यस्मिन्स तथा । सर्वाधिष्ठानत्वेन ईश्वरत्वमनपाकृतमित्यर्थः । ननुप्रधा-नादेव सृष्ट्यादि इति चेदतआह । प्रधानबुद्ध्यादीनां जगत्प्रपञ्चानां सूः सविता प्रधानस्यानादितया कथं तज्जनकत्वमितिचेत्त । प्रलये तस्याकिंचित्करत्वेन शक्त्यर्पणद्वारा जननोपचारात् । यद्वा प्रधा-नद्वारा बुद्ध्यादिसूरित्यर्थः । यद्वा यो विष्णुर्वेदान्तिनां सदक्षरं ब्रह्म । पातञ्जलानां क्लेशकर्मविपाकाश-यैरपरामृष्ट ईश्वरः । सांख्यानां पुमान्पुरुषः । तदुक्तं कापिलैः "नप्रकृतिर्नविकृतिः पुरुष" इति । स मतिभूतिमुक्तिदोऽस्त्वित्यन्वयः । शेषं समानं ॥ २ ॥ अथ पराशरो मुनिः गुर्वादिभक्तिं पुरुषार्थ-साधनं दर्शयन् मैत्रेयं निमित्तीकृत्य विष्णुतत्त्वप्रतिपादकं विष्णुपुराणमारभते—प्रणम्येति । प्रशब्देन भक्तिश्रद्धातिशयो द्योत्यते । विश्वेषां ब्रह्मादिस्तंबपर्यन्तानामीशं प्रवृत्तिनिवृत्तिकारणं । प्रकृतशास्त्रे संप्रदायप्रवर्तकान्प्रणमति—ब्रह्मादीनिति । ब्रह्मऋभुदक्षपुरुकुत्ससारस्वतप्रभृतीन् । गुरुं कपिलं सार-स्वतं वा । पुराणं सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितमिति पञ्चाङ्गं । तत्रयथाक्रमं प्रथमांशे सर्गप्रति-सर्गौ । द्वितीये प्रसङ्गागतं भूगोलज्योतिश्चक्रं । तृतीये मन्वन्तरं । चतुर्थे वंशः । पञ्चमे वंशानुच-रितं । षष्ठे वैराग्योपयोगिप्रलयादिकमभिधाय आत्यन्तिकप्रलयरूपमोक्षः कथ्यते । स्तौति वेदेन संमितं तुल्यमिति ॥ ३ ॥ इतिहासेत्यत्र शिष्यप्रश्नएव पुराणप्रवृत्तिहेतुरितिभावः । इतिहेत्यव्ययं पारंपर्योपदेशाभिधायि । तस्यासनं आसः अवस्थानमेतेष्विति इतिहासाः पुरावृत्तानि । "धर्मार्थ-

विष्णुचित्तीयम् ।

प्रभोगापवर्गतदुपायगतीरुदारः ॥ सन्दर्शयन्निदमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय

दत्तात्रेयीयम् ।

सिद्धः ॥ ३ ॥ रमारमणमानम्य पूर्णबोधान्गुरूनपि ॥ व्याख्यां विष्णुपुराणस्य यथामति करोम्यहं

रत्नगर्भीयम् ।

भजे । हृद्यो हरेर्विष्णुपुराणकौस्तुभो यस्मादभूद्व्यासपितामह विश्वदृक् ॥ ३ ॥ श्रीमद्विष्णुपुराणस्

[पा०] १ शास्त्रार्थतत्त्वज्ञ श्रीध० पा०.

पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम् । मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च ॥ ५ ॥

चित्सुखीयम् ।

प्रणिपातो दण्डप्रणामः । अभिवादनं शिष्टाचारप्रसिद्धं ॥ ५ ॥ वेदाध्ययनमधिगतं शास्त्रमितिहासवत्

श्रीधरीयम् ।

कामस्य मोक्षाणामुपदेशसमन्वितं । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते"इतिस्मृतेः । वेदवेदाङ्गपारगं वेदस्य तदङ्गानां शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषां च पारगं । धर्मशास्त्रं स्मृतिः । आदिशब्दो न्यायमीमांसादिसङ्ग्रहार्थः । धर्मशास्त्रार्थैरिति वा पाठः । वसिष्ठतनयः शक्तिः तस्यात्मजं पुत्रं ॥ ४ ॥ अथ भगवान्पराशरमुनीश्वरो मैत्रेयं निमित्तीकृत्य श्रीविष्णुतत्त्वप्रतिपादकं पुराणमारभते—पराशरमित्यादिना । स्वस्मिन्नेव परोक्षनिर्देशो लोकोक्त्या देहाद्यनहङ्कारद्योतनार्थम् । प्रणिपत्य दण्डवत्प्र-

विष्णुचित्तीयम् ।

॥ ४ ॥ श्रीविष्णुचित्तपदपङ्कजसङ्गमाय चेतो मम स्पृहयते किमतः परेण ॥ नोचेन्ममापि यतिशेखरभारतीनां भावः कथं भवितुमर्हति वाग्विधेयः ॥ ५ ॥ ॥ अथ भगवान् पराशरः श्रीमैत्रेयाय लोकहितार्थं श्रीविष्णुपुराणं प्रणेष्यन् प्रणिपातादिभिरुपसन्नाय सच्छिष्याय सदाचारवता वसिष्ठेन गुरुणा स्वधर्मानुष्ठानाविरुद्धे मनःप्रसादकरसमये पुराणं व्याख्येयमिति शास्त्रदर्शनात् पुराणप्रस्तावकं तत्प्रश्नं निरूपयति—पराशरमिति श्लोकेन । परान् बाह्यकुदृष्टीन् सम्यक्प्रमाणतर्कैराशृणाति इति पराशरः । तं मुनिवरं सम्यग्ज्ञानवन्तं । कृतपौर्वाह्णिकक्रियं भगवत्समाराधनादिना विशेषतो विमलमनसं । पूर्वाह्णनिर्देशेन चित्तस्य सत्त्वोद्रेको दर्शितः । परिपप्रच्छ परितः पप्रच्छ पुराणा-

वृत्तान्तेयम् ।

॥ ४ ॥ इह खलु जगति नानाविधव्यसनसागरनिमग्नजनानुकम्पया ब्रह्मरुद्रादिभिरर्थितो नारायणः स्वयं व्यासत्वेनावतीर्यैष्टानिष्टप्राप्तिपरिहारोपायमविदुषां तदुपायप्रदर्शनार्थं श्रीविष्णुपुराणं चकार । उपायं च माहात्म्यसाध्यायिकयाप्रतिपादयितुं पराशरमैत्रेयसंवादलक्षणामाख्यायिकामुक्तोपायं विनाऽन्योपायो नास्तीति भक्तिलक्षणे महतां तात्पर्यप्रदर्शनार्थं तत्र श्रद्धातिशयजननार्थं चाह—पराशरमित्यादिना । तदुक्तं पद्मपुराणे "आख्यायिकाः प्रदर्श्यन्ते सर्ववेदेषु सर्वशः । बोधयन्त्यस्तु महतां तात्पर्यं यत्र तत्र हि । अलाभः पुरुषार्थस्य मोक्षधर्मस्मृते स्थिति । बोधनाय महाराज भक्त्याद्युक्तधर्मेषु"इति । अत्र केचिद्विष्णुपुराणं पराशरकृतं "पुराणसंहिताकर्ता भवान्वत्स भविष्यति" इत्युपर्य्यं वक्ष्यमाणवचनादिति वदन्ति । तदविचारितरमणीयं । "अष्टादशपुराणानां कर्ता सत्यवतीसुतः" । इतिप्रमाणविरोधात् । विष्णुपुराणस्य च "वैष्णवं नारदीयं च"इत्यादिप्रमाणेन अष्टादशपुराणान्तर्गतत्वोक्तेः । न च "मात्स्यं चतुःसहस्राणि पाद्मं चैकोनषष्टि च । श्रीवैष्णवं त्रयोविंशत्"इत्यादि प्रमाणेन अष्टादशपुराणानां सङ्ख्याकथनप्रसङ्गे विष्णुपुराणस्य त्रयोविंशतिसहस्रसङ्ख्यावत्त्वोक्तेः पठ्यमानस्य षट्सहस्रत्वाभेदं व्यासकृतमिति वाच्यं । कलौ प्रायशः पुराणानां सारतरांशमायुरादीनामल्पत्वात् पराशरमैत्रेयसंवादमारभ्यैव विष्णुपुराणस्य लोके प्रवृत्त्युपपत्तेः । पठ्यमानविष्णुपुराणस्य पराशरकृतत्वे "कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः । पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ।" दैत्योक्तं

रत्नगर्भीयम् ।

प्राग्व्याख्याःप्रेक्ष्य योगिनीः । विधीयते स्वधीशुद्ध्यै व्याख्येयं विष्णुवल्लभा ॥ ४ ॥ जितमिति ॥१॥ मैत्रेयः मित्रयुनाम्नो मुनेः पुत्रः । अभिवाद्य "सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः"इत्या-

[पा०] १ ज. ट. पराशरं सुखासीनं ऋषिं मुनिवरोत्तमं.

| | |
|---|---|
| त्वत्तो हि वेदाध्ययनमधीतमखिलं गुरो । | त्वत्प्रसादान्मुनिश्रेष्ठ मामन्ये नाकृतश्रमम् । |
| धर्मशास्त्राणि सर्वाणि तथाङ्गानि यथाक्रमम् ६ | वक्ष्यन्ति सर्वशास्त्रेषु प्रायशो [3]ऽपि विद्विषः ७ |

चित्सुखीयम् ।

॥६॥ येऽप्यन्ये विद्विषस्तेऽपि सर्वशास्त्रेषु कृतश्रमं मां वक्ष्यन्तीत्यन्वयः ॥ ७॥ यत्प्रमाणानि यावत्सं-

श्रीधरीयम् ।

ख्य । पादग्रहणादिविधिना अभिवाद्य च ॥५॥ बुभुत्सितमर्थं प्रष्टुं तत्कृतमनुग्रहमनुवदति–त्वत्त इति द्वाभ्याम् । स्वराइति । त्वत्तो वेदाध्ययनमधीतं कृतमित्यर्थः । ओदनपाकंपचतीतिवत् ॥ ६ ॥ त्वत्प्रसादा-

विष्णुचित्तीयम् ।

र्थमिति शेषः । कात्स्न्र्येन अर्थविशेषानभिनिवेशेन सामान्यतो यन्मयमित्यादिवक्ष्यमाणप्रकारेण, अतः प्रश्नानुरूपेण प्रतिवचनमपि न कचिद्ग्रामहेण कृतं तेनास्य पुराणस्य लेशादपि न कचित्पक्षपातित्वम् ॥ ५ ॥ अथ मैत्रेयश्चतुर्दशविद्याविभूषितपुराणाधिगमे त्रयोदशविद्यास्थानाधिगमलक्षणस्यात्मनोऽधिकारस्य तत्प्रसादलब्धत्वानुवादेन गुरुं स्तुवन्पुराणप्रवचने प्रोत्साहयति—त्वत्तो हीतिद्वयेन । खिलं प्रवृत्तं अनाम्नातं परिशिष्टाख्यं श्रीसूक्तादिकं तदखिलमाम्नातमेव यथास्यात्तथा वेदाध्ययनम् अधीतम् अधिगतं प्राप्तम् । खिलभागस्याप्यध्ययनं त्वत्त एव प्राप्तमित्यर्थः । यद्वा अखिलं कृत्स्नं यथाक्रमं स्वशाखाध्ययनपूर्वकमृगादिक्रमानतिक्रमेण "अतः पूर्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । कृष्णपक्षे तथाङ्गानि मासान्विप्रोऽर्धपञ्चमान्" इत्याद्युक्तक्रमानतिक्रमेण च ॥ ६ ॥ त्वत्प्रसा-

वृत्तत्रेधीयम् ।

पुरुकुत्साय भूभुजे नर्मदातटे । सारस्वताय तेनापि मम सारस्वतेन च" । इत्युक्तदिश पराशरेणैव विष्णुपुराणं मम संप्रदायपरंपराप्राप्तमित्युक्तत्वेन तद्विरोधात् । अग्निमाण्यायेऽपि विष्णुपुराणश्रवणादिफलमुक्त्वा तस्य प्रामाण्यसिद्ध्यर्थं सत्संप्रदायपरंपरया लोके प्रवृत्तमिति "इदमार्षंपुराणाद्य" इत्यादिनोच्यते । तद्विरोधाच्च । तत्रार्षमित्युक्त्या व्यासकृतत्वमेवावसेयं । अन्यथा पराशरस्य संभावितदोषत्वेन तन्मूलत्वोत्पाऽन्धपरंपरात्वशङ्काया अनिस्तारात् । वेदव्यासस्य भगवदवतारत्वेन निर्दोषत्वस्य निश्चितत्वेन तन्मूलत्वोत्पत्याशङ्काया निवृत्तेः । "पुराणसंहिताकर्ता भवान्वत्स भविष्यति" । इति वचनं तु पराशरस्य पुराणप्रवर्तकत्वेनैवोपपन्नं । अस्ति च तद्दृष्टेऽपि तत्कर्तृत्वव्यवहारः पुराणे । तथाचोक्तं भागवते "प्रियव्रतकृतं कर्म कोनु कुर्याद्विनेश्वरं । योनेमिनिम्नैरकरोच्छायांघ्नन्सप्तवारिधीन्" इति । नच प्रियव्रतस्य तत्र कर्तृत्वमेव मुख्यमिति वाच्यं । पद्मकल्पएव चतुर्मुखेन समुद्रादिसृष्टेः । अन्यथा "पूर्वसिद्धान् रथाङ्गया स्थूलांश्चक्रे प्रियव्रतः । समुद्रांस्तेन तत्कर्तृत्वात्तद्वेलं प्रियव्रतम्" इति गारुडपुराणविरोधादित्यलं । पराशरोऽमृतकल्पस्य वसिष्ठस्याशरोऽर्दिसनं मरणान्निवृत्तिर्यस्मात्तं पराशरं । परान्नपूर्वस्य शृणाते रूपं । पुराखलु पुत्रशोकाकुलितो वसिष्ठो गर्भस्थपुत्रः पराशरं गर्भस्थं वेदाननुचारयन्तं निशम्य मरणान्निवृत्त इति मन्वान्तरप्रसिद्धिः । मुनिवरं ज्ञानिश्रेष्ठं । अनेन प्रश्नप्रतिवचने सामर्थ्यं द्योतितं । कृतपौर्वाह्णिकक्रियं इत्यनेन प्रश्नकरणेऽवसरो द्योतितः । प्रणिपत्याभिवाद्यचेत्यत्र प्रणिपातः साष्टाङ्गं दण्डवत्प्रणामः । अभिवादनं गोत्रशर्मोक्तिपूर्वकं वन्दनं ॥ ५ ॥ शिष्यप्रश्नो गुरुणा नोपेक्षणीय इति दर्शयितुं प्रश्नात्पूर्वमेव स्वस्यशिष्यत्वं प्रतिपादयति—त्वत्तोहीति । वेदानामृगादीनाम-

रत्नगर्भीयम् ।

नुक्तविधिना नमस्कृत्य ॥ ५ ॥ खिलं परिशिष्टं । तद्रहितं यथा स्यात् ॥ ६ ॥ कृतश्रममितिपाठे

[पा०] १ ज. घ. ढ—ङ. वेदाङ्गानि. २ ज. ट. मयाधीतंकृतश्रमं. ठ. मयाधीतंश्रम कृत . ३ ग. घ. ड. स. येऽप्यतद्विद् . ए. छ. येऽपिधित .

**सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग भविष्यति ॥८॥**

श्रीधरीयम् ।

दिति । अन्ये विद्वांसो मां सर्वशास्त्रेष्वकृतश्रमं न वक्ष्यन्ति अपितु विद्विषोपि कृताभ्यासमेव वक्ष्यन्तीत्यर्थः ॥ ७ ॥ सोऽहमिति । पूर्वं यथा जगद्बभूव पुनश्च यथा भविष्यतीति जगतो जन्मप्रकारप्रश्नः

विष्णुचित्तीयम् ।

दादिति । अन्ये जनाः ये विद्विषः तेऽपि सर्वशास्त्रेषु त्वत्प्रसादादकृतश्रमं मां न वक्ष्यन्ति । किंतु त्वत्प्रसादादेव कृतसर्वशास्त्रपरिचयं मां समावर्तनानन्तरं वक्ष्यन्ति । अन्येनेति पदच्छेदे मां सर्वशास्त्रेषु त्वत्प्रसादादन्येनोपायेन अकृतश्रमं वक्ष्यन्ति किंतु त्वत्प्रसादेनैव कृतश्रमं वक्ष्यन्तीत्यर्थः ॥ ७ ॥ सोऽहमिति । य एवं वेदादित्रयोदशविद्यास्थानाभिज्ञः सोऽहं जगज्जन्मादिपुराणार्थं श्रोतुमिच्छामीत्यर्थः । अनेन ब्राह्मणक्षत्रियवैश्यानामध्ययनार्थं वेदोपबृंहणार्थं च पुराणस्य ग्रहणादौ त्रैवर्णिकानामेवाधिकार उक्तो ज्ञेयः । पापक्षयाद्यर्थं तु पुराणश्रवणादौ स्त्रीशूद्रयोरप्यधिकारः । यथोक्तं भविष्यत्पुराणे—"अध्येतव्यं न चान्येन ब्राह्मणक्षत्रियौ विना । श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन । तस्माच्छूद्रैर्विना विप्राच्च श्रोतव्यं कदाचन" इति । विलोमजानां तु श्रवणादौ नाधिकारः । सूतादेस्तु विलोमजस्यापि पुराणप्रवचनं—"धर्म एष तु सूतस्य सद्भिर्दिष्टः पुरातनः" इत्यादिवचनादविरुद्धम् । 'यथा जगद्बभूव' इत्युपक्रम्य 'आश्रमवासिनाम्' इत्यन्तेन प्रष्टव्यानर्थानाह—अत्र भगवता भाष्यकारेण ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकाराः तदाराधनस्वरूपफलविशेषाश्च पृष्टा इति प्रष्टव्यार्थविशेषा उक्ताः । 'यथा जगत्' इत्यादि 'लयमेष्यति यत्र च' इत्यन्तं ब्रह्मस्वरूपविशेषप्रश्नः । 'यत्प्रमाणानि' इत्यादि 'चातुर्युगम्' इत्यन्तं विभूतिभेदप्रकारप्रश्नः । धर्मांश्चेत्याद्यर्धेन तदाराधनस्वरूपफलविशेषप्रश्नौ पृष्टौ । ब्रह्मस्वरूपस्य "यतो वा इमानि" इत्यादिवाक्यसिद्धत्वाद्विशेष एवात्र प्रष्टव्य इति भाष्यकारेण ब्रह्मस्वरूपविशेषप्रश्न इत्युक्तम् । ननु नारायणानुवाकादिभिः स्वरूपस्य विशेषोऽपि निर्धारितः सत्यम् । अनेकानुवाकविप्रकीर्णयोः सामान्यविशेषयोरेकत्र समाहृत्य वचने हि दार्ढ्यमिति भवति । तदेव हि पुराणादिकृत्यं वेदोपबृंहणं यथा बभूव यथा भविष्यतीति सर्वसृष्टिषु क्रिमेकप्र-

दत्तात्रेयीयम् ।

ध्ययनं प्रतिवाक्यं । अयमस्य वाक्यस्यार्थ इत्युपदेशरूपं अखिलं संपूर्णं यथा भवति तथा त्वत्तः त्वत्प्रसादादधीतं मया । अतएव त्वं गुरुरिति गुरो इति संबोधनं । धर्मशास्त्राणि मन्वादिस्मृतयः । अङ्गानि शिक्षादिषडङ्गानि । यथाक्रमं "अतः पूर्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । कृष्णपक्षे तथाङ्गानि" इत्याद्युक्तक्रममनतिक्रम्य वेदाध्ययनानन्तरं वा । अत्राधीतमिति छान्दसमेकवचनं । व्यत्ययो वा । अनेन अधीतानीति संबन्धः ॥ ६ ॥ नकेवलं मम शिष्यत्वान्मया पृष्टं त्वया नोपेक्षणीयं । किंतु त्वत्त एव पुराणश्रवणे मम प्रयोजनान्तरमपि सिद्ध्यतीत्याह—त्वत्प्रसादादिति । तद्विदः सर्वशास्त्राभिज्ञाः । अपिपदादन्येऽपि सर्वशास्त्रेषु त्वत्प्रसादादन्येनोपायेनाकृतश्रमं मां वक्ष्यन्ति । प्रायशस्त्वत्प्रसादादेव कृतश्रमं वक्ष्यन्ति । यद्वा तद्विदः सर्वशास्त्राभिज्ञाः । अन्येऽपि तदनभिज्ञा जना अपि शास्त्रेषु त्वत्प्रसादादकृतश्रमं अकृताभ्यासं न वक्ष्यन्ति । किंतु त्वत्प्रसादादेव कृतश्रमं मां वक्ष्यन्तीति योज्यं ॥ ७ ॥ परिप्रश्नच्छेत्युक्तं तं प्रश्नप्रकारमाह—सोऽहमित्यादिना । दैनन्दिनकल्पेषु

रत्नगर्भीयम् ।

सर्वशास्त्रेषु कृतश्रममधीतिनं मां वक्ष्यन्ति ॥ ७ ॥ प्रसन्नं गुरुं प्रार्थयते—सोऽहमिति । सोऽहं कृत-

[पा०] १ ग. सर्वज्ञ. घ. तत्त्वज्ञ.

यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम् । लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥ ८ ॥

श्रीधरीयम् ।

॥ ८ ॥ यन्मयमिति । यन्मयमित्युपादानप्रश्नः । यतश्चेति निमित्तप्रश्नः । लीनमासीद्यथेति प्रलयाधार-

विष्णुचित्तीयम् ।

कारा सृष्टिरुतानेकप्रकारा भिन्नक्रमा वेति प्रश्नः । अत्रोत्पत्तिलययोः पृष्टत्वात्स्थितिप्रश्नोऽप्यभिमतः स्थितिसंयमकर्त्तेति प्रतिवचनदर्शनात् ॥ ८ ॥ यन्मयमिति । यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् यन्मयमित्यनेन सूक्ष्मादिकर्मभूतं जगत्किमात्मकमिति पृष्टम् । तस्य चोत्तरं जगच्च स इति । इदं तादात्म्यमन्तर्यामिरूपेणात्मतयाऽवस्थानकृतं न तु वस्त्वैक्यकृतम् । यन्मयमिति प्रश्नस्यो-त्तरत्वात् जगच्च स इति सामानाधिकरण्यस्य यन्मयमित्यत्र मयट् न विकारार्थः पृथक्प्रश्नवैयर्थ्यात् । नापि प्राणमयादिवत्स्वार्थिकः जगच्च स इत्युत्तरानुपपत्तेः । तदा हि विष्णुरेवेत्युत्तरमभविष्यत् । उत्तरमुक्तं भवेत् । अतः प्राचुर्यार्थ एव कृत्स्नं जगत्तदात्मकतया तत्प्रचुरमेव तस्मात्तन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं शरीरात्मभावनिबन्धनम् । अन्यथा गाथायां सामाना-धिकरण्याश्रयणेन निर्विशेषवस्तुप्रतिपादनपरत्वे शास्त्रस्याभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवच-नानि न संगच्छेरन् । तद्विवरणरूपं च कृत्स्नं शास्त्रं । तत्पक्षे हि प्रपञ्चभ्रमस्य किमधिष्ठानं निर्विशे-षज्ञानमात्रमिति प्रश्नप्रतिवचने स्याताम् । जगच्च स इति जगद्ब्रह्मणोरेकद्रव्यत्वेन सामानाधिकरण्ये च ब्रह्मणः कल्याणगुणैकतानत्वं हेयप्रत्यनीकत्वं च बाध्येत । सर्वाशुभास्पदं च ब्रह्म भवेत् । तस्मा-दात्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यमिति वक्ष्यामः । न च यतश्चेतस्य कारणमात्रपरा-त्वेऽपि यन्मयमित्यस्योपादानकारणविषयत्वाद्गोबलीवर्दन्यायेन यत इति निमित्तकारणपरमिति वा-च्यम् । तस्यागतिकविषयत्वात् अत्र मयटः प्राचुर्यार्थत्वेन गत्यन्तरोपपादनाय स्वार्थिकत्वे यन्मयमिति प्रश्नस्य विष्णुर्जगदित्युत्तरेणाऽनुपपत्तिरिति चेत् तदा हि गाथायां सामानाधिकरण्यमभिहितं स्यात् । ततश्च स्थाणुरेव न पुरुष इतिवद्विष्णुरेव न जगदित्यर्थः स्यात् । तथा जगद्विष्णुरिति जगद्ब्रह्मणोरैक्यो-पदेशस्य न जगद्विष्णुरिति वैयधिकरण्यमर्थः स्यादिति श्रुतिविरुद्धा अश्रुतबाधकल्पना स्यात् ।

दत्तात्रेयीयम् ।

सृष्टिप्रलययोर्वैरूप्यश्रवणाद्भूतभविष्यद्ब्रह्मकल्पेष्वपि वितथेति शङ्कां हृदि निधाय प्रकारं पृच्छति— यथा जगद्बभूवेत्यादिना । अनेन स्थितिप्रश्नोऽपि कृतप्राय एवेति बोद्धव्यं । अतएव "स्थितिसंयमकर्त्ता" इति पराशरःप्रतिवक्तुं वक्ष्यति ॥ ८ ॥ यन्मयं यत्प्रधानं यत्प्रचुरं वा । च इति कारणप्रश्नः । लीन-

रत्नगर्भीयम् ।

वेदाध्ययनो जगज्जन्मादिपुराणार्थं पृच्छते । इति वेदाध्ययनानन्तरमेव पुराणाध्ययनकथनात्पूर्वमी-मांसाविचार इति सूचितं । सूतादेर्विलोमजन्मनोऽप्यधिकारो निषादस्थपतिन्यायेन सिद्धः । यथा भविष्ये "अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना । श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन" इति । न च वैन्यस्य पृथोर्यज्ञे समुत्पन्नसूतजातेर्विलोमजत्वाभावान्निषादस्थपतिन्यायेनाप्यभिधेयत्वं । तस्या-दिवर्णवैकृतत्वपरत्वात् । यथा "वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः । सुत्याहामभवत्सूतः प्रथमं वर्णवैकृतम् । ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय दैवेन ततः सूतो व्यजायत । शिष्यहव्येन संपृक्तमभिभूतं गुरोर्हविः । अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम्" इति वायूक्तेः । यथा येन प्रकारेण जगद्बभूवेति मूलप्रश्नः । यथा च भविष्यतीति भविष्यप्रश्नः ॥ ८ ॥ यन्नन्वे सूक्ष्मन्ये

[पा०] १ घ. [illegible].

यत्प्रमाणानि भूतानि देवादीनां च संभवम् ।
समुद्रपर्वतानां च संस्थानं च यथा भुवः ॥१०॥
सूर्यादीनां च संस्थानं प्रमाणं मुनिसत्तम ।
देवादीनां तथा वंशान्मनून्मन्वन्तराणि च ११

कल्पान्कल्पविभागांश्च चातुर्युगविकल्पितान् ।
कल्पान्तस्य स्वरूपं च युगधर्मांश्च कृत्स्नशः १२॥
देवर्षिपार्थिवानां च चरितं यन्महामुने ।
वेदशाखाप्रणयनं यथाव्द्यासकर्तृकम् ॥ १३ ॥

चित्सुखीयम् ।

ख्यातानि । संस्थानं सन्निवेशं ॥ १० ॥ सूर्यादीनां प्रमाणं परिमाणं ॥ ११ ॥ कल्पान् ब्राह्मदिवसान् । कल्पविकल्पान् अवान्तरकल्पान् । कल्पविभागानिति पाठेऽप्ययमेवार्थः । चतुर्युगविकल्पिवान् चतुर्युगविशेषिताद् ॥ १२ ॥ प्रसादप्रवणं प्रसादाय प्रवणं प्रसादाभिमुखं । अत्रच यथा जगद्भूत यथा भविष्यति यन्मयंच जगद्यत्र पूर्वं लीनं यत्र लयमेष्यति । यत्प्रमाणानि भूतानि देवादीनांच कथं संभव इति सप्तप्रश्नानामुत्तरं प्रथमांशः । यथा समुद्रपर्वतानांच संस्थानं, भुवः संस्थानं, सूर्यादीनांच संस्थानं, प्रमाणं । चशब्दात् भुवर्लोकसंस्थान, मिति प्रश्नचतुष्टयोत्तरं द्वितीयांशः । देवादीनां तथा वंशान्मनून्मन्वन्तराणिच । वेदशाखाप्रणयनं यथाव्यासकर्तृकं । धर्मांश्च ब्राह्मणादीनां तथाचाश्रमवासिनां । इतिषट्प्रश्नोत्तरं तृतीयांशः । देवर्षिचरितं पार्थिवानांच चरितं इति प्रश्नद्वयोत्तरं चतुर्थांशः । चशब्दात्सूचितस्य श्रीवासुदेवचरितप्रश्नस्योत्तरं पञ्चमांशः । कल्पान्कल्पविभागांश्च चातुर्युगविकल्पितान् । कल्पान्तस्य स्वरूपंच युगधर्मांश्च कृत्स्नशः । इतिप्रश्नचतु-

श्रीधरीयम् ।

प्रश्नः ॥ ९ ॥ यदिति । प्रमाणमियत्तामकारं वा यत्प्रमाणानि भूतानि यत्प्रकाराणि वेत्यर्थः । देवादीनां च संभवमित्यनुसर्गप्रश्नः ॥ १० ॥ ११ ॥ कल्पानिति । कल्पान् ब्रह्मायुःपरिमितान्महाकल्पान् । कल्पविकल्पान्ब्रह्माहःसंज्ञिकान् । विभागानिति पाठेऽपि स एवार्थः चतुर्युगैरावर्तमानै-

विष्णुचित्तीयम् ।

अर्थवत्त्वे सिद्ध्यति मयटः स्वार्थिकत्वेन वैयर्थ्यं चायुक्तम् । लीनमासीद्यथा यत्र येन क्रमेण यत्र लीनं सकारणम् ॥ ९ ॥ यत्प्रमाणानीति । पृथिव्यादीनि यत्प्रमाणानीति महाभूतादीनामियत्ताप्रश्नः जगतः प्रमितिसाधनप्रश्नश्च ॥ १० ॥ सूर्यादीनामिति । मन्वन्तराणि मनूनां कालाः ॥ ११ ॥ कल्पानिति । कल्पान् ब्रह्मायुर्मितान् महाकल्पान् । चातुर्युगविकल्पितान् चतुर्युगपरिवृत्तिकल्पितान् देवादीनां च सम्भवमित्यनुषङ्गः । चतुर्युगैरावर्तमानैर्विभक्तानित्यर्थः । कल्पविभागान् महाकल्पांशान् पद्मादीन् ब्रह्मदिवसान् । कल्पान्तः प्रलयः । चातुर्युगं भावि वेदविभजनं चतुर्युगस्य परिमाण-

दत्तात्रेयीयम् ।

मासीद्यत्रेति लयस्थानप्रश्नः । चकारात् यत्र तिष्ठतीति समुच्चिनोति ॥ ९ ॥ यत्प्रमाणानीति । भूतानां परिमाणेऽयंप्रश्नः । देवादीनांच संभवमित्यवान्तरसर्गप्रश्नः । संस्थानं सन्निवेशः ॥ १० ॥ प्रमाणमियत्तां । वंशान् कुलप्रवाहान् । मन्वन्तराणि मनूनांकालान् ॥ ११ ॥ कल्पान् (परायुसंकृति)ब्रह्मकल्पान् । चातुर्युगविकल्पितान् चतुर्युगपरिवृत्तिकल्पितान् । "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इति वचनात् । कल्पविभागान् कल्पस्य ब्रह्मायुःपरिमितब्रह्मकल्पस्य विभागानंशान् ।

रत्नगर्भीयम् ।

जन्तवः एषु इति कल्पाः ब्रह्मदिवसाः तान् ॥ १२ ॥ देवर्षीत्यादिना वंशानुचरितप्रश्नः ॥ १३ ॥

[पा०] १ ट—ठ. पर्वतादीनां. २ ग. ज. झ. ड. ट. ढ. तथा. ३ घ. ट—ङ कल्पविकल्पांश्च. ४ प—ढ. चतुर्युग. ५ ज. ट. ठ. युगान्तांश्च.

धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम् ॥
श्रोतुमिच्छाम्यहं सर्वं त्वत्तो वासिष्ठनन्दन १४
ब्रह्मन्प्रसादप्रवणं कुरुष्व मयि मानसम् ॥
येनाहमेतज्जानीयां त्वत्प्रसादान्महामुने ॥१५॥

श्रीपराशर उवाच ॥

साधु मैत्रेय धर्मज्ञ स्मारितोऽस्मि पुरातनम् ॥
पितुः पिता मे भगवान्वसिष्ठो यदुवाच ह १६
विश्वामित्रप्रयुक्तेन रक्षसा भक्षितः पुरा ॥
श्रुतस्तातस्ततः क्रोधो मैत्रेयाभून्ममातुलः १७॥
ततोऽहं रक्षसां सत्रं विनाशाय समारभम् ॥
भस्मीभूताश्च शतशस्तस्मिन्सत्रे निशाचराः १८
ततः संक्षीयमाणेषु तेषु रक्षस्स्वशेषतः ॥
मामुवाच महाभागो वसिष्ठो मे पितामहः १९

चित्सुखीयम् ।

द्वयोत्तरं पञ्चांशः ॥ १५ ॥ कदा किमुवाचेत्याकाङ्क्षायां तदुक्तं पूर्ववृत्तान्तमाह—विश्वामित्रेति । विश्वामित्रप्रेरितरक्षसा भक्षितः पिता श्रुतः मयेत्यन्वयः ॥ १७ ॥ व्यासेधकारणं विघ्नकारणं

श्रीधरीयम् ।

विकल्पिताग्निभक्तान् ॥ १२ ॥ १३ ॥ धर्मानिति । वासिष्ठः शक्तिः तस्य नन्दनः पुत्रः तस्य संबुद्धिः ॥ १४ ॥ ब्रह्मन्निति । प्रसादप्रवणं प्रसादाभिमुखम् । येन प्रसादप्रवणेन चित्तेन-आत्ता-त्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ १५ ॥ १६ ॥ वसिष्ठस्तत्र कदा किमुवाचेत्यपेक्षायां तदुक्तेरुपो-

विष्णुचित्तीयम् ।

मिति वा ॥ १२ ॥ १३ ॥ धर्मानिति । सर्वम् अन्यद्योगादि च ॥ १४ ॥ १५ ॥ वासिष्ठनन्दने-त्यामन्त्रणेन गुरुप्रसादादेव ज्ञानमित्युक्तया च पुरातनं वसिष्ठवरदानवृत्तान्तं स्मारितो हृष्टः पराशरो वक्ष्यमाणस्यार्थस्य श्रद्धेयत्वसिद्धये तं वृत्तान्तमाख्याति साध्वित्यादिना ॥ १६ ॥ १७ ॥ १८ ॥१९॥

दत्तार्यैवीयम् ।

दैनन्दिनकल्पान्तमलब्धचतुर्युगपरिमाणम् ॥ १२ ॥ १३ ॥ गुरुप्रसादस्य श्रवणाद्यपेक्षयाऽतिप्रबलत्वा-त्तदेवावश्यं तेऽपेक्षित इति भावेन गुरुप्रसादपुरस्सरं श्रवणं प्रार्थयते—ब्रह्मन्निति ।' तदुक्तं वाराहे । "गुरुप्रसादो बलवान्न तस्माद्बलवत्तरं । तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये" इति । प्रसादेन प्रव-णमभिमुखं । येन प्रसादप्रवणेन चित्तेन आत्मत्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ १५ ॥ एवं मैत्रेयेण पृष्टः पराशरस्तत्प्रश्नप्रतिवचने स्वस्य सामर्थ्यमस्तीति वसिष्ठपुलस्त्यप्रसादात्तत्प्राप्तिप्रकारमाह—सा-ध्वित्यादिना ॥ १६ ॥ वसिष्ठस्तत्र कदा किमुवाचेतिहार्दीं मैत्रेयशङ्कां परिहर्तुमुपोद्घातकथामाह—विश्वामित्रप्रयुक्तेनेत्यादिना । पुरातनं वच इति शेषः । मे पितुर्मम जनकस्य शक्तेः पिता भगवान्व-सिष्ठो यदुवाच तद्वचः स्मारितोऽस्मीति योज्यं । विश्वामित्रप्रेरितेन रक्षसा वसिष्ठशापात्कल्माषपाद-राजगतेन तातः शक्तिः भक्षित इति मया श्रुत इत्यन्वयः । ततः श्रवणात् ॥ १७॥ रक्षसां विनाशाय

रत्नगर्भीयम् ।

ब्राह्मणादीनामिति वर्णधर्मप्रश्नः ॥ १४ ॥ त्यागे हेत्वन्तरमाह—सच्चित्तस्येति । परयुक्त्यारूढो गुणौघो यशः । कायेन्द्रियतापनो धर्मस्तपः । द्वयोरेव विशेषणं महत इति । महतेति वा पाठः

[ पा० ] १ ज. ट ठ. चाश्रमसंज्ञितान्. २ ख. घ—ज. ध—ड. भक्षितोमया. ३ ख—द. छ ज. ढ. सोन्मा-मातुल. ४ ग. च ज—ड. कृताश्च. ५ ग—झ. ढ. ठ ऽस्मत्पितामह.

यत्प्रमाणानि भूतानि देवादीनां च संभवम् ।
समुद्रपर्वतानां च संस्थानं च यथा भुवः ॥१०॥
सूर्यादीनां च संस्थानं प्रमाणं मुनिसत्तम ।
देवादीनां तथा वंशान्मनून्मन्वन्तराणि च ११

कल्पान्कल्पविभागांश्च चातुर्युगविकल्पितान् ।
कल्पान्तस्य स्वरूपं च युगधर्मांश्च कृत्स्नशः १२॥
देवर्षिपार्थिवानां च चरितं यन्महामुने ।
वेदशाखाप्रणयनं यथावद्व्यासकर्तृकम् ॥ १३ ॥

चित्सुखीयम् ।

ख्यापकानि । संस्थानं सन्निवेशं ॥ १० ॥ सूर्यादीनां प्रमाणं परिमाणं ॥ ११ ॥ कल्पान् ब्राह्मदिवसान् । कल्पविकल्पान् अवान्तरकल्पान् । कल्पविभागानिति पाठेऽप्ययमेवार्थः । चतुर्युगविकल्पितान् चतुर्युगविशेषितान् ॥ १२ ॥ प्रसादप्रवणं प्रसादाय प्रवणं प्रसादाभिमुखं । अत्रच यथा जगद्बभूव यथा भविष्यति यन्मयंच जगच्च पूर्वं लीनं यत्र लयमेष्यति । यत्प्रमाणानि भूतानि देवादीनांच कथं संभव इति सप्तप्रश्नानामुत्तरं प्रथमांशः । तथा समुद्रपर्वतानांच संस्थानं, भुवः संस्थानं, सूर्यादीनांच संस्थानं, प्रमाणं । चशब्दात् भुवर्लोकसंस्थान, मिति प्रश्नचतुष्टयोत्तरं द्वितीयांशः । देवादीनां तथा वंशान्मनून्मन्वन्तराणिच । वेदशाखाप्रणयनं यथाव्द्यासकर्तृकं । धर्मांश्च ब्राह्मणादीनां तथाचाश्रमवासिनां । इतिषट्प्रश्नोत्तरं तृतीयांशः । देवर्षिचरितं पार्थिवानांच चरितं इति प्रश्नद्वयोत्तरं चतुर्थांशः । चशब्दात्सूचितस्य श्रीवासुदेवचरितप्रश्नस्योत्तरं पञ्चमांशः । कल्पान्कल्पविभागांश्च चातुर्युगविकल्पितान् । कल्पान्तस्य स्वरूपंच युगधर्मांश्च कृत्स्नशः । इतिप्रश्नचतु-

श्रीधरीयम् ।

प्रश्नः ॥ ९ ॥ यदिति । प्रमाणमियत्ताप्रकाशकं वा यत्प्रमाणानि भूतानि' यत्प्रकाशकानि चेत्यर्थः । देवादीनां च संभवमित्यनुसर्गप्रश्नः ॥ १० ॥ ११ ॥ कल्पानिति । कल्पान् महायुःपरिमितान्महाकल्पान् । कल्पविकल्पान्ब्राह्मदिवससंज्ञिकान् । विभागानिति पाठेऽपि स एवार्थः चतुर्युगैरावर्तमानै-

विष्णुचित्तीयम् ।

सर्थेवर्त्वे लिप्सति भवतः सार्धिकत्वेन वैयर्थ्यं चायुक्तम् । लीनमासीद्यथा यत्र येन क्रमेण यत्र लीनं सकारणम् ॥ ९ ॥ यत्प्रमाणानीति । पृथिव्यादीनि यत्प्रमाणानीति महाभूतादीनामियत्ताप्रश्नः जगतः प्रमितिसाधनप्रश्नश्च ॥ १० ॥ सूर्यादीनामिति । मन्वन्तराणि मनूनां कालान् ॥ ११ ॥ कल्पानिति । कल्पान् ब्रह्मायुर्मितान् महाकल्पान् । चातुर्युगविकल्पितान् चतुर्युगपरिछिन्नविकल्पितान् देवादीनां च सम्भवमित्यनुषङ्गः । चतुर्युगैरावर्तमानैर्विभक्तानित्यर्थः । कल्पविभागान् महाकल्पांशान् पद्मादीन् ब्रह्मदिवसान् । कल्पान्तः प्रलयः । चातुर्युगं आधि वेदविभजनं चतुर्युगस्य परिगण-

दत्तात्रेयीयम् ।

मासीद्यत्रेति लयस्थानप्रश्नः । चकारात् यत्र तिष्ठतीति समुच्चिनोति ॥ ९ ॥ यत्प्रमाणानीति । भूतानां परिमाणेऽयंप्रश्नः । देवादीनांच संभवमित्यवान्तरसर्गप्रश्नः । संस्थानं सन्निवेशः ॥ १० ॥ प्रमाणमियत्तां । वंशान् कुलप्रवाहान् । मन्वन्तराणि मनूनांकालान् ॥ ११ ॥ कल्पान् (परायुःसंकृति)ब्रह्मकल्पान् । चातुर्युगविकल्पितान् चतुर्युगपरिच्छिन्नकल्पितान् । "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इति वचनात् । कल्पविभागान् कल्पस्य ब्रह्मायुःपरिमितब्रह्मकल्पस्य विभागानंशान् ।

रङ्गार्मीयम् ।

जन्तवः एव इति कल्पाः ब्रह्मदिवसाः यान् ॥ १२ ॥ देवर्षीत्यादिना वंशानुचरितप्रश्नः ॥ १३ ॥

[पा०] १ ङ—ञ देवादीनां. २ ग. ञ. झ. ट. ठ. ड. यथा. ३ ञ. ट—ड कल्पविकल्पांश्च. ४ घ—ङ. चतुर्युग. ५ ञ. ट. ड. युगान्तांश्च.

धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम् ॥
श्रोतुमिच्छाम्यहं सर्वं त्वत्तो वासिष्ठनन्दन १४
ब्रह्मन्प्रसादप्रवणं कुरुष्व मयि मानसम् ॥
येनाहमेतज्जानीयां त्वत्प्रसादान्महामुने ॥१५॥

श्रीपराशर उवाच ॥

साधु मैत्रेय धर्मज्ञ स्मारितोऽस्मि पुरातनम् ॥
पितुः पिता मे भगवान्वसिष्ठो यदुवाच ह १६
विश्वामित्रप्रयुक्तेन रक्षसा भक्षितः पुरा ॥
श्रुतस्तातस्ततः क्रोधो मैत्रेयाभून्ममातुलः १७॥
ततोऽहं रक्षसां सत्रं विनाशाय समारभम् ॥
भस्मीभूताश्च शतशस्तस्मिन्सत्रे निशाचराः १८
ततः संक्षीयमाणेषु तेषु रक्षस्स्वशेषतः ॥
मामुवाच महाभागो वसिष्ठो मत्पितामहः १९

विष्णुचित्तीयम् ।

द्वयोत्तरं पद्यार्थः ॥ १५ ॥ कदा किमुवाचेत्याकाङ्क्षायां तदुक्तं पूर्ववृत्तान्तमाह—विश्वामित्रेति । विश्वामित्रप्रेरितरक्षसा भक्षितः पिता श्रुतः मयेत्यन्वयः ॥ १७ ॥ व्याक्षेपकारणं विघ्नकारणं

श्रीधरीयम् ।

विकल्पितान्विभक्तान् ॥ १२ ॥ १३ ॥ धर्मानिति । वासिष्ठः शक्तिः तस्य नन्दनः सुतः तस्य संबुद्धिः ॥ १४ ॥ ब्रह्मन्निति । प्रसादप्रवणं प्रसादाभिमुखम् । येन प्रसादप्रवणेन चित्तेन जाता-त्त्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ १५ ॥ १६ ॥ वसिष्ठस्तव कदा किमुवाचेत्यपेक्षायां तदुक्तेरुपो-

विष्णुचित्तीयम् ।

मिति वा ॥ १२ ॥ १३ ॥ धर्मानिति । सर्वम् अन्यद्योगादि च ॥ १४ ॥ १५ ॥ वासिष्ठनन्दने-त्यामन्त्रणेन गुरुप्रसादादेव ज्ञानमित्युक्तया च पुरातनं वसिष्ठवरदानवृत्तान्तं स्मारितो ऽयं पराशरो वक्ष्यमाणस्यार्थस्य श्रद्धेयत्वसिद्धये तं वृत्तान्तमाख्याति साध्वित्यादिना ॥ १६ ॥ १७ ॥ १८ ॥१९॥

दत्तात्रेयीयम् ।

दैनन्दिनकल्पान्तप्रलयचतुर्युगपरिमाणम् ॥ १२ ॥ १३ ॥ गुरुप्रसादस्य श्रवणाद्यपेक्षयाऽतिबलवत्त्वा-त्तस्यावश्यं मेऽपेक्षित इति भावेन गुरुप्रसादपुरस्सरं श्रवणं प्रार्थयते—ब्रह्मन्निति । तदुक्तं भारते । "गुरुप्रसादो बलवान् तस्माद्बलवत्तरं । तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये" इति । प्रसादेन प्रव-णताभिमुखं । येन प्रसादप्रवणेन चित्तेन जातात्त्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ १५ ॥ एवं मैत्रेयेण पृष्टः पराशरस्तत्प्रश्नप्रतिवचने स्वस्य सामर्थ्यमस्तीति वसिष्ठपुलस्त्यप्रसादात्तत्प्राप्तिप्रकारमाह—सा-ध्वित्यादिना ॥ १६ ॥ वसिष्ठस्तव कदा किमुवाचेति हार्दीं मैत्रेयशङ्कां परिहर्तुमुपोद्घातकथामाह— विश्वामित्रप्रयुक्तेनेत्यादिना । पुरातनं वच इति शेषः । मे पितुर्मम जनकस्य शक्तेः पिता भगवान्व-सिष्ठो यदुवाच तद्वचः स्मारितोऽस्मीति योज्यं । विश्वामित्रप्रेरितेन रक्षसा वसिष्ठशापात्कल्माषपाद-राजगतेन तातः शक्तिः भक्षित इति मया श्रुत इत्यन्वयः । ततः श्रवणात् ॥ १७ ॥ रक्षसां विनाशाय

रत्नगर्भीयम् ।

ब्राह्मणादीनामिति वर्णधर्मप्रश्नः ॥ १४ ॥ स्वागे हेत्वन्तरमाह—सञ्चितस्येति । परवुद्ध्यारूढो गुणौघो यशः । कायेन्द्रियतापनो धर्मस्तपः । द्वयोरेव विशेषणं महत इति । महतेति वा पाठः

[ पा० ] १ ज. ट. ठ. चाश्रमसंज्ञितान्. २ ख. ग—ज. ञ—ड. भक्षितोमम. ३ ख—ड. छ. ज. ड. सोन्म-मातुलः. ४ ग. च ञ—ड. कृताश्च. ५ ग—झ. ट. ठ. ऽस्मपितामहः.

यत्प्रमाणानि भूतानि देवादीनां च संभवम्।
समुद्रपर्वतानां च संस्थानं च यथा भुवः॥१०॥
सूर्यादीनां च संस्थानं प्रमाणं मुनिसत्तम।
देवादीनां तथा वंशान्मनून्मन्वन्तराणि च ११
कल्पान्कल्पविभागांश्च चातुर्युगविकल्पितान्।
कल्पान्तस्य स्वरूपं च युगधर्मांश्च कृत्स्नशः १२॥
देवर्षिपार्थिवानां च चरितं यन्महामुने।
वेदशाखाप्रणयनं यथावद्व्यासकर्तृकम्॥ १३॥

चित्सुखीयम्।

क्याकारि। संस्थानं सन्निवेशं॥ १०॥ सूर्यादीनां प्रमाणं परिमाणं॥ ११॥ कल्पान् ब्राह्म-दिवसान्। कल्पविकल्पान् अवान्तरकल्पान्। कल्पविभागानिति पाठेऽप्ययमेवार्थः। चतुर्युगविक-ल्पितान् चतुर्युगविशेषितान्॥ १२॥ प्रसादप्रवणं प्रसादाय प्रवणं प्रसादाभिमुखं। अत्रच यथा जगद्भूत यथा भविष्यति यन्मयंच जगद्यत्र पूर्वं लीनं यत्र लयमेष्यति। यत्प्रमाणानि भूतानि देवादीनांच कथं संभव इति सप्तप्रश्नानामुत्तरं प्रथमांशः। तथा समुद्रपर्वतानांच संस्थानं, भुवः संस्थानं, सूर्यादीनांच संस्थानं, प्रमाणं। चशब्दात् भुवर्लोकसंस्थान, मिति प्रश्नचतुष्टयोत्तरं द्वितीयांशः। देवादीनां तथा वंशान्मनून्मन्वन्तराणिच। वेदशाखाप्रणयनं यथावद्व्यासकर्तृकं। धर्मांश्च ब्राह्मणादीनां तथाचाश्रमवासिनां। इतिषट्प्रश्नोत्तरं तृतीयांशः। देवर्षिचरितं पार्थिवानांच चरितं इति प्रश्नद्वयोत्तरं चतुर्थांशः। चशब्दात्सूचितस्य श्रीवासुदेवचरितप्रश्नस्योत्तरं पञ्चमांशः। कल्पा-न्कल्पविभागांश्च चातुर्युगविकल्पितान्। कल्पान्तस्य स्वरूपंच युगधर्मांश्च कृत्स्नशः। इतिप्रश्नचतु-

श्रीधरीयम्।

प्रश्नः॥ ९॥ यदिति। प्रमाणमियत्ताप्रकारकं वा यत्प्रमाणानि भूतानि यत्स्वरूपाणि चेत्यर्थः। देवादीनां च संभवमित्यनुसर्गप्रश्न.॥ १०॥ ११॥ कल्पानिति। कल्पान् ब्रह्मायुःपरिमितान्म-हाकल्पान्। कल्पविकल्पान्ब्राह्मसंज्ञिकान्। विभागानिति पाठेऽपि स एवार्थः चतुर्युगैरावर्तमानै-

विष्णुचित्तीयम्।

अर्थनरपे सिद्धत्ति मयटः स्वार्थिकत्वेन वैयर्थ्यं चायुक्तम्। लीनमासीद्यथा यत्र येन प्रकारेण यत्र लीनं सकारणम्॥ ९॥ यत्प्रमाणानीति। पृथिव्यादीनि यत्प्रमाणानीति महाभूतादीनामियत्ताप्रश्नः जगतः प्रमितिसाधनप्रश्नश्च॥ १०॥ सूर्यादीनामिति। मन्वन्तराणि मनूनां कालाः॥ ११॥ कल्पानिति। कल्पान् ब्रह्मायुर्मितान् महाकल्पान्। चातुर्युगविकल्पितान् चतुर्युगपरिवृत्तिविकल्पितान् देवादीनां च सम्भवमित्यनुषङ्गः। चतुर्युगैरावर्तमानैर्विभक्तानित्यर्थः। कल्पविभागान् महाकल्पां-शान् पद्मादीन् ब्रह्मदिवसान। कल्पान्तः प्रलयः। चातुर्युगे भावि वेदविभजनं चतुर्युगस्य परिमाण-

दत्तात्रेयीयम्।

मासीद्यत्रेति लयस्थानप्रश्नः। यच्छब्दात् यत्र तिष्ठतीति समुच्चिनोति॥ ९॥ यत्प्रमाणानीति। भू-तानां परिमाणेऽयंप्रश्नः। देवादीनांच संभवमित्यवान्तरसर्गप्रश्नः। संस्थानं सन्निवेशः॥ १०॥ प्रमाणमियत्तां। वंशान् कुलप्रवाहान्। मन्वन्तराणि मनूनांकालान्॥ ११॥ कल्पान् (परायुसं-ज्ञिते)महाकल्पान्। चातुर्युगविकल्पितान् चतुर्युगपरिवृत्तिकल्पितान्। "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इति वचनात्। कल्पविभागान् कल्पस्य ब्रह्मायु.परिमितमहाकल्पस्य विभागानंशान्।

रत्नगर्भीयम्।

जन्तवः एषु इति कल्पाः ब्रह्मदिवसाः तान्॥ १२॥ देवर्षीत्यादिना वंशानुचरितप्रश्नः॥ १२॥

[पा०] १ ङ—ढ पर्वतादीनां. २ ग. ज. झ. ट. ठ. ङ तथा. ३ ज. ट—ङ कल्पविकल्पांश्च. ४ घ—ट. चतुर्युग. ५ ज. ट. ट. युगान्तांश्च.

धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम् ॥
श्रोतुमिच्छाम्यहं सर्वं त्वत्तो वासिष्ठनन्दन १४
ब्रह्मन्प्रसादप्रवणं कुरुष्व मयि मानसम् ॥
येनाहमेतज्जानीयां त्वत्प्रसादान्महामुने ॥१५॥

श्रीपराशर उवाच ॥

साधु मैत्रेय धर्मज्ञ स्मारितोऽस्मि पुरातनम् ॥
पितुः पिता मे भगवान्वसिष्ठो यदुवाच ह १६
विश्वामित्रप्रयुक्तेन रक्षसा भक्षितः पुरा ॥
श्रुतस्तातस्ततः क्रोधो मैत्रेयाभून्ममातुलः १७॥
ततोऽहं रक्षसां सत्रं विनाशाय समारभम् ॥
भस्मीभूताश्च शतशस्तस्मिन्सत्रे निशाचराः १८
ततः संक्षीयमाणेषु तेषु रक्षस्स्वशेषतः ॥
मामुवाच महाभागो वसिष्ठो मत्पितामहः १९

विष्णुचित्तीयम् ।

इत्योत्तरं पद्यांशः ॥ १५ ॥ कदा किमुवाचेत्याकाङ्क्षायां तदङ्गं पूर्ववृत्तान्तमाह—विश्वामित्रेति । विश्वामित्रप्रेरितरक्षसा भक्षितः पिता श्रुतः मयेत्यन्वयः ॥ १७ ॥ क्वासेधकारणं विघ्नकारणं

श्रीधरीयम् ।

र्विकल्पितान्विभक्तान् ॥ १२ ॥ १३ ॥ धर्मानिति । वासिष्ठः शक्तिः तस्य नन्दनः सुतः तस्य संबुद्धिः ॥ १४ ॥ ब्रह्मन्निति । प्रसादप्रवणं प्रसादाभिमुखम् । येन प्रसादप्रवणेन चित्तेन - त्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ १५ ॥ १६ ॥ वसिष्ठस्तव कदा किमुवाचेत्यपेक्षायां तदुक्तेरुपो-

विष्णुचित्तीयम् ।

मिति वा ॥ १२ ॥ १३ ॥ धर्मानिति । सर्वम् अन्यचोद्यादि च ॥ १४ ॥ १५ ॥ वासिष्ठनन्दने-त्यामन्त्रणेन गुरुप्रसादादेव ज्ञानमित्युक्तया च पुरातनं वसिष्ठवरदानवृत्तान्तं स्मारितो हृष्टः पराशरो वक्ष्यमाणस्यार्थस्य श्रद्धेयत्वसिद्धये तं वृत्तान्तमाख्याति साध्वित्यादिना ॥ १६ ॥ १७ ॥ १८ ॥१९॥

रत्नगर्भीयम् ।

दैनंदिनकल्पान्तप्रलयपर्यन्तयुगपरिमाणम् ॥ १२ ॥ १३ ॥ गुरुप्रसादस्य श्रवणाद्यपेक्षयाऽतिबलवत्त्वा-त्तस्यावश्यं मेऽपेक्षित इति भावेन गुरुप्रसादपुरस्सरं श्रवणं प्रार्थयते—ब्रह्मन्निति । तदुक्तं नारदे । "गुरुप्रसादो बलवान्न तस्माद्बलवत्तरं । तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये" इति । प्रसादेन प्रव-णमभिमुखं । येन प्रसादप्रवणेन चित्तेन आतात्त्वत्प्रसादादहमेतत्सर्वं जानीयाम् ॥ १५ ॥ एवं मैत्रेयेण पृष्टः पराशरस्तत्प्रश्नप्रतिवचने स्वस्य सामर्थ्यमस्तीति वसिष्ठपुलस्त्यप्रसादात्तत्प्राप्तिप्रकारमाह—सा-ध्वित्यादिना ॥ १६ ॥ वसिष्ठस्तव कदा किमुवाचेतिहार्दां मैत्रेयशङ्कां परिहर्तुमुपोद्घातकथामाह—विश्वामित्रप्रयुक्तेनेत्यादिना । पुरातनं वच इति शेषः । मे पितुर्मम जनकस्य शक्तेः पिता भगवान्व-सिष्ठो यदुवाच तद्वचः स्मारितोऽस्मीति योज्यं । विश्वामित्रप्रेरितेन रक्षसा वसिष्ठशापात्कल्माषपाद-राजगतेन तातः शक्तिः भक्षित इति मया श्रुत इत्यन्वयः । ततः श्रवणात् ॥ १७॥ रक्षसां विनाशाय

रत्नगर्भीयम् ।

ब्राह्मणादीनामिति वर्णधर्मप्रश्नः ॥ १४ ॥ त्यागे हेत्वन्तरमाह—सञ्चितस्येति । पदयुद्धारूढो गुणौघो यशः । कायेन्द्रियसंतापनो धर्मस्तपः । द्वयोरेव विशेषणं महत इति । महतेति वा पाठः

[ पा० ] १ ज. ट. ठ. चाश्रमसेविनाम्. २ ख. घ.—ञ. च.—ट. भक्षितोऽभवत्. ३ ख—ढ. ङ. च. ढ. तेनाऽ-मातुल. ४ ग. च. घ—ट. कृताश्च. ५ ग—ञ. ट. ठ. ऽस्मत्पितामहः.

अलमत्यन्तकोपेन तात मन्युमिमं जहि ॥
राक्षसा नापराध्यन्ति पितुस्ते विहितं हि तत् २०
मूढानामेव भवति क्रोधो ज्ञानवतां कुतः ॥
हन्यते तात कः केन यतः स्वकृतभुक्पुमान् २१
सञ्चितस्यापि महता वत्स क्लेशेन मानवैः ॥
यशसस्तपसश्चैव क्रोधो नाशकरः परः ॥ २२ ॥
स्वर्गापवर्गव्यासेधकारणं परमर्षयः ॥
वर्जयन्ति सदा क्रोधं तात मा तद्वशो भव २३॥
अलं निशाचरैर्दग्धैर्दीनैरनपकारिभिः ॥
सत्रं ते विरमत्वेतत्क्षमासारा हि साधवः ॥२४॥
एवं तातेन तेनाहमनुनीतो महात्मना ॥
उपसंहृतवान्सत्रं सद्यस्तद्वाक्यगौरवात् ॥ २५ ॥
ततः प्रीतः स भगवान्वसिष्ठो मुनिसत्तमः ॥
संप्राप्तश्च तदा तत्र पुलस्त्यो ब्रह्मणः सुतः २६॥

श्रीधरीयम् ।

श्लाघभूतां कथामाह—विश्वामित्रप्रयुक्तेनेत्यादिना ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ॥ २३ ॥ स्वर्गेति । यशस्तपसोर्नाशकत्वादेव स्वर्गापवर्गयोः स्वर्गमोक्षयोः व्यासेधः प्रतिबन्धः, तस्य कारणं कोपः । हे तात तद्वशो मा भव ॥ २३ ॥ २४ ॥ २५ ॥ गुर्वाज्ञाकारित्वेन प्रभुपक्षीया अप्य-

विष्णुचित्तीयम् ।

अलमिति । मन्युं सत्रम् ॥ २० ॥ २१ ॥ २२ ॥ यशस्तपसोर्नाशे स्वर्गापवर्गसाधनधर्मज्ञानप्रति-

रत्नगर्भीयम् ।

सत्र बहुकालसाधनं क्रतुमहत् समारम्भं आरब्धवान् ॥ १८ ॥ १९ ॥ इमं राक्षसानां विनाशकं मन्युं क्रोधं क्रतुं च जहि त्यज । ओहाक्त्यागे इति धातोः । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः । मम पितृहन्तृत्वेनापराधित्वात्कथं तद्घातकं क्रतुं जह्यामित्याशङ्क्याह—राक्षसा इति । ते पितुस्तथा रक्षोभ्यो मरणं स्यादिति विष्णुना विहितम् । अतो राक्षसानां नापराध इति भावः ॥ २० ॥ मरणस्य विष्णुविहितत्वे स्वपितृहन्तरि शोकात् कुतः क्रोधं कुर्युरित्यत आह—मूढानामिति । मूढा मरणस्य विष्णुविहितत्वज्ञानशून्या तेषामसौ ज्ञानित्वाच्च त्वया कोपः कार्य इति भावः । उक्तमुपसंहरति—हन्यत इति । नन्वेवद्विरुद्धं "पितुस्ते विहितं तथा" इति मरणस्य विष्णुविहितत्वोक्तेरित्यत आह यत इति । पुमान्जीवो यतः स्वकृतभुक् अत उक्तं युक्तमिति योज्यम् । विष्णुरपि तत्तत्कर्मानुसारेणैव तस्य तस्य मरणादिकं विदधाति । नतु स्वतः । अन्यथा विष्णोर्वैषम्यादिदोषापत्तेः । कर्मसापेक्षत्वेतु न वैषम्यं । तथाचोक्तं सूत्रकृता । "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति" इति । "न कर्माविभागादितिचेन्ना-नादित्वात्" इतिच ॥ २१ ॥ विपक्षे बाधकमाह—सञ्चितस्येति । मानवैर्महता क्लेशेन सञ्चितस्य सम्पादितस्य यशसस्तपसश्च क्रोधः परोऽत्यन्तं नाशकरस्तत परमर्षयः क्रोधं वर्जयन्तीत्युत्तरेणान्वयः । यशस्तपसोर्नाशकान्तरापेक्षया क्रोधस्यातिशयितनाशकत्वं अतः सर्वतो वर्जनीयः कोप इति भावेन पर इत्युक्तं ॥ २२ ॥ स्वर्गापवर्गव्यासेधकारणं स्वर्गापवर्गयोर्व्यासेधः प्रतिबन्धस्तस्य कारणं ॥ २३ ॥ एतत्सत्रं रक्षोविनाशकरं सत्रं ॥ २४ ॥ तातेन तातस्येति शेषः ॥ २५ ॥ स वसिष्ठस्तत सद्यो-

रत्नगर्भीयम् ।

॥२२॥ तयोर्द्वयोर्नाशात्साधनाभावेन स्वर्गापवर्गप्रतिबन्ध इत्याह—स्वर्गेति ॥ २३ ॥ तेजसा अभिप्रा

[ पा० ] १ घ—ड नापराध्यन्ते २ घ ङ—° तथा ३ घ—° महमतां ४ क. ग ट घ—ङ ट—द यहतो ५ क ग प च म महाक्रोध ६ ख ट ट तजसाऽनपकारिभि क ख घ च ग दीनैरिरपकारिभि

पितामहेन दत्तार्घ्यः कृतासनपरिग्रहः ॥
मामुवाच महाभागो मैत्रेय पुलहाग्रजः ॥२७॥

पुलस्त्य उवाच ॥

वैरे महति यद्वाक्याद्गुरोरद्याश्रिता क्षमा ॥
त्वया तस्मात्समस्तानि भवाञ्छास्त्राणि वेत्स्यति
सन्ततेर्न ममोच्छेदः क्रुद्धेनापि यतः कृतः ॥
त्वया तस्मान्महाभाग ददाम्यन्यं महावरम् २९
पुराणसंहिताकर्ता भवान्वत्स भविष्यति ॥
देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्॥३०॥
प्रवृत्ते च निवृत्ते च कर्मण्यस्तमला मतिः ॥
मत्प्रसादादसन्दिग्धा तव वत्स भविष्यति॥३१॥
ततश्च प्राह भगवान्वसिष्ठो मे पितामहः ॥
पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति ॥ ३२ ॥
इति पूर्वं वसिष्ठेन पुलस्त्येन च धीमता ॥
यदुक्तं तत्स्मृतिं याति त्वत्प्रश्नादखिलं मम३३
सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छते ॥
पुराणसंहितां सम्यक्तां निबोध यथातथम् ३४

चित्सुखीयम् ।

॥२६॥ प्रवृत्ते काम्यकर्मणि । निवृत्ते मुक्तिहेतुकर्मणि । अस्तमला निरस्तमिथ्याज्ञाना ॥३१॥ अशेषं यथाभवति तथा तां वदामि ॥ ३४ ॥ वक्ष्यमाणसंहितायाः संक्षेपेण तात्पर्यार्थमाह—विष्णोरिति ।

श्रीधरीयम् ।

सुफला भवन्तीति पर्यायमाह—तत इत्यादिना ॥ २६ ॥ २७ ॥ वैर इति । यद्यस्मात्स्वगुरोर्वा-क्यात्क्षमा आश्रिता ॥ २८ ॥ २९ ॥ ३० ॥ प्रवृत्त इति । तस्मात्प्रवृत्ते निवृत्ते च कर्मणि अस्तमला अज्ञानविपर्ययशून्या मतिर्भविष्यति । ते च कर्मणी स्मृतिप्रसिद्धे—"इह चामुत्र काम्यं यत्प्रवृत्तम-भिधीयते । वैराग्यज्ञानपूर्वं च निवृत्तमुपदिश्यते" इति ॥ ३१ ॥ ३२ ॥ ३३ ॥ यथातथं यथार्थं

विष्णुचित्तीयम् ।

बन्धो आयत इत्याह सर्गेति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ पुराणेति । संहितातुल्यत्वात्संहिता तस्याः कर्ता । यथावद्वेत्स्यते विभूतिविग्रहगुणकर्मस्वभावादिभिर्देवतामसंशय-विपर्यासं यथावज्ज्ञास्यति ॥३०॥ प्रवृत्त इति । प्रवृत्तं काम्यं कर्म । निवृत्तं निष्कामं ज्ञानपूर्वकम् । अस्तमलाऽज्ञानविपर्यासरहिता ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अथ भगवान्पराशरो च एवं गुरु-

दत्तात्रेयीयम् ।

परंपरात् प्रीतोऽभूत् ॥ २६ ॥ २७ ॥ यद्यस्मात् । अस्य गुरोर्वाक्यात्क्षमाऽऽश्रिता तस्मात् ॥२८॥ राक्षसानां पुलस्त्यसन्ततित्वान्मम सन्ततेरित्युपपन्नं ॥ २९ ॥ अन्यं वरमित्युक्तं तमेवाह—पुराण-संहिताकर्तेत्यादिना । कर्ता प्रवर्तकः यथार्थैवं तत्तयोक्तं प्राक् । देवतापारमार्थ्यं देवतायाः परदेव-तायाः विष्णोः पारमार्थ्यं स्वातन्त्र्यं "स्वतन्त्रं परमार्थाख्यं" इतिवचनात् यथावद्यथार्थतः वेत्स्यते वेदिष्यति ॥ ३० ॥ प्रवृत्ते सकामे निवृत्ते ज्ञानपूर्वकनिष्कामे "निष्कामं ज्ञानपूर्वं तु निवृत्तमिह प्रोच्यते" इतिवचनात् अस्तमला अज्ञानविपर्यासहीना ॥३१॥ ततः पुलस्त्यवरदानानन्तरं ॥३२॥३३॥ सोऽहमुक्तरीत्या गुरुप्रसादात्साक्षात्कृतशास्त्रार्थोऽहं तां पुराणसंहितां "पुराणसंहिताकर्ता भवान्वत्स

रत्नगर्भीयम् ।

क्रोधेनवा ॥ २४ ॥ ततः सत्रसंहारात् ॥ २६ ॥ पुलहाग्रज इति अतितपस्वित्वख्यापनाय ॥ २७ ॥ कर्ता प्रवर्तकः ॥ ३० ॥ इति श्रीरत्नगर्भभट्टाचार्यविरचितश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे प्रथमोऽध्यायः ॥ १ ॥

[ पा० ] १ ज. झ. ट. ठ. दत्तार्घं. २ घ. च—ङ. स्थाश्रिता. क. ख. स्याश्रिता. ३ ग—घ. च—ट. मम च्छेदः. ४ क ख. ट—ड. देवतापरमार्थं च. ग. वेदार्थपरमार्थं च. ५ क—घ. च. ज—ड. मातः. ६ क. ख. घ. च. छ. ण. परिपृच्छत .

विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ॥
स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ३५॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे प्रथमोऽध्यायः ॥ १ ॥

चित्सुखीयम् ।

स्थितिसंयमो विनाशः । तत्कर्ता स्थितिसंयमकर्ता । स्थितेः संयमस्य कर्तेति निमित्तकारणत्वसूचनायोक्तं ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे प्रथमोऽध्यायः ॥ १ ॥

श्रीधरीयम् ।

॥ ३४ ॥ श्रोतुस्सुखेन प्रतिपत्तये संक्षेपवत्तावत्प्रश्नोत्तरतया पुराणार्थमाह—विष्णोरितिश्लोकेन । विष्णोरिति । सकाशात्प्रकाशः प्रकाशः ईक्षणमिति यावत्, तत्सहिताद्विष्णोर्जगदुद्भूतम् । "स ऐक्षत लोकान्नु सृजेय" इति "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिश्रुतिसिद्धम् । विष्णोरीक्षणात्मकप्रयत्नेयं यदीक्षणमालोचनात्मकं । तेन प्रकारेण जगदुद्भूतम् । अनेन यथा बभूवेत्यस्य जन्मप्रकारप्रश्नस्योत्तरम् । तत्रैव च स्थितं प्रलयकाल इति लयाधारप्रश्नस्योत्तरम् । चशब्दाज्जगतः स्थितिरपि तत्रैवेत्युक्तम् । अस्य जगतः स्थितिसंयमयोरसावेव कर्ता । जननोऽप्युपलक्षणम् । अनेन यन्मयं चैतच्चराचरात्मकं जगदखिलस्य निमित्तप्रश्नस्योत्तरम् । जगच्च स एवेत्युपादानप्रश्नस्योत्तरम् । उपादानकारणत्वप्रश्नात्कार्यस्य अनेनैव विष्णोस्सर्वदा जगदुपादानकर्तृत्वादिकथनेन विष्णोरेवोद्भविष्यति । तत्रैव श्वासवीत्यादिसर्वप्रश्नस्योत्तरमर्थाद्द्रष्टव्यम् । अत्र यथा जगद्बभूव, यथा पुनर्भविष्यति, यन्मयं जग-

विष्णुचित्तीयम् ।

प्रसादात्साक्षात्कृतशास्त्रार्थः सोऽहं वदामीति स्वस्य गुरुस्वाधिकारं सूचयन् प्रश्नेषु जगत्कारणवस्तुविशेषस्य च जगत्संबन्धप्रकारविशेषश्च प्रष्टुः प्राधान्येन जिज्ञासित इति तावन्मात्रप्रधानभूतप्रश्नप्रतिवचनत्वेन संक्षेपतः पुराणार्थमाह—विष्णोः सकाशादिति । तथाहि मुमुक्षोः श्वेतकेतोः "यतो वा इमानि भूतानि जायन्ते, तत्कारणं सांख्ययोगाधिगम्यं, कारणं तु ध्येयम्" इत्यादिश्रुतेर्जगत्कारणविशेषो जिज्ञास्यः तेन सह जगत्संबन्धप्रकारविशेषश्च तत्र हि शरीरशरीरिभावपर्याये नियम्यनियामकत्वलक्षणे भावे जीवस्य परस्माद्भेदः "पृथगात्मानं प्रेरितारं च मत्वा, ज्ञाज्ञौ द्वावजावीशानीशौ, नित्यो नित्यानाम्" इत्यादिभ्यः श्रुतिभ्यः श्रूयमाणः स्वरूपत एवेति निश्चेतव्यम् । अन्यथा तस्यौपाधिकत्वेऽविद्यापरिकल्पितत्वे वा तयोर्नियाम्यनियामकभावो न स्यात् । न हि घटाकाशो महाकाशेन नियम्यते । नियमनं हि व्याप्यावस्थानं । न हि घटाकाशे महाकाशसन्निधौ घटे घटाकाशो महाकाशश्चेत्याकाशद्वयोपलब्धिः स्यात् । अविद्यापरिकल्पितस्य न नियमनं संभवति । न स्थाणौ परिकल्पितश्चोरः केनापि नियम्यते किं च । भेदस्यौपाधिकत्वे कल्पितत्वे वा महावाक्यजन्यतत्त्वमसीतिवाक्यार्थज्ञानेन चोपाध्यविद्ययोर्नाशात्तत्कृतभेदो जीवशब्दार्थो नश्येदिति मोक्षस्यापुरुषार्थत्वात्तत्साधने न कश्चित्प्रवर्तेत । जीवस्यानित्यत्वे श्रुतिविरोधश्च जीवपरयोः संबन्धे नियाम्यनियन्तृस्वरूपे मोक्षस्य पुरुषार्थता सिद्ध्यति स हि संबन्धः शेषशेषिभावात्मा शेषभूतस्य जीवस्य शेषिणं परं प्रति श्रूयमाणा

दत्तात्रेयीयम् ।

भविष्यति" इति पुलस्त्यवरप्रतिभातां यथावयं यथार्थ क्रियाविशेषणं ॥ ३५ ॥ देवतापारमार्थ्यज्ञानस्य मैत्रेयप्रश्नप्रतिवचनोपयोगित्वात् । देवतापारमार्थ्येनेत्यादिना वसिष्ठपुलस्त्यप्रसादलब्धदेवतापारमार्थ्यज्ञानं स्वस्यास्तीति दर्शयितुमाह—विष्णोरिति । सकाशात्सन्निधेस्तेन विष्णुः स्वसन्निधिमा-

[ पा० ] १ ठ. जगदनेव. २ क. संस्थितं.

श्रीधरीयम् ।

यतश्च, यत्र पूर्वं लीनं, पुनश्च यत्र लयमेष्यति, यत्प्रमाणानि भूतानि देवादीनां च संभवमित्यष्टप्रश्नोत्तरं प्रथमांशे । समुद्रपर्वतादीनां संस्थानं, भुवः संस्थानं, सूर्यादीनां च संस्थानं तेषां परिमाणं चेति, चतुःप्रश्नोत्तरं द्वितीयांशे । "देवादीनां तथा वंशान्मनून्मन्वन्तराणि च । वेदशाखाप्रणयनं यथाव्द्व्यासकर्तृकम् । धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम्" इति षट्प्रश्नोत्तरं तृतीयांशे । "देवर्षिपार्थिवादीनां चरितम्" इति प्रश्नस्योत्तरम् तद्वंशविस्तारोक्तिपूर्वकं चतुर्थांशे । तत्र च यदुवंशे भूभारहरणार्थमवतीर्णस्य हरेश्चरितं विस्तरेण पञ्चमांशे । "कल्पान्कल्पविकल्पांश्च कल्पान्तस्य स्वरूपं च" इति प्रश्नत्रयस्य प्रथमांशे संक्षेपेण दत्तोत्तरस्य युगधर्मांश्च क्रमशः दत्तस्य च तच्छ्लोकोक्तस्योत्तरं षष्ठांश इति विवेकः ॥ ३५ ॥ इति श्रीश्रीधरस्वामिविरचितायामात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे प्रथमोऽध्यायः ॥ १ ॥

विष्णुचित्तीयम् ।

समाहितैव हि स्वरूपानुरूपा कैङ्कर्यसंपत्तिः, सैव खलु मोक्षस्य काष्ठा । अत्र जगत्कारणविशेषप्रश्नस्योत्तरं विष्णोः सकाशादिति । सकाशात् काशः प्रकाशो ज्ञानम् । "स ऐक्षत लोकान्नु सृजा" इति "तदैक्षत बहु स्याम्" इत्याद्युक्तसङ्कल्परूपप्रकाशसहितादित्यर्थः । अथ वा सकाशशब्दः स्वरूपवचनः आचार्यस्य सकाशादित्यादिवत् । यथा बभूव यथा भविष्यतीत्यनयोरपीदमेवोत्तरम् । भगवतः पूर्वसर्गप्रकारक्रमस्मृतिरूपसङ्कल्पेन ह्युत्तरोत्तरसर्गप्रवाहः "धाता यथापूर्वमकल्पयत्" इति श्रुतेः । 'यथर्तुष्वृतुलिङ्गानि' इति स्मृतेश्च लीनमासीदित्यस्योत्तरं तत्रैव च स्थितमिति । उपादाने कार्यस्य संश्लिष्टिर्हि लयः । स्थितिसंयमकर्तेति स्थितिरुभयविधा "येन जातानि जीवन्ति" इत्युक्ता प्राणनलक्षणान्तरात्मतया स्थितिरेका । लोकपालसूर्यसोमादिरूपेण बहिःपोषकत्वादिरूपा स्थितिरपरा । अग्न्यन्तकादिरूपेण संहारः संयमः तत्र बहिःस्थितिः । स्थितिसंयमयोः कर्तेत्युक्ता प्राणनलक्षणा स्थितिः 'जगच्च सः' इत्युक्ता । इदमेव यन्मयमित्यस्य जगद्ब्रह्मणोः संबन्धप्रकारविशेषप्रश्नस्याप्युत्तरम् । यद्वा क्षुधिरस्मृत्यादिभिर्नियमनं संयमः । तत्रैव च स्थितं स्थितिसंयमयोः कर्तेति प्रकारेण स्वरूपप्रश्नोत्तरमेव ॥ ३५ ॥ इतीति सर्वपुराणानामादिभूते ब्रह्माण्डाख्ये महापुराणे उद्धृतायां पाराशर्यसंहितायामिति प्रथमोऽध्याय इत्यन्वयः ॥ इति श्रीविष्णुचित्तार्यविरचितायां विष्णुपुराणव्याख्यायां प्रथमांशे प्रथमोऽध्यायः ॥ १ ॥

दत्तात्रेयीयम् ।

त्रेण कर्ता ननु प्रयासेनेत्युक्तं भवति । तत्रैव संस्थितमित्येवकारस्य विष्णोरित्यनेनासानित्यनेन सङ्कल्पनेनापि संबन्धः । तेन जगदुत्पत्तिस्थितिप्रलयनियमनेषु विष्णोः स्वातन्त्र्यं सिद्ध्यति । जगच्च स इति जगतस्तदधीनत्वमेवोच्यते नत्वभेदः । जगदुत्पत्त्यादिकर्तृत्वोक्तिविरोधात्प्रत्यक्षादिप्रमाणविरोधाच्च । नच जगत्स इति सामानाधिकरण्यव्यपदेशानुपपत्तिः "यदधीना यस्य सत्ता तत्तदित्येव भण्यते । विद्यमाने विभेदेऽपि मिथो नित्यं स्वरूपतः" इति वचनादेव तदुपपत्तेः ॥ ३५ ॥
इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे प्रथमोऽध्यायः ॥१॥

## द्वितीयोऽध्यायः ॥ २ ॥

पराशरेणादौ त्रिमूर्तिरूपेण विष्णोः प्रणमनम् ॥ १ ॥ पूर्वं पितामहेन दक्षादिभ्यः प्रोक्तस्य तेभ्यः परंपरया स्वेनप्राप्तस्य विष्णुपुराणस्य कथने पराशरप्रतिज्ञा ॥ २ ॥ वासुदेवनामनिर्वचनम् ॥ ३ ॥ परमात्मनः श्रीविष्णोर्जगत्सृष्ट्यादिक्रमवर्णनं च ॥ ४ ॥

श्रीपराशर उवाच ॥

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ १ ॥

नमो हिरण्यगर्भाय हरये शङ्कराय च ।
वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥ २ ॥

विष्णुचित्तीयम् ।

अविकाराय महदादिविकारासंबन्धाय । शुद्धाय तत्कारणगुणावियारहिताय । सदा एकमेव रूपं

श्रीधरीयम् ।

अथैतत्पुराणप्रतिपाद्यं विष्णोः स्वरूपं परावरपररूपेण प्रणमन्विस्तरेण पुराणार्थं वक्तुमाह—अवि-कारायेत्यादिनवभिः श्लोकैः । तत्र तावत्पूर्वाध्यायान्ते पुराणार्थसंक्षेपश्लोकेन जगदुपादानकर्तृत्वाद्युक्तया प्राप्तं विकारादिप्रसक्तं वारयन्प्रणमति—अविकारायेति । लोके हि क्रियाश्रयत्वात्कर्ता विकारी दृष्टः रा-गादिधर्मवांश्च अनित्यश्च साहङ्कारश्च । एतद्व्यावर्तयति अविकारायेति चतुर्भिः पदैः । उपादानकारणमपि मृत्सुवर्णादिकं घटकटकादिनानापरिणामैरनेकरूपं [illegible] तद्व्यावर्तयति—एकेति । एकरूपमेव रूपं यस्य तस्मै । सदेत्यस्य सर्वत्रान्वयः । तत्र हेतुः—सर्वजिष्णवे अचिन्त्यैश्वर्येण सर्वान् कर्तृकारणादीन् जेतुं अतिशयितुं शीलं यस्य तस्मै । एवंभूताय विष्णवे नम इत्युत्तरेणान्वयः ॥ १ ॥ ब्रह्मादित्रिमूर्तिरूपेण प्रणमति—नम इति । हिरण्यगर्भादिरूपाय तैः रूपैः सर्गस्थित्यन्तकारिणे वासुदेवाय नमः । तदेवं

विष्णुचित्तीयम् ।

तदेव संक्षेपत उक्ताना प्रतिवचनाना विस्तरेणतयाऽवतार्यमाणस्य पुराणस्यारम्भमविकारायेत्यादिभि-र्नवभिः श्लोकैः पुराणप्रतिपाद्यस्याभिमतदेवतानमस्कारपूर्वकं प्रतिजानीते । तत्र कारणत्वाभिधानतः प्रसक्तं विकारित्वं निरस्यति—अविकारायेति । अनेनाचेतनाद्व्यावृत्तिः । "न जायते म्रियते" इत्यादि-श्रुतेः । क्षेत्रज्ञस्यापि समानमविकारित्वमिति तद्व्यावृत्तिमाह—शुद्धायेति । शुद्धिः हेयगन्धरहितत्वम् । "अशुद्धास्ते समस्तास्तु" इति हि वक्ष्यति । ईदृशी शुद्धिर्मुक्तस्याप्यस्तीति तद्व्यावृत्तिमाह—नित्यायेति । शुद्धत्वाकारेण नित्याय । अविकारित्वशुद्धत्वनित्यशुद्धत्वादीनि नित्यसूरीणामपि साधारणानीत्यत आह—

दत्तात्रेयीयम् ।

मैत्रेयकृतप्रश्नानामुत्तरं वदिष्यन्पुराणप्रतिपाद्यस्वाभीष्टदेवतां प्रणमति—अविकारायेत्यादिना । अवि-कारायेत्यारभ्य शङ्करायेत्यन्तमेकं वाक्यम् । विकारोऽन्यात्मतया परिणामस्तद्रहिताय । अनेन विष्णोराका-शादुद्भूतमिति पञ्चमीश्रवणाज्जगदुपादानत्वमेव विष्णोः । नचापादाने पञ्चमीविधानात् । ध्रुवमपाये-ऽपादानमित्यपादानस्वरूपनिरूपणाद्वृक्षात्पर्णं पततीतिवदवधावेव पञ्चमी नतूपादान इति वाच्यम् । जनि-कर्तुः प्रकृतिरित्युपादानस्यापादानसंज्ञाया विहितत्वात्पञ्चमी अपादानेऽपि प्राप्ता । तेन प्रकृत्या उपादानत्वमे-वेति शङ्का निरस्ता । विकारवत्कारणत्वं ह्युपादानत्वं । विष्णोस्तु "निर्विकारोऽक्षरः शुद्ध" इत्यादिप्रमाणेन निर्वि-कारत्वस्योक्तत्वान्नोपादानत्वं किंतु जगदुत्पत्त्याधारत्वमित्यमेवेति भावः । कार्यात्मना परिणामराहित्यलक्षण-मविकारित्वं जीवानामप्यस्तीत्यतस्तद्वैलक्षण्यमाह—शुद्धायेति । शुद्धाय आणवदेहरहिताय । तदुक्तं पा-

रमगर्भीयम् ।

प्रश्नान्वक्तुं हरेर्नत्या पुराणोपक्रमः कमात् । सृष्टिश्च महदादीनां द्वितीयेऽत्र प्रपञ्च्यते ॥ १ ॥

[ पा० ] १ छ प्रभविष्णवे. २ च—छ सर्वगे.

त्रिमुखीयम् ।

स्वरूपं यस्य अपरिणामित्वात् तस्मै सदैकरूपरूपाय ॥ १ ॥ तारय संसारतारणकर्त्रे ॥ २ ॥

विष्णुचित्तीयम् ।

परमात्मन इति । परो यस्मान्नास्ति स परमः अपराधीननियन्तृतया सर्वस्य व्यापनादात्मा । नित्यसूरय-स्तेन परमन्तः । अतः पदचतुष्टयेन प्रधानाद्यचेतनमक्षसनकादिभावनायुक्तक्षेत्रज्ञमुक्तनित्यसूरिभ्यो व्यावृत्तं परमस्वरूपं शोधितम् । अथ ज्ञानशक्त्यादिवदसाधारणं यद्वदेव सर्वविलक्षणं स्वानुरूपं ज्योतिर्मयमादित्यवर्णं "हिरण्मयः पुरुषो दृश्यते—विद्युतः पुरुषादधि" इति उपनिषत्सिद्धं स्वरूपमाह—सदैकरूपरूपायेति । प्रथमो रूपशब्दः स्वभाववाची । अथवा सदैकरूपं तुल्यप्रकारं हेयप्रत्यनीकतया कल्याणैकतानतया च स्वरूपतुल्यं । द्वितीयो रूपशब्दो विग्रहवाची । अथ सर्वव्याप्तिलक्षणमैश्वरं गुणं व्यापयन्विशेष्यं निर्दिशति—विष्णव इति । चिदचिद्व्याप्त्या प्रसक्तं दोषं परिहरति—सर्वजिष्णव इति । जयो हि परस्य स्ववशे स्थापनं । तच्छील्यप्रत्ययेन व्याप्तिजयौ स्वाभाविकाविति दर्शयति ॥ १ ॥ ब्रह्मशिवयोस्तद्विभूतित्वमाह—नमो हिरण्यगर्भायेति । चतुर्मुखस्यावतारत्वरूपेण हि सृष्ट्यादिकर्तृत्वं । तारय संसारोत्तारकाय मोक्षप्रदाय वासुदेवरूपेण मोक्षप्रदत्वं । हरिशब्दे सत्यपि वासुदेवशब्दो हरेरवतारत्वज्ञापनार्थः । "तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । संसारपारं पद्मीप्समानैराराधनीयो हरिरेक एव । ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् । अन्तवत्तु फलं तेषाम्" इत्यादिभिर्भगवत एव मोक्षप्रदत्वमुक्तम् । अत्र हिरण्यगर्भादिवद्धरेर्न विभूतित्वं "न हि पाल-

दत्तात्रेयीयम् ।

राद्धे "न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा । नयोगित्वादीश्वरत्वात्सत्यरूपोऽच्युतो विभुः" इति । अनेन देहाभिमानप्रयुक्तजन्मादिषड्भावविकाराद्राहित्यमुक्तं भवति । प्राकृतदेहसंबन्धराहित्यलक्षणं शुद्धत्वं मुक्तस्याप्यस्तीत्यत आह—नित्यायेति । शुद्धत्वाकारेण नित्याय । तदुक्तं वाराहे । "सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः । परमानन्दसंदोहा नैव प्रकृतिजाः क्वचित्" इत्यादि । अविकारित्वशुद्धत्वनित्यत्वानि लक्ष्म्या अपि साधारणानीत्यतस्तद्वैलक्षण्यार्थमाह—परमात्मन इति । पुरुषोत्तमाय । "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च" इत्यादिवचनात् । अविकारायेत्यायुक्तविशेषणचतुष्टयवत्त्वे हेतुं दर्शयितुमाह—सदेति । सदैकरूपरूपाय सदैकप्रकाररूपायेत्यर्थः । "वियदश्रुतेः" इत्यधिकरणे लक्ष्म्या अपि पराधीनविशेषावाप्तिमत्त्वेन तस्या अपि न सदैकप्रकारत्वमिति बोद्धव्यं । विशेष्यं निर्दिशति—विष्णव इति । सर्वव्याप्तायेत्यर्थः । सर्वव्याप्त्या प्रसक्तं दोषं परिहर्तुमाह—सर्वजिष्णव इति । जयो हि सर्वस्य स्ववशे स्थापनं । तच्छील्यप्रत्ययेन व्याप्तिजयौ स्वाभाविकाविति दर्शनं ॥ १ ॥ विष्णोरेकस्मादेवोद्भूतमित्यादिना विष्णोः स्वातन्त्र्येण सृष्ट्यादिकर्तृत्वमुक्तं । तदयुक्तं । विष्णोः स्थितिकर्तृत्वेऽपि सृष्टिप्रलयकर्तृत्वाभावात् तयोः हिरण्यगर्भशङ्करकर्तृकत्वादिति चेन्न । सृष्टिप्रलयकर्तृत्वमपि हिरण्यगर्भादिष्वन्तर्गतविष्णोरेव मुख्यमिति हिरण्यगर्भशङ्करयोः सृष्ट्यादिप्रतिपादकं वचनमपि मुख्यतो विष्णुपरमिति भावेनाह—नम इति । हिरण्यात्मकमण्डं गर्भे यस्यासौ हिरण्यगर्भ इति व्युत्पत्त्या हिरण्यगर्भशब्दस्य विष्णुवाचित्वं बोद्धव्यं । शं सुखं मोक्षाख्यं करोतीति शङ्कर इति । शङ्करशब्दो विष्णुवाचीति बोद्धव्यं । नन्वत्र हर्यभेदेन हरिशब्दप्रयोगवत्प्रसिद्धहिरण्यगर्भशङ्कराभेदेन तत्पदप्रयोगः किं न स्यादिति चेत् । नैवं । "ब्रह्मविष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी जनार्दनः" इति वामनपुराणवचनविरोधात् । वासुदेवायेत्यारभ्य युधिष्ठिर इत्यन्तोऽर्थभेद

एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।[1]
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥ ३ ॥

सर्गस्थितिविनाशानां जगतो यो जगन्मयः ।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ ४ ॥

विष्णुचित्तीयम् ।

एकस्यैव कथमेकत्वानेकत्वस्थौल्यसूक्ष्मत्वादिविरुद्धधर्मकत्वमित्यत आह—अव्यक्तव्यक्तभूतायेति । अव्यक्तं अव्याकृतं मूलकारणं व्यक्तं महदादिविकारजातं तद्भूताय तदात्मने । तेन कारणात्मनैकत्वं सूक्ष्मत्वंच कार्यात्मनानेकत्वं स्थौल्यंच न विरुद्धमिति भावः ॥ ३ ॥ स्थितिसर्गे । स्थितौ सर्गेच प्रभुं । पूर्वत्र जग-

श्रीधरीयम् ।

संसारप्रवर्तकत्वमुक्त्वा तन्निवर्तकत्वेन प्रणमति । ताराय भक्तानां तारकाय ॥ २ ॥ किंच—एकेति । एकमनेकं स्वरूपं यस्य । स्थूलसूक्ष्मश्चात्मा स्वरूपं यस्य । विरुद्धस्वरूपद्वयं यस्य कथमित्यत आह—अ-व्यक्तव्यक्तरूपाय अव्यक्तं कारणं । व्यक्तं कार्यं । तदुभयरूपाय अतोऽव्यक्तरूपत्वादेकरूपाय सूक्ष्मरू-पाय व्यक्तरूपत्वादनेकरूपाय स्थूलात्मने चेत्यर्थः । एवं सर्वात्मत्वेनोपासकानां मुक्तिहेतवे नमः ॥ ३ ॥ कार्यकारणत्वेनाभिनयन्प्रणमति—सर्गेति । जगतः सर्गादीनां यो मूलभूतो जगन्मयश्च । अतो विष्णवे

विष्णुचित्तीयम् ।

नसामर्थ्यमृते सर्वेश्वरं हरिम्" इति यस्य सर्वेश्वरत्वस्योक्तत्वात् ॥ २ ॥ व्यक्ताव्यक्तयोरपि तद्रूपत्वमाह—एकानेकेति । कारणदशायामेकसूक्ष्माव्यक्तत्वादीनि । कार्यदशायामनेकस्थूलव्यक्तत्वादीनि । विष्णवे तद्व्यापिने उभयावस्थप्रकृतेः स्ववशवर्तित्वात्तन्मुक्तिहेतवे ॥ ३ ॥ अखिलसङ्कल्पत्वमाह—सर्ग-स्थितीति । जगत्सर्गादिमूलभूतो हि कालः "न कालेन विना ब्रह्मा सृष्टिनिष्पादको भवेत्" इत्यादेः जग-

दत्तात्रेयीयम् ।

यच्चर्यं । वासुदेवरूपेण संसारसमुद्रं तारयतीति दर्शयितुं वासुदेवाय तारायेत्युक्तं । वासुदेवशब्दार्थस्तु "सर्वत्रासौ समस्तं च" इत्याद्युपदमेव वक्ष्यति । सर्गस्थित्यन्तकर्मणे सर्गस्थित्यन्तेषु विषयेषु कर्म व्यापारो यस्य स तथोक्तस्तस्मै । अनेनानिरुद्धप्रद्युम्नसंकर्षणव्यापारकथनेन तदपि मूर्तित्रयमनुसंहित-मिति बोध्यं ॥ २ ॥ एकानेकस्वरूपाय एकमनेकं च स्वरूपं यस्य स तथोक्तस्तस्मै । मूलरूपावतारक-पभेदेनैकानेकस्वरूपाय । स्थूलसूक्ष्मात्मने । स्थूलः सूक्ष्मश्च आत्मा स्वरूपं यस्य स तथोक्तस्तस्मै । स्थूलं विराड्रूपादि सूक्ष्मं तु जीवादिसूक्ष्मपदार्थान्तर्गतं । उक्तंच भगवता सूत्रकारेण । "सूक्ष्मं तु तदर्हत्वादिति" । तथा पुराणेच । "देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि" इति । अव्यक्तव्यक्तरूपाय अव्यक्तव्यक्त-रूपाय । स्वतएवाव्यक्तोऽपि भक्तानुग्रहाय स्वतएव व्यक्तस्वरूपश्चेति तस्मै । यद्वा अव्यक्ता प्रकृतिर्व्यक्तं महदादि ते रूपे निरूप्ये यस्य तस्मै । तदुक्तं वामने । "रूपवत्वात्तु जगद्रूपं विष्णोरस्मात्सुरासुरात्मकं । नित्यं पूर्णं समुद्दिष्टं स्वरूपं परमात्मन" इति । भगवद्रूपाणामभेदेऽपि तेषामेकत्वानेकत्वादिकं तस्या-चिन्त्यैश्वर्ययोगादुक्तं । तदुक्तं ब्रह्मतर्के । "तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु निजश्रयं । तथाऽपि देशत-स्तस्य परिच्छेदोऽपि विद्यते । परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते । तस्याचिन्त्याद्गुणैश्वर्याद्व्यवहारार्थ-मेवच" इति । तथा "क्रियावेऽपि नित्यत्वं व्यक्तव्यक्तिविशेषणं । भावाभावविशेषेण व्यवहारश्च ता-दृशः । विशेषस्य विशिष्टस्याप्यभेदस्तद्वदेव तु । सर्वं चाचिन्त्यशक्तित्वाद्युज्यते परमेश्वरे" इति । विष्णव इति विशेष्यनिर्देशः । तारायेत्यनेन संसारतरणलक्षणाविश्वनिर्मुक्तिहेतुत्वमुक्तं । मुक्तिहेतवे इत्यनेन स्वरूपान-न्दाविर्भावलक्षणेष्टप्राप्तिहेतुत्वमुच्यत इति न पौनरुक्त्यं ॥ ३ ॥ विष्णोस्सकाशादुद्भूतमित्यादिना विष्णोः

[ पा० ] १ भूतात्. [ वि. पा. ] २ 'प. स. ई. अपनोऽस.

आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ।
प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ ५ ॥
ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ ६ ॥
विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ सर्गे तथा प्रभुम् ।
प्रणम्य जगतामीशमजमक्षयमव्ययम् ॥ ७ ॥

चित्सुखीयम् ।

स्कारणत्वमुक्तं । अस्मिन्पुनः श्लोके पौनःपुन्येन तत्कारणत्वं तच्छीलतया दर्शितमिति विशेषः ॥ ७ ॥

श्रीधरीयम् ।

सर्वव्यापिने । तथा परमात्मने कार्यकारणाभ्यां परम उत्कृष्ट आत्मा स्वरूपं यस्य तत्सङ्गरहितायेत्यर्थः ॥ ४ ॥ आधारेति ॥ आधारभूतमित्यादीनां प्रणम्य कथयामीति चतुर्थेनान्वयः । अणीयसामप्यणीयांसं सूक्ष्मतमम् । सर्वभूतस्थं सर्वभूतेषु नियन्तृत्वेन स्थितम् । सर्वभूतान्तःस्थत्वेप्यच्युतं तैरपरिच्छिन्नम् ॥५॥ ज्ञानेति ॥ अर्थस्वरूपेण दृश्यरूपेण भ्रान्तिदर्शनतः भ्रष्टजीवभ्रान्तिज्ञानेन स्थितम् प्रतीतं ॥६॥ विष्णुमिति ॥

विष्णुचित्तीयम् ।

न्मयः उन्मेषनिमेषकलोन्मानसूर्यगमनादिना पदार्थावच्छेदस्वरूपः परमात्मने अकालवश्याय । "कालः पचति भूतानि सर्वाण्येव महात्मना । कालः पक्वो यमन्वेति यस्तं वेद स वेदवित् । कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः" । इत्यादेः ॥ ४ ॥ समष्टिक्षेत्रज्ञरूपत्वमाह—आधारभूतमिति ॥ विश्वस्य प्रकृतिपरिणामस्य जीवकर्मनिमित्तत्वेन तच्छरीरतया तदाधारत्वं भूतमात्राः प्रज्ञामात्रास्वर्पिताः 'यथेवं धार्यते जगत्' इत्यादि 'अणीयांसमणीयसां' प्रकृतेरतिसूक्ष्मावस्थाविशेषाणामपि व्याप्त्या ततोऽपि सूक्ष्मतरम् 'अव्यक्तमक्षरे लीयते' इत्यादि । सर्वभूतस्थं सर्वभूतेष्वात्मतयाऽवस्थितम् । अच्युतं तद्विकाररहितम् । एवं रूपसमष्टिपुरुषशरीरं पुरुषोत्तमं प्रणम्य कथयामीत्यन्वयः । यद्वा—सर्वभूतस्थं सर्वात्मसु स्थितम् । अच्युतं जीवगतज्ञानसङ्कोचादिविरहितम् ॥ ५ ॥ व्यष्टिरूपत्वमाह—ज्ञानस्वरूपमिति ॥ वस्तुत्रयापरिच्छिन्नानुकूलज्ञानैकस्वरूपम् । अत्यन्तनिर्मलं सर्वथाऽमलत्वं दुःखाज्ञानादिरहितम्, तमेव भ्रान्तिदर्शनतः अनात्मन्यात्मविज्ञानात् अर्थस्वरूपेण दृश्यस्वरूपेण स्थितम् । यद्वा देवमनुष्यादितत्तदाकारविशिष्टपिण्डमात्रतया प्रतिभासमानम् ॥ ६ ॥ उक्तमर्थमुपसंहरति—विष्णुमिति ॥ प्रभुं तृक्षादिषु नैरपे-

रत्नगर्भीयम् ।

प्रभानत्वुक्षादौ स्वातन्त्र्यमुक्तम् । अवान्तरसृष्ट्यादावपि विष्णोरेव प्राधान्यमिति दर्शयितुमाह—सर्गेत्यादिना । अवान्तरसर्गादिमूलत्वे युक्तिमाह—जगन्मय इति । जगन्मयः जगत्प्रचुरः । तत्र तच्छक्तिप्रवत्वेन व्याप्ततया स्थित इत्यर्थः । तदुक्तं ब्राह्मे । "तत्रतत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् । एक एव महाशक्तिः कुरुते सर्वमञ्जसा" इति । अत्रापि विष्णव इति विशेष्यं । परमात्मने परमाणो ब्रह्मादीनामात्मने स्वामिने । अनेन अवान्तरसृष्टावपि विष्णोः प्राधान्ये युक्तिरुक्ता भवति ॥ ४ ॥ अणीयांसमणीयसामपि विश्वस्याधारभूतं । विरोधाभासप्रदर्शनार्थमपिशब्दः । सर्वभूतस्थं । अपीत्यनुवर्तते । अच्युतं सर्वभूतनाशेऽपि नाशरहितं । उक्तार्थोपपादकत्वेन पुरुषोत्तममित्युक्तम् ॥ ५ ॥ ज्ञानस्वरूपं "सत्यंज्ञानम्" इत्यादिश्रुतेः । अत्राप्यपिशब्दोऽनुवर्तते । ज्ञानस्वरूपमपि निर्मलं । अज्ञानमिथ्याज्ञानसंशयसंनन्धरहितं । तत्र हेतुमाह—परमार्थतइति । नियमेन यथार्थत्वादित्यर्थः । अत्र विश्वाधारत्वाणुत्वादिविरुद्धधर्मकथनमेकानेकस्वरूपत्वकथनवदचिन्त्यैश्वर्ययोगाचदुपपादनायाह—आधारभूतमिति ॥ आधारभूतं विश्वस्येत्यादिना । विश्वाधारत्वामुक्तमयुक्तम् । "सर्वं खल्विदं ब्रह्म" इति श्रुत्या ब्रह्मणो विश्वाभिन्नत्वेन प्रतीते-

[ पा० ] १ क—ङ. स्थितिर्गे. २ ज—ट. मक्षर. म. अजमक्षरं.

कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः ।
पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥८॥
तैश्चोक्तं पुरुकुत्साय भूभुजे नर्मदातटे ।
सारस्वताय तेनापि मह्यं सारस्वतेन च ॥ ९ ॥
परः पराणां परमः परमात्माऽऽत्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ १० ॥

विष्णुचित्तीयम् ।

स्वस्मात्परान्तरशून्यत्वात्परमः । आत्मसंस्थितो नान्याधारः । रूपवर्णादिनिर्देशेन यद्विशेषणं तेन वर्जितः ।

श्रीधरीयम् ।

विष्णुं ग्रसिष्णुमित्यनेन कालरूपेण प्रणामः । अतः सर्गस्थित्यन्तकारिण इत्यनेनापौनरुक्त्यम् । अत एव नन्यस्य स्वरूपभेदद्योतनार्थं प्रणम्येत्यस्यावृत्तिः । अक्षरमचलम् ॥ ७ ॥ ८ ॥ पितामहेन दक्षादिभ्यः प्रोक्तं त्वया कथं कथ्यते तत्राह—तैश्चोक्तमिति ॥ ९ ॥ अव्यक्तादिचतूरूपस्य परमात्मनो जगत्सृष्ट्यादि वक्तुं ततः प्राचीनं तत्स्वरूपमाह । पर इत्यादिचतुर्भिः—परः पराणामिति ॥ "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" इत्यादिश्रुतिभ्यः परत्वेन प्रतिपादितानामिन्द्रियादीनां परः प्रकृतेः अत एव परम उत्कृष्टः परमात्मा आत्मसंस्थितः । "य आत्मनि तिष्ठन्" इत्यादिना जीवान्तर्यामित्वेन स्थितः । अनन्याधारः रूपवर्णादिनिर्देशः तदेव विशेषणम् । तेन विवर्जितः । रूपं शुक्लादि । वर्णो ब्राह्मणत्वादिः । आदिशब्दाज्जातिक्रिये । शुक्लो ब्राह्मणो गौः पाचक इत्यादिनिर्देशेन विशे-

विष्णुचित्तीयम् ।

ष्येण शून्यत्वम् । अजमक्षयं कर्माधीनजन्मनाशरहितम् अव्ययं पूर्वोक्तमहाविभूतेरच्युतम् ॥ ७ ॥ अथ श्रोतृणामादरार्थं स्वस्याप्ततया गुरुपारम्पर्यक्रममाह—कथयामीति द्वाभ्याम् ॥ भगवान् उत्पत्तिप्रलयादिवित्त्वात् "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति वचनात् । कुतः अब्जयोनिर्यतो भगवतोऽरविन्दाद्भवः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः ॥ ८ ॥ ९ ॥ अथ विस्तरेण पुराणं वक्तुमारभते—परः पराणामिति ॥ स्वरूपरूपगुणैश्वर्यादिभिरुत्कृष्टेभ्योऽप्युत्कृष्टः । परमः स्वस्मात्परान्तररहितः । परमात्मा आप्नोतीत्यात्मा स्वव्याप्यान्तररहितश्च । आत्मसंस्थितः स्वाधारः । रूपं संस्थानं देवादिजातिः वर्णः शुक्लादि ।

रत्नगर्भीयम् ।

दित्याशङ्क्य द्वैतिताद्वैतात्म्यं ज्ञानप्राप्तिफलमेव तदिति भावेनाह—अर्थस्वरूपेण दृश्यसकलपदार्थस्वरूपत्वेन ॥ ६ ॥ विशेष्यनिर्देशपूर्वकमुक्तार्थमुपसंहरति—विष्णुमित्यादिना । विष्णुं प्रणम्य कथयामीत्यन्वयः । अक्षरं शरीरनाशरहितं । अक्षयमिति पाठेऽप्ययमेवार्थः । अव्ययं चतुर्विधनाशरहितं । तदुक्तं "अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेस्सदा" इति ॥ ७ ॥ स्वेतोऽन्यमानविष्णुपुराणस्य स्वकपोलकल्पितत्वशङ्कानिवृत्त्यर्थं तस्य सत्संप्रदायपरम्पराप्राप्तत्वमाह—कथयामीत्यादिना । पूर्वं दक्षाद्यैर्मुनिसत्तमैः पृष्टं अब्जयोनिः पितामहो यथा प्रोवाच, तथा तैर्नर्मदातटे भूभुजे पुरुकुत्सायोक्तं, तेन पुरुकुत्सेन यथा तैरुक्तं, तथा सारस्वतायोक्तं, सारस्वतेन यथा मह्योक्तं, तथा कथयामीति योज्यं ॥ ८ ॥ ९ ॥ मैत्रेयकृतप्रश्नानामुत्तरत्वेन "वासुदेवो वा इदमग्र आसीत्" इत्यादिश्रुत्युक्तजगज्जन्मादिकर्तृत्वं वदिष्यन् तच्छ्रुत्युक्तविशेषणविशिष्टतया वासुदेवस्वरूपमाह—परः पराणामित्यादिना । पराणां ब्रह्मादीनां परः उत्कृष्टः । परमः मायाः रमायाः परः । मा शब्दस्य परनिपातः । तदुपपादकमाह—परमात्मेति । "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इतिवचनात् । आत्मसंस्थितः स्वाधारः । रूपं

[ पा० ] १ ए. मुक्तिधुर्यौ २ क. मम. ३ न. ख. ट ठ. पुरुष. ४ क ख. घ. च. छ. ज. विशेषेण

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ११
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥१२॥
तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं ॥ सदा हेयाभावाच्च निर्मलम् ॥१३॥

चित्सुखीयम् ।

रूपमाकृतिः वर्णः शुक्लादिः । आदिशब्देन जात्यादयो गृह्यन्ते ॥ १० ॥ अपक्षय एकादशनाशः । परिणामोऽन्यथाभावः । ऋद्धिः वृद्धिः ॥११॥ सर्वत्रासौ वसति । समस्तंचास्मिन्वसति ॥१२॥ तद्वेवेति ।

श्रीधरीयम् ।

पयितुमशक्यः । यद्वा—रूपादिभिर्निर्देशविवर्जितः रूपाद्यभावात् । अत एव विशेषणैरपि विवर्जित इत्यर्थः ॥ १० ॥ षड्भावविकारवर्जित इत्याह—अपक्षयेति । ननु च "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति । "अस्तीत्येवोपलब्धव्यः" । इत्यादिश्रुतेरस्तित्वं तावदङ्गीकर्तव्यम् । तथा च द्वितीयो भावविकारः प्राप्त इत्याशङ्क्याह—शक्यते वक्तुं यस्सदास्तीति । सर्वदास्तित्वं च न भावविकारः किन्तु जन्मानन्तरास्तित्वमेव कादाचित्कत्वात् अतो नायं दोष इत्यर्थः ॥ ११ ॥ परमात्मैव सात्त्वततत्त्वविद्भिर्वासुदेव इत्युच्यत इत्याह—सर्वत्रेति ॥ सर्वत्रासौ वसति समस्तं चास्मिन्वसति । वै प्रसिद्धम् । यतस्ततः स वासुदेव इति विद्वद्भिरुच्यत इत्यर्थः । वसनाद्वासनाद्वा वासुः द्योतनाद्देवः वासुश्चाऽसौ देवश्चेति वासुदेवः । "वसनाद्द्योतनाच्चैव वासुदेवं ततो विदुः" इति मोक्षधर्मे निरुक्तेः ॥ १२ ॥ स एवौपनिषदैर्ब्रह्मेत्युच्यत इत्याह—तद्ब्रह्मेति ॥ यः

विष्णुचित्तीयम् ।

आदिशब्देन क्रियाद्रव्ये गृह्येते । निर्देशः संज्ञा एतैर्जातिगुणक्रियाद्रव्यनामाख्यैः कल्पनाहेतुभिर्विशेषणैर्विवर्जितः । रूपवर्गेतिपाठे वर्गो जातिः ॥ १० ॥ षड्भिर्भावविकारैर्वर्जित इत्याह अपक्षयेत्यादिना—अपक्षय इति ॥ सदाऽस्तीति वचनात् कादाचित्कास्तित्वविकारो निरस्तः । एतल्लक्षणानभिव्याप्तस्य कालस्याभावात् । अनेन कालानवच्छेद उक्तः ॥ ११ ॥ देशानवच्छेदं नाम विशेषणनिर्वचनेन दर्शयति—सर्वत्रेति ॥ "नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इत्यादेः समस्तमत्र वसति जातिगुणप्रभावादियत्तदधीनधारणं भवति "भर्ता सन् भ्रियमाणो बिभर्ति" इति श्रुतेः । अग्निजलादिभिर्नभ इव सर्वगतोऽपि तद्गतदोषैरसंस्पृष्टो द्योतत इत्याह—देव इति ॥ १२ ॥ एष एव वेदान्तवेद्यं ब्रह्मेत्याह—तद्ब्रह्मेति ॥ अक्षयं अपक्षयरहितम् । अव्ययं परिणामवृद्ध्याख्याव-

दृत्ताश्रेयीयम् ।

वेदः । वर्णो ब्राह्मणत्वादिजातिः । शुक्लादिवर्णो वा । आदिपदात्क्रियादिकं । निर्देशः परिच्छेदः । निर्दिश्यते अनेनेति नाम वा । एतैः प्राकृतैर्विशेषणैर्विवर्जितः ॥ १० ॥ अपक्षयेत्यादिना षड्भावविकाररहितमुच्यते । ऋद्धिपदं ह्रासस्योपलक्षकं बोध्यं । "वासुदेवोवाऽइदमग्रआसीत्"इतिश्रुतौ जगज्जन्मादिकर्तरि वासुदेवशब्दश्रवणात्तदेव विशेष्यपदं गृह्णन्जगज्जन्मादिकर्तृत्वोपयुक्तगुणप्रतिपादकतया तन्निर्वक्ति—शक्यतेवक्तुमित्यादिना । केवलं स्वातन्त्र्येण ॥ ११ ॥ वासुदेवएव "अथातोब्रह्मजिज्ञासा" "जन्माद्यस्ययतः"इत्यादिना । जगज्जन्मादिकारणत्वेन सूत्रकारोक्तं ब्रह्मेत्याह—तद्ब्रह्मेति । नित्यादिपदानां व्याख्यानं पूर्ववदेव द्रष्टव्यं । हेयाभावात् हेयमज्ञानादिकं कामादिमलकारणं । निर्मलं मलाः कामादयः । "कामः क्रोधश्च मोहश्च दर्पो मानो मदो गुणाः । विषादश्चाष्टमः प्रोक्त इत्येते मनसो मलाः ।"इतिव-

[ पा० ] १ क. परिजग्यते.

| | |
|---|---|
| प्रधानपुरुषव्यक्तकालानां परमं हि यत् । | प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः । |
| पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥१६॥ | रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥१७॥ |

विष्णुचित्तीयम् ।

मुख्ये । अन्ये अमुख्ये ॥ १५ ॥ शुद्धं उक्तरूपचतुष्टयातीतं ॥ १६ ॥ प्रविभागशो यथायोग्यं । रूपाणि प्रधानादीनां । स्थितिहेतुः पुरुषः । सर्गहेतुः प्रधानं । अन्तहेतुः कालः । व्यक्तिसद्भावस्यावान्तरव्यक्ति-

श्रीधरीयम् ।

पुराणान्ते वक्ष्यति । "तस्यैव योऽनुगुणभुगेक एव शुद्धोऽप्यशुद्ध इव मूर्तिविभागभेदैः । ज्ञानान्वितः सकलतत्त्वविभूतिकर्ता तस्मै नमोऽस्तु पुरुषाय सदाव्ययाय" इति । तस्यैव शुद्धस्य ब्रह्मणो योऽनु समनन्तरः पुरुष इति एतस्यार्थः । तथा च नारदीये तन्त्रे—"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति । भागवते च "कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ ततोऽभवन्महत्तत्त्वम्" इत्यादि 'व्यक्ताव्यक्ते तथैवान्ये रूपे' पुरुषेक्षितमव्यक्तं ततो जातं व्यक्तं चेति द्वे अन्ये विलक्षणे रूपे । जडत्वात्कालस्तथा परं रूपं सर्वेषां क्षोभकत्वादन्ते निर्दिष्टः ॥ १५ ॥ परस्य ब्रह्मणो रूपाणीत्युक्त्वा प्राप्तं तेषामुपादेयत्वं वारयन्नाह—प्रधानेति ॥ सूरयो यत्पश्यन्ति तदेव विष्णोः परमं रूपमित्यर्थः ॥ १६ ॥ तर्हि प्रधानादिरूपैः किं कार्यमित्यत आह—प्रधानेति ॥ प्रधानादिरूपाणि जगतः स्थितिसर्गनाशानां व्यक्तिसद्भावहेतवः । व्यक्तिरभिव्यक्तिः प्रकाशः सद्भावः उत्पत्तिः अत्र हेतवः कारणानि । कथं प्रविभागशः "चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ । प्रलयं च करोत्यन्ते चतुर्भेदो जनार्दनः । ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विष्णुर्मन्वादयः कालः" इत्या-

विष्णुचित्तीयम् ।

परस्येति ॥ पुरुषस्य कर्तृत्वभोक्तृत्वचेतनत्वादिना प्रकृतिं प्रति प्राधान्यात्प्राधान्यम् ॥ १५ ॥ सर्वस्य ब्रह्मरूपत्वमयमनेन दोषः कथं परिहृत इत्यत आह—प्रधानेति ॥ परम इति पदं परमात्मस्वरूपं यत् प्रधानादिरूपेभ्यः परमं विलक्षणं । तस्मात्सूरयः शुद्धं रूपं भूतप्रधानादिगतविकारज्ञानादिरहितं परमं ज्ञानानन्दादिभिः सर्वोत्कृष्टं च पश्यन्तीत्यर्थः ॥ १६ ॥ ननु प्रधानादीनां नानारूपत्वेन भेदाद्ब्रह्मणस्तद्गतविकारादिदोषो मा भूत् । जगदुपादानभूतस्य ब्रह्मणः कथं विकाराभावमिरित्यत आह—प्रधानेति ॥ प्रधानपुरुषव्यक्तकालाः रूपाणि प्रविभागशः परस्परं विकारित्वभोक्तृत्वादिस्वभावासङ्करेण स्थित्यादीनां व्यक्तौ हर्षैः सद्भावे च हेतवः । व्यक्तिर्विशेषो वा हेतुशब्दो ब्रह्मणस्तेभ्यो नियन्तृत्वशेषित्वादिना विशे-

दत्तात्रेयीयम् ।

व्यक्तं महदादि । अव्यक्तं प्रकृतिः ॥ १५ ॥ पुरुषरूपेष्वेतेष्वादौ रूपशब्दस्य स्वरूपार्थत्वप्रतीतिं निवारयितुमाह—प्रधानेति । सूरयः प्रधानाद्यपेक्षया । परममुत्कृष्टतमं । शुद्धं प्रधानादिप्रकृतिविकाररहितं । यत्पश्यन्ति तद्विष्णोः परमं पदं स्वरूपमित्यर्थः । तथाच प्रधानाद्यपेक्षया विष्णोरुत्कृष्टत्वात्तेषां विष्णुस्वरूपत्वं युक्तमित्यतः पूर्वोक्तरूपशब्दो न स्वरूपवाची किंतु निरूप्यत्वार्थक एवेति भावः ॥ १६ ॥ प्रधानादीनां चतुर्णामपि जगत्कारणत्वं तेषां रूपभेदेनाह—प्रधानेति । प्रधानपुरुषव्यक्तकालरूपाणि भगवद्विष्णुरूपाणि प्रविभागशः स्वस्वावान्तरविभागेन त्रिगुणात्मकप्रधानस्य रजोरूपेण सृष्टिहेतुत्वं सत्त्वरूपेण स्थितिहेतुत्वं तमोरूपेण लयहेतुत्वमित्येवं विभागेन पुरुषोऽपि तत्तदवान्तररूपविभागेनैवं

[ पा० ] १ अ. ग्र. ट. ठ. सिद्ध. २ ङ. प्रविभागतः.

व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च । क्रीडतो बालकस्येव चेष्टां तस्य निशामय ॥१८॥ अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः । प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् १९

विष्णुचित्तीयम् ।

सर्गस्य । व्यक्तरूपं हेतुः । प्रधानं तु परम्परया हेतुः ॥१७॥ अर्थक्रियाभेदाद्भेद एव तेषां विष्णोश्च स्यादित्यत आह—व्यक्तं विष्णुरिति । किंप्रयोजना तर्हि तस्य सर्गादिप्रवृत्तिरित्यत आह—क्रीडत इति ॥१८॥ रूपच-

श्रीधरीयम् ।

तुष्टयं विना वक्ष्यमाणविभागप्रकारेण ॥ १७ ॥ नन्वेवं चतूरूपो भूत्वा विष्णुः सर्गादौ किमर्थं प्रवर्तते तत्राह—व्यक्तमिति ॥ विष्णुः व्यक्तादिरूपो भवतीति यत्तत्क्रीडतो बालकस्य चेष्टामिव जानीहि । तदुक्तम् "लोकवत्तु लीलाकैवल्यम्" इति ॥ १८ ॥ अथेदानीं तदेव रूपचतुष्टयं प्रपञ्चयिष्यन्प्रथमं प्रधानं प्रपञ्चयति, अव्यक्तमित्यादिपञ्चभिः । अव्यक्तमिति ॥ यदव्यक्तं तदृषिसत्तमैः कारणं प्रकृतिरिति प्रधानमिति च प्रोच्यते । नित्यं सदैकरूपं वृद्ध्यादिहीनमित्यर्थः । सदसदात्मकं कार्यकारणशक्तियुक्तम् ॥१९॥

विष्णुचित्तीयम् ।

पप्रदर्शनार्थं ॥ १७ ॥ ननु प्रधानादीनां सृष्ट्यादिहेतुत्वाद्विष्णोः कथं कारणत्वमत आह—व्यक्तमिति ॥ व्यक्तादीनां तदधीनस्वरूपस्थितिप्रवृत्तिमत्त्वेन तच्छरीरत्वात्तद्विशिष्टस्य विष्णोः कारणत्वं नानुपपन्नम् । व्यक्तं विष्णुरित्यादि व्यक्तादिशरीरको विष्णुरित्यर्थः । नन्ववाप्तसमस्तकामस्य प्रयोजनाभावात्सृष्ट्यादिर्नोपपद्यत इत्यत आह—क्रीडत इति । क्रीडैव प्रयोजनमित्यर्थः ॥ १८ ॥ अथ सृष्टिं वक्तुं प्रल्यावसानेऽवस्थितानां प्रधानपुरुषादीनां स्वरूपमाह—अव्यक्तमित्यादिपञ्चभिः । अव्यक्तमिति ॥ यत्तदिति भगवत्पराशरोक्तं यदव्यक्तं तत्प्रकृतिः प्रधानमित्यादिशब्दैरुच्यते मन्वादिभिः । न सांख्याभिमतं नित्यं

रत्नगर्भीयम् ।

प्रकारेण जगतः स्थितिसर्गान्तानां व्यक्तिरभिव्यक्तिः प्रकाशः । सद्भावः उत्पत्तिः । तत्र हेतव इति जानीह्यर्थः । कारणत्वेऽपि प्रधानादीनामुपादानत्वनिमित्तत्वरूपावान्तरविशेषद्योतनार्थं तुशब्दः ॥१७॥ प्रधानादिनियामकत्वं विष्णोरुक्तम् । तच्च राजादेर्भृत्यादिनियामकत्ववत् बहिः स्थितस्य किंतु तेनतेन रूपेण तत्तदन्तर्गतस्येति भावेन विष्णोरपि व्यक्तादिरूपत्वमाह—व्यक्तमिति । अवाप्तसमस्तकामत्वाद्विष्णोः सृष्ट्यादौ कथं प्रवृत्तिरित्याशङ्क्याह—क्रीडत इति । क्रीडतो बालकस्य चेष्टामिव यथा बालकः स्वमध्ये राजादिकं कल्पयित्वा क्रीडति तथाऽस्य विष्णोश्चेष्टां सृष्ट्यादिप्रवृत्तिं । निशामय जानीहि । प्रयोजनाभावेऽपि केवलं लीलयैव तत्र प्रवर्तत इति भावः । तदुक्तं "सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु । कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनं । पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः । मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मनः इति । "देवस्यैष स्वभावोयमाप्तकामस्य का स्पृहा" इति श्रुतिश्च । तदुक्तं भगवता सूत्रकारेण । "लोकवत्तु लीलाकैवल्यम्" इति ॥ १८ ॥ उक्तमेव रूपचतुष्टयं प्रपञ्चयन् तत्र प्रधानस्य मूलकारणतया प्रथमतस्तत्स्वरूपं प्रपञ्चयति—अव्यक्तमित्यादिना । यत्कारणमव्यक्तं तदृषिसत्तमैः प्रधानमिति प्रकृतिरिति चोच्यते । अत्र प्रकृतिपदेन चेतनप्रकृतिर्व्यावर्त्यते । नित्यं स्वरूपेण नाश

[ पा० ] १९ ख ॥ नित्या सदसदात्मिका

अक्षय्यं नान्यदाधारममेयमजरं ध्रुवम् ।
शब्दस्पर्शविहीनं तद्रूपादिभिरसंहितम् ॥२०॥

त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।
तेनाग्रे सर्वमेवासीद्व्याप्तं वै प्रलयादनु ॥ २१ ॥

चित्सुखीयम् ।

तुष्टयमुक्तं प्रपञ्चयति—अव्यक्तमिति—सदसदात्मिकेति ॥ १९ ॥ तत्रासदात्मकत्वमतीतानागतकार्यरूपत्वादेतदेव पुनर्विशिनष्टि—अक्षय्यमिति । नान्यदाधारं अनन्याधारमित्येतावत् । ध्रुवं निश्चितं ॥ २० ॥ आदिः कारणं प्रभवो जन्म अप्ययो लयः तैर्विहीनं अनादिप्रभवाप्ययं । अनादिप्रभवोऽप्ययमिति पाठे आदिप्रभवोऽप्ययमिति योजनीयं । अग्रे वर्तमानमहाकल्पोत्पत्तेः पूर्वकाले । प्रलयादनु प्राक्-

श्रीधरीयम् ।

अक्षयमिति ॥ अक्षयम् अविनाशि । अक्षय्यमिति पाठे क्षयानर्हं । नान्यदाधारम् अनन्याश्रयं । मूलकारणत्वात् । नान्याधारमिति वक्तव्ये अन्यदाब्दे दत्वविभक्त्यलोपावार्षौ । अमेयम् इयत्ताशून्यम् । अजरम् अपक्षयशून्यं । ध्रुवं निश्चलम् ॥ २० ॥ त्रिगुणमिति ॥ त्रिगुणं गुणत्रयसाम्यरूपम् । अनादि जन्मशून्यं प्रधानं प्रभवाप्ययं प्रभवन्तीति प्रभवाः कार्याणि अपियन्ति लीयन्ते अस्मिन्निति अप्ययं प्रभवाणामप्ययं कार्याणां लयस्थानमित्यर्थः । अग्रे सृष्टेः पूर्वं । प्रलयादनु अतीतप्रलयावसानानन्तरं । सर्वमेव कार्यभूतं तेन व्याप्तम् अन्तर्निहितमासीदित्यर्थः । "तम आसीत्तमसा गूढमग्रे प्रकेतम्" इति श्रुतेः

विष्णुचित्तीयम् ।

सदसदात्मकं चेतनाचेतनात्मकत्वेन नित्यम् । दारुण्यग्निरिति वक्ष्यति ॥ १९ ॥ अक्षय्यमिति ॥ अक्षय्यम् अकृत्स्नपरिणामि । अक्षयमिति पाठे क्षयानर्हं नान्यदाधारम् अकार्यत्वादन्यत्रासमवेतम् । अत्रान्यशब्दस्य पुंल्लिङ्गत्वेऽप्यदुगादेशः समासे तदलोपश्चार्षौ । अमेयं देशकालाविना । अजरं कालेन न जीर्यतीति । ध्रुवं स्पन्दरहितम् । विशेषगुणराहित्यमाह—शब्देति ॥ २० ॥ त्रिगुणमिति ॥ त्रिगुणं गुणत्रयात्मकम् । अनादिप्रभवाप्ययम् । आदिः कारणं प्रभवो जन्माप्ययो लयः तैर्विहीनम् । अग्रे सृष्टेः पूर्वकाले । प्रल-

दत्तात्रेयीयम् ।

रहितं । सदसदात्मकं व्यक्ताव्यक्तात्मकं ॥ १९ ॥ अक्षयं ह्रासरहितं । नान्यदाधारं सर्वस्य कार्यस्य मूलकारणत्वात् । विभक्त्यलोपः दुगागमोवाडादेशः । अमेयमियत्तापरिच्छेदशून्यं । अजरमौपाधिकनाशरहितं । ध्रुवमचाल्यं । शब्देत्यादिनाविशेषगुणराहित्यमुच्यते ॥ २० ॥ त्रिगुणमिति ॥ त्रिगुणं सत्वादिगुणत्रयात्मकं । अनादि उत्पत्तिशून्यं । प्रभवाप्ययं कार्याणि प्रभवन्ति उत्पद्यन्तेऽस्मादपियन्त्यस्मिन्लीयन्त इति तथा । कार्याणामुत्पत्तिविनाशस्थानमित्यर्थः । अनेन अव्यक्तस्य जगदुपादानत्वमित्युक्तं भवति । तेनाव्यक्तेनाग्रे सृष्टेः प्राक् । प्रलयादनु प्रलयानन्तरं । सर्वमेव कार्यजातं । व्याप्तं अन्तर्निहितमासीत् । अत्र प्रकृताव्यक्तप्रधानसदात्मकशब्दप्रयोगेन प्रकृतिगतो विशेषो द्योतितः । स च "व्यक्ताव्यक्तात्मकं यत्तद्द्विधा सदसदात्मकं । असर्गा केवलाऽव्यक्ता सिसृक्षुरभयात्मिका । व्यक्तेन कार्यरूपा तु प्रकृतिस्त्रिविधा मता । कार्यतः सा प्रधानत्वात्प्रधानमिति कीर्तिता" इति हरिवंशवचनादवगन्तव्यः ।

रत्नगर्भीयम् ।

शब्दस्पर्शविहीनं कारणावस्थायां अभिव्यक्तशब्दादिरहितं ॥ २० ॥ कालस्यानादिपुरुषमायासंयो-

[ पा० ] १ घ. ज—ट. अक्षयं. २ ख. प्रभुतं. ट. ममलं. ३ ज. ञ. ट—ढ. रसंहतं. ग. रसंगतं. क. ग. रससुतं. ४ प्रभवाप्ययं. रत्न. पा. प्रभवोऽप्ययं. विष्णु० पा० ५ घ. सर्वमेवतत.

वेदवादविदो विद्वन्नियता ब्रह्मवादिनः ।
पठन्ति चैतमेवार्थं प्रधानप्रतिपादकम् ॥ २२ ॥
नाहो न रात्रिर्न नभो न भूमि-
र्नासीत्तमोज्योतिरभूच्च नान्यत् ।
श्रोत्रादिबुद्ध्याऽनुपलभ्यमेकं
प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥ २३ ॥

चित्सुखीयम् ।

सातीतकल्पप्रलयात्पश्चात् ॥ २१ ॥ उक्तार्थे नासदासीय सूक्तं प्रमाणयितुमाह—वेदवादेति । एतमेवार्थमितीत्यध्याहारः । किन्तत्पठन्तीत्यत आह—प्रधानेति । अर्थान्नासदासीय सूक्तमित्यर्थः ॥ २२ ॥ अन्यत् जडप्रकाशरूपं । श्रोत्रादिजन्या बुद्धिः श्रोत्रादिबुद्धिः तयाऽनुपलभ्य । प्रधान-

श्रीधरीयम् ।

॥ २१ ॥ अत्रार्थे विद्वत्सम्मतिमाह—वेदवादविद इति ॥ वेदवादविदः वेदे ये वादाः सिद्धार्थपराणि वाक्यानि तद्विदः । नियताः तदर्थपराः । ब्रह्मवादिनः वेदप्रवचनशीलाः । एतमेवार्थमुद्दिश्य श्रुत्यर्थसूचनपरं प्रधानप्रतिपादकं नाहो न रात्रिरित्यादिश्लोकं पठन्ति ॥ २२ ॥ नाहरिति ॥ तदा नाहो न रात्रिश्चासीत्सूर्याद्यभावात् तमः अहोऽभावान्न ज्योतिः न चान्यत्किंचिदभूत् । शब्दाद्यभावाच्छ्रोत्रादिजन्यज्ञानेनानुपलभ्य । प्राधानिकं प्रधानमेव प्राधानिकं ब्रह्म च पुमांश्चेति त्रयमेव तदा प्रलये आसीत् । तथा च

विष्णुचित्तीयम् ।

यावत्तु प्राकृतप्रलयकालान्ते व्याप्तं भस्मम् अम्भसेव लवणम् ॥ २१ ॥ वेदेति ॥ वेदवादो वैदिकन्यायः तद्विदः ब्रह्मनियताः वेदार्थैकरुचयः ब्रह्मवादिनः ब्रह्मैककारणत्ववादिनः । एतम् उक्तमेवार्थं प्रति प्रधानप्रतिपादकं श्लोकद्वयं पठन्तीत्याह—पठन्तीति ॥ २२ ॥ तमेव श्लोकद्वयं दर्शयति—नाहरिति ॥ श्रोत्रादिबुद्ध्याऽनुपलभ्य शब्दादिराहित्याच्छ्रोत्रादिजन्यज्ञानेनागम्य । प्रधानमेव प्राधानिकं स्वार्थे ठञ्प्रत्ययः । ब्रह्म च पुमान् समष्टिपुरुषश्च एवमासीत् "तम आसीत्तमसा गूढमग्रे । तमः परे देव एकीभवति" इत्यादिश्रुतेः । "नाहो न रात्रिः" इति स्थूलकालोपाधिभूतज्योतिरादिनिषेधेऽपि तदासीदिति

वृत्तात्रेयीयम् ।

चेतनप्रकृतिविषयश्चैतत् । जडप्रकृतावप्यस्य विशेषो बोध्यः ॥ २१ ॥ उक्तार्थे श्रुतिरेव प्रमाणमिति भावेनाह—वेदेति । वेदवादविदः वेदवाक्यविदः । नियतास्तदर्थपराः । ब्रह्मवादिनः परब्रह्मैव सर्ववेदार्थ इति वदन्तः । एतमेवार्थं तेनाग्र इत्यादिनोक्तमर्थमुद्दिश्य प्रधानप्रतिपादकं पठन्ति । श्रुतिवाक्यमिति शेषः । तच्च श्रुतिवाक्यं "तम आसीत्तमसा गूढमग्रे प्रकेतं सलिलं सर्वमा इदम्" इति बोध्यम् ॥ २२ ॥ विष्णोस्सकाशात्प्रकृत्या महदादिसृष्टिं वक्तुं प्रलयस्वरूपनिरूपणपूर्वकं महत्तत्त्वोत्पादकं पुरुषाख्यं विष्णोः प्रथमावतारमाह—नाहरिति । प्रलये नाहो न रात्रिश्चासीत् । सूर्याद्यभावात् । रात्रेरभावान्न तमः । अहोऽभावान्न ज्योतिः । यद्वा तमश्शब्दोपलक्षितं गुणत्रयं नासीदित्यर्थः । न चान्यत् उक्तादन्यत्कार्यजातं नासीत् । एवंरूपे तस्मिन्प्रलये श्रोत्रादिबुद्ध्याऽनुपलभ्य श्रोत्रादेरभावात्तज्जन्यज्ञानेनानुपलभ्यमेकं मुख्यं प्राधानिकं प्रधानसंबन्धि तत्सहितमित्यावत् । ब्रह्म नारायणाख्यं पुमांश्चासीत् । पुरुषरूपेणाविर्भूतमासीत् । तदुक्तं ब्रह्मतर्के "आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः । अस्य जरस महत्तत्व

रत्नगर्भीयम् ।

जडत्वाद्यत्पत्त्यादिप्रवाहहेतुत्वाच्च आयानाशेनैव नाहो न व्यक्तप्रकृतौ च इति वदन्प्रलयेऽपि

[ पा० ] १ ज ह. ट. ठ चित्र च. प्रहान्

विष्णोः स्वरूपात्परतोदिते द्वे
रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते
रूपान्तरं तद्द्विज कालसंज्ञम् ॥ २४ ॥
प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत् ।
तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसंचरः ॥२५॥

चित्सुखीयम् ।

मेव प्राधानिकं । ब्रह्म परमात्मा पुमांश्चेति प्रथमासीत् ॥ २३ ॥ विष्णुरूपस्येऽप्युक्तरूपयत् । प्रधानपुरुषयोरपि प्रलयः किं न स्यादित्यत आह—विष्णोरिति । स्वरूपात् व्यक्तरूपात् परतो दूरतः अनादित्वात् । अरूपत्वेनावधितेश्च तयोर्नविनाश इति भावः । सदा तर्हि सर्गः स्यादित्यत आह —तस्यैवेति । ते पुरुषप्रधाने तस्यैव विष्णोरेवान्येन रूपेण किं तदित्यत आह—रूपादीति ॥ रूपाणां कार्याणां आदिकारणं यत्कालाख्यं तेन धृते संयोजिते सर्गकाले । वियुक्तेच प्रलयकाले । नेति सहकारिभेदान्न सदा सर्ग इति भावः ॥ २४ ॥ यत् यस्मात् प्रतिसंचरः प्रकृतिंप्रति संचरणात् प्रलयः प्राकृ-

श्रीधरीयम् ।

श्रुतिः "नासदासीन्नो सदासीत्तदानीम्" इत्यादि ॥ २३ ॥ कालस्वरूपं निरूपयति विष्णोरित्यादिभिः—विष्णोरिति ॥ परत इत्यत्रार्षः सन्धिः । परतो निरुपाधेः विष्णोस्स्वरूपात्ते प्रागुक्ते । प्रधानं पुरुषश्चेति द्वे रूपे उदिते उद्भूते । अन्ये विलक्षणे मायाकृते । तेऽन्ये इत्यार्षस्सन्धिः । तस्य विष्णोरेवान्येन रूपेण ते द्वे रूपे धृते सर्गकाले संयोजिते । वियुक्ते च प्रलयकाले । यद्वा वियुक्ते यथा तिष्ठतः तथा प्रलयकाले धृते स्थापिते तयोरवियोगे प्रलयाभावप्रसङ्गात् । यदेतत्कालसंज्ञं रूपान्तरं ॥ २४ ॥ कालस्वरूपेण प्रकृतिपुरुषवियोजनं प्रतिसंचरसमाख्ययोपपादयति—प्रकृताविति ॥ अतीतग्रहणं सर्व-प्रलयोपलक्षणार्थम् । अतीतप्रलये यद्यस्मात्प्रकृतौ संस्थितं लीनं विश्वमासीत् तस्माद्विश्वस्य प्रकृतौ संचरणात्प्रवेशात्प्राकृतोऽयं महाप्रलय उच्यते । एतच्च प्रकृतिपुरुषयोरवियोगे हि न घटत इति भावः ॥२५॥

विष्णुचित्तीयम् ।

निर्देशात्सूक्ष्मः कालोऽस्तीति गम्यते ॥ २३ ॥ विष्णोः स्वरूपादिति ॥ अत्र स्वरूपशब्दो रूपपर्यन्तः । उदिते उद्भूते आर्षः सन्धिः । दिते इति पदच्छेदे विभक्ते इत्यर्थः । "तस्मात्तमस्संजायते" इति श्रुतेः । ते रूपे वियुक्ते सूक्ष्मर्हसंयोगविरहिते यथा स्याता तथा तस्यैव येनान्येन धृते स्तः तद्रूपान्तरं कालसंज्ञं तेऽन्येनेत्यार्षत्वात्साधुः सन्धिः ॥ २४ ॥ प्रकृताविति ॥ प्रकृतौ संस्थितं लीनं । प्रतिसंचरः प्रलयः ॥२५॥

दत्तात्रेयीयम् ।

साण्डाण्डं समाविशत्" इति ॥ २३ ॥ परतः परस्मात्सर्वोत्कृष्टाद्विष्णोः स्वरूपात्पुरुषाख्याद्रूपात्ते प्रागुक्ते प्रधानं प्रकृतिः, पुरुषश्चेति द्वे रूपे अन्ये भिन्ने । एतद्रूपद्वयधारणवियोजनसमर्थं विष्णोः परमपुरुषरूपात्कालाख्यं रूपान्तरमप्यस्तीत्याह—तस्यैवेति । तस्य विष्णोरेव येनान्येन रूपेण ते द्वे रूपे धृते सर्गकाले संयोजिते । वियुक्ते प्रलयकाले वियुक्ते च । यद्वा वियुक्ते यथा भवतस्तथा प्रलयकाले धृते तत्कालाख्यं रूपान्तरं ॥ २४ ॥ नैमित्तिकः प्राकृतिक इत्यादिना प्रलयचातुर्विध्यस्य वक्ष्यमाणत्वात्तदत्र नाहोरात्रमित्यादिनोक्तः प्रलयः प्राकृतिक इत्याह—प्रकृताविति । यत्तस्मात्प्राकृतं महदादिकार्यं । अतीतप्रलये । अतीतग्रहणं सर्वप्रलयोपलक्षणं । प्रकृतौ संस्थितं लीनमासीत् । तस्मात्सर्वस्य प्रकृतौ प्रतिसंचरणात्-

[ पा० ] १ ड. ज—ठ. त्परतोदितेऽन्ये. २ ग. येऽन्येन. ३ ज. ट. ठ. इत्यादियत. ब. इत्युक्तत. ट. रूपेणतत.

अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः २६ | गुणसाम्ये ततस्तस्मिन्पृथक्पुंसि व्यवस्थिते । कालस्वरूपं तद्विष्णोर्मैत्रेय परिवर्तते ॥ २७ ॥

चित्सुखीयम् ।

तस्य सकाशात्प्राकृत उच्यत इत्यन्वयः ॥ २५ ॥ इदानीं कालस्य कारणत्वमाह—अनादिरिति । प्रवाहरूपेणाविरता । अन्ते संयमः संहारः ॥ २६ ॥ एवं प्रलयमभिधाय सर्गं वक्तुमाह—गुणसाम्य इति ।

श्रीधरीयम् ।

कालश्च प्रलयेऽप्यस्तीति वक्तुं तस्यानादिनिधनत्वमाह—अनादिरिति ॥ अत्र कार्यान्यथानुपपत्तिं प्रमाणयति—अव्युच्छिन्ना इति । ततस्तु कारणात् एते सर्गस्थित्यन्तसंयमाः । सर्गश्च स्थितिश्च तदन्ते संयमश्चाव्युच्छिन्नाः प्रवाहरूपेणाविरताः ॥ २६ ॥ गुणसाम्य इति ॥ ततः कारणात्तस्मिन्प्रलये गुणसाम्ये प्रधाने पुरुषे च पृथक् वियुक्ततया व्यवस्थिते सति तदैव तयोर्धारणार्थं कालस्वरूपं वर्तते । अन्यथा प्रलयानिर्वाहादिति भावः । नाहो न रात्रिरित्यत्र सूर्यादिगत्युपलक्षितः स्थूलः कालो नासीदित्युक्तम् । अत्र तु यावत्प्रलयं प्रकृतिपुरुषवियोगकारको विष्णोः स्वरूपभूतः कालो वर्तत इत्युच्यत इत्यविरोधः । अत एव प्रलये प्रकृत्या वियुक्तस्तूष्णीं लीन इव तिष्ठन् सर्गकाले च प्रकृतिमधिष्ठाय सृष्ट्यादिकर्ता पुरुष

विष्णुचित्तीयम् ।

कालस्य प्रकृतिपुरुषयोरप्येकत्वात्तयोर्लयस्याविर्भावहेतुत्वान्न व्यक्तवत् प्रकृतौ लय इत्याह—अनादिरिति ॥ ततः कालात् कालस्यानाद्यनन्तत्वात् सर्गकालनिरोधः संयमः जगन्नियमनानुप्रवेशो वा । प्रकृतिपुरुषरूपयत्स्वरूपमपि पदसिद्धान्तसंहितम् ॥ २६ ॥ प्रकृतेरनिशब्दसमस्तपरिणामवर्णितद्विपरार्धकालावसाने प्रथमं सृष्टिकालोन्मेषमाह—गुणसाम्य इति । गुणसाम्ये सत्त्वादिगुणसाम्यरूपे गुणसाम्यनिरूपणीये तस्मिन् प्रधाने पुंसि च पृथक् व्यवस्थिते सति पृथग्वियुक्ते स्थिते सति । तत्कालस्वरूपं परिवर्तते वर्तते । सूक्ष्मजीवन-

वृत्ताभेदीयम् ।

वाच्योऽयं प्रलयः प्राकृतसंज्ञ उच्यते ॥ २५ ॥ प्रलयकाले प्रकृतिपुरुषवियोगकरस्य कालस्वरूपस्य विष्णोरभावमसंभवतीत्यतस्तस्यानाद्यनन्तत्वमाह—अनादिरिति । तत अनाद्यनन्तत्वादेव सर्गस्थित्यन्तसंयमाः सर्गश्च स्थितिश्च तदन्ते संयमश्च अव्युच्छिन्नाः प्रवाहरूपेण विच्छेदरहिताः ॥ २६ ॥ तत अनाद्यनन्तत्वात्तस्मिन्प्रलयकाले गुणसाम्ये प्रधाने पुंसि पुरुषे च पृथक् वियुक्ततया व्यवस्थिते सति तत्प्रधानपुरुषवियोजकत्वेनोक्तं विष्णोः कालरूपं कारणस्य स्वरूपभूतं तत् पुनः प्रधानपुरुषसंयोगकरणे समर्थं वर्तते । सृष्टिकाले वाऽऽविष्कृतगुणत्रयमध्ये सत्त्वगते रजस्तमोभ्यामविमिश्रितस्य प्रलयवत्त्वे रजसा मिश्रितत्वेन मिश्रीभावलक्षणसाम्याज्जगत्प्रकृतेरपि गुणसाम्यव्यपदेशः । तदुक्तं तृतीयतात्पर्ये । "तमसो रजस्तु द्विगुणं रजसः सत्त्वमेव च । परिमाणत एवं स्युस्त्रयः प्रकृतिगा गुणाः । तत्र सत्त्वं केवलं स्याद्रजस्यपि शताधिकम् । सत्त्वं रजश्शतांशं तु तमस्तत्र प्रकीर्तितम् । तमस्यपि तथा सत्त्वं तमसस्तु शतोत्तरम् । तद्दशांशेन तु रजो मूलं यद्रजस्तु तत् । विलये दशांशतः सत्त्वं ........ तमस्यपि । मि-

रत्नगर्भीयम् ।

कालोऽस्तीत्याह—अनादिरिति ॥ २६ ॥ निराकारणुस्वरूपं महाभूतमहदादिरूपं । यद्वा निराका

[पा०] १ प २ ह ट ३ ढ कालस्वरूपतत् २ छ मैत्रेयेनऽवतते ३ म प्रतिवर्तते

ततस्तु तत्परं ब्रह्म परमात्मा जगन्मयः ।
सर्वगः सर्वभूतेशः सर्वात्मा परमेश्वरः ॥ २८ ॥
[1]प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥२९॥
यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ।
मनसो नोप[3]कर्तृत्वात्तथाऽसौ परमेश्वरः ॥३०॥

चित्सुखीयम् ।

पृथक् वियुक्ततया स्थिते तथासति । वर्तते प्रवर्तते ॥ २७ ॥ क्षोभसहकारितया सन् ब्रह्म कालविशेषसहकृतप्रधानं पुरुषं च प्रविश्य क्षोभयामासेत्याह—ततइति । ब्रह्मेति कमलासनतादाद्भ्री व्यावर्तयति । तथाऽपि मूलप्रकृतिश्च तथोक्तेति स्यादाशङ्का । तस्या अपि "मम योनिर्महद्ब्रह्म"इत्यादौ तथा व्यपदेशादित्यत आह—परमात्मेति । तथाऽपि कथं तस्यैव जगदुपादानत्वमित्यत आह—जगन्मय इति । जगतस्सत्ताप्रतीतिहेतुः शुक्त्यादिवत्तस्यैव प्राधान्येन कारणत्व । प्रकृतेस्तद्द्वारा कारणत्वमिति भावः । तथाऽपि तत्तद्देशावस्थितानन्तविकारकारणता कथमित्यत आह—सर्वग इति । तस्यैव स्थितिहेतुत्वोपयुक्तं रूपमाह—सर्वभूतेश इति । इदानीं तस्यैव सर्वजीवरूपतामाह—सर्वात्मेति । लोकपालानामिव तस्यापि कश्चिदीश्वरः स्यादित्यत आह—परमेश्वर इति ॥ २८ ॥ व्ययाव्ययौ परिणाम्यपरिणामिनौ तावेव प्रधानपुरुषौ ॥ २९ ॥ तर्हि कूटस्थत्वव्याकोप इत्यत आह—यथेति । मनसः क्षोभाय जायत इत्यन्वयः । नोपक-

श्रीधरीयम् ।

इति पुरुषस्वरूपमपि विवृतं द्रष्टव्यम् ॥ २७ ॥ इदानीं व्यक्तस्वरूपं प्रपञ्चयिष्यन्परमेश्वरात्प्रकृतिपुरुषक्षोभकारणमाह—तत इत्यादिपञ्चभिः ॥ ततः सर्गकाले सप्राप्ते परमेश्वरो हरिः स्वेच्छया प्रधानं पुरुषं च प्रविश्य क्षोभयामासेति द्वयोरन्वयः । कथंभूतो हरिरित्याह—तद्ब्रह्मेत्यादि ॥ अव्यक्तादिभ्यस्तद्रूपविलक्षणः ॥ २८ ॥ प्रधानमिति ॥ कथंभूतौ प्रधानपुरुषौ व्ययाव्ययौ परिणाम्यपरिणामिनौ उपादाननिमित्तभूतावित्ति यावत् । प्रलयकाले वियुक्तावात्मनि तूष्णीं स्थितौ स्वांशभूतौ प्रधानपुरुषौ स्वकालशक्त्युद्बुद्धयेच्छाशक्त्या संयोज्य सृष्ट्युन्मुखौ चकारेत्यर्थः ॥ २९ ॥ प्रविश्य क्षोभयामासेत्युक्त्या

विष्णुचित्तीयम् ।

मांऽनुगुणसर्गोऽनुकूलं भवतीत्यर्थः ॥ २७ ॥ अथ सूक्ष्मयोः प्रधानपुंसोः क्षोभमाह—तत इति ॥ २८ ॥ प्रधानमिति ॥ आत्मेच्छया बहु स्यामिति सङ्कल्पात्मिकया प्रविश्य विषयीकृत्य क्षोभयामास सर्गोन्मुखीचकार । प्रधानस्य क्षोभो गुणवैषम्यं प्रवृत्त्युन्मुखत्वं च । पुंसो ज्ञानविकासः संस्कारोद्बोधश्च । व्ययाव्ययौ व्येतीति व्ययः अव्ययो व्ययरहितः विकारिनिर्विकारावित्यर्थः ॥ २९ ॥ ईश्वरः प्रकृतिपुरुषयोः क्षोभ-

दत्तात्रेयीयम् ।

भित भवति हेता साम्यावस्था विदुर्बुधा"इति ॥ २७ ॥ इदानीं सृष्टिं वक्तुं कालरूपाद्विष्णोः प्रकृतिपुरुषयोः क्षोभमाह—तत इति । ततः प्रलयानन्तरं सर्गकाले सम्प्राप्ते स परमेश्वरो हरिः प्रकृतिं पुरुषं चात्मेच्छया स्वेच्छया प्रविश्य क्षोभयामास । सर्गोन्मुखौ चकारेत्यर्थः । क्षोभसामर्थ्योपपादकं तद्ब्रह्मेत्यादि ॥ २८ ॥ कथंभूतौ प्रधानपुरुषौ । व्ययाव्ययौ विकारितद्रहितौ । उपादाननिमित्तविवक्षयैतत् ॥ २९ ॥ प्रधानपुरुषयोरावेशेन क्षोभकरणेऽपि स्वयमविकार इत्याह—यथेति । गन्धो यथा स्वसन्निधिमात्रेण मनसः क्षोभाय विकाराय भवति नतूपकर्तृत्वात्किंचित्कारित्वात्तथाऽसौ परमेश्वरः प्रधानपुरुषक्षोभाय भवति । अत्र परमात्मन उपकर्तृत्वनिषेधो न कर्तृत्वाभावेन । किंतु तन्निमित्तप्रयासाभावेन ।

[पा०] १ घ. ग—ङ. प्रधानपुरुषावपि २ ग स कल्पते. ३ ज ङ. नोपकारित्वात्

स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तमः[1] ।
स संकोचविकासाभ्यां प्रधानत्वे[2]ऽपि च स्थितः ३१
[3]विकासाणुस्वरूपैश्च ब्रह्म रूपादिभिस्तथा ।
व्यक्तस्वरूपश्च तथा विष्णुः सर्वेश्वरेश्वरः ॥३२॥
गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने ।
गुणव्यञ्जनसंभूतिः सर्गकाले द्विजोत्तम ॥३३॥

चित्सुखीयम् ।

र्येत्वात् न स्वव्यापारवत्त्वम् ॥ ३० ॥ कर्मकर्तृभावेन ब्रह्म भेदं वारयति—सएवेति । संकोचो लयः विकासः सर्गः ताभ्यामुपलक्षितः । प्रधानत्वेन प्रधानभावेन स विष्णुः स्थितः । प्रधानत्वेऽपि च स्थित इत्यस्मिन्नपि पाठे प्रधानत्वेऽपि गुणसाम्यावस्थायामपि स्थितस्तेनैव रूपेण स्थित इति शेषः ॥ ३१ ॥ इदानीं सर्गगुणमाह—गुणसाम्यादिति । गुणव्यञ्जनं सत्त्वादीनां गुणानां भेदेन व्यञ्जनं महत्तत्त्वं

श्रीधरीयम् ।

*ब्रह्म सक्रियात्व वारयति—यथेति ॥ सन्निधिमात्रेण गन्धः मनसः क्षोभाय जायते । तद्रूपकर्तृत्वात्तत्तु-*
*कूलक्रियाकारित्वात्* ॥ ३० ॥ ननु प्रधानादीनामपि स्वरूपाव्यतिरेकात्क्षोभ्यत्वान्यस्य तत्कार्यस्य चा-भावे कथं क्षोभकत्वं तत्राह—सएवेत्यादिद्वाभ्याम् । स एवेति ॥ सङ्कोचः साम्यं विकासो गुणक्षोभः ताभ्यामुपलक्षितः । प्रधानत्वेऽपि स एव स्थितः तदवस्थाद्वयोपेतं प्रधानमपि विष्णुरेवेत्यर्थः ॥ ३१ ॥ विकासेति ॥ *विकासाणुस्वरूपैर्महाभूतमहदादिरूपैः ब्रह्मरूपादिभिर्जीवभेदैरप्युपलक्षितः । व्यक्तस्वरूपश्च* समष्टिव्यष्टिदेहात्मकश्च विष्णुरेवेत्यर्थः ॥ ३२ ॥ इदानीं महदादिक्रमेण व्यक्तस्वरूपप्रपञ्चसृष्टिमाह—

विष्णुचित्तीयम् ।

योऽपि स्वयमविकार इत्याह—यथेति ॥ यथा गन्धः किंचिद्विकाररहितोऽपि सन्निधिमात्रेण मनसः क्षोभाय दुःखदुःखादिविकाराय भवति ॥ ३० ॥ गन्धदृष्टान्तेन तस्य निमित्तत्वमेव निमित्ताशङ्कायामुपादानमपि स एवेत्याह—स एवेति ॥ क्षोभकः सन्प्रधानपुरुषात्मकं स्वयमेव क्षोभयति । न हि स्वमाकृहिर्मूले कुलालो मृत्पिण्डमिव "तदात्मानं स्वयमकुरुत आत्मकृतेः" "सोऽभिध्याय शरीरात्स्वात्" इत्यादिभ्यः न केवलं जगदुपादानं कार्यभूतं जगदपि स एवेत्याह—ससंकोचेति । संकोचविकासाभ्यां युक्तः प्रधानत्वेऽपि स्थितः स एव ॥ ३१ ॥ विकासेति । तथा विकासाणुस्वरूपैर्व्यष्टिसमष्टिरूपैश्च तथा ब्रह्मादिरूपैर्युक्तः स एव व्यक्तस्वरूपः महदादिस्वरूपश्च ॥ ३२ ॥ सृष्टिमाह—गुणसाम्यादिति ॥ ततः

वृत्तात्रेयीयम् ।

तदुक्तं कौर्मे । "अक्लिष्टत्वादकर्तासावकार्यत्वादथापि वा" इति ॥ ३० ॥ *गन्धदृष्टान्तोक्तया ब्रह्मा क्षोभ्यस्य तदधीनत्वशङ्कां क्षोभकस्यान्यकारणकत्वशङ्कां च वा निवारयन्नाह—सएवेत्यादिना । सएवेत्येवकारेणा-*न्यकारणसंभावना निरस्ता । क्षोभ्यश्च सएवेत्युक्त्या तस्य तदधीनत्वमुक्तं । "यदधीना यस्य सत्ता" इत्यादेः । क्षोभ्यस्य तदधीनत्वमेव विवृणोति—ससंकोचविकासाभ्यामिति । संकोचो गुणसाम्य विकासो गुणक्षोभस्ताभ्यां युक्ते प्रधानत्वे प्रधानस्वरूपे व्यवस्थितः । तदवस्थाद्वयोपेतं प्रधानमपि भगवदधीनमित्यर्थः ॥ ३१ ॥ विकाराणुस्वरूपैः देहजीवस्वरूपाभ्यां स्थूलसूक्ष्मस्वरूपैः *ब्रह्मरूपादिभिः* तथा स्थितः । *महादिरूपाण्यपि तदधीनानीत्यर्थः । व्यक्तं महदादिः । उक्तार्थोपपादकं सर्वेश्वरेश्वरइति ॥३२॥* इदानीं महदादिक्रमेण सृष्टिमाह—गुणसाम्यादिति । ततः प्रधानपुरुषक्षोभानन्तरं । क्षेत्रज्ञाधिष्ठितात्

स्वयमींयम् ।

महदादयः अणवो जीवाः "अणुरात्मा चेतसा वेदितव्यः" इतिश्रुतेः ॥ ३२ ॥ संपातः सर्वगुणसंद-

 1 क परमेश्वर. 2 प्रधानत्वेन स चित्सु० पा० 3 ज ट—ढ. विकाराणु

प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत् ।
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ३४॥

प्रधानतत्त्वेन समं त्वचा बीजमिवावृतम् ।
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ ३५॥

चित्सुखीयम् ।

तस्य सम्भूतिर्जन्म भवतीति शेष ॥ ३३ ॥ इदानीं कारणस्य कार्यव्याप्तिं दर्शयन्नन्यभेदाशङ्कां निवर्तयितुमाह—प्रधानेति ॥ ३४ ॥ एवं त्रिगुणस्य महत प्रधानेनावृतत्वं सदृष्टान्तमाह—प्रधानतत्त्वे-

श्रीधरीयम् ।

गुणसाम्यादित्यादि बीजं वाक्यजैरित्यन्तेन ॥ गुणसाम्यादिति । तत क्षोभानन्तरं । तस्माद्गुणसाम्यात्क्षेत्रज्ञेन पुरुषेणाधिष्ठितात् गुणानां व्यञ्जनं महत्तत्त्वम् । व्यज्यतेऽनेनेति व्यञ्जनं तस्य सम्भूतिरुद्भव अभूत् ॥ ३३ ॥ तद्यथा मृदेव पिण्डाद्यवान्तरकार्यावस्थामापाद्यमाना घटादेरुपादानं पिण्डादिकं तु निमित्तमात्रं घटादावननुगमादित्याद्यवत् तथैवेश्वराधिष्ठितं प्रधानमेव महदाद्यवान्तरकार्याण्युपादानतया व्याप्नुवत्परमकार्यव्याप्युपादानमिति दर्शयितुं पूर्वकार्येणोत्तरोत्तरकार्यस्य व्याप्तिमाह—प्रधानतत्त्वमित्यादिना—प्रधानतत्त्वमिति ॥ उद्भूतं महान्तं कर्मभूतं तदुपादानभूतं प्रधानतत्त्वं कर्तृभूतं समावृणोद्व्याप्नोत् । एतमेव विवृणोति—सात्त्विक इति ॥ ३४ ॥ प्रधानतत्त्वेनेति ॥ सममन्यूनानतिरेकं यथा भ-

विष्णुचित्तीयम् ।

क्षोभानन्तरम् । क्षेत्रज्ञकर्मप्रेरिताद्गुणसाम्याद्गुणशक्तिसाम्यरूपात्प्रधानात् व्यज्यन्तेऽनेन गुणा इति गुणव्यञ्जनं महत्तत्त्वं तस्य सम्भूति ॥ ३३ ॥ प्रधानतत्त्वमिति ॥ उद्भूतं महान्तं तत्प्रधानं समावृणोत् । यद्वोद्भूतमिति प्रधानविशेषणं । सात्त्विक इत्यादि सात्त्विकत्वादिकं प्रदेशभेदेनोद्भूतं गुणत्रयम् ॥ ३४ ॥ प्रधानतत्त्वेनेति ॥ समं बहिस्समं तत वैकारिक सात्त्विक तैजसो राजस भूतादि तामस । वैका-

दत्तात्रेयीयम् ।

क्षेत्रज्ञेन परमात्मनाधिष्ठितात् । क्षेत्रज्ञशब्दस्य परमात्मवाचित्वं तु "क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्या । आविर्हिता क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तु । क्षेत्रज्ञ आत्मा पुरुष पुराणः साक्षात्स्वयंज्योतिरज परेशः । नारायणो भगवान्वासुदेव स्वमाययाऽऽत्मन्यवधीयमान" इति भागवतवचनादवगन्तव्यं । गुणसाम्यात् प्रधानात् । गुणव्यञ्जनसम्भूति गुणेभ्यो वैषम्यावस्थापन्नेभ्य सत्त्वादिभ्यो व्यञ्जनमभिव्यक्तिर्यस्य तद्गुणव्यञ्जनं महत्तत्त्वं तस्य सम्भूतिरुत्पत्तिरभूदित्यर्थ । पूर्वं "प्रधानं पुरुषं चापि प्रविश्य" इत्यादिना प्रधानपुरुषयोरुभयोरपि क्षोभोक्त्या उभाभ्यां सृष्टिर्भवतीति ज्ञापितं । अत्र गुणसाम्यादित्यादिना प्रधानात्सृष्टिप्रकारो निरूप्यते । पुरुषादपि सृष्टिप्रकारस्तु । "नारायणाख्य परमं शेते लक्ष्म्यान्वितो लये । सएव पुरुषाख्यं तु द्वितीयं रूपमात्मनं । कृत्वा रमया पुरुषनामानं तु चतुर्मुखं । प्रधानाख्या च गायत्री ससर्ज पुरुषात्मकं । चतुर्मुखं स पुरुषो महत्तत्त्वाभिधं पुन । प्रधानाख्या गायत्र्या ससर्जात्मानमेव च" इत्यादि भागवततात्पर्यवचनादवगन्तव्यं ॥ ३३ ॥ प्रधानादिकारणजातस्योपादानतया महदादिकार्यव्याप्ततया तस्य तदाधारत्वमित्याह—प्रधानतत्त्वमित्यादिना । उद्भूतं उत्पन्नं महान्तं महत्तत्त्वं प्रधानं तत्त्वं समावृणोत् आवृत्य स्थितं । महत्तत्त्वस्वरूपनिरूपणपूर्वकमुक्तमेवार्थं विवृणोति—सात्त्विक इत्यादिना । सममन्यूनं यथा भवति तथा । त्वचा बीजं यथा आवृतं तथा सात्त्विकादिभेदेन त्रिविधो महान् प्रधानतत्त्वेनावृत इत्यर्थ । अत्र महत्तत्त्वस्य सात्त्विकादिभेदेन त्रैविध्यकथनं न व्यक्तिभेदाभिप्रायकं । महदवान्तरभेदकार्याणां तु अन्यत्रुक्तेः । किंत्वेकस्या-

[पा०] १ ज ट ठ प्रधान

त्रिविधोऽयमहंकारो महत्तत्त्वादजायत ।
भूतेन्द्रियाणां हेतुस्स त्रिगुणत्वान्महामुने ।
यथा प्रधानेन महान्महता स तथा वृतः ॥३६॥
भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः ।
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ॥३७॥
शब्दमात्रं तथाकाशं भूतादिः स समावृणोत् ।
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ॥३८॥

वित्सुखीयम् ।

नेति । समं समन्तत इत्यावृतम् । वैकारिकः सात्त्विकः । तैजसः राजसः । भूतादिः भूतानां पञ्चानां कारणभूतः स तामसः ॥ ३५ ॥ विकुर्वाणः कार्योत्पत्त्युन्मुखः सन्निहितसहकारिकारणगुण इत्यर्थः । शब्दतन्मात्रकमिति शब्दादिपञ्चतन्मात्राणि ससर्जेत्यन्वयः । शब्दतन्मात्रादुपादानादहंकारो निमित्त-कारणभूत आकाशं ससर्ज । तत्र शब्दलक्षणमुपादानं शब्दतन्मात्रानुप्रवेशात् । शब्दमात्रं शब्दो मात्रा गुणो यस्याकाशस्य तथाकाशं । स्पर्शमात्रमुपादानभूतमाकाशो निमित्तकारणभूतः कार्यरूपेण ससर्ज । यथा कुलालो मृदं घटरूपेण सृजति तथाकाशं स्पर्शतन्मात्रं वायुरूपेण परिणमयतीत्यर्थः ॥ ३७ ॥ ३८ ॥

श्रीधरीयम् ।

यद्वेयं त्वचा बीजं यथा आवृतं तथा सात्त्विकादित्रिविधोऽसौ महान् प्रधानतत्त्वेन समन्तादावृत इत्यर्थः । वैकारिकः सात्त्विकः । तैजसो राजसः । भूतादिस्तामस इति क्रमेण व्याख्येयं ॥ ३५ ॥ त्रिविध इति ॥ स च भूतानामिन्द्रियाणां च हेतुर्देवानामप्युपलक्षणम् ॥ ३६ ॥ तामसाहङ्कारकार्यं प्रपञ्चयति—भूतादि-रित्यादिनवभिः । भूतादिरिति ॥ विकुर्वाणः क्षुभ्यन्नित्यर्थः । शब्दतन्मात्रकं भूतसूक्ष्मरूपं । ससर्जेति पाठे स एवार्थः । शब्दो लक्षणं व्यावर्तको गुणो यस्य तत् शब्दलक्षणं । शब्दादितन्मात्राण्येषामानादि-

विष्णुचित्तीयम् ।

विपर्ययेनाविकाररूपस्य परमसत्त्वस्य व्यावृत्तिः । "वामं देवाश्च मुनयः सत्त्वस्था नृपसत्तम । हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः" इति मोक्षधर्मोक्तेः ॥ ३५ ॥ त्रिविध इति ॥ भूतेन्द्रियाणां हेतुः स इत्यत्र तामसांशेन भूतानां हेतुः । सात्त्विकांशेनेन्द्रियाणाम् । राजसांशेनोभयोरनुग्राहकः॥३६॥ भूतादिरित्यादि ॥ ततो भूतादिर्विकुर्वाणः क्षुभ्यन्नभिव्यक्तविशेषसद्गुणकं शब्दतन्मात्रं ससर्ज । शब्दतन्मात्राच्छब्दविशेषलक्षणं स्थूलाकाशमभूदित्यर्थः ॥ ३७ ॥ शब्दमात्रमिति ॥ शब्दमात्रं शब्द-मात्रं तथा आकाशं स्थूलाकाशं च स भूतादिरावृणोत् । एतेन पूर्वपूर्वतन्मात्रमुत्तरोत्तरतन्मात्रं तद्विशेषं चावृणोतीति दर्शितम् । आकाशमित्यादि तन्मात्ररूपः स्थूलाकाशमपि स्पर्शतन्मात्रं च ससर्ज ॥ ३८ ॥

वृत्तात्रेयीयम् ।

मेव व्यक्तौ गुणत्रयसत्त्वाभिप्रायकं । "भूतादिश्चैव तामसः" इत्युक्त्या वैकारिकस्य सात्त्विकत्वं तैजसस्य राजसत्वमित्यर्थादवगम्यते ॥ ३४ ॥ ३५ ॥ अयं त्रिविधोऽहंकारो भूतेन्द्रियाणां हेतुः । भूतेन्द्रियपदं देवादी-नामप्युपलक्षणं । त्रिगुणत्वात्सत्त्वादिगुणभेदेन त्रिविधत्वात् । तत्र सत्त्वांशो वैकारिको देवादीनां हेतुः । रजसोंऽशस्तैजस इन्द्रियाणां । तामसांशो भूतादिः भूतानामिति बोध्यं ॥ ३६ ॥ तामसाहङ्कारकार्यं प्रपञ्च-यति—भूतादिरित्यादिना । विकुर्वाणः परिणम्यमानः । शब्दतन्मात्रकं सत्त्वाख्यं तन्मात्रकं ससर्ज ॥ ३७ ॥ शब्दतन्मात्राद्विकुर्वाणादाकाशं शब्दलक्षणं शब्दो लक्षणं व्यावर्तको गुणो यस्य तथाभूतं अभू-

रत्नगर्भीयम् ।

तिरूपा कठिना या पृथिवी । तन्मात्रसंज्ञानिरुक्तिमाह—तस्मिन्निति । शब्दमात्राणि सन्ति सूक्ष्मतया-

[पा०] १ ख. ट. ड. सर्वे तन्मात्रिकं.

चलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ।
आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् ३९॥
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ।
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ॥ ४० ॥
स्पर्शमात्रं तु वै वायू रूपमात्रं समावृणोत् ।
ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह ॥४१॥
सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च । ४
रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत्॥४२॥
विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ।
सङ्घातो जायते तस्मात्तस्य गन्धो गुणो मतः॥४३॥

चिरसुखीयम् ।

कार्यमाह—बल्यानिति । आकाशं शब्दमात्रं शब्दगुणकं स्पर्शमात्रं स्पर्शगुणकं वायुं व्याप्नोदित्याह—आकाशमिति ॥ ३९ ॥ वायुर्निमित्तकारणभूतो रूपमात्रं तेजसः उपादानं कार्यरूपेण सृष्टवानित्यर्थः । तत्कार्यं निर्दिशति—ज्योतिरिति ॥ ४० ॥ स्पर्शगुणकेन वायुना रूपगुणकस्य तेजसो व्याप्तिमाह—स्पर्शमात्रस्त्विति । एवं ज्योतिरपि रसतन्मात्रमुपादानं अम्भोरूपेण ससर्ज । स्वयं निमित्तकारणं सदित्याह—ज्योतिश्चापीति ॥ ४१ ॥ रूपगुणकं तेजो रसगुणकान्यम्भांसि व्याप्नोदित्याह—रसमात्राणीति ॥ ४२ ॥ अम्भांसि निमित्तकारणानि गन्धतन्मात्रमुपादानं सङ्घातशब्दवाच्यपृथिवीरूपेण

श्रीधरीयम् ।

महाभूतेष्वनुस्यूतान्यभिव्यक्तानि सन्ति । गुणत्वेन वर्तन्त इत्युच्यन्ते ॥ ३७ ॥ ३८ ॥ ३९ ॥ तत इति ॥ तज्ज्योति रूपगुणमुच्यते ॥ ४० ॥ ४१ ॥ सम्भवन्तीति ॥ तानि अम्भांसि रसाधाराणि ॥ ४२ ॥ विकुर्वाणानीति ॥ सर्वगुणसहितमस्त्वात्काठिन्याच्च सङ्घातः पृथ्वी ॥ ४३ ॥

विष्णुचित्तीयम् ।

बलवानिति ॥ बलवानभवद्वायुः स्पर्शमात्रादिति शेषः । स्पर्शः स्पर्शविशेषः ॥ ३९ ॥ तत इति ॥ वायुः तन्मात्ररूपं रूपमात्रं ससर्ज ज्योतिरिति । वायो रूपतन्मात्रसहिताद्वायोः स्पर्शतन्मात्ररूपात्स्थूलं ज्योतिरुत्पद्यत इत्यर्थः । अत्रेदमनुसन्धेयम् । पूर्वपूर्वतन्मात्रसहितादेवोत्तरोत्तरतन्मात्रात्स्वविशेषोत्पत्तिर्नैकेवलात् । तथा सति वाय्वादिभूतविशेषाणां तत्तद्गुणाभिव्यक्तियोगात् कारणक्रमेण हि कार्ये गुणसम्भव इति । अत्र पुराणान्तरवचनम् । "आकाशं शब्दतन्मात्रं स्पर्शमात्रं समाविशत् । रूपं तथैवाविशत शब्दस्पर्शगुणावुभौ । शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् । तस्माच्चतुर्गुणा ह्येते विशेषाश्चेन्द्रियग्राह्या" इत्यादि ॥ ४० ॥ स्पर्शमात्रमिति ॥ ज्योतिः रूपतन्मात्रम् ॥ ४१ ॥ सम्भवन्तीति ॥ ततोऽम्भांसि ततो रसतन्मात्रात्पूर्वतन्मात्रत्रयसहितात् ॥ ४२ ॥ विकुर्वाणानीति ॥ अम्भांसि रसतन्मात्राणि ।

दत्तात्रेयीयम् ।

दिति शेषः । अत्र शब्दो ध्वन्यात्मक एव न तु वर्णात्मकः तस्य नित्यत्वात् । तदुक्तं । "शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः । आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते । स एव व्यज्यमानस्तु भवेत्कर्णकर्णगोचर इति । भूतादिं तामसाहङ्कारं । शब्दतन्मात्रं । तथाऽऽकाशं भूताकाशं चावृणोत् ॥ ३८ ॥ बलवानभवद्वायुः स्पर्शमात्रादिति शेषः ॥ ३९ ॥ शब्दतन्मात्रं तथाऽऽकाशं । स्पर्शतन्मात्रं । वायुश्चेति शेषः । तदुभयं समावृणोत् ॥ ४० ॥ वायोः । वायोरुत्पन्नाद्रूपमात्रादित्यर्थः । तज्ज्योतिः । रूपं गुणः रूपं गुणो यस्य तत्तथा । रूपमात्रं ज्योतिश्चेति शेषः ॥ ४१ ॥ ततो रसतन्मात्रात् । तान्यम्भांसि रसाधाराणि रसाख्यगुणाधाराणि ॥ ४२ ॥ रसमात्राण्यम्भांसि च । रूपमात्रं ज्योतिरावृणोदित्यर्थः ।

[पा०] १ ग ङ ढ ठ शब्दतमात्रं १ ग वायुश्चापि विकुर्वाणो ३ ज छ स्पर्शमात्रस्तु

तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता ४४ ।
तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ४५ ॥
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ।
भूततन्मात्रसर्गोऽयमहंकारात्तु तामसात् ॥ ४६ ॥

चित्सुखीयम् ।

ससृजिरे इत्याह—विकुर्वाणानीति ॥ ४३ ॥ तस्मिंस्तस्मिन्निति । तत्तदाकाशादिकार्ये तेषां शब्दादीनां मात्रा अंशाः प्रविशन्ति । तेन हेतुना तन्मात्रता मता तेषामित्यर्थः ॥ ४४ ॥ शब्दादितन्मात्राणामविशेषसंज्ञां निर्वक्ति—तन्मात्राणीति । अविशेषाणि वक्ष्यमाणशान्तादिविशेषशून्यानि ॥ ४५ ॥ व्यावर्त्यविशेषानाह—न शान्ता इति । शान्तत्वं सुखहेतुत्वात् । घोरत्वं दुःखहेतुत्वात् । मूढत्वं मोहहेतुत्वात् । एतत्त्रयाभावादविशेषा इति तेषां नामानीत्यर्थः । एवं तामसाहंकारात् सर्गमुक्तमुपसंहरति

श्रीधरीयम् ।

शब्दादीनां तन्मात्रसंज्ञां निर्वक्ति—तस्मिन्निति ॥ तस्मिंस्तस्मिन्नाकाशादौ तत्तच्छब्दादिकमात्रा सूक्ष्मरूपं तेन कारणेन शब्दादेस्तन्मात्रता स्मृता ॥ ४४ ॥ अविशेषसंज्ञामपि तेषां साङ्ख्यप्रसिद्धां निर्वक्ति—तन्मात्राणीति ॥ ४५ ॥ अविशेषत्वमाह—न शान्ता इति ॥ उपसंहरति—भूततन्मात्रेति । भूतानां तन्मात्राणां

विष्णुचित्तीयम् ।

संघातो भूमिः सहतशब्दादिसर्वगुणकत्वात् ॥ ४३ ॥ तस्मिन्निति ॥ तस्माद्गन्धतन्मात्रात्पूर्वतन्मात्रचतुष्टयसहितात् तस्मिन्व्योमादौ विशेषरहितशब्दस्पर्शादिगुणमात्रं तेन तस्मिन् तत्त्वे तन्मात्रता ॥ ४४ ॥ तथैवाह तन्मात्राणीति ॥ अविशेषाणि विशेषरहितानि ततस्तेन ते शब्दादयोऽविशेषसंज्ञाः ॥ ४५ ॥ विशेषशब्दार्थं व्याकुर्वंस्तत्सद्भावविशेषमाह—न शान्ता इति ॥ शान्तघोरमूढाख्यत्रिगुणजन्यविशेषरहितत्वादविशेषिणः । उक्तं भूतसर्गं निगमयति—भूततन्मात्रेति ॥ भूतानां तन्मात्राणां च सर्गः अहंकारात्तु

वृत्ताभेधीयम् ।

संघातः पृथिवी । संहतशब्दादिगुणवत्त्वात्काठिन्याद्वा तस्माद्गन्धतन्मात्रात् ॥ ४३ ॥ शब्दादीनां तन्मात्रशब्दं निर्वक्ति—तस्मिन्निति । तस्मिन्नाकाशादौ । तन्मात्र शब्दादिकमेवैकमेव तेन कारणेन शब्दादेस्तन्मात्रता स्मृता । अत्राकाशस्य स्पर्शाद्यभावाच्छब्द एक एवेति शब्दस्याकाशतन्मात्रत्वं स्पर्शादीनां वाय्वादावेकैकस्मिन्पूर्वं कारणानुप्रवेशप्रयुक्तशब्दाद्यपेक्षया प्रथममवस्थितेस्तन्मात्रतेत्यर्थः । तदुक्तं । "शब्दैनैव यतो ज्ञेयो हरिलिङ्गं तु तस्य तत् । सर्वात्मभावात्तन्मात्रा नभसश्चेति कीर्त्यते । स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थितेः" इति ॥ ४४ ॥ भूततन्मात्रोत्पत्तिकथनेन तेषां कार्यैकरूपत्वेनेति भ्रमे तेषामेव सूक्ष्मरूपेण नित्यत्वादकार्यत्वापरपर्यायामविशेषसंज्ञामाह—तन्मात्राणीति । सूक्ष्मरूपाणीति शेषः । अविशेषाणि अकार्याणि । हि यस्मादकार्याणि ततः अकार्यत्वाद्धे शब्दादयः अविशेषाः अविशेषशब्दवाच्याः । विशेषशब्दस्य कार्यवाचित्वं "विशेषः कार्यमुद्दिष्टं विशेषाद्दृश्यते यतः" इति स्कान्दपुराणवचनादवगन्तव्यं । तन्मात्रपदं सूक्ष्मरूपाणां भूतानामिन्द्रियाणामुपलक्षणं । कुत इति चेत् । "भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकं । येषां विकारोऽनित्यः स्यान्नित्या एव हि चेतनाः" इति तत्त्वविवेकवचनात् । "शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः" इति भागवते ॥ ४५ ॥ सात्त्विकादिरूपत्वात्तत्त्वादिकमहङ्कारकार्याणामिनोत-

रत्नगर्भीयम् ।

चिह्न भा कश्चित्तन्मात्रशब्दोऽपि तत्समानार्थः ॥ ४३ ॥ साङ्ख्यप्रसिद्धामविशेषसंज्ञामपि तेषामाह—तन्मात्राणीति । अविशेषा इति कपिलर्षिकृतसंज्ञात्वात्पुंस्त्वं । विशेषाभावमेव दर्शयति—नेति । शान्तत्वं सुखहेतुत्वं । घोरत्वं दुःखहेतुत्वं । मूढत्वं परप्रकाशकता । एतेषां विशेषाणामभावादविशेषाः ॥ ४६ ॥

तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥४७॥
त्वक्चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पञ्चमम् ।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विज ४८॥

चित्सुखीयम् ।

॥ ४६ ॥ राजसाहङ्कारात् सर्गान्तरं वक्तुमाह—तैजसानीति । तैजसानि राजसाहङ्कारनिमित्तकारणजन्यानि । देवाः दीव्यन्ति व्यवहरन्त्येभिरिति देवा इन्द्रियाणि त एव देवा वैकारिकाः सात्त्विकाहङ्कारोपादानजन्याः ॥ ४७ ॥ यानि ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्चेति बुद्धियुक्तानि ज्ञानयुक्तानि

श्रीधरीयम् ।

सर्ग इत्यर्थः ॥ ४६ ॥ राजसं सात्त्विकं च सर्गमाह—तैजसानीति ॥ तैजसाहङ्कारकार्याणि बाह्येन्द्रियाणीह दश । तदधिष्ठातारो देवास्तु "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" इति श्रीभागवतोक्ताः । वैकारिकाः सात्त्विकाहङ्कारजाः । एकादशमिन्द्रियं मनोऽन्तःकरणं । तदपि वैकारिकमिति सम्बन्धः । अत्र चान्तःकरणे चेतनाहङ्कारसङ्कल्पाध्यवसायात्मकचतुर्वृत्तिके तत्तद्वृत्त्यधिष्ठातारो ये देवाः क्षेत्रज्ञरुद्रचन्द्रब्रह्माणः तेऽपि वैकारिकास्स्मृता इत्यर्थः ॥ ४७ ॥ तेषु ज्ञानकर्मेन्द्रियविभागमाह—त्वगित्यादिद्वाभ्याम् ॥ त्वगादीनि पञ्च बुद्धियुक्तानि ज्ञानेन्द्रियाणि स्पर्शादीनामवाप्त्यर्थमिति वक्तव्ये क्रमाविवक्षया शब्दादी-

विष्णुचित्तीयम् ।

तामसात् । अयमुक्तक्रमेण न त्वव्यवधानेन । केचित् । "आत्मन आकाशः सम्भूतः । आकाशाद्वायुः" इत्यादिश्रुतिदर्शनादाकाशादिभूतविशेषाणां पूर्वपूर्वं प्रति प्रकृतित्वमाहुः । तदष्टौ प्रकृतयः षोडश विकृतय इति श्रुतिविरुद्धम् । तेषामपि प्रकृतित्वे प्रकृतीनामाधिक्यं । विकृतीनां न्यूनत्वं च स्यात् । तस्मादष्टौ प्रकृतय इत्यादिश्रुतिविरोधेन "आत्मन आकाशः" इत्यादिश्रुतेरिति तैत्तिरीयो व्यापारभेदः । व्याख्यातक्रमघटकात्तत्तत्तभिरेव पूर्वपूर्वतन्मात्र सविशेषमुत्तरोत्तरतन्मात्र चोत्पाद्यतीत्यापक्षाणैः । 'पृथिव्या ओषधयः' इत्योषधिप्रकृतित्वेऽपि पृथिव्या न तत्त्वप्रकृतित्वमित्यविरोधः । तस्मादुक्तप्रकार एव सृष्टिक्रमः ॥ ४६ ॥ तैजसानीति ॥ राजसाहङ्कारकार्याणीन्द्रियाणीति केचिदाहुः । देवा मनस्सहितानि दशेन्द्रियाणि वैकारिकाः सात्त्विकाहङ्कारकार्याणीत्यपरे । स्वपक्षमाह—अत्र देवा इति । इन्द्रियाणां देवशब्दवाच्यत्वं तदधिष्ठातृदेवताभिप्रायेण । तैजसाहङ्कारस्तु वैकारिकतामसयोः स्वकार्यकरणे प्रवर्तनः सत्त्वतमसोः केवलं रजः प्रवर्तकं तनोतीति थायूर्से । अहङ्कारस्येन्द्रियाणि । प्रतिनिमित्तत्वमेव भूतानामेवोपादानत्वम् "अन्नमयं हि सौम्य मन आपोमयः प्राणः तेजोमयी वाक्" इत्यादिश्रुतेरिति केचिदाहुः तदयुक्तम् । अहङ्कारस्यैवोपादानत्वेऽपि भूतानामाप्यायकत्वेनापि तथानिर्देशोपपत्तेः । अयमनेन्द्रियस्य सृष्टिक्रमः ॥ ४७ ॥ त्वगिति ॥ वैकारिकाहङ्कारात्क्रमेण शब्दतन्मात्रादिपञ्चकसहायात्क्रमेण श्रोत्रादिज्ञानेन्द्रियपञ्चकस्य सृष्टिः

दत्तात्रेयीयम् ।

मिति सूक्ष्मरूपाणां तन्मात्रादीनां तदपि नास्तीत्याह—नेति । तामसाहङ्कारकार्यमुपसंहरति—भूतेति । भूतानां तन्मात्राणां च सर्गः ॥ ४६ ॥ तैजसवैकारिकाहङ्कारयोः कार्यमर्गमाह—तैजसानीति । ज्ञानेन्द्रियकर्मेन्द्रियभेदेन दशेन्द्रियाणि तैजसानि तैजसाहङ्कारकार्याणि । इन्द्रियपदं बुद्धिप्राणयोरप्युपलक्षणं । "बुद्धिःप्राणश्च तैजसः" इति भागवतोक्तेः ॥ दश तदभिमानिनो देवाः "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" इति भागवतोक्ताः । वैकारिकाः वैकारिकाहङ्कारोत्पन्नाः । एकादश मनश्च वैकारिकमितिसम्बन्धः । अत्र मनसोऽभिमानिनो ये देवाः । "मनसस्त्वनिरुद्धश्च चामश्चान्ये यथोदिताः" इति स्कन्दपुराणोक्तास्तेऽपि वैकारिका इत्यर्थः ॥४७॥ तैजसानीन्द्रियाणीत्युक्तं तान्येवाह—त्वगिति । शब्दादीनामवाप्त्यर्थं शब्दादीनां

पायूपस्थौ करौ पादौ वाक्च मैत्रेय पञ्चमी । विसर्गशिल्पगत्युक्ति कर्म तेषां च कथ्यते ॥४९॥

आकाशवायुतेजांसि सलिलं पृथिवी तथा । शब्दादिभिर्गुणैर्ब्रह्मन्संयुक्तान्युत्तरोत्तरैः ॥५०॥

चित्सुखीयम् ।

॥ ४८ ॥ विसर्ग इतिपायूपस्थयोःकर्म । विसर्गशिल्पगत्युक्तीति द्वन्द्वैकवद्भावः ॥४९॥ उत्तरोत्तरैः शब्द-

श्रीधरीयम् ।

नामित्युक्तम् ॥ ४८ ॥ पायूपस्थाविति ॥ पायोः पुरीषोत्सर्गः उपस्थस्य मूत्रविसर्गः करयोः शिल्पं पादयोर्गतिः वाच उक्तिः । विसर्गशिल्पगत्युक्तीति द्वन्द्वैक्यम् । विसर्गादि पाय्वादीनां कर्म । अतस्तानि कर्मेन्द्रियाणि । विसर्गानन्देत्यादिपाठस्सुगमः ॥ ४९ ॥ पुनस्तामसाहङ्कारकार्ये किञ्चिद्विशेषमाह—आकाशेत्यादिसार्धेन—आकाशेति ॥ उत्तरोत्तरैः शब्दादीनांमध्ये उत्तरः परो गुणः कारणगुणाधुत्तरोधिको येषां तैस्संयुक्तानि । तथाहि आकाशस्य कारणगुणाभावात्स्वकीयश्शब्द एवैको गुणः । वायोस्तु स्वकीयस्स्पर्शः । आकाशानुगमाच्च शब्दस्स्पर्शश्चेति द्वौ गुणौ । एवं तेजसो रूपम् । आकाशवाय्वनुगमाच्छब्दस्स्पर्शश्चेति त्रयः । एवं सलिलस्य रसः । शब्दस्पर्शरूपाणि चेति चत्वारः । एवं पृथिव्या गन्धः ।

विष्णुचित्तीयम् ।

तस्मादेव तत्सहायाद्वागादिकर्मेन्द्रियपञ्चकस्य सृष्टिः । असहायात्तु तस्मान्मनसः सृष्टिरिति । अयमर्थः पुंसो विषयज्ञानार्थं बुद्धियुक्तानि त्वगादीनि विषयज्ञानार्थं भवन्तीति शेषः । अत्र बुद्धिशब्देनान्तःकरणस्य ग्रहणम् । अत्र श्लोके क्रमो न विवक्षितः ॥ ४८ ॥ पाय्विति ॥ पायोर्निर्हृतिविसर्गः उपस्थस्य मूत्ररेतोविसर्गः विसर्गशिल्पगत्युक्तीति द्वन्द्वैकवद्भावात्रपुंसकत्वम् ॥ ४९ ॥ अथाण्डसृष्ट्यर्थं भूतानां पञ्चीकरणमाह—आकाशेति । अत्राकाशादयः शब्दा भूतविशेषपराः उत्तरोत्तरैः उत्तरोत्तरत्र उत्तरैरधिकैरित्यर्थः । यतदुक्तं भवति । आकाशादिमहाभूतानि उत्तरोत्तरत्र वाय्वादावधिकैः शब्दादिभिर्गुणैर्विशिष्टानि परस्पर युक्तानि मिलितानि । तेनाकाश एकगुणो वायुर्द्विगुणस्तेजस्त्रिगुणमापश्चतुर्गुणाः पृथिवी

सत्यव्रतीयम् ।

ज्ञानार्थं । स्पर्शादीनामिति वक्तव्ये शब्दादीनामित्युक्तिः क्रमाविवक्षया । बुद्धियुक्तानि ज्ञानसाधनेन्द्रियाणि ॥ ४८ ॥ विसर्गशिल्पगत्युक्तीति द्वन्द्वैकवद्भावः । पायूपस्थयोः कर्म विसर्गः । तत्र पायोः पुरीषविसर्गः । उपस्थस्य मूत्ररेतोविसर्ग इति विवेकः ॥ ४९ ॥ तामसाहङ्कारकार्याणां पुनरपि किञ्चिद्विशेषमाह—आकाशेत्यादिना । उत्तरोत्तरैरपर्युपरितनैः शब्दादिभिर्गुणैराकाशादीनि संयुक्तानि विशिष्टानि । इदमुक्तं भवति । आकाशस्य कारणगुणाभावाच्छब्द एव गुणः । वायोः स्वकीयः स्पर्शः । आकाशानुगमाच्छब्दश्चेति द्वौ गुणौ । एवं तेजसो रूपं । आकाशवाय्वनुगमाच्छब्दः स्पर्शश्चेति त्रयो गुणाः । एवं सलिलस्य रसः । आकाशवायुतेजसामनुगमाच्छब्दस्पर्शरूपाणीति चत्वारः । एवं पृथिव्या गन्धः । आकाशादिचतुष्टयानुगमाच्छब्दादयश्चत्वार इति पञ्च गुणाः । तेन कार्यस्य पूर्वपूर्वकारणसंयुक्तत्वमित्यनेन विशेषाः शान्तादिरूपाः अहङ्कारकार्यभूता वैकारिकादयः शान्ता घोरा विमूढाश्च भूता इत्यर्थः । यद्यपि वैकारिकाद्यंशमयैव सृष्टिर्विवक्षिता । "वैकारिकादित्रिगुणा" इत्यादिभागवते तीर्थोक्तरीत्याप्यनुगमात् ।

[पा०] १ पायूपस्थम् इत्यपि पा०. २ च उत्तरोत्तरैः.

शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥५१॥
नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥५२॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
एकसङ्घातलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥५३॥

चित्सुखीयम् ।

प्रभृतिभिरेकैकाधिकैः ॥ ५० ॥ तेषामेव भूतानां विशेषत्वं दर्शयति—शान्ता इति । नानावीर्याः विभिन्नसामर्थ्या अवकाशचेष्टादहनक्लेदनधारणानां हेतुत्वात् । संहतिं मेलनं असमागम्य कृत्स्नश इति परस्परं अनभिव्याप्य क्षीरवदनुप्रवेशं विनेत्यर्थः ॥ ५१ ॥ ५२ ॥ कथं तर्हि कार्यमुत्पादितवन्तस्तत्राह—समेत्येति । समेत्य प्राप्य । किमित्यत आह—अन्योन्यसंयोगमिति । परस्परसमाश्रयाः अन्योन्यसहकारिण इति यावत् । एकः सङ्घातः समुदायो ब्रह्माण्डलक्षणो लक्ष्य उद्देश्यो येषां त एकसङ्घातलक्ष्याः ॥ ५३ ॥

श्रीधरीयम् ।

शब्दादयश्चत्वार इति पञ्च गुणाः ॥ ५० ॥ शान्ता इति ॥ अत एव गुणविशेषैश्शान्तास्सुखदाः घोरा दुःखदा मूढाः मोहकराश्च भवन्ति । तेनाकाशादयो विशेषसंज्ञास्स्मृताः ॥ ५१ ॥ एवं तावन्महदादिकारणानां सर्गमुक्त्वा इदानीं तैर्मिलितैर्ब्रह्माण्डसर्गमाह—नानावीर्या इत्यादिभिर्दशभिः—नानावीर्या इति ॥ तत उत्पत्त्यनन्तरं संहतिं विना पृथग्भूतास्ते नानावीर्या अवकाशशोषणदहनादिभिन्नशक्तियुक्ताः । अतः असमागम्यान्योन्यसाहाय्यमप्राप्य प्रजाविशिष्टभोगायतनानि शरीराणि स्रष्टुं नाशक्नुवन्नित्यन्वयः ॥ ५२ ॥ ततः समेत्येति ॥ कथम्भूताः ? एकसङ्घातो लक्ष्यस्साध्यो येषां ते अतो गुणप्रधानभावेनैक्यं

विष्णुचित्तीयम् ।

पञ्चगुणेति ॥ ५० ॥ शान्ता इति ॥ एतेन परस्परं मेलनेन प्रत्येकं विशेषाः शान्ता घोरा मूढाः स्वतः शान्ते भूमिजले घोरौ तेजोऽनिलौ मूढ आकाशः मेलनात्सर्वे शान्तघोरमूढाः । अयमत्र पञ्चीकरणप्रकारः । आकाशस्यैकमर्धमाकाशात्वेन स्थितम् । अन्यस्मिन्नर्धे चतुर्धाकृते आप्यादिचतुर्भेदभूतप्रवेशः एवं भूतान्तरेऽपि । उक्तं हि—"एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः । चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम् ॥ व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम् । अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम्" इत्यादि ॥ ५१ ॥ अथाण्डोत्पत्त्यर्थं महदादीनां परस्परात्मकत्वमित्याह—नानावीर्या इति ॥ नानावीर्यत्वमतिद्रवातिकठिनत्वादिकम् । संहतिं मेलनं विनाऽत एवासमागम्य समित्येकीभावे एकत्वमप्राप्य । प्रजाग्रहणमण्डस्याप्युपलक्षणार्थम् ॥ ५२ ॥ समेत्येति ॥ समेत्य परस्परसमाश्रयादन्योन्यसंयोगं संश्लेषं समेत्यानन्तरमशेषत ऐक्यं प्राप्य एकसङ्घातवीक्षाः चतुर्विधानन्तप्रजाविरन्तराण्डोत्पादनतत्पराः पाठान्तरे एकः सङ्घातः अण्डं लक्ष्यं साध्यं येषां ते एकसङ्घातलक्ष्याः । यद्वा एकसङ्घातलक्ष्या एकः सङ्घातः

दत्तात्रेयीयम् ।

तथाऽपि भूतेन्द्रियाणामित्यारभ्य व्युत्क्रमेण सृष्टिकथनं क्रमाविवक्षयेति बोद्धव्यं ॥ ५० ॥ ५१ ॥ महदादिपृथिव्यन्तसृष्टिमुक्त्वा तेभ्यो ब्रह्माण्डोत्पत्तिप्रकारमाह—नानावीर्या इत्यादिना । ततः सृष्ट्यनन्तरं संहतिं मेलनं विना पृथग्भूताः । नानावीर्याः स्वस्वकार्योद्गतपेतास्ते महदादयोऽसमागम्य परस्परमेलनमप्राप्य ततः प्रजाः प्राणिनो देहयोगेन स्रष्टुं नाशक्नुवन्नित्यन्वयः ॥ ५२ ॥ कथं तर्ह्यण्डोत्पत्तिरित्यत आह—समेत्येति । परस्परसमाश्रयाः परस्परसापेक्षाः एकसङ्घातलक्ष्याः एकसङ्घातं अण्डं लक्ष्यं उद्देश्यं येषां ते तथोक्तास्ते महदादयो विशेषान्ताः महदादिपृथिव्यन्ताः पुरुषाधिष्ठितत्वात्पुरुषेण परमात्मनाऽधिष्ठितत्वादन्तःप्रविश्य प्रेरितत्वादव्यक्तानुग्रहेण च चेतनाचेतनात्मकोभयविधप्रकृत्यानुकूल्येन चान्योन्यसं-

पुरुषाधिष्ठितत्वाच्च प्रधानानुग्रहेण च ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥५४॥
तत्क्रमेण विवृद्धं तज्जलबुद्बुदवत्समम् ।
भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम् ।
प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् ॥५५॥
तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपो जगत्पतिः ।
विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ॥५६॥

विष्णुचित्तीयम् ।

तथाऽपि कथमचेतनानां प्रवृत्तौ स्वातन्त्र्यमित्यत आह—पुरुषाधिष्ठितत्वादिति । अव्यक्तस्यानुग्रहो नाम अभ्यारब्धकार्यमध्युन्मुखत्वभावः । भूतेभ्य उत्पन्नमिति विशेषः ॥ ५४ ॥ ५५ ॥ स्थानत्वमेव दर्शयति—

श्रीधरीयम् ।

संभाव्य ॥ ५३ ॥ ऐक्ये हेतुः—पुरुषाधिष्ठितत्वादिति ॥ पुरुषेणेश्वरेणाधिष्ठितत्वात् । प्रधानस्यानुग्रहेण विशिष्टपरिणामोन्मुखत्वेन ॥ ५४ ॥ ब्रह्माण्डोत्पत्तेः प्रयोजनमाह—सार्धेनाहेत्यादिश्लोकार्धेन—तदिति ॥ तत् समवृत्तं । ततो भूतेभ्यः तदण्डं क्रमेण विवृद्धं तत्प्राकृतं प्रकृतिविकारात्मकं हिरण्यगर्भरूपस्य विष्णोरनुत्तमं श्रेष्ठं स्थानम् ॥ ५५ ॥ स्थानत्वमेवाह—तत्रेति ॥ अव्यक्तस्वरूपः प्रकृतेः परः मायया व्यक्तरूपः स्वयं—

विष्णुचिन्तीयम् ।

इति द्रष्टव्यः ॥ ५३ ॥ पुरुषाधिष्ठितत्वादिति ॥ पुरुषाधिष्ठितत्वात्पुण्यपापपरिष्वक्तजीवानुप्रविष्टत्वात् । अव्यक्तानुग्रहेण अनुग्रहोऽनुप्रवेशः बीजस्य त्वगनुग्रहेणाङ्कुरारम्भकत्वमाप्यायकत्वं वा ॥ ५४ ॥ तदिति समं समस्तम्, अण्डस्य हि भित्त्यादिावयवानां समकालत्वं जलबुद्बुदवत् अनेनाऽस्थैर्यं सूचितम् । भूतानामेव प्राधान्यमित्याह—भूतेभ्य इति । ब्रह्मरूपस्य प्राकृतमिति विशेषणाभ्यां व्यासाधारणं दिव्यरूपमप्राकृतं स्थानमस्तीति सूचितम् ॥ ५५ ॥ अण्डभोक्ता चतुर्मुख एव कथं विष्णोः स्थानमित्युच्यते तत्राह

रत्नगर्भीयम् ।

योगे परस्परसंबन्धं समेत्य प्राप्याशेषतः अशेषाः ऐक्यमेव कार्योन्मुख्यम् संप्राप्याण्डं ब्रह्माण्डमुत्पादयन्तीति दूरेणान्वयः । विशेषशब्दस्य पृथिवीवाचित्वं । "पृथ्वी विशेष इत्याहुस्तत्त्वदर्शिनो मनुजाः" इति हरिवंशवचनादवगन्तव्यं । महदादीनां परमात्माधिष्ठितत्वंच मत्स्यपुराणेऽभिहितं । "प्रधानेशान्प्रविश्यासौ प्राविशद्भूमया सह । पाद्मपत्रया स्वयं विष्णुः द्रव्यरूपात्मकेन तथा । सर्वेषां चरूपेण स्वमायायोगेन केशवः । भिन्नानि तानि तत्त्वानि योजयामास माधवः" इति । महदादयो विशेषान्ताः इत्यत्र तदभिमानिनो देवा अपि ग्राह्याः । भागवते महदादितत्त्वोत्पत्तिकथनानन्तरं । "एते देवाः कला विष्णोः पारमायांशलिङ्गिनः । नानात्वा स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम्" इत्यादिना । तेषामपि ब्रह्माण्डोत्पादकत्वोक्तेः ॥ ५३ ॥ ५४ ॥ अण्डस्वरूपमाह—तदिति ॥ जलबुद्बुदवत् समं वर्तुलं उदकेशयं आवरणोदके शयं तदण्डं भूतेभ्यः क्रमेण विवृद्धं । भूतांशानामानुपूर्व्याभिप्रायेण भूतेभ्य इत्युक्तं । बृहदादिति पदद्वयस्योत्तरेणान्वयः । ब्रह्माण्डस्य । "यस्याण्डकोशं शुष्ममाहुः" इति श्रुत्या । "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्" इति व्यासेनापि भगवद्वीर्योत्पन्नत्वोक्तेरण्डोत्पत्तिर्भगवद्वीर्यत्वेन परिणत एव तदुत्पादकः इति नविरोधः । बृहत्त्वं ब्रह्मरूपस्य परमात्मरूपस्य विष्णोरनुत्तमं । प्राकृतं प्रकृतिकार्यं स्थानं । अनेन वैकुण्ठादिषु अप्राकृतं स्थानमस्तीति दर्शितं ॥ ५५ ॥ विष्णोः स्थानमित्युक्तं तदेव दर्शयति—तत्रेति । अव्यक्तस्वरूपः अवाङ्मनसरूपः । ब्रह्मस्वरूपेण ब्रह्माण्डान्तर्यामिस्वरूपेण हिरण्यगर्भेण

[ पा० ] १ ग—घ. च. छ ध. प्रधानानुग्रहेण. २ छ विशेषान्ते ३ ख—घ च—ट. बृहत्. ४ ख. ग. घ. ट—ड. स्थानमनुत्तमम् ।

मेरुरुल्बमभूत्तस्य जरायुश्च महीधराः ।
गर्भोदकं समुद्राश्च तस्यासन्सुमहात्मनः ॥५७॥
साद्रिद्वीपसमुद्राश्च सज्योतिर्लोकसङ्ग्रहः ।
तस्मिन्नण्डेऽभवद्विप्र सदेवासुरमानुषः ॥ ५८ ॥
वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः ।
वृतं दशगुणैरण्डं भूतादिर्महता तथा ॥ ५९ ॥

विष्णुचित्तीयम् ।

यति—तत्रेति । ब्रह्मस्वरूपेण हिरण्यगर्भात्मना ॥ ५६ ॥ उल्बं गर्भावरणमांसविशेषः जरायुगर्भ-माशी ॥ ५७ ॥ साद्रिद्वीपसमुद्राश्चाभवन्निति विपरिणाम कार्यः । सङ्ग्रहस्समुदाय ॥ ५८ ॥ दशगुणैः पूर्वस्मात् दशगुणैः । अण्डाद्दशगुणं वारि वारिणो दशगुणो वह्निरित्यादिक्रमगानामधिष्ठाता ॥५९॥ स्व

श्रीधरीयम् ।

मेव स्वातन्त्र्येणैव तत्र व्यवस्थित ॥ ५६ ॥ न जीववदस्यातन्त्र्यप्रवृत्तिरस्तीत्याह—मेरुरिति ॥ स तु जीववत्कर्मवशादुल्ब भवाकार गर्भवेष्टन तद्बहिर्वेष्टनमार्गं जरायु उल्बं वा "उल्बाज्जरायु" इति श्रुते ॥ ५७ ॥ साद्रिद्वीपेति ॥ ज्योतिस्सूर्यादि । लोकसङ्ग्रह लोकसमूह । तस्मिन्नण्डेऽभवत् । साद्रयो द्वीपास्समुद्राश्चाभवन्नित्यर्थः ॥ ५८ ॥ अण्डस्यान्तस्थितिमुक्त्वा तद्बाह्यस्थितिमाह—वारीति ॥ तत पञ्चा-शत्कोटिपृथिव्यावरणानन्तरं तद्बहिः प्रत्येकं वारिवह्न्यादिभिः दशगुणमुत्तरैरधिकैरावृतं पृथिव्यावरणात्को टियोजनप्रमाणाद्दशगुणं तोयावरणम् । ततो दशगुणं वह्न्यावरणम् । इत्येवं दशगुणोत्तराणि पृथिव्या द्यावरणानि सप्त । अष्टमावरणं त्वष्टममपरिमितम् । "वह्न्याद्भिर्भीयावरणैरष्टभिर्बहिरावृतम्" इति श्रु-

विष्णुचित्तीयम् ।

—तत्रेति ॥ अव्यक्तं प्रधानं व्यक्तं महदादि असौ स्वयमेव प्रधानादिपुरुषापदेशेन स्थित "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ । निमित्तमात्रं तावत्र" इति भारतवचनात् ॥ ५६ ॥ मेरुरित्यादि ॥ तस्य ब्रह्मणः उल्बं गर्भवेष्टनमांसं तद्वेष्टनं जरायुर्गर्भाशय उल्बं वा "उल्बाज्जरायु" इति श्रुते । स्वदेहभूतब्रह्माण्डावयवभूतैर्मेर्वादिभिस्सहितो हिरण्यगर्भस्समवर्ततास इत्यर्थः । 'हिरण्यगर्भः समवर्तताग्रे' इति श्रुते ॥ ५७ ॥ तद्ब्रह्मणा सह सृष्टं यत् ब्रह्मणा सृष्टं तत्सर्वं तस्मिन्नण्ड एवेत्याह—साद्रीति ॥ ज्योतिश्चक्रसहित । लोकसङ्ग्रहो लोकसमूह ॥ ५८ ॥ वारीत्यादि ॥

दत्तात्रेयीयम् ।

तत्र ब्रह्माण्डे तदन्तः स्वयमेव स्वातन्त्र्येण व्यक्तरूपीभूत्वा व्यवस्थित । ननु जीववत् कर्मवशात् । उक्तं च भागवते । "एष पुरुषस्तस्मादण्डं निर्भिद्य निर्गत । सहस्रोर्वङ्घ्रिबाह्वक्षि सहस्राननशीर्षवान्" इति । निर्भिद्य प्रविश्य निर्गत प्रकाशित इत्याचार्यैर्व्याख्यात । अण्डोत्पत्तिवत्तले बहिः स्थितस्य परमात्मनस्सवृन्द-प्रवेशाभावेन बहिर्निर्गमनोक्त्ययोगात् । उक्तार्थं तदन्तर्गतपरमात्मावयवेभ्य एव सृष्टमुक्तेश्च । तस्याण्डस्य मेरुरुल्बं कललरूपमांसविशेष । जरायुर्गर्भाशय । "गर्भाशयो जरायु स्यादुल्बं च कललोऽस्त्रिया" इत्य मर । उल्ब भवाकारं गर्भवेष्टनं चर्म । जरायुस्तद्बहिर्वेष्टनं वा सुमहात्मन सज्योतिः ज्योतिश्चक्रसहित लोकसङ्ग्रह लोकसमूह ॥ ५६ ॥ ५७ ॥ ५८ ॥ अण्डस्यान्तः स्थितिमुक्त्वा तदावरणान्याह—वारी-त्यादिना । अण्ड । तत् कटाहरूपपृथिव्यावरणात् । वारिवह्न्यनिलाकाशैर्भूतादिना तामसाहङ्कारेण च दशगुणैः पूर्वपूर्वापेक्षया दशगुणोत्तरैर्बहिरावृत । शतकोटिप्रमाणात्पृथिव्यावरणाद्दशगुणाधिकं वार्यावरण । ततो दशगुणं वह्न्यावरणमित्येवं क्रमेण वार्यादीनि महदन्तानि षडावरणानि । सप्तमं प्रधानं त्वपरिमित-मिति बोध्य । महतेतिरित्यनेनाजहल्लक्षणया प्रकृतिरपि गृह्यते । महदाद्यल्पाशसहितसमस्तपृथिव्या अ-

[ पा० ] १ प श अहे २ घ भवद्भत्न्

अव्यक्तेनावृतो ब्रह्मंस्तैः सर्वैः सहितो महान् ।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।
नालिकेरफलस्यान्तर्बीजं बाह्यदलैरिव ॥ ६० ॥
जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्मा भूत्वाऽस्य जगतो विसृष्टौ संप्रवर्तते ॥६१॥
सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना ।
सत्त्वभृद्भगवान्विष्णुरप्रमेयपराक्रमः ॥ ६२ ॥
तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः ।
मैत्रेयाखिलभूतानि भक्षयत्यतिदारुणः ॥ ६३ ॥
भक्षयित्वा च भूतानि जगत्येकार्णवीकृते ।
नागपर्यङ्कशयने शेते च परमेश्वरः ॥ ६४ ॥
प्रबुद्धश्च पुनः सृष्टिं करोति ब्रह्मरूपधृक् ॥६५॥

श्रीधरीयम् ।

कोशे ॥ ५९ ॥ अव्यक्तेनेति ॥ अत एव प्रकृतिं पृथक्कृत्य प्राकृतैस्सप्तभिरित्युक्तम् ॥ ६० ॥ एवं ब्रह्माण्डं स्वयं सृष्ट्वा तस्मिँल्लीलया प्रविष्टस्य परमेश्वरस्य गुणावतारैरवान्तरसृष्ट्यादिलीलामाह जुषन्नित्या-दिना यावदध्यायसमाप्ति—जुषन्निति ॥ विसृष्टौ विविधचराचरादिसृष्टौ सम्प्रवर्तते ॥ ६१ ॥ सृष्ट-मिति ॥ यावत्कल्पविकल्पना ब्रह्मादीनामवसानं यावत् । सत्त्वभृत्सत्त्वगुणाधिष्ठाता ॥ ६२ ॥ तमो-द्रेकीति ॥ तमोद्रेकीत्यार्षस्सन्धिः । तमउद्रेकवानित्यर्थः ॥ ६३ ॥ भक्षयित्वेति ॥ परमेश्वरश्शेते ॥ ६४ ॥

विष्णुचित्तीयम् ।

दशगुणे दशगुणोत्तरे ॥ ५९ ॥ अव्यक्तेनेति ॥ प्राकृतैरित्यनेन प्रकृतेरपि लक्षणया ग्रहणम् । छत्रीति न्यायात् ॥ ६० ॥ क्षेत्रज्ञबुद्धिपूर्वकसर्गादौ क्षेत्रज्ञस्यैव गुणवश्यत्वं न तु विष्णोरित्याह—जुषन्निति ॥ ब्रह्मा भूत्वा रजोगुणं जुषन् तत्रापि स्वयं सर्वेश्वरो न गुणवश्यः अपि तु स्वसङ्कल्पेन क्षेत्रज्ञानेव गुण-वश्यान् करोति ॥ ६१ ॥ सृष्टमिति ॥ कल्पविकल्पना ब्रह्माहर्व्यवहारः । सत्त्वम् अप्राकृतं शुद्धसत्त्वगुणं बिभर्तीति सत्त्वभृत् 'गुणादिदोषाश्च मुने व्यतीता' इत्युक्तेः । किं च "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैः

दत्तात्रेयीयम् ।

पद्माकारेण तदवस्थितपदार्थाकारेण च परिणतत्वाद्बहिस्तस्या अभावेन आवरणत्वायोगात्तामविहाय सप्तविध-भेदेनैवावरणोक्तिः ॥ ५९ ॥ ६० ॥ एवं ब्रह्माण्डस्वरूपमुक्त्वा तदन्तःप्रविष्टस्य विष्णोः सृष्ट्यादिव्यापा-रमाह—जुषन्नित्यादिना । तत्र ब्रह्माण्डे रजोगुणं जुषन् गृह्णन् । विश्वेश्वरो हरिः ब्रह्मा भूत्वा चतुर्मुखं ब्रह्माणमुत्पाद्य तस्मिन्स्वयं ब्रह्मरूपीभूत्वा तं प्रविश्येति यावत् । अस्य जगतो विसृष्टौ विविधसृष्टौ सम्प्रवर्तते ॥ ६१ ॥ यावत्कल्पविकल्पना दैनन्दिनः । अनुयुगं युगेयुगे । सत्त्वभृत् सत्त्वगुणभृत् ॥ ६२ ॥ तमोद्रेकीत्यार्षस्सन्धिः तमोगुणोद्रेकयुक्त इत्यर्थः । कल्पान्ते कल्पावसाने इति यावत् । रुद्ररूपी भूत्वाऽखिल-भूतानि सम्भक्षयति संहरतीत्यर्थः । ब्रह्माभूत्वा रुद्ररूपीति पदाभ्यां ब्रह्मरुद्राभेद एवोच्यत इति किमेवव्याख्या-नेनेति चेत् नैव । तथा सति "ब्रह्मविष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी जनार्दनः" इति वामनपुराणविरोधात् । "अनु-प्रविश्य ब्रह्माणं प्राणं दशविधं तथा । इन्द्रियाणीन्द्रियार्थांश्च वर्णांश्चैवासृजद्धरिः" इति गारुडपुराणविरो-धात् । "ब्रह्मणिस्थोऽसृजद्विष्णुः स्थित्वा रुद्रे त्वभक्षयत् । पृथक् स्थित्वा जगत्पाति तद्रूपाद्यावपरो हरिः" इति ब्रह्मपुराणविरोधाच्च ॥ ६३ ॥ एवं सृष्ट्यादिकमुक्त्वा दैनन्दिनप्रलये तस्यावस्थानप्रकारमाह— सम्भक्ष्येति ॥ ६४ ॥ ब्रह्मणः प्रतिदिनमेव सृष्ट्यादिकमित्याह—प्रबुद्धश्चेति । ब्रह्मविष्णुशिवात्मिका ब्रह्मा विष्णुः शिव इत्येवंरूपा । सृष्ट्यादिकरणप्रवृत्तिनिमित्तं यस्याः सा वा सृष्टिस्थित्यन्तकरणी संज्ञा यातिन-

[पा०] १ ग घ ट ठ यात्यनुयुगं २ क—च ट—ड सत्त्वभृद्भगवान् ख सत्त्वभृद्भगवान् ३ ट रूपाणि स—ड भीषणः ५ ग घ ध छ समक्षयत्स म सभक्षयित्वा ६ क ग च छ शेतेऽसौ

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ६६॥
स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च ।
उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः ६७॥
पृथिव्यापस्तथा तेजो वायुराकाश एव च ।
सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् ६८॥

चित्सुखीयम् ।

[सृष्टि]स्थित्यन्तकरणी । सृष्टिस्थित्यन्तानां कारणं निमित्तं यस्याः संज्ञायास्ताम् ॥ ६६ ॥ उपकारक प्रयो-

श्रीधरीयम् ।

॥ ६५ ॥ ब्रह्मावतारमूलस्वरूपेण ब्रह्मादिरूपाणि तद्व्यतिरिक्तानि न भवन्तीत्याह—सृष्टिस्थित्यन्तकरणामिति ॥ करणीमिति पाठे सृष्ट्यादिकरणं निमित्तं यस्यास्तां संज्ञां यातीत्यर्थः ॥ ६६ ॥ स्रष्टृसृज्यादिभेदश्च न तात्त्विक इत्याह—स्रष्टेति ॥ विष्णुरेव स्रष्टा आत्मानमेव सृजति "आत्मैवेदꣳसर्वम्" इति श्रुतेः । पाल्यश्च पालकश्च । उपसंहार्यश्च संहर्ता च स्वयमेव ॥ ६७ ॥ कुत इत्यत आह—पृथिवीति । यत् यस्मात् पृथिव्यापस्तेजआदिसर्वं जगत् पुरुषाख्यमिति पुरुषस्वरूपमेव "पुरुष एवेदं सर्वं"मिति श्रुतेः ॥ ६८ ॥

विष्णुचित्तीयम् ।

गुणे" इत्यादिविष्य ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ब्रह्मादीननुप्रविश्य तेषु स्थित्वा स्वयमेव सृष्ट्यादिकं करोतीत्याह—सृष्टीति ॥ सृष्टिस्थित्यन्तनिमित्ता ब्रह्मा विष्णुः शिव इत्येवंरूपा संज्ञा तत्तद्रूपो भगवानेव यातीत्यर्थः । सर्गस्थित्यन्तकरणामिति वक्तव्ये ङीप् प्रयोग आर्षत्वात्साधुः । यद्वा कर्मणि व्युत्पत्त्या संज्ञायमाना संज्ञात्वमस्योच्यते । तथा च सर्गादिक्रियासाधनभूता ब्रह्मात्मिकामवस्थां यातीत्यर्थः । करणीमिति करोतेः करणे ल्युट् प्रत्ययः ॥ ६६ ॥ तद्वत्सृज्यपाल्यसंहार्याणामन्तर्यामित्वस्वरूपेषु संज्ञान्तराभिधेयतया वर्तत इत्याह—स्रष्टेति ॥ स्रष्टारं क्षेत्रज्ञबुद्धिपूर्वकसर्गादौ ब्रह्माणं सृज्यं च दक्षादिगणं संहर्तारं रुद्रं संहार्यं च त्रैलोक्यं युगपन्निर्दिश्य तद्रूपत्वविधानात्सृज्यसंहार्यभूतात्क्षेत्रज्ञात् तद्गुणसंहर्तॄणां विशेष इति प्रदर्शनमस्मिन् श्लोकेऽभिप्रेतम् । तस्य क्षेत्रज्ञकर्मानुगुणं गुणनियन्तृत्वमेव न भोक्तृत्वमित्याह—स्वयंप्रभुरिति ॥ ६७ ॥ उक्तस्य सर्वतादात्म्यस्य हेतुमध्यायादावुक्तं पुनरपि दर्शयति—पृथिव्याप इति ।

रत्नगर्भीयम् ।

याति । अनेन सृष्टिस्थित्यन्तकारिरूपाणामभेदोक्त्या संज्ञायास्तदधीनसत्ताकत्वदर्शनेन हरेरेव मुख्यमभिधा-व्यापारवत्त्वं । ब्रह्मादीनां तु तत्सन्निधानवशात्तन्नामवाच्यत्वमिति सूचितं । एतदेवाभिप्रेत्यैवोक्तं । उक्तञ्च शब्दनिर्णये । "तस्य ब्रह्मस्यैव हरेस्तन्नामानि च अञ्जसा । औपचारिकनामानि यदन्येषामिति स्थितिः" इति ॥ ६५ ॥ ६६ ॥ एवं सकलजगत्सृष्ट्यादिकर्तृत्वमुक्त्वा तदुपपादकत्वेन स्वावतारस्रष्ट्रादिकर्तृत्वमपि स्वस्यैवेत्याह—स्रष्टाविति । स्रष्टौ सृष्टिकाले । विष्णुः आत्मानमवताररूपं स्वात्मानं दीपाद्दीपान्तरवत्सृजति । पाल्यमात्मानं पाति एतावत्कालं स्थास्यामीति स्वेच्छयैवावस्थापयति । आत्मानं स्वयमेव प्रलयकाले उपसंह्रियते दीपे दीपान्तरवत् एकीभवति । तत्र संहर्ता स्वयमेव तदुपपादनार्थं स्वयं प्रभुरित्युक्तं । उक्तञ्चैतत्सर्वं भारते । "दीपाद्दीपान्तरं यद्वत्सृष्टिरीशस्य कीर्त्यते । एतावत्कालं स्थास्ये मानुषेष्विति चिन्तनं । विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैव तु । दीपे दीपान्तरस्येव ह्येकीभावश्च संहृतिः" इति ॥ ६७ ॥ उक्तजगत्सृष्ट्यादिकर्तृत्वोपपादनार्थं सर्वस्य तदधीनत्वमाह—पृथिव्याप इत्यादिना । पृथिव्यादिकं स्थावरं पुरुषाख्यं जीवाख्यं जङ्गमं यज्जगद्विश्वं तत्सर्वं विष्णुरेव सर्वं तन्नधीनसत्ताकमित्यर्थः । 'यदधीना

[ पा० ] १ ग ह ट—ङ करणात् [ श्रीध० पा० करणा ] २ ख—म ठ ड पाल्यश्च

स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः ।
सर्गादिकं तु तस्यैव भूतस्थमुपकारकम् ॥ ६९ ॥
स एव सृज्यः स च सर्गकर्ता
स एव पात्यत्ति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्ति-
र्विष्णुर्वरिष्ठो वरदो वरेण्यः ॥ ७० ॥
इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे द्वितीयोऽध्यायः ॥ २ ॥

चित्सुखीयम् ।

जनकर्तृ ॥ ६९ ॥ तस्यैव सर्वभोक्तृरूपत्वात् चकारादयतेच ॥ ७० ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे द्वितीयोऽध्यायः ॥ २ ॥

श्रीधरीयम् ।

ननु कथं स एव सर्गादिकर्तेत्युच्यते । पित्रादीनां सृष्टृपालकादीनां दृश्यमानत्वात्तत्राह—स एवेति ॥ यतस्स हरिरेव सर्वभूतानामीशः प्रवर्तको विश्वरूपश्च ततो हेतोर्भूतस्थं पितृपुत्रादिषु स्थितं सर्गादिकमस्य हरेरेवोपकारकं । तस्यपुत्रतद्विभूतेरेव विस्तरात् । यथा ऋत्विग्भिः कृतं यजमानस्यैवोपकारकं तद्वदित्यर्थः ॥ ६९ ॥ उक्तं सृष्टृसृज्याद्यैक्यमुपसंहरन्विधश्रितमाह—स एवेति ॥ अत्ति चेति चकारादयत इति च ब्रह्माद्यवस्थाभिस्सर्गादिकर्ता अशेषमूर्तिस्सृज्यादिरूपः । अतो विष्णुरेव वरिष्ठः महत्तमः श्रेष्ठः परमार्थ इति यावत् । वरदश्च वरेण्यश्च वरणीयः परमानन्दरूपत्वात् ॥ ७० ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशिकाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वितीयोऽध्यायः ॥ २ ॥

विष्णुचित्तीयम् ।

एवंभूतं यज्जगत्तत्स एवेत्युत्तरेणान्वयः ॥ ६८ ॥ तत्र हेतुः स एवेति ॥ सर्वभूतात्मा विश्वरूपो यत इति सर्वभूतानामयमात्मा विश्वं चास्य शरीरमिति यतोतः सर्वं स एवेति । ततो ब्रह्मादिभूतस्थं सर्गादिकं लीलायतारूपिणोऽस्यैवोपकारकम् । यथा शरीरव्यापारः शरीरिणो जीवस्यैव ॥ ६९ ॥ उक्तमर्थं निगमयति—स एवेति ॥ सृष्ट्यादिकर्तुः तस्यैव सृज्यत्वाद्युपादानम् । अशेषमूर्तिरिति ब्रह्मादीनां । पुनः सृष्ट्यादिकं तत्राह—वरद इति । अयमाश्रितेभ्यो ब्रह्मादिभ्यः स्रष्टृत्वादिवरप्रदः "तवादृशिवयस्थानौ सृष्टिसंहारकारकौ । मयैवैते निहताः" इत्यादेः । अत्रायते चेत्यध्याहार्यम् । वरेण्यो वरणीयः ॥ ७० ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वितीयोऽध्यायः ॥ २ ॥

दत्तात्रेयीयम् ।

यस्य सत्ता" इत्यादेः ॥ ६८ ॥ तदधीनत्वे हेतुमाह—सएवेति । यतो यस्मात्सर्वभूतात्मा सर्वेषां भूतानां स्वामी । विश्वरूपः विश्वं रूपयति प्रेरयतीति विश्वरूपः अतस्तथेः । तात्मस्यनिराकरणार्थमव्यय इति । पित्रादीनां सृष्ट्यादिकर्तृणामुपलभ्यमानत्वात्कथं हरिरेव सृष्ट्यादिकर्तेत्यत आह—सर्गादिकमिति । यस्मादेव हेतोः सर्वस्य तदधीनत्वादिहेतोः भूतस्थं पित्रादिभूतस्थं । उपकारकं पित्रादीनामुपकारकं । सर्गादिकं पुत्रसृष्ट्यादिकमस्यैव विष्णोरेव संबन्धि । स्वावश्येन विष्णुकर्तृकमेवेत्यर्थः ॥ ६९ ॥ उक्तं जगत्परमात्मनोः सृष्ट्यादिकमुपसंहरन् विष्णोः फलितं सर्वोत्तमत्वमाह—सएवेति । सएव विष्णुः ब्रह्माद्यवस्थाभिः जगत्सर्गकर्ता सएव पाति सएवात्ति च । ब्रह्माद्यवस्थावत्त्वे हेतुमाह—अशेषमूर्तिः । अशेषाः मूर्तयः प्रति-

रत्नगर्भीयम् ।

पायूपस्थमितिपाठे प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावो ज्ञेयः ॥ ४९ ॥ इति श्रीरत्नगर्भभट्टाचार्यविरचितश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे द्वितीयोऽध्यायः ॥ २ ॥

[ पा० ] १ ज—ट. भूतेशो, १ क. ख. सर्वभूतस्थो. २ क. ख. घ. च—ट. ततोऽस्यैव. ३ ङ. पात्यत्तं च ट. पात्यतेऽद्य.

तन्निबोध यथा सर्गे भगवान्संप्रवर्तते । | नारायणाख्यो भगवान्ब्रह्मा लोकपितामहः ॥३॥

चित्सुखीयम् ।

पयितुमशक्यं यत् ज्ञानं तद्गोचराः । यतो हेतोरतः कारणात् । ब्रह्मणस्तास्तथाभूताः । भावशक्तयः स्वभावसिद्धाः शक्तयः । सर्गाद्याः सर्गशक्तिः स्थितिशक्तिः संहरणशक्तिरित्येवं लक्षणा भवन्तीत्यन्वयः । विषमाः ब्रह्मणस्सन्ति यतः अवस्था भावशक्त्यः कार्यप्रतियोगिन्यः कारणशक्तयः सर्गाद्याः सर्गे आद्याः कारणभूता भवन्तीत्यर्थः । तस्यकार्यत्वात्कथंसर्गकारणत्वमित्यत्र इति ॥ २ ॥ तदाहुः पराख्यं

श्रीधरीयम् ।

मागकं तस्य गोचरास्संति । यद्वा अचिन्त्याः भिन्नाभिन्नत्वादिविकल्पैश्चिन्तयितुमशक्याः केवलमर्थापत्तिज्ञानगोचराः सन्ति । यत एवमतो ब्रह्मणोऽपि तास्तथाविधास्सर्गाद्यास्सर्गादिहेतुभूताः भावशक्तयः स्वभावसिद्धाश्शक्तयस्सन्त्येव पावकस्य दाहकत्वशक्तिवत् । अतो गुणादिहीनस्याप्यचिन्त्यशक्तिमत्वात् ब्रह्मणस्सर्गादिकर्तृत्वं घटत इत्यर्थः । तथा च श्रुतिः "न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादि । यद्वा एवं योजना । सर्वेषां भावानां पावकस्योष्णताशक्तिवदचिन्त्यज्ञानगोचराः शक्तयस्सन्त्येव । ब्रह्मणः पुनस्ताः स्वभावभूताः स्वरूपादभिन्नाः शक्तयः । "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतेः । अतो मणिमन्त्रादिभिरग्न्यौष्ण्यवन्न केनचिद्विहन्तुं शक्यते । अत एव तस्य निरङ्कुशमैश्वर्यं । तथा च श्रुतिः "स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इत्यादि । तपतां श्रेष्ठेति-सम्बोधयन् तवापि तपश्शक्तिस्सर्वविदितेति सूचयति । यत एवं अतो ब्रह्मणो हेतोः सर्गाद्या भवन्ति नात्र काचिदनुपपत्तिरित्यर्थः ॥ २ ॥ तदेवं ब्रह्मणः सर्गादिकर्तृत्वमुप-

विष्णुचित्तीयम् ।

शक्तयः तर्कैरचिन्त्याः स्वसाधकप्रमाणगोचराः सन्ति । अतो ब्रह्मणोऽपि "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिप्रसिद्धा जगत्सर्गादिनिमित्तभूताः भावशक्तयः स्वाभाविकसामर्थ्यानि सन्ति । अतो लौकिककर्तृवैलक्षण्येऽपि सर्गादिकर्तृत्वं युक्तम् । सर्गाद्या इति । सृज्यतेऽनयेति सर्गः "अकर्तरि च कारके" इति करणे घञ् प्रत्ययः । सृष्ट्यादिकारणभूता इत्यर्थः । तपतां श्रेष्ठेति संबुद्धिः । अत्र ब्रह्मणः शरीरत्वमभ्युपगम्य शक्तिमत्त्वात्कर्तृत्वमुक्तम् । परमार्थतस्तु विष्णुसम्बलितमहत्तत्त्वगतस्त्वेव । यद्वा लोके सत्त्वादिगुणकं परिच्छिन्नं च मृदाद्युपादानं दृष्टम् । देहादियुक्तो रागादिना मलिनश्च कुलालादिर्निमित्तं ब्रह्मणस्तु तद्वैलक्षण्यात् कथमुपादानत्वं निमित्तत्वं चेति चोद्यम् । उत्तरं तु लोके नायं नियमः । द्रव्यलक्षणे हि निर्गुणमेवाविशिष्टं गुणानामुपादानं दृष्टम् । अपरिच्छिन्न एवाकाशादिः शब्दादेः अशरीर एवात्मा स्वशरीरप्रेरणे निमित्तं दृष्टः । रागादिरहित एव स्तनादौ अयस्कान्तादिः लोहभ्रमणादौ हेतुर्दृष्ट इत्येवं स्वदुरुक्त्याक्षिमङ्ग इत्यभिप्रायः । सर्वभावानां स्वकार्योत्पादनक्ष-

दत्तात्रेयीयम् ।

सर्वपदार्थानां याः शक्तयः सन्ति । यतोऽतो ब्रह्मणोऽपि ताः सर्गाद्याः सर्गादिहेतुभूताः भावशक्तयः स्वभावशक्तयः सन्ति । तुशब्दो विशेषार्थः । तमेव विशेषं दर्शयति—अचिन्त्यज्ञानगोचरा इति । अचिन्त्याः इयत्तया ज्ञातुमशक्याः । ज्ञानगोचराः अलौकिकज्ञानगोचराः । तथा च श्रुतिः । "न तस्य कार्यं करणंच विद्यते नतत्समोऽस्त्यभ्यधिकः कुतश्चिन् । पराऽस्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेति" । लौकिककर्तृवैलक्षण्येऽपि सर्गादिकर्तृत्वं युज्यत इति भावः ॥ २ ॥ एवं विष्णोः सर्गादिकर्तृत्वमुपपाद्य तमेव ब्रह्मसर्गप्रपञ्चमनुवर्णयितुमाह—तदिति । भगवान्विष्णुर्यथा येन प्रकारेण

## तृतीयोऽध्यायः ॥ ३ ॥

निर्गुणस्य ब्रह्मणः पूर्वाध्यायोक्तं सृष्ट्यादिकर्तृत्वं कथं घटेतेत्याशङ्क्य अचिन्त्यशक्तिमत्त्वाद्घटत इति समाधाय कलाकाष्ठामुहूर्तादिद्विपरार्धान्तकालपरिमाणवर्णनम् ॥ १ ॥ पाद्मकल्पकथाप्रसङ्गकथनम् ॥ २ ॥

मैत्रेय उवाच ॥

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥ १ ॥

श्रीपराशर उवाच ॥

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥ २ ॥

चित्सुखीयम् ।

निर्गुणस्य सत्त्वादिगुणरहितस्य सत्त्वादिगुणान्वितविकारकारणत्वं कथं संभवतीति भावः । कारणत्वग्राहिप्रमाणागोचरत्वादप्येतदनुपपन्नमित्याह—अप्रमेयस्येति । प्रवृत्तिनिमित्तकर्माभावादप्यनुपपन्नमित्याह—शुद्धस्येति । रागद्वेषादिमलराहित्यादपि प्रवृत्तिरनुपपन्नेत्याह—अमलात्मन इति ॥ १ ॥ सर्वभावानां सर्ववस्तूनां । लोकेऽपि मणिमन्त्रौषधादीनां शक्तयः सामर्थ्यानि । अचिन्त्यं विशेषतो निरू-

श्रीधरीयम् ।

तदेवं ब्रह्मणः सृष्ट्यादिकर्तृत्वमुक्तं तत्र शङ्कते निर्गुणस्येत्यनेन मैत्रेयः—निर्गुणस्येति ॥ निर्गुणस्य सत्त्वादिगुणरहितस्य अप्रमेयस्य देशकालाद्यनवच्छिन्नस्य शुद्धस्यादेहस्य सहकारिशून्यस्येति वा । अमलात्मनः पुण्यपापसंस्कारशून्यस्य रागादिशून्यस्येति वा । एवं भूतस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमिष्यते, एतद्विलक्षणस्यैव लोके घटादिकर्तृत्वदर्शनादित्यर्थः ॥ १ ॥ परिहरति शक्तय इत्यादिसार्धेन ॥ सर्वेषां भावानां मणिमन्त्रादीनां शक्तयः अचिन्त्यज्ञानगोचराः अचिन्त्यं तर्कासहं यज्ज्ञानं कार्यान्यथानुपपत्तिप्र-

विष्णुचित्तीयम् ।

लोके रागद्वेषसत्त्वादिगुणकस्य शरीरिणः परिच्छिन्नस्य कर्मवश्यस्य सहकारिसम्बन्धाऽर्हस्यैव कुलालादेः कर्तृत्वं दृष्टम् । ब्रह्मणस्तद्विलक्षणस्य कथं जगत्सर्गादिकर्तृत्वमिहोच्यते इति चोदयति निर्गुणस्येति ॥ १ ॥ परिहरति शक्तय इत्यादि सार्धश्लोकेन । शक्तय इति ॥ सर्वपदार्थानां वह्नेरौष्ण्यमिव स्वाभाविक्यः

रत्नगर्भीयम् ।

मारूपा यस्य स तथा । अशेषेषु मूर्तिर्यस्येति वा । एवं जगत्पक्षे योजना । विष्णुस्तदपि पक्षेषु स एव सृज्यः स्वेनैव स्वयं सृज्यः । स एव पाल्यते स्वेनैव स्वयं पाल्यते । चशब्दादत्तेचेति योज्यं । परिशेषः । तर्हि ब्रह्मादीनां कुतः स्रष्टृत्वादिप्रसिद्धिरित्यत आह—वरद इति । तेषां स्रष्टृत्वादिवरप्रद इत्यर्थः । अतस्तेषां विष्ण्वधीनत्वं स्रष्टृत्वादिकं । "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इति भागवतोक्तेः । "तदादर्शितपन्थानौ सृष्टिसंहारकारकौ" इत्यन्यत्रोक्तेश्च । वरेण्यो वरणीयः ॥ ७० ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वितीयोऽध्यायः ॥ २ ॥

ज्ञुपन्रजोगुणमित्यादिना यद्विष्णोर्जगत्कर्तृत्वादिकमुक्तं तत्र शङ्कते—निर्गुणस्येति । निर्गुणस्य सत्त्वगुणहीनस्य । अप्रमेयस्य देशकालाद्यपरिच्छिन्नस्य । शुद्धस्य प्रकृतिसंबन्धरहितस्य । अमलात्मनो रागादिदोषरहितस्य ब्रह्मणः सर्गादिकर्तृत्वं कथमभ्युपगम्यते । लोके एतद्विरुद्धरूपस्यैव कर्तृत्वदर्शनादिति शङ्केति भावः ॥ १ ॥ परिहरति—शक्तय इति सार्धश्लोकेन । पावकस्याग्नेर्यथोष्णता औष्ण्यशक्तिः सर्वभावानां

रत्नगर्भीयम् ।

विष्णोस्सर्गादिकर्तृत्वं तृतीये सम्यगीर्यते । काष्ठादिद्विपरार्धान्तकालोऽथ प्रतिसञ्चरः । पुनर्विश

[पा०] १ ख. ग. ङ.—छ. झ. ट. ठ. भ्युपपद्यते. २ घ. ब्रह्मण्यात.

उत्पन्नः प्रोच्यते विद्वन्नित्य एवोपचारतः ॥४॥
निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम् ।
तत्पराख्यं तदर्धं च परार्धमभिधीयते ॥५॥

कालस्वरूपं विष्णोश्च यन्मयोक्तं तवानघ ।
तेन तस्य निबोध त्वं परिमाणोपपादनम् ॥६॥

चित्सुखीयम् ।

ततोऽतिशयितस्यायुषोऽभावात् ॥ ५ ॥ तस्य ब्रह्मणश्चतुर्मुखस्य परिमाणोपपादनमियत्कालमसावस्थीति

श्रीधरीयम् ।

पाद्म प्रस्तुतं ब्राह्मं सर्गमनुवर्णयितुमाह—तन्निबोधेति ॥ ३ ॥ ननु नारायणाख्य एव चेद्ब्रह्मा कथं तर्हि "हिरण्यगर्भस्समवर्ततात्रे' इत्यादिश्रुतिभिरस्योत्पत्तिरुच्यते तत्राह—उत्पन्न इति । उपचारत स्वेच्छया आविर्भावस्यायुत्पत्तिसादृश्यादौपचारिकमेव ॥ ४ ॥ तस्यायुर्मानमाह—निजेनेति । निजेन स्वकीयेन वक्ष्यमाणेन वर्षशतं स्मृतं । तदायु पराख्यं सर्वोत्तिशायित्वात् ॥ ५ ॥ कालेति । तेन कालेन तस्य ब्रह्मण अन्येषां च परिमाणस्य जीवनकालस्योपपादनं सम्पादनं निबोध । पाठान्तरे परिणाम-

विष्णुचित्तीयम् ।

त्य स्वप्रमाणासिद्धत्वादन्यथानन्यत्वादिविकल्पैरविचारणीया सन्ति । यथाग्नेर्दाहकत्वशक्ति । एवं ब्रह्मणो जगत्सर्गादिहेतव स्वाभाविक्य शक्तय सन्तीति । यथाहु —"न च पर्यनुयोगोऽस्ति वस्तुशक्तेः कथञ्चन । अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम् । आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर ' इत्यादि ॥ २ ॥ तन्निबोधेति । नारायणाख्य सृष्टौ नारायणो लोकपितामहो ब्रह्मा ब्रह्मरूपेण ॥ ३ ॥ उत्पन्न इति । उत्पन्न इत्युपचारेणोच्यते । स तु नित्य एव अत्र नारायणत्व हेतु स्वेच्छयैव सर्वात्मकत्वरूपत्वात्तस्य कर्माधीनशरीरपरिग्रहो हि मुख्योत्पत्ति । यद्वा रात्रौ नारायणे प्रवेशेन नारायणाख्यो ब्रह्मा प्रतिकल्पमुत्पन्न इत्युपचारत उच्यते । द्विपरार्धकालस्थायित्वेन नित्यत्वात्तस्य स्वेच्छागृहीतशरीरस्यापि कादाचित्कत्वसाम्यादुत्पन्नत्वोपचार । रात्रौ नारायणत्वं ब्रह्मण कौर्मे उक्तम् । "ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिण । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना" इति ॥ ४ ॥ निजेनेति । ब्राह्मेण मानेन कालपरिमाणेन सर्वससार्यायुषोऽधिकत्वात्तस्यायु परमित्युच्यते ॥ ५ ॥ कालेत्यादि—तेन कालेन तस्य ब्रह्मण परिणामोपपादनं नाशरूपस्य परिणामस्योपपादनं निर्वर्तनं निबोध ।

दत्तात्रेयीयम् ।

प्रवर्तते स प्रकारं निबोध । लोकपितामहो ब्रह्मा चतुर्मुखान्तर्गत नित्य एव नारायणाख्यो भगवाश्चतुर्मुखोत्पत्त्योपचारत उत्पन्न इति प्रोच्यते ॥ इति सार्धश्लोकान्वय । "ब्रह्मा लोकपितामह " इत्यत्र तदन्तर्गतहरेर्ग्रहणं तु तस्य नारायणाख्य इत्युक्त्यैव सिद्ध्यति । तदुक्तं पाद्मे । "यत्रापि तु हरेर्नाम तदन्यत्र प्रयुज्यते । तदान्तरहरेस्तत्र गृहीतिर्नान्यथा भवेत् इति । अत्र यद्यपि चतुर्मुखोत्पत्तिकथनमेव सृष्ट्युपयोगि तथाऽपि तस्य भगवदधीनत्वज्ञापनायैवमुक्ति ॥ ३ ॥ ४ ॥ ब्रह्मान्तर्गतनारायणस्यौपचारिकोत्पत्तिकथनेन ब्रह्मणो मुख्योत्पत्तिरिति दर्शितमिति तस्यायुर्मानमाह—तस्येति । तस्य ब्रह्मण । आयु निजेन वक्ष्यमाणेन स्वकीयेन मानेन वर्षशतं स्मृतं । नारायणस्य प्रकृतत्वात्तस्येति नारायणस्य परामर्श किन्न स्यादिति चेन्नैव । "नायुर्मानं भगवत कस्मिन्कालेऽपि विद्यते ॥ अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्यय " इति हरिवंशवचनविरोधात् । तस्यायु सर्वससार्यायुषोऽधिकत्वात्पराख्यं तदर्धं ब्रह्मायु । "अर्धं पश्चाशद्वर्षाणि परार्धमभिधीयते । रूपान्तरं यद्द्विज कालसंज्ञम्' इति यद्भगवत कालाख्यरू-

[पा० ] १ ग—ड नित्यएवोप २ ग घ छ ञ परिणामोप

चतुर्युगाणां सङ्ख्याता साधिका ह्येकसप्ततिः । मन्वन्तरं मनोः कालः सुरादीनां च सत्तम १८
अष्टौ शतसहस्राणि दिव्यया सङ्ख्यया स्मृतम् । द्विपञ्चाशत्तथाऽन्यानि सहस्राण्यधिकानि तु १९

विष्णुचित्तीयम् ।

भेदं मनुभिस्तुल्यकालता चाह—सप्तर्षय इति ॥ १७ ॥ साधिका ह्येकसप्ततिरिति । तत्राधिको भागः । शतोत्तरदिव्यपञ्चसहस्रवर्षाणि द्विचत्वारिंशत्संवत्सराधिकानि दश मासाः अष्टौ दिवसाः चत्वारो यामाश्चतस्रो नाडिका अष्टौ कलाः सप्तदश काष्ठाः किञ्चिदधिकसार्धा निमेषाः । मानुषमानेनाधिको भागः अष्टादशलक्षाः एकपञ्चाशत्सहस्राणि चतुःशतानि अष्टाविंशतिश्चेति संवत्सराः । षण्मासाश्चतु-र्विंशतिदिनानि द्वादशनाडिकाः कलाश्च द्वादश पञ्चविंशतिकाष्ठा दशनिमेषाः पादोननिमेषाधिकाः ब्रह्मणो दिनस्य चतुर्युगसहस्रपरिमितस्य चतुर्दशमन्वन्तरैरेकसप्ततिचतुर्युगपरिमाणैर्विभक्तस्य षट्चतुर्यु-गावशिष्टत्वात् अवशिष्टचतुर्युगपरिमितः कालश्चतुर्दशधा विभज्य प्रतिमन्वन्तरसाधिकत्वेन निरूपित इति द्रष्टव्यम् ॥ १८ ॥ इदानीमेकसप्ततिचतुर्युगपरिमितमन्वन्तरकालमधिकं विना दिव्यवर्षसङ्ख्यया निरू-

श्रीधरीयम् ।

काले हि सृज्यन्ते । अधिकारिणः क्रियन्ते, संह्रियन्ते अन्ते निरधिकाराः क्रियन्त इत्यर्थः ॥ १७ ॥ चतुर्युगाणामिति । साधिकेत्यत्र श्लोकाः । "द्विचत्वारिंशता युक्ताः शतेनाभ्यधिकास्तथा । दिव्याब्दाः पञ्चसाहस्रा मासा दश दिनाष्टकम् । चतुर्यामा मुहूर्तौ द्वावष्टावपि कलास्ततः । काष्ठाः सप्तदश द्वौ च निमेषौ तदनन्तरम् । दैवस्यैव निमेषस्य सप्तमो भाग इष्यते । मानुषाब्दास्तु लक्षाणि सार्धाष्टादश तत्प-रम् । सहस्रमष्टविंशत्या युक्तं चाप्यचतुःशती । पञ्चविंशत्यहोरात्रयुक्ता मासाश्च षट् तथा । नाड्यो द्वादश तावत्यः कलाश्च तदनन्तरम् । एकविंशन्मुहूर्ताश्च कला द्वादश तत्परम् । पञ्चविंशति काष्ठाश्च निमेषा दश साधिकाः" इति । चतुर्युगसहस्रप्रमाणस्य ब्रह्मदिनस्य चतुर्दशधा विभागे प्रतिभागमेकस-

विष्णुचित्तीयम् ।

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ चतुर्युगाणामिति । साधिका किञ्चिदूनत्रिचत्वारिंशच्छताधिकं पञ्चसहस्रं दिव्याब्दानामधिकम् । अवशिष्टचतुर्युगषट्सहस्रस्य दिव्या-ब्दसहस्राणां चतुर्दशांशः प्रत्येकं चतुर्युगाणामेकसप्ततेरधिक इत्यर्थः । तेन सहिता साधिका सुरादीनां इन्द्रसप्तर्षिमनुतत्सुतानाम् ॥ १८ ॥ मन्वन्तरे देवसंवत्सरसङ्ख्यामाह—अष्टाविति । अधिकं विनेति

दत्तात्रेयीयम् ।

पद नृपाः । एककाले तत्तन्मन्वन्तरे सृज्यन्तेऽधिकारिणः क्रियन्ते । संह्रियन्ते अन्ते निरधिकाराः क्रियन्ते इत्यर्थः ॥ १७ ॥ मनुकालपरिमाणमाह—चतुर्युगाणामिति । मनोः कालः मनुभोगकालः । भागवते "स्वसं कालं मनुर्भुङ्क्ते साधिकामेकसप्ततिं" । सङ्ख्यातोऽधिकांशश्च सार्धाष्टादशलक्षपरिमित इत्युक्तः । चतुर्युगसहस्रप्रमाणस्य ब्राह्मदिनस्यैकसप्ततिसङ्ख्यायाश्चतुर्दशधा विभागे प्रतिविभाग एकसप्त-तिचतुर्युगानि भवन्ति । अवशिष्यन्ते चतुर्युगषट्कं । तत्रैवैकमनोः सार्धाष्टादशवर्षभोगकालः । उर्वरितस्तु तत्तन्मनुप्रलयकाल इति चतुर्युगसहस्राणां चतुर्दशमन्वन्तरेषु विभागो बोद्धव्यः । तदुक्तं वाराहे । "युगैकसप्ततेरूर्ध्वं सार्धाष्टादशलक्षकं । वत्सराणां मनोर्भुक्तिः सहस्रं चतुरुत्तरं । शतानां सप्तचैव पञ्चोत्तरमथापि वा । आद्येषु षट्सु प्रथमे द्विसाहस्रं प्रकीर्तितम्" इति । सुरादीनां । "सप्तर्षयः सुराः शक्र" इति पूर्वोक्तानां । तत्तन्मन्वन्तराधिकारिणां चायमेव कालः । "वत्सराणां मनोरन्तरेष्विन्द्रादिनां भवे"दिति वचनात् ॥ १८ ॥ साधिका ह्येकसप्ततिरिति चतुर्युगसङ्ख्यया मनुकाल उक्तः । इदानीं देवस-

[ पा० ] १ च दश २ ष ड धिक विना

त्रिंशत्कोट्यस्तु संपूर्णाः सङ्ख्याताः सङ्ख्यया द्विज।
सप्तषष्टिस्तथाऽन्यानि नियुतानि महामुने ॥२०॥
विंशतिस्तु सहस्राणि कालोऽयमधिकं विना।
मन्वन्तरस्य सङ्ख्येयं मानुषैर्वत्सरैर्द्विज ॥ २१ ॥
चतुर्दशगुणो ह्येष कालो ब्राह्ममहः स्मृतम्।
ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसञ्चरः २२
तदा हि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम्।
जनं प्रयान्ति तापार्ता महर्लोकनिवासिनः २३॥
एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः।
भोगिशय्यां गतः शेते त्रैलोक्यग्रासबृंहितः २४

चित्सुखीयम्।

पयति—अष्टाविति ॥ १९ ॥ इदानीं तमेव मानुषसङ्ख्यया गणयति—त्रिंशत्कोट्य इति ॥ २० ॥ ब्रह्मैव निमित्तं यस्य प्रतिसञ्चरस्य स ब्राह्मो नैमित्तिकः ॥ २२ ॥ सप्तगणां चतुर्युगसहस्रपरिमितो

श्रीधरीयम्।

प्रतिश्चतुर्युगाणि भवन्ति। अवशिष्यते चतुर्युगषट्कम्। तस्य चतुर्दशांशो यथावद्गणितः प्रतिमन्वन्तरमेकसप्ततेरधिक इत्यर्थः। सुरादीनाञ्च 'सप्तर्षयः सुराः शक्र' इत्यनेन पूर्वोक्तानां मन्वन्तराधिकारिणाम् ॥ १८ ॥ १९ ॥ तमेव मन्वन्तरकालं मानुषाब्दैर्गणयति त्रिंशत्कोट्य इत्यादिद्वाभ्याम्। त्रिंशत्कोट्य इति। नियुतानि लक्षाणि ॥ २० ॥ विंशतिरिति। पूर्वोक्तमधिकं कालं विना ॥ २१ ॥ चतुर्दशगुण इति। ब्राह्मो नैमित्तिकः ब्रह्मनिद्रानिमित्तः प्रतिसञ्चरः प्रलयः ॥ २२ ॥ तदेति। भूर्भुवादिकमित्यर्थः सन्धिः ॥ २३ ॥ एकार्णव इति। भोगी शेषस्स एव शयनं यद्वतस्सन् शेते। त्रैलोक्यग्रासेन बृंहितः संपुष्ट इव यथा हि कश्चित् यद्भोज्यं सम्पाद्य यावत्तृप्ति भुक्त्वा तत्सम्पादनरक्षणादिक्लेशं हित्वा सुखं शेते तद्वदित्यर्थः। ज्ञानबृंहित इति पाठे त्रैलोक्यस्थैर्ज्ञानमयैर्जीवैर्बृंहितः ज्ञानावस्थायां समृद्धज्ञानानन्द

विष्णुचित्तीयम्।

वक्ष्यति तत्रापि सम्बध्यते ॥ १९ ॥ तस्मिन्मानुषसंवत्सरसङ्ख्यामाह—त्रिंशदिति ॥ २० ॥ विंशतिरिति। अधिकं विना मन्वन्तरस्य मानुषैर्वर्षैस्सेयं सङ्ख्येत्यन्वयः ॥ २१ ॥ चतुर्दशगुण इति। ब्राह्म इति ब्रह्मणो प्रसन्नाद्ब्राह्मः। निमित्तं तत्र यच्चैव इति नैमित्तिकत्वं वक्ष्यति ॥ २२ ॥ २३ ॥ एकार्णव इति। त्रैलोक्यग्राससमये भगवदनुप्रवेशातिशयाद्बृंहितः। ज्ञानबृंहित इति पाठे सत्वजीवकर्मवासनाज्ञानबृंहितः। श्रीजन्मरहस्ये परशुरामादिवद्ब्रह्मणोऽवतारत्ववचनात् भगवच्चेष्टायाः एवोद्भूतत्वाच्च तस्य

वृत्ताश्रेयीयम्।

सङ्ख्यया मनुकालमाह—अष्टाविति। अष्टौ शतसहस्राणि अष्टलक्षाणि तथा अधिकानि अष्टलक्षापेक्षयाऽधिकानि द्विपञ्चाशत्सहस्राणि वर्षाणि साधिकविनेति वक्ष्यमाणमत्रापि सम्बध्यते। तेनैकसप्ततियुगानामेतत्प्रमाणमिति बोद्धव्यं ॥ १९ ॥ तमेव मन्वन्तरकालं मानुषैर्वत्सरैर्गणयति—त्रिंशत्कोट्य इत्यादिना। नियुतानि लक्षाणि ॥ २० ॥ साधिकं विना साधिकेत्युक्ताधिकं कालं विना मन्वन्तरस्य मानुषवत्सरैः सेयं सङ्ख्येत्यन्वयः ॥ २१ ॥ यस्य ब्राह्मस्याह्नोऽन्ते ब्राह्म नैमित्तिकं ब्रह्मदिनसमाप्तिरूपनिमित्तादागतः प्रतिसञ्चरः प्रलयः ॥ २२ ॥ दैनन्दिनप्रलयकालस्वरूपमाह—तदाहीत्यादिना। तदा दिनान्ते आदिपदेन स्वर्लोको गृह्यते। त्रैलोक्यमित्युक्त्या महर्लोकस्य न दाह इति दर्शितं। महर्लोकनिवासिनस्तापार्तास्सन्तो जनं जनलोकं प्रयान्ति ॥ २३ ॥ चतुर्मुखस्वरूपान्तर्गतनारायणस्य योगनिद्रेति भावेनाह—एकार्णव इति। सृष्टिकाले चतुर्मुखे प्रविष्टो नारायणात्मको ब्रह्मा। "ब्रह्मणि ब्रह्मरूपोऽसौ" इत्युक्तेः।

[पा०] १ क कालान्तमधिक २ छ च यथाधिक ३ ज न ठ. तदादि ४ ग प ड च ज झ ट—ढ. शय्यागत छ पर्यङ्कगत म शय्यागत ५ छ ज्ञानबृंहित

जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भव. ।
तत्प्रमाणा हि तां रात्रिं तदन्ते सृजते पुन २५
एवं तु ब्रह्मणो वर्षमेवं वर्षशतं च यत् ।
शतं हि तस्य वर्षाणां परमायुर्महात्मन. ॥२६॥
एकमस्य व्यतीतं तु परार्धं ब्रह्मणोऽनघ ।
तस्यान्तेऽभून्महाकल्प पाद्म इत्यभिविश्रुतः २७॥

श्रीधरीयम् ।

इत्यर्थ ॥ २४ ॥ जनस्थैरिति । जनस्थैश्चिन्त्यमान महर्लोकस्थानामपि तदा तत्रैव गतत्वात् तत्प्रमाणा सहस्र परिमिता ■ रात्रिं नैरन्तर्येण शेत इति पूर्वेण सम्बन्ध ॥ २५ ॥ एवमिति । एवम्भूतैरहोरात्रै पक्षमासादिकल्पनया वर्षम् ॥ २६ ॥ एकमिति । महाकल्प इति अवान्तरकल्प एव पुष्करप्रादुर्भा

विष्णुचित्तीयम् ।

भोगिशयनवचनमविरुद्धम् । अवतारत्वे हि योगिभिश्चिन्त्यत्वं युज्यते । सकलप्रादिवत्तापि । "विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थित" इत्युक्तम् । अथ वा । "यथा सुष्वाप भगवानब्जस्यासेक एव हि" इत्यनाद्यव्यावचनं भोगिशय्याव्यवधानसह । यथा च । "क्षीरोदे वसति प्रभु" इत्यत्र क्षीरोदवास श्रीमदा यतनादिव्यमण्डपयोगपीठादिव्यवधानसह । एवं ब्रह्मा भोगिशय्यागत इत्यत्रापि नाभिसरोरुहव्यवधानसह । तथा च श्रीविष्णुधर्मे । ' एकार्णवे जगत्यस्मिन् ब्रह्मण्यमिततेजसि । कृष्णनाभिप्रदोद्भूतकमलोदरशायिनि । सात्त्व विश्व जलशायिने च नमोनमः कैटभनाशनाय । स्वनाभिपद्मोदरशायिन च ब्रह्मत्वमुपगताय वेध । स्वनाभिकमलोद्भूतकमलोदरशायिने । इति च भगवतो जलशायित्वं ब्रह्मण पद्मोदरशायित्वं चोक्तम् । तथा च श्रीहरिवंशे । 'पूर्णे युगसहस्रे' इत्यारभ्य कल्पक्षये ब्रह्मणा सह देवाना भगवत्यनुप्रवेशमुक्त्वा "सहस्रशीर्षा पुरुषो रुक्मवर्णस्त्वतीन्द्रिय । सुष्वाप सलिले तस्मिन्" इति भगवत सलिलशायित्वमुक्त्वा "ब्रह्मा तु सलिले तस्मिन् भूयोतिर्भूत्वा सदाग्रह । निशायामिव खद्योत प्रावृट्काले स्फुरत्तु स " । इति ब्रह्मण सलिलोपलक्षिते पद्मे शयनमुक्तम् ॥ २४ ॥ जनस्थैरिति । सा ब्राह्मीं रात्रिं नैरन्तर्येण शेते । सृजते पुन । त्रैलोक्यमिति शेष ॥ २५ ॥ सकलमर्थ निगमयति एवमित्यादिना । एवमित्यनेन पूर्वोक्ता ब्रह्मदिनसङ्ख्या विवक्षिता । तस्य वर्षाणां शतं परमायु

द्वितीयस्य परार्धस्य वर्तमानस्य वै द्विज ।
वाराह इति कल्पोऽयं प्रथमः परिकीर्तितः २८॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

वराहावतारवृत्तान्तकथनम् ॥ पृथिवीसनकादिभिः कृता वराहस्तुतिः ॥ १ ॥ वराहरूपिणा विष्णुना रसातलगतक्षित्या उद्धारः ॥ २ ॥ पृथिव्याः समीकरणम् ॥ ३ ॥ प्राकसर्गदग्धानां भूरादिलोकानां सप्तद्वीपानां च यथापूर्वं सृष्टिः ॥ ४ ॥

॥ श्रीमैत्रेय उवाच ॥
ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान्यथा।
ससर्ज सर्वभूतानि तदाचक्ष्व महामुने ॥ १ ॥

॥ श्रीपराशर उवाच ॥
प्रजाः ससर्ज भगवान्ब्रह्मा नारायणात्मकः ।
प्रजापतिपतिर्देवो यथा तन्मे निशामय ॥ २ ॥

चित्सुखीयम् ।

तां रात्रिं शेत इत्यन्वयः ॥ २५ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥

अनुमानात् ज्ञात्वेत्यन्वयः । तथाहि श्रूयते "सोऽपश्यत्पुष्करपर्णं तिष्ठत् सोऽमन्यत । अस्ति वैतत्

श्रीधरीयम् ।

नादिगुणैर्महत्त्वान्महाकल्प इत्युच्यते ॥ २७ ॥ २८ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥

पूर्वोपक्षिप्तमेव ब्राह्मं सर्गं प्रसक्तानुप्रसक्तान्तरितं श्रोतुकामो मैत्रेयः पृच्छति ब्रह्मेति ॥ १ ॥ २ ॥

विष्णुचित्तीयम् ।

तस्यायुषः परमितिसंज्ञेत्यर्थः ॥ २६ ॥ एकमिति । परार्धं परस्यार्धमित्यर्थः ॥ २७ ॥ २८ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥

दत्तात्रेयीयम् ।

लोकात्मकमहापद्मप्रादुर्भावादिगुणैर्महत्त्वान्महाकल्प इत्युपचर्यते ॥ २७ ॥ वर्तमानस्य द्वितीयस्य परार्धस्य प्रथमोऽयं कल्पो वाराह इति कीर्तितः ॥ २८ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥

साधारण्येन सर्वकल्पसृष्टिप्रकारं श्रुत्वाऽध्यायान्ते वर्तमानत्वेन वराहकल्पस्योपक्षिप्तत्वात्तत्कल्पसृष्टिप्रकारं विशेषतो जिज्ञासुः पृच्छति ॥ १ ॥ प्रजापतिपतिः प्रजापतेश्चतुर्मुखस्य पतिः । अनेन ब्रह्मा

रत्नगर्भीयम् ।

कालज्ञाः पण्डिताः ॥ १२ ॥ इति श्रीरत्नगर्भभट्टाचार्यकृतश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे तृतीयोऽध्यायः ॥ ३ ॥

अवतारो वराहस्य धरया सनकादिभिः । स्तुतिश्चतुर्थे लोकानां विभागश्च निरूप्यते ॥ अतीतकल्पा-

[ पा० ] १ क. प्रथितः. २ घ—ज्ञ. ट. ठ. परिकल्पित.. ख. परिकल्पते.

अतीतकल्पावसाने निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ॥३॥
नारायणः परोऽचिन्त्यः परेषामपि स प्रभुः ।
ब्रह्मस्वरूपी भगवाननादिः सर्वसम्भवः ॥ ४ ॥
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥ ५ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥६॥

श्रीधरीयम् ।

प्रतिज्ञातं प्रजासर्गं निरूपयिष्यन् प्रथमं तदाधारभूताया भूमेरुद्धारं वक्तुमाह—अतीतकल्पेत्यादिना । निशायां सुप्तः प्रस्वापस्तस्मादुत्थितः । सत्त्वोद्रिक्तः इत्यत्र हि निद्रावसाने प्रबुद्धानां प्रसन्नकरणत्वलक्षणसत्त्वातिशयः ॥ ३ ॥ नारायण इति । सर्वसम्भवः विश्वस्रष्टा ॥ ४ ॥ ब्रह्मणो नारायणसंज्ञां व्युत्पादयति इमं चेत्यादिना—इमं चेति । ब्रह्मस्वरूपिणं नारायणं प्रति ॥ ५ ॥ आप इति । ब्रह्मस्वरूपोऽस्मिन्नर्थे नरः पुरुषोत्तमः । तस्माज्जाता आपो नाराः । तदुक्तम् । "तास्ववात्सीत्स्वसृष्टासु सहस्रं परिवत्स-

विष्णुचित्तीयम् ।

॥ १ ॥ २ ॥ अथ पाद्मकल्पकथाविषयाद्ब्रह्मोक्तात्पाद्मपुराणादनन्तरं वाराहकल्पवृत्तान्तविषयमिदं वैष्णवं पुराणमिति दर्शयितुं ब्राह्मपरार्धप्रथमपाद्मकल्पमनूद्य वराहकल्पवृत्तान्तं प्रस्तौति—अतीतकल्पेति । तथोक्तं मात्स्ये । "एतदेव च वै ब्राह्मं पाद्मे कल्पे जगद्धितम् । सर्वभूतात्मकं तत्तत्पाद्ममित्युच्यते बुधैः । वाराहकल्पवृत्तान्तमधिकृत्य पराशरः । यत्प्राह धर्मानखिलांस्तदुक्तं वैष्णवं विदुः" । इति सत्त्वोद्रिक्तः भगवदनुप्रवेशातिशयात् तस्यैव वराहाद्यवतारप्रसिद्धेः ॥ ३ ॥ ४ ॥ अत्र ब्रह्मनारायणयोः स्वरूपैक्यशङ्कायां मन्वादयस्तयोर्भेदपरं नारायणविषयं श्लोकमुदाहरन्तीत्याह—इमं चेति ॥ ५ ॥ तमेव श्लोकं दर्शयति आप इति । "प्रादुरासीत्तमोनुदः" इति प्रकृतेः परमकारणभूतो भगवानविनाशित्वेन नर इत्युच्यते । तत्सृष्टा आपो नाराः । अपछब्दः सूक्ष्मतत्त्वान्तरप्रदर्शनपरः । "नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः" । इत्यादि दर्शनात् अयनं प्रविष्टस्य शरीरम् । 'यदम्बु वैष्णवः कायः' इत्यपि वक्ष्यति । पूर्वं ब्रह्मसृष्टेः प्राक् कारणभूते भगवति

रत्नगर्भीयम् ।

नारायणाख्य इत्यत्र चतुर्मुखाभेदप्रतीतिर्निवारिता ॥ २ ॥ वाराहकल्पवृत्तान्तविषयमिदं वैष्णवं पुराणमिति दर्शयितुं ब्राह्मपरार्धप्राप्तं पाद्मकल्पमनूद्य मैत्रेयं वराहकल्पवृत्तान्तं प्रस्तौति—अतीतेति । तथोक्तं मात्स्ये । "वराहकल्पवृत्तान्तमधिकृत्य पराशरः । यत्प्राह धर्मानखिलांस्तदुक्तं वैष्णवं विदुः" इति । अतीतकल्पावसाने निशायां सुप्तः स्वापस्तस्मादुत्थितः । प्रभुर्ब्रह्मा । सत्त्वोद्रिक्तः ज्ञानोद्रिक्तः ॥ ३ ॥ नारायणो ब्रह्मा ब्रह्मशब्दवाच्यः ब्रह्मस्वरूपी परब्रह्मस्वरूपः । सर्वसंभवः जगत्स्रष्टा । शून्यं स्थावरजङ्गमरहितं लोकं भुवनमवैक्षत अद्राक्षीदिति तेन संबन्धः ॥ ४ ॥ जगत्स्रष्टुर्भगवतो नारायणसंज्ञां प्रमाणेन निर्वक्ति—इमं चेत्यादिना । ब्रह्मस्वरूपिणं नारायणं प्रति इमं श्लोकमुदाहरन्ति ॥ ५ ॥ तमेव श्लोकं दर्शयति—आप इति । अविनाशित्वान्नरः परमात्मा । "णश अदर्शने" इत्युक्तेः । तत्सूनवः तस्माज्जाताः । वै यस्मादपो नाराः । ताः आपः । तस्य परमात्मनः । पूर्वं सृष्टेः पूर्वं प्रलयो येन तेन नारायण इति स्मृत इत्यर्थः । उक्तं च भागवते । "तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान् । तेन

सत्यधर्मीयम् ।

वसाने पाद्मकल्पावसाने ॥ ३ ॥ यागिनो मुमुक्षवश्च तदन्यरूपाज्ञानात्स्वतारकमेव स्वार्थसिद्ध्येऽर्थ-

[पा०] १ म. तदा. ख. ङ. ततो. २ ख. निरू. ३ क. ख. पद्मभव. प. सर्वसम्भव.

तोयान्तस्थां महीं ज्ञात्वा जगत्येकार्णवीकृते ।
अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः ॥ ७ ॥
अकरोत्स्वतनूमन्यां कल्पादिषु यथा पुरा ।
मत्स्यकूर्मादिकां तद्वद्वाराहं वपुरास्थितः ॥ ८ ॥
वेदयज्ञमयं रूपमशेषजगतः स्थितौ ।
स्थितः स्थिरात्मा सर्वात्मा परमात्मा प्रजापतिः ९
जनलोकगतैस्सिद्धैस्सनकाद्यैरभिष्टुतः ।
प्रविवेश तदा तोयमात्माधारो धराधरः ॥ १० ॥
निरीक्ष्य तं तदा देवी पातालतलमागतम् ।
तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुन्धरा ॥ ११ ॥

चित्सुखीयम् ।

यस्मिन्निदमधितिष्ठतीति । स वराहो रूपं कृत्वोपन्यमज्जत् । स पृथिवीमध आर्च्छत्" इति ॥ ७ ॥ स्थितौ स्थितः । अशेषजगतःस्थितावुद्यत इत्यर्थः ॥ ९ ॥ उद्धृता जाता । अन्यानिव भूतानि गगना-

श्रीधरीयम् ।

यान् । तेन नारायणो नाम यथाऽऽपः पुरुषोद्भवाः" इति ॥ ६ ॥ ततः किमत आह तोयान्तेत्यादि ईप-स्पादोनद्वाभ्याम्—तोयान्तस्थामिति । तोयस्योपरि पुष्करपर्णं दृष्ट्वा तदधिष्ठानानुमानात्तोयस्यान्तर्महीं ज्ञात्वा तदुद्धारं कर्तुमिच्छन् नारायणोऽन्यां तनुं तदुद्धारयोग्यामकरोदित्यन्वयः । पुरा यथा मत्स्यकूर्मादिकां तनुं कल्पादिषु तत्कार्यार्थमकरोत् । तथा च श्रुतिः "सोऽपश्यत्पुष्करपर्णं तिष्ठत् सोऽमन्यत अस्ति वै तत् यस्मिन्निदमधितिष्ठतीति स वराहो रूपं कृत्वोपन्यमज्जत् स पृथिवीमध आर्च्छत्" इत्यादि । अथ वाराहं वपुरास्थितः सन् तोयं प्रविवेशेत्युत्तरेणान्वयः ॥ ७ ॥ ८ ॥ वेदेति । वेदयज्ञमयं रूपमास्थितः । यतः अशेषजगतः स्थितौ स्थितः वेदयज्ञाधीनत्वाज्जगत्स्थितेः ॥ ९ ॥ १० ॥ निरी-

विष्णुचित्तीयम् ।

नारायणशब्दनिर्वचनात्तस्य कार्यभूताद्ब्रह्मणो भेद इति भावः ॥ ६ ॥ तोयान्तस्थामिति । तोयान्तां समहीमिति पाठान्तरम् । तोयेनान्तो नाशो यस्यास्ताम् । अनुमानात् "सोऽपश्यत्पुष्करपर्णमि"ति पुष्करपर्णलिङ्गदर्शनात् ज्ञात्वा नारायणमूर्तेरन्यां मत्स्यकूर्मादिकां स्वतनुं यथा पुराऽकरोत्तथा वाराहंरूपमास्थितस्तोयं प्रविवेशेत्यन्वयः ॥ ७ ॥ ८ ॥ वेदेति । वेदयज्ञमयं रूप वेदयज्ञमयत्वेन निरूपणीयं । वेदवैदिकधर्मैर्भूर्धार्यत इति भावः । स्थितौ स्थितः स्थितिनिमित्तमास्थितः । स्थिरात्मा रक्षणे स्थिरचित्तः ॥ ९ ॥ जनलोकेति । अभिष्टुतः रक्षणार्थमुद्बोधितमहिमा । स्तूयमाना हि देवता वीर्येण वर्धते इति न्यायात् ॥ १० ॥ ११ ॥

दत्तात्रेयीयम् ।

नारायणो नाम यत्रापः पुरुषोद्भवाः" इति ॥ ६ ॥ ततः किं तत्राह—तोयान्त इति ॥ एकार्णवे एकः अर्णवो यस्य तस्मिन् जगत्येकार्णवे लीने सतीत्यर्थः । तोयान्तस्तोयमध्ये स्थितामिति शेषः । अनुमानात्पुष्करपर्णादिलिङ्गदर्शनात् । ज्ञात्वा "सोऽपश्यत्पुष्करपर्णम्" इति श्रुतेः । तदुद्धारं । भूमेरुद्धारं कर्तुकामः प्रजापतिर्नारायणः कल्पादिषु आदिपदं मध्यान्तयोरुपलक्षणं । यथा मत्स्यादिकां तनुमकरोत्तथाऽन्यां तनु वाराहाख्यामकरोत् । वाराहं रूपमास्थितस्तोयं प्रविवेशेत्युत्तरेणान्वयः ॥ ७ ॥ ८ ॥ वेदयज्ञमयं रूपं । वेदेषु यज्ञेषु च प्रधानत्वेन निरूपणीयमित्यर्थः । स्थितौ स्थितः स्थित्यर्थं स्थितः ॥ स्थिरात्मा रक्षणे स्थिरचित्तः । चराचराधारपृथिव्युद्धारे क स्थितोऽसावित्यत उक्तं आत्माधारः स्वस्य स्वयमेवाश्रयः । धराधरः धरामुद्धर्तुं प्रवृत्तः ॥ ९ ॥ १० ॥ पातालशब्देन रसातलं विवक्ष्यते । "द्वितीयं तु भवायास्य रसातलगतां महीं । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः" इति भागवतोक्तेः । "रसातलादु-

[पा०] १ ज—ड. तोयान्तः समहीं विष्णु चि० [पा०] तोयान्ता समहीं ख तोयान्ता पृथिवीं २ ख—ड च ज. झ ट—ड जगदेकार्णवे प्रभु. ३ च छ झ ञ ट—ड अकरोत्स ४ च छ रूपमास्थित० ५ च. गतैस्सर्वै

॥ श्रीपृथिव्युवाच ॥

नमस्ते पुण्डरीकाक्ष शङ्खचक्रगदाधर ।
मामुद्धरास्मादद्य त्वं त्वत्तोऽहं पूर्वमुत्थिता॥१२॥
त्वयाहमुद्धृता पूर्वं त्वन्मयाऽहं जनार्दन ।
तथाऽन्यानि च भूतानि गगनादीन्यशेषतः १३
नमस्ते परमात्मात्मन्पुरुषात्मन्नमोऽस्तु ते ।
प्रधानव्यक्तभूताय कालभूताय ते नमः ॥ १४ ॥
त्वं कर्ता सर्वभूतानां त्वं पाता त्वं विनाशकृत् ।
सर्गादिषु प्रभो ब्रह्मविष्णुरुद्रात्मरूपधृक् ॥१५॥
सम्भक्षयित्वा सकलं जगत्येकार्णवीकृते ।
शेषे त्वमेव गोविन्द चिन्त्यमानो मनीषिभिः१६
भवतो यत्परं तत्त्वं तन्न जानाति कश्चन ।
अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः ॥ १७ ॥
त्वामाराध्य परं ब्रह्म याता मुक्तिं मुमुक्षवः ।
वासुदेवमनाराध्य को मोक्षं समवाप्स्यति॥१८॥
यत्किञ्चिन्मनसा ग्राह्यं यद्ग्राह्यं चक्षुरादिभिः ।
बुद्ध्या च यत्परिच्छेद्यं तद्रूपमखिलं तव ॥१९॥

चित्सुखीयम् ।

श्रीनि त्वन्मयानीत्यन्वयः ॥ १३ ॥ परमात्मा आत्मा स्वभावो यस्य स तथोक्त* ॥ १४ ॥ स्वदयाश्रया

श्रीधरीयम् ।

क्ष्येति । तदा वसुन्धरा तदधिष्ठात्री देवी त्वं तुष्टाव ॥ ११ ॥ नम इति । अस्मात्पातालतलान्मामुद्धर । त्वत्तो हेतोरहमुत्थिता उत्पन्ना उद्धृता ॥ १२ ॥ त्वयेति । उपादानकारणमपि मम च गगनादीनाञ्च त्वमेवेत्याह—त्वन्मयेति । त्वन्मया उपादाननिमित्तत्वादिकं साधयन्ती ॥ १३ ॥ परब्रह्मस्वरूपेण पूर्वो- क्तपुरुषादिचतूरूपेण प्रणमति नमस्त इति ॥ १४ ॥ त्वमिति । ब्रह्मादिरूपेण सृष्ट्यादिकर्ता त्वमिति पाता पालकः ॥ १५ ॥ सम्भक्षयित्वेति । शेषे शयनं करोषीति शेषे. ॥ १६ ॥ १७ ॥ दिवौकसा- मपि मुमुक्षूणामपि त्वमेव भजनीय इत्याह—त्वामिति । एवं ब्रह्ममूर्तिं त्वामेवाराध्य मुक्तिं प्राप्ताः ॥१८॥

विष्णुचित्तीयम् ।

नम इति । मामुद्धर अस्मात्प्रलयाब्धेः । त्वत्त उत्थिता उत्पन्ना ॥ १२ ॥ त्वयेति । त्वन्मया त्वन्मयी त्वदुपादाना ॥ १३ ॥ नम इति । परमात्मात्मन् पुरुषादिचतूरूपविलक्षणस्वरूप । अप्यये अनिरुद्धादयः पुरुषाच्युतसत्यवासुदेवाख्याः ॥ १४ ॥ त्वमिति । ब्रह्मेत्यादि ब्रह्मविष्णुरुद्ररूपधर ॥ १५ ॥ सम्भक्ष- यित्वेति ॥ शेषे स्वपिषि ॥ १६ ॥ १७ ॥ १८ ॥ यत्किञ्चिदिति । मनसा ग्राह्यं सुखादि । चक्षुरा-

दत्तात्रेयीयम् ।

त्पलपत्रसन्निभ,"इत्यादिना वक्ष्यमाणत्वात् । वसुन्धरा तदभिमानिदेवता ॥ ११ ॥ अस्मात्पातालात् उत्थिता उत्पन्ना ॥ १२ ॥ पूर्वमुद्धृता पूर्वं ब्रह्मकल्पे उद्धृता । त्वन्मया त्वत्प्रधाना ॥ १३ ॥ परमा- त्मात्मन् परमात्मस्वरूप । प्रागुक्तपुरुषादिचतुर्णां नियामकत्वाभिप्रायेण प्रणमति—पुरुषात्मन्नित्यादिना ॥ १४ ॥ पाता रक्षकः । विष्णोर्ब्रह्मरुद्राधारत्वमुक्तन्यायेन बोध्यम् ॥ १५ ॥ शेषे शयनं करोषि ॥ १६ ॥ भवतः सकाशात् परमुत्तमं तत्त्वं कश्चन कोऽपि नजानाति । त्वदतिरिक्तपरतत्त्वाभावादि- त्यर्थः । तदेवोपपादयति—अवतारेष्वित्यादिना ॥ १७ ॥ १८ ॥ मनसा यद्ग्राह्यं स्मर्यमाणपदार्था- दिकं । चक्षुरादिभिर्ग्राह्यं रूपादिकं । बुद्ध्या अनुमानादिजन्यबुद्ध्या च यत्परिच्छेद्यं अप्यनुमेयं तदखिलं

रत्नगर्भीयम् ।

न्तीत्याह—भवत इति सार्धेन ॥ १७ ॥ व्यतिरेकमाह वासुदेवमिति ॥ १८ ॥ योगान्तरस्था मुनयो

[ पा० ] १ क ग न—ड नमस्ते सर्वभूताय तुभ्यं शङ्खगदाधर २ प तुभ्य शङ्खगदाधर ३ ज ख ड ठ त्वत्तोऽहमुद्धृता ठ क त्वत्तोऽहमुद्धृता ग त्वयानुद्धृता ४ प छ न्याश ५ प मर्दनिभि ६ क ख ग ड च, छ ञ ट, ठ रूप ७ क छ प ड, च छ ञ समवाप्नुयात्

त्वन्मयाऽहं त्वदाधारा त्वत्सृष्टा त्वत्समाश्रया ।
माधवीमिति लोकोऽयमभिधत्ते ततो हि माम् ॥२०॥
जयाखिलज्ञानमय जय स्थूलमयाव्यय ।
जयानन्त जयाव्यक्त जय व्यक्तमय प्रभो ॥२१॥
परापरात्मन्विश्वात्मञ्जय यज्ञपतेऽनघ ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वमग्नयः ॥२२॥
त्वं वेदास्त्वं तदङ्गानि त्वं यज्ञपुरुषो हरे ।
सूर्यादयो ग्रहास्तारा नक्षत्राण्यखिलं जगत् ॥२३॥
मूर्तामूर्तमदृश्यं च दृश्यं च पुरुषोत्तम ।
यच्चोक्तं यच्च नैवोक्तं मयात्र परमेश्वर ।
तत्सर्वं त्वं नमस्तुभ्यं भूयोभूयो नमोनमः ॥२४॥

चित्सुखीयम् ।

त्यासेविकेत्यर्थः ॥ २० ॥ परः ईश्वरः अपरो हिरण्यगर्भः । तदुभयात्मन् परापरात्मन् ॥ २२ ॥ नक्षत्राणि अश्विन्यादीनि सप्तविंशतिसङ्ख्याकानि । इतरास्ताराः ॥ २३ ॥ सामस्त्येन एव भक्तिर्यस्य स

श्रीधरीयम् ।

यत्किञ्चिदिति । मनसा ग्राह्यं सङ्कल्प्यं बुद्ध्या च यत्परिच्छेद्यम् अध्यवसाय्यम् ॥ १९ ॥ मम त्वदधीनत्वं लोके प्रसिद्धमेवेत्याह—त्वन्मयेति । त्वत्समाश्रया त्वच्छरणैरेतैर्हेतुभिः तत आरभ्य मामयं लोको माधवीं त्वदीयामभिधत्ते ॥ २० ॥ परापरात्मन्निति । परापरं कारणं कार्यं च उत्तमनीचं वा तदात्मन् । तद्रूप यज्ञफलदस्त्वं वषट्कारः वषडिति मन्त्रलक्षणो वा ॥ २२ ॥ त्वमिति । यज्ञपुरुषो यज्ञमूर्तिः यज्ञाराध्यो वा । ताराः अश्विन्यादयः । अन्यानि नक्षत्राणि । विपरीतं वा उभयथाऽपि प्रयोगदर्शनात् ॥ २३ ॥ मूर्तामूर्तमिति । मूर्तं सर्वगतं द्रव्यं । कठिनं वा । अदृश्यमप्रत्यक्षं । ते नमोनमः । भूयोभूय इत्यादि-

विष्णुचित्तीयम् ।

विभाव्य रूपादि । बुद्ध्या परिच्छेद्यं व्याप्तिसम्बन्धज्ञानादिना प्रमाणान्तरपरिच्छेद्यम् ॥ १९ ॥ त्वन्मयेति । माधवी माधवस्येयमिति माधवी ॥ २० ॥ जयेति । अखिलज्ञानमय सर्वज्ञ । स्थूलमय स्थूल जगत्तन्मय । व्यक्त महदादि तन्मय ॥ २१ ॥ परापरात्मन्निति । परापरात्मन् उत्कृष्टनिकृष्टयोरात्म-भूत । वषट्कारः अस्तु श्रौषडित्यादि मन्त्रः ॥ २२ ॥ त्वमिति । यज्ञपुरुषः यज्ञाधिदेवता । ताराः कृत्तिकाद्याः । नक्षत्राणि देवगृहाः ॥ २३ ॥ मूर्तामूर्तमिति । मूर्तं सर्वगतं द्रव्यं । दृश्यं प्रत्यक्षम्

दत्तात्रेयीयम् ।

तव रूपं त्वन्निरूप्य त्वदधीनमित्यर्थः ॥ १९ ॥ माधवी माधवस्य संबन्धिनी ॥ २० ॥ अखिलज्ञानमय पूर्णज्ञानस्वरूप । स्थूलमय विराड्रूपेण स्थूलस्वरूप । अव्यय नाशरहित । अनन्त देशतः कालतो गुणतश्च परिच्छेदरहित । अव्यक्त अभक्तानामप्रकाशितस्वरूप । व्यक्तमय भक्तानां स्वेच्छया व्यक्तस्वरूप ॥ २१ ॥ परापरात्मन् । उत्कृष्टनिकृष्टानां स्वामिन् । विश्वात्मन् पूर्णस्वरूप । "विश्वं पूर्णमिहोच्यते"-इतिवचनात् । यज्ञवराहस्तुतिरूपत्वाद्यज्ञादीनां विशिष्य तदधीनत्वमाह—त्वमित्यादिना । वषट्कारो वषडितिमन्त्रः । एतत्सर्वं त्वदधीनमित्यर्थः ॥ २२ ॥ यज्ञपुरुषः प्राधान्येन यज्ञेषु ईज्यपुरुषः । ताराः अश्विन्याद्याः नक्षत्राण्यन्यानि विपरीतं वा । उभयथाऽपि प्रयोगदर्शनात् ॥ २३ ॥ मूर्तामूर्तमिति । मूर्तं पृथिव्यादिभूतत्रयं । अमूर्तं वाय्वाकाशरूपभूतद्वयं । "मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद्ब्रह्म नसत्तन्नासदुच्यते" । "यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चासत्" इति श्रुतेः ।

रत्नगर्भीयम् ।

जलमग्नाः क्लिष्टा विधूनने सति जलापगमात् तुष्यन्ति प्रीता भवन्ति । यद्वा रोम्णां जलपर्यन्तं गमनात्रो-

[पा०] १ क ख घ च—ङ त्वासुपक्षिणा विष्णु- [पा०] त्वदाश्रया २ घ च छ माधवीति च ३ घ. च छ ज न ट ढ परापरात्मन् ४ ग नम ५ क ख घ च छ खिलानिच ख ग ढ ॥ खिलंचयत्

॥ श्रीपराशर उवाच ॥

एवं संस्तूयमानस्तु पृथिव्या धरणीधरः ।
सामस्वरध्वनिः श्रीमाञ्जगर्ज परिघर्घरम् ॥२५॥
ततः समुत्क्षिप्य धरां स्वदंष्ट्रया
महावराहः स्फुटपद्मलोचनः ।
रसातलादुत्पलपत्रसन्निभः
समुत्थितो नील इवाचलो महान् ॥२६॥
उत्तिष्ठता तेन मुखानिलाहतं
तत्संभवाम्भो जनलोकसंश्रयान् ।
प्रक्षालयामास हि तान्महाद्युती-
न्सनन्दनादीनपकल्मषान्मुनीन् ॥२७॥
प्रयान्ति तोयानि खुराग्रविक्षते
रसातलेऽधः कृतशब्दसन्तति ।
श्वासानिलास्ताः परितः प्रयान्ति
सिद्धा जने ये नियता वसन्ति ॥२८॥

विष्णुचित्तीयम् ।

तथोक्तः ॥ २५ ॥ अधस्तात्कृता शब्दस्य सन्ततिर्यस्मिन् रसातले तस्मिन्नधःकृतशब्दसन्ततौ । जने

श्रीधरीयम् ।

रार्थः ॥ २४ ॥ एवमिति । सामस्वर एव ध्वनिर्यस्य स इदानीं वाराहरूपमनुकृत्य परिघर्घरं सुदीर्घ-मुद्भूतं जगर्जे व्यनदत् ॥ २५ ॥ तत इति । उत्क्षिप्य उद्धृत्य । स्फुटे विकसिते पद्मे इव लोचने यस्य सः । उत्पलपत्रसन्निभः उत्पलपत्रस्निग्धश्यामः ॥ २६ ॥ उत्तिष्ठतेति । निष्कल्मषानपि तान्मुनीन्भू-योऽपि पवित्रतापन्नं चकार । प्रक्षालयामासेति पाठान्तरे प्रकर्षेण क्षालयामास अतिनिर्मलानकरोत् ॥२७॥ प्रयान्तीति । वराहस्य खुराग्रेण विक्षते विदीर्णे रसातले सति तेन द्वारेण अधस्तात्तोयानि प्रयान्ति ।

विष्णुचित्तीयम् ।

॥ २४ ॥ एवमिति । परिघर्घरमिति वराहजातिध्वन्यनुकृतिः । गर्जनं स्तोत्रानुमोदनप्रकारः ॥ २५ ॥ तत इति । स्फुट विकसित नीलोत्पलपत्रवत्स्निग्धश्यामः ॥ २६ ॥ उत्तिष्ठतेति । तत्सम्भवाम्भ इति पाठा-न्तरम् । तत्सम्भवाम्भः तदभिषेकजलं भगवन्मुखनिश्वासस्य वेदमयत्वात्तन्मिश्रितवशीकरस्पर्शादतिपावन-त्वम् । "तस्य वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेदः" इत्यादिश्रुतेः । अम्भोविशेषणं वा पवित्रतापन्नमिति ॥ २७ ॥ प्रयान्तीति । वराहस्य खुराग्रेण विक्षते विदीर्णे रसातले सम्यगेऽधस्तादौ प्रयान्तितस्म । कृतशब्दसन्ततीति क्रियाविशेषणम् । यथा च श्रीविष्णुधर्मोत्तरे गङ्गाख्यानं पातालान्यधि-कृत्योक्तम् । "दीर्घमभीमाक्षौ याता रौद्र तेजः सुदारुणम् । तत्राप्यविकल्प याता वाराह लोकमागता ।

सत्यव्रतीयम् ।

अदृश्यमतीन्द्रियं । दृश्यमैन्द्रियकं । त्वत्तस्थं त्वदधीनमित्यर्थः । भूयोभूय इत्यादरार्थः ॥ २४ ॥ एव-मिति । सामस्वरध्वनिः सामस्वर एव ध्वनिर्यस्य स तथा । घर्घरमिति वराहजातिध्वन्यनुकृतिः । तत्परितो यथा भवति तथा । जगर्जे व्यनदत् इति स्वस्वरूपानुसारि स्तोत्रानुमोद इति दर्शितं ॥ २५ ॥ ततइति । समुत्क्षिप्य उद्धृत्य । स्फुटपद्मलोचनः विकसितपद्मलोचनः । उत्पलपत्रसन्निभः उत्पलपत्रस-दृशः ॥ २६ ॥ तत्सम्भवाम्भस्तदेकार्णवजल । अपकल्मषानपि मुनीन्प्रकर्षेण क्षालयामास अतिशुद्धान-करोत् । भगवच्छ्वासस्य वेदस्थानत्वेनातिपावित्र्यात् ॥ २७ ॥ रसातले वराहस्य खुराग्रविक्षते विदीर्णे सति तेन द्वारेण तोयान्यधः अधस्तात्प्रयान्ति । कथं कृतशब्दसन्तति कृत्वा शब्दसन्ततिं महाघोषो

[ पा० ] १ ऊ पृथिवीपति च पृथिवीश्वर क—ग घ ङ च—ड पृथिवीश्वर २ विष्णु० [पा०] सामस्वन ३ छ समुद्धृत्य ४ ग घ ज झ ट ठ ख दंष्ट्रया ५ ख ङ च छ—ञ—ठ तत्संभवे ६ क ग ग ग ग ठ सनन्दनादीनपकल्मषान्मुनींश्चकार भूयोऽपि पवित्रतापद घ पवित्रतापद ७ घ रसातलेऽध ८ विष्णु० [पा०] कृत-शब्दसन्ततौ ९ दक्षा० पा० श्वासानिलार्ता १० क—प च छ म ट परित ११ ग ग ग ट नियतं

उत्तिष्ठतस्तस्य जलार्द्रकुक्षेर्महा-
वराहरूप महीं विगृह्य ।
विधुन्वतो वेदमयं शरीरं
रोमान्तरस्था मुनयः स्तुवन्ति ॥ २९ ॥
तं तुष्टुवुस्तोपपरीतचेतसो
लोके जने ये निवसन्ति योगिनः ।
सनन्दनाद्या ह्यतिनम्रकन्धरा
धराधरं धीरतरोद्धतेक्षणम् ॥ ३० ॥
जयेश्वराणां परमेश केशव
प्रभो गदाशङ्खधरासिचक्रधृक् ।
प्रसूतिनाशस्थितिहेतुरीश्वर-
स्त्वमेव नान्यत्परमं च यत्पदम् ॥३१॥

विस्पष्टीयम् ।

जनलोके । विभयं विगतभयमिति क्रियाविशेषणं ॥ २८ ॥ तारतरश्चासावुद्धतेक्षणश्चेति तारतरोद्धतेक्षणस्तं । तारतरः उच्चतरः । अतिमहानिति यावत् । उद्धतं उन्नतं ईक्षणं यस्य स तथा ॥ ३० ॥ राघ्य-

श्रीधरीयम् ।

कथं । कृता शब्दसन्ततिः महाघोषो यथा भवति तथा । साहन्यन्त्वपाठे कृता शब्दसन्ततिर्यस्मिन् रसातले तस्मिन्नधः प्रवान्तीत्यर्थः । श्वासानिलेन अस्ताः क्षिप्ताः । जने जनलोके ॥ २८ ॥ उत्तिष्ठत इति । विगृह्य विशेषेण गृहीत्वा । रोमान्तरस्था मुनय इति जनलोकं यावत्तावद्रोमप्रसारणादिति भावः ॥ २९ ॥ तमिति । तोषेण परीतं व्याप्तं चेतो येषां ते । तारतरोऽत्युच्चस्स श्वासावुद्धतेक्षणश्च सन्नवहृष्टितं । धीरतरोद्धतेक्षणमिति पाठे निर्विशङ्कोदारेक्षणमित्यर्थः ॥ ३० ॥ जयेति । जयेश्वराणां परमेश्वरः परमेति पाठे ईश्वराणां ब्रह्मादीनां परमेश्वरः । अतो जगतः प्रसूत्यादीनां त्वमेव हेतुरीश्वरश्च नियन्ता ।

विष्णुचित्तीयम् ।

वाराहलोके ब्रह्माण्डमध्योर्ध्वे भिन्नवान्हरिः । छिद्रेण तेन सा देवी स्वां योनिं पुनरागता" । इति ॥ २८ ॥ उत्तिष्ठत इति । 'रोमान्तरस्था मुनय' इति जनलोकं यावत्तावद्रोमप्रसारणादिति भावः । स्तुवन्ति स्मेति शेषः ॥ २९ ॥ तमिति । तोषपरीतचेतसः तोषेणानन्देन परीतानि व्याप्तानि चेतांसि मनांसि येषां ते । अतिनम्रकन्धराः प्रीतिभारेण । धीरतरोद्धतेक्षणं निर्विशङ्कोदारेक्षणमित्यर्थः ॥ ३० ॥ जयेति । ईश्वराणां ब्रह्मादीनाम् । केशवेति । "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान्" इति महाभारते । प्रसूत्यादीनां त्वमेव हेतुः ईश्वरः नियन्ता । परमं च यत्पदं

दत्तात्रेयीयम् ।

यथा भवति तथा । श्वासानिलार्ताः श्वासरूपानिलेनार्ताः पीडिताः । जने जनलोके ॥ २८ ॥ वेदमयं वेदप्रतिपाद्यं । विगृह्य विशेषेणगृहीत्वा । रोमान्तरस्थाः रोमान्तराधारेण स्थिताः । रोमान्तरव्याप्तत्वात् । रोमान्तरस्था मुनयः सनकाद्याः । जुषन्ति सेवन्ते ॥ २९ ॥ तोषेण परीतं व्याप्तं चेतो येषां ते तथा । धीरतरोद्धृतेक्षणं धीरतरोऽत्यन्तमविशङ्कः सचासावुद्धृतेक्षणश्च उन्नतदृष्टिस्तं ॥ ३० ॥ परमं यत्पदं

रत्नगर्भीयम् ।

मान्तरस्थाः सनकाद्याः जुषन्ति सेवन्तइत्यर्थः ॥ २९ ॥ यद्वा पदक्रमौ वेदाध्येतृप्रसिद्धौ क्रान्तं क्रमणं

[ पा० ] १ घ ग घ छ प्रगृह्य. ठ ड. विधार्य. २ ठ. विधुन्वतो ञ विधुन्वता ३ ज गृणन्ति ञ. ठ. ड. जुषन्ति ४ क. क्षिप्ता. ५ ग. ज. ञ ड. तारतरोद्धतेक्षणं. [ दत्ता० पा० ] धीरतरोद्धृतेक्षणम् । ६ ग. विभो. ७ ख. शङ्खवराह. क. ख. शङ्खवरासि. ८ ग. च. चक्रभृत. क. ख. चक्रधृत. ९ ञ. परमंददेह्यत.

पादेषु वेदास्तव यूपदंष्ट्र
दन्तेषु यज्ञाश्चितयश्च वक्त्रे ।
हुताशजिह्वोऽसि तनूरुहाणि
दर्भाः प्रभो यज्ञपुमांस्त्वमेव ॥ ३२ ॥
विलोचने रात्र्यहनी महात्म-
न्सर्वाश्रयं ब्रह्मपरं शिरस्ते ।
सूक्तान्यशेषाणि सटाकलापो
घ्राणं समस्तानि हवींषि देव ॥ ३३ ॥
स्रुक्तुण्ड सामस्वरधीरनाद
प्राग्वंशकायाखिलसत्रसन्धे ।
पूर्तेष्टधर्मश्रवणोऽसि देव
सनातनात्मन्भगवन्प्रसीद ॥ ३४ ॥

विष्णुचित्तीयम् ।

हनी सूर्यचन्द्रप्रकाशाविति यावत् ॥ ३३ ॥ सामस्वर एव धीरो गंभीरो नादो यस्य स तथा । प्राग्वंशः सदःशालाविशेषः स एव कायो यस्य स तथोक्तः । पूर्तं स्मार्तो धर्मः । इष्टं श्रौतो धर्मस्तावेव श्रवणे

श्रीधरीयम् ।

यत्र परमं पदं तदपि त्वत्तो नान्यत्त्वमेव प्रभो परं ब्रह्मेत्यर्थः । पाठान्तरं सुगमम् ॥ ३१ ॥ परत्वेन स्तुत्वा प्रस्तुतावताररूपं यज्ञरूपकेण स्तुवन्ति पादेष्वित्यादित्रिभिः । पादेष्विति । यज्ञपुमांस्त्वमेवेति प्रतिज्ञा तत्सम्पादनं पादेष्वित्यादिभिः चतुरसाङ्घ्रत्वात् यज्ञाङ्गत्वाच्च वेदा यज्ञमयस्य तस्य पादत्वेन निरूप्यन्ते । यूपवदुन्नता दंष्ट्रा यस्य सः तस्य सम्बुद्धिः हे यूपदंष्ट्र । तव दन्तेषु यज्ञाः । पुरोडाशादि-भक्षणार्थत्वात् यज्ञा दन्तत्वेन निरूप्यन्ते । चितयः "श्येनचितं चिन्वीत कङ्कचितं चिन्वीत" इत्यादि-श्रुत्युक्ताः । यज्ञस्थलानि ताश्चितयो वक्त्रस्थानीयाः हविर्निक्षेपस्थानीयत्वात् । एवं सर्वत्र किञ्चित्साम्य-मूहनीयं । हुताशोऽग्निर्जिह्वा यस्य सः । दर्भाः तव तनूरुहाणि ॥ ३२ ॥ विलोचने इति । रात्र्यहनी तमःप्रकाशधर्मके तव विलोचने । निमेषोन्मेषाभ्यां तयोरपि तमःप्रकाशधर्मकत्वात् । परं ब्रह्म तव शिरः उत्तमाङ्गं । सूक्तानि वैष्णवादीनि सटाकलापः स्कन्धकेसरसन्दर्भः अवयवसन्दर्भरूपत्वात् । समस्तानि हवींषि घ्राणं घ्राणेन्द्रियः गन्धग्रहणसाम्यात् ॥ ३३ ॥ स्रुगिति । स्रुक्तुण्डेत्यादिचत्वारि सम्बोध-नानि । स्रुक् जुहूः तुण्डं मुखं यस्य । वराहमुखाकारत्वात् स्रुचः । सामस्वर एव धीरो गम्भीरो नादो

विष्णुचित्तीयम् ।

मुक्तस्वरूपं तव स्वतो नान्यत् । तत्परमं पदं त्वमेवेत्यर्थः तस्य त्वदधीनत्वात् ॥ ३१ ॥ पादेष्विति । यज्ञा अग्निष्टोमाद्याः । चितयः कङ्कचिताद्यानि चयनानि उत्तरक्रतुपूर्वपेदिस्थानीयानि ॥ ३२ ॥ विलोचन इति । रात्र्यहनी चन्द्रार्कोपलक्षितौ यक्षीयकालौ । सर्वास्पदमिति पाठे सर्ववर्णाश्रयत्वात् सर्वास्पदं । ब्रह्म प्रणवः । सटाः स्कन्धरोमाणि ॥ ३३ ॥ स्रुक्तुण्डेति । प्राग्वंशः अग्निशालाया प्रा-

दत्तात्रेयीयम् ।

पद्यत इति परं ब्रह्म । तदयमेव । त्वत्तो नान्यत् ॥ ३१ ॥ एवं परब्रह्मत्वेन स्तुत्वा प्रस्तुतावताररूपं यज्ञसाधनसंपादकत्वेन स्तौति—पादेष्वित्यादिना । वेदाः पादेषु पादाभिधा इत्यर्थः । एवं दन्तेषु यज्ञा इत्यादावपि । यूपदंष्ट्रेत्यनेन यूपस्य दंष्ट्रात्मकत्वेन निरूपणं । तज्जन्यत्वेन तदाश्रितत्वेन प्रोक्तं । एवं हुता-शजिह्व इत्यादावपि । पादेषु वेदा इत्यादौ सप्तम्यन्तप्रयोगेन तदाश्रितत्वमर्थवोक्तत्वेन यूपदंष्ट्रेत्यादावपि तत्वार्थस्यैवोचितत्वाद्रूपकपक्षाश्रयणस्यानुपपत्तेः । चितयः "श्येनचितं चिन्वीत कङ्कचितं चिन्वीत" इत्या-दिश्रुत्युक्तयज्ञस्थानानि ॥ ३२ ॥ सर्वास्पदं सर्वाश्रयीभूतं परं ब्रह्मैव शिरः । शिरसो ब्रह्मत्वोक्तिरभे-दादेव अवयवावयविनोरभेदात् ब्रह्मपुच्छं प्रतिष्ठेति वत् । सटाकलापः स्कन्धकेसरसन्दर्भः ॥ ३३ ॥ स्रुक्तुण्डेत्यादिचत्वारिसंबोधनानि । स्रुक् जुहूः तस्याःजनकं तुण्डं मुखं यस्य वराहमुखाकारत्वात् स्रुचः ।

[ पा० ] १ क. श्रुतमथवर्षे. २ घ. ञ. छ. सर्वास्पदं. च. ख. सर्वात्मकं. ३ क. ग. ब्रह्मपदं. ४ क. कर्म.

पदक्रमाक्रान्तभुवं भवन्त-
मादिस्थितं चाक्षरविश्वमूर्ते ।
विश्वस्य विद्मः परमेश्वरोऽसि
प्रसीद नाथोऽसि चराचरस्य ॥ ३५ ॥
दंष्ट्राग्रविन्यस्तमशेषमेतद्भू-
मण्डलं नाथ विभाव्यते ते ।
विगाहतः पद्मवनं विलग्नं
सरोजिनीपत्रमिवोढपङ्कम् ॥ ३६ ॥
द्यावापृथिव्योरतुलप्रभाव
यदन्तरं तद्वपुषा तवैव ।
व्याप्तं जगद्व्याप्तिसमर्थदीप्ते
हिताय विश्वस्य विभो भव त्वम् ॥ ३७ ॥

विष्णुचित्तीयम् ।

यस्येति विग्रहः ॥ ३४ ॥ पदानां चरणानां क्रमैर्विक्षेपैर्विन्यासैः क्रान्ता व्याप्ता भूर्येनासौ पदक्रमक्रान्तभूः तं । विश्वस्यादिस्थितिं भवन्तं विद्म इत्यन्वयः ॥ ३५ ॥ ऊढपङ्कं धृतपङ्कं । पङ्कविलिप्तसरोजिनीपत्रमिव दंष्ट्राग्रविन्यस्तं भूमण्डलं ते विभाव्यत इत्यन्वयः ॥ ३६ ॥ जगद्व्याप्तौ समर्थाः दीप्तयो यस्य

श्रीधरीयम् ।

यस्य । प्राग्वंशः अग्निशालायाः पूर्वभागः । "पूर्वभागोऽग्निशालायाः प्राग्वंशः परिकीर्तितः" इति वचनात् । प्राग्वंशः कायो मध्यभागो यस्य । अखिलानि सत्राणि द्वादशाहादीनि सन्धयो यस्य । तेषां त्रिवृदग्निष्टोमादिरूपत्वात् । पूर्तं स्मार्तो धर्मः । इष्टं श्रौतधर्मः । तौ श्रवणे यस्य स त्वमपि सनातनात्मन्नित्यमूर्ते ॥ ३४ ॥ तदुपपादयति—पदक्रमेति । पदक्रमेण पादविक्षेपेण आक्रान्ता व्याप्ता भूर्येन तथाभूतं । भवन्तं विश्वस्यादिस्थितिं जनकं पालकञ्च विद्म इत्यन्वयः । अतः परमेश्वरोऽसि । नाथश्च त्वमेवासि । नाथ्यते प्रार्थ्यत इति नाथः । अभिप्रेतमर्थं याचनीयश्चासीत्यर्थः । पदक्रमाक्रान्तमनन्तमादिस्थितं त्वमेवेति पाठे । भो अक्षर! भो विश्वमूर्ते! त्वया पदक्रमैराक्रान्तमनन्तं विश्वं । तस्मात्त्वमेव विश्वस्यादिस्थितं कारणं । परमेश्वरश्च नाथश्चासीति वयं विद्मः अतः प्रसीदेत्यन्वयः ॥ ३५ ॥ किञ्च—दंष्ट्राग्रेति । ते तव दंष्ट्राग्रे विन्यस्तं स्थितमेव भूमण्डलम् । ऊढपङ्कं धृतपङ्कं सरोजिनीपत्रं सरोजपत्रमिव विभाव्यते । कथम्भूतं सरोजपत्रमिव । पद्मवनं विगाहतः प्रविश्य विहरतः गजेन्द्रस्य तथैव दंष्ट्राग्रे विलग्नमित्यर्थः ॥ ३६ ॥ द्यावापृथिव्योरिति । द्यावापृथिव्योर्यदन्तरम् अन्तरिक्षं

विष्णुचित्तीयम् ।

प्रदेशः । सत्रम् आसन्नोपायचोदनाचोदितो यागः । पूर्तं तटाकारामादि । इष्टं यज्ञादि ॥ ३४ ॥ पदक्रमेति । पदक्रमाभ्याम् आक्रान्तं व्याप्तम् । अनन्तमादौ च स्थितं ब्रह्मप्रदेशोऽर्थः । अक्षरः अकारादि-

दत्तात्रेयीयम् ।

सागरस्य एव धीरो गंभीरो नादो यस्य । प्राग्वंशः अग्निशालायाः पूर्वभागः । "पूर्वभागोऽग्निशालायाः प्राग्वंशः परिकीर्तितः" इति वचनात् । प्राग्वंशः कायो मध्यभागो यस्य । अखिलानि सत्राणि द्वादशाहादियागाः तेषां जनकाः शरीरसन्धयो यस्य । पूर्तं खातादि । इष्टं यागादि । तदुभयधर्मजनके श्रवणे यस्य । सनातनात्मन् नित्यस्वरूप ॥३४॥ हे अक्षरविश्वमूर्ते अनन्तमाकाशं त्वया पदक्रमाक्रान्तं पदक्रमैः पदविक्षेपैराक्रान्तं व्याप्तं । त्वमेव चराचरस्य विश्वस्यादिस्थितं कारणं । अतः परमेश्वरोऽसि ॥ नाथ्यते प्रार्थ्यते इति नाथोऽसीति त्वां विद्मः । अतःप्रसीदेत्यन्वयः ॥३५॥ हे नाथ तव दंष्ट्राग्रविन्यस्तं स्थितमशेषमेतद्भूमण्डलं विभाव्यते प्रतीयते । कथमिव पद्मवनं विगाहतः प्रविश्य विहरतो गजस्येति शेषः । विलग्नं दंष्ट्राग्रे विलग्नं । ऊढपङ्कं संबद्धपङ्कं । सरोजिनीपत्रं कमलपत्रमिव ॥ ३६ ॥ हे अतुलप्रभाव

[ पा० ] १ ज—ड. क्रमकान्त २ क. ख. घ. छ. क्रान्तमनन्तमादिस्थितं. ■ क्रान्तमगत्रयस्य स्थिति. ३ क ख. घ. छ. झ. त्वमेवाक्षर. ४ क—घ. च. ज—ड. चराचरस्य. ५ ख. घ. च. छ. तथैव. ६ क. घ. च. छ. समस्तमूर्ते. [श्रीध० पा०] समस्तदीप्ते.

परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥ ३८ ॥
यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ३९ ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ ४० ॥

विष्णुचित्तीयम् ।

स जगद्व्याप्तिसमर्थदीप्ति । हे तथाभूत ॥ ३७ ॥ येन महिम्ना चराचरमेतद्व्याप्तं । असौ महिमा तवैवेत्यन्वय ॥ ३८ ॥ यदेतत् दृश्यते तदेतत् ज्ञानात्मकं तव मूर्तं तवैव स्वरूपं । तथाऽप्ययोगिनो भ्रान्तिज्ञानेन जगद्रूपं पश्यन्तीत्यन्वय । ज्ञानात्मनस्तवेति पाठे यदेतन्मूर्तं जगद्दृश्यते तदेतत् ज्ञानात्मनस्तव रूपं जगद्भ्रान्तिज्ञानेन जगद्रूपं पश्यन्तीत्यन्वय ॥ ३९ ॥ मोहसंप्लवे मोहसम्बन्धे सतीत्यर्थ ॥ ४० ॥

श्रीधरीयम् ।

तवैव वपुषा व्याप्त । जगद्व्याप्तौ समर्था दीप्तयो यस्य भो तथाभूत । जगद्व्याप्तिसमस्तदीप्ते[1] इति पाठान्तरं सुगमम् ॥ ३७ ॥ तव वपुषा व्याप्तमेवेत्युक्तिप्रतीतव्याप्यव्यापकवादेन परमार्थमाह —परमार्थ इति । अन्यश्चेन्नास्ति कथं तर्हि त्वया व्याप्तमित्युक्तं तत्राह —तवैष महिमा मायाप्रभाव । कोऽसौ । येन महिम्ना व्याप्तमेतच्चराचरं जगत्स एव ॥ ३८ ॥ व्याप्त्या जगतस्तव वैलक्षण्यमाह —यदेतदिति । तव यदेतन्मूर्तं भूतात्मकं जीवरूपं दृश्यते एतज्ज्ञानात्मनो ज्ञानघनस्य तव ज्ञानमयमेव रूपं । ज्ञानात्मकं तवेति वा पाठ । अयोगिनस्त्वमज्ञा भ्रान्तिज्ञानेन जगद्रूपं भूतमयं पश्यन्तीत्यर्थ ॥ ३९ ॥ इदं वराहरूपं त्वया लीलया कृतं ज्ञानात्मकमिति किं वक्तव्य । यतो वस्तुत सद्रूपान्यतिरेकाज्जगदपि

विष्णुचित्तीयम् ।

ज्ञानात्मकं नाथ माधव । स्वामी वा ॥ ३५ ॥ ३६ ॥ ३७ ॥ परमार्थ इति । परमार्थं सत्य । त्वद्व्यतिरिक्त परमार्थो नास्ति । "वृहत्सा, स ब्रह्मा स शिव सेन्द्र सोऽक्षर परम स्वराट्, नेह नानास्ति, सर्वाणि ह वा इमानि भूतानि ब्रह्म, सर्वगतानन्तस्य, यदनुप्रविश्य, सच्चत्यच्चाभवत्, हरिरखिल भिरवीर्यते, इतोऽन्यत् किञ्चिद्व्यतिरिक्तमस्तीति' इत्यादिभ्य । अत्र हेतु येनोपादानभूतेन त्वयैतच्चराचरं व्याप्त । तच्च तवैव चराचरात्मनो महिमा । अतस्त्वदात्मकमेवेदं सर्वमिति । त्वदन्य कोऽपि परमार्थो नास्तीति भाव ॥ ३८ ॥ यदेतदिति । यदेतज्जगद्दृश्यते ज्ञानात्मना त्वया मतया व्याप्तत्वादेतत्तव मूर्तं मूर्ति । तस्मादयोगिन त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह—यदेतदिति ॥ ३९ ॥ वस्तुतस्त्वदात्मकस्य जगत देवमनुष्यादिरू

वृत्तान्तेषीयम् ।

द्यावापृथिव्योर्यदन्तरमन्तरिक्षं तत्तवैव वपुषा व्याप्त । जगद्व्याप्तिसमर्थदीप्ते । जगद्व्याप्तौ समर्था दीप्तयो यस्य तथाभूत । जगद्व्याप्तिसमस्तदीप्ते इति पाठान्तरं सुगमं । भवादृशस्त्वं विश्वस्य हिताय भवेत्यन्वय ॥ ३७ ॥ विश्वहितकर्तृत्वञ्च स्वतन्त्रस्यैवेति भावेन विष्णो स्वातन्त्र्यमाह—परमार्थ इति । हे जगत पते । त्वमेक एव परमार्थ स्वतन्त्र । "स्वतन्त्र परमार्थ्य" इति वचनात् । नान्योऽस्ति अन्य परमार्थो नास्ति । किन्तु सर्वेऽपि त्वदधीना एवेत्यर्थ । तदेवोपपादयति—तवेति । येन महिम्ना चराचरात्मकमेतज्जगद्व्याप्त । स एव तव महिमा तव प्रभाव ॥ ३८ ॥ "सर्वं खल्विदं ब्रह्मे"त्यादिश्रुत्या सर्वस्य ब्रह्माभिन्नप्रतीते कथं तदधीनत्वं तत्रात्मत्वं युज्यत इत्याशङ्क्य श्रुतेरन्यार्थत्वात्सा प्रतीतिर्भ्रान्तिरित्याह—यदेतदिति । अयोगिनो अज्ञानिन । मूर्तं भूतात्मकं यदेतज्जगद्दृश्यते तदेतज्जगज्ज्ञानात्मनो ज्ञानस्वरूपस्यैव रूपत्वेन भ्रान्तिज्ञानेन पश्यन्ति ॥ ३९ ॥ भ्रान्तित्वमेव विरुद्धधर्मदर्शनेनोपपादयति—ज्ञान

[ पा० ] १ क ग घ. च ट ठ तवैव २ विष्णु [पा०] ज्ञानात्मनस्तव

ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥४१॥
प्रसीद सर्व सर्वात्मन्भवाय जगतामिमाम् ।
उद्धरोर्वीममेयात्मञ्छन्नो देह्यब्जलोचन ॥४२॥

चित्सुखीयम् ।

सर्वसर्वात्मन्निति अशेषजडाजडात्मकेति यावत् । भवाय भवनाय । जगतां स्थितय इति यावत् ॥४२॥

श्रीधरीयम् ।

ज्ञानमित्याह —ज्ञानस्वरूपमिति । मोहमयसम्प्लवे संसारसागरे ॥ ४० ॥ ज्ञानात्मकमेव सर्वमित्यत्र विद्वदनुभवं प्रमाणयति—येत्विति । ज्ञायतेऽनेनेति ज्ञानं वेदान्तपुराणादि । तद्विद ॥ ४१ ॥ प्रसीदेति श्रुतिश्च "सर्वं खल्विदं ब्रह्म । ऐतदात्म्यमिदं सर्वम्" इत्यादि । सर्वसर्वात्मन् जडाजडस्वरूप । वसत्यस्मिन्निति वासः तदर्थम् उर्वीमुद्धर एवं कृत्वा शं सुखं ॥ अस्माभ्यं देहि । अब्जलोचन अब्ज-

विष्णुचित्तीयम् ।

पत्रेण दर्शनेऽपि न भ्रमः ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारस्वदर्शनमपि भ्रम इत्याह—ज्ञानस्वरूपमिति । ज्ञानस्वरूपं ज्ञानात्मकमित्यर्थः । अत्र ज्ञानशब्देन ज्ञानगुणसारस्वात्मस्वरूपात्मोच्यते । नाय श्लोकः परविषयः सुस्पष्टत्वदर्शनात् प्रकृतिपुरुषविवेक एव नास्ति कुतस्त्वद्दर्शनमिति भावः ॥४०॥ ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य हि भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च ते देवमनुष्यादिप्रकृतिपरिणामविशेषरूपमखिलं जगच्छरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह—येत्विति ॥ ४१ ॥ प्रसीदेति । भावाय जगतामिति पाठे भावाय सद्भावाय ॥ ४२ ॥

रत्नगर्भीयम् ।

स्वरूपमिति । अर्थस्वरूपमखिलं जगत् । ज्ञानस्वरूपं ज्ञानात्मकं । पश्यन्तो मोहसम्प्लवे मोहाख्यसम्प्लवे भ्राम्यन्ते । तत्रैव परिभ्रमन्ति । ज्ञानार्थिनो लोके भेददर्शनार्थं अर्थस्वरूपस्य जगतो ज्ञानस्वरूपब्रह्माभेदज्ञानं भ्रमएवेति भावः । श्रुतिस्तु सर्वस्य तदधीनत्वाद्यर्थकत्वेनान्यत्र भगवत्पादैरेव व्याख्याता ॥ ४० ॥ एवमज्ञमतमुक्त्वा ज्ञानिमतमाह—येत्विति । ये ज्ञानविदः ज्ञानस्वरूपं परमात्मानं विदन्तीति तथा । शुद्धचेतसः शुद्धान्तःकरणास्ते त्वद्रूपमखिलं जगत् ज्ञानात्मकं प्रपश्यन्तीत्यन्वयः । रूप्यत इति रूपम् । "रूप्यत्वात्तु भगवान् विष्णोः साक्षात्सुखात्मकः । नित्यपूर्णं समुद्दिष्टं स्वरूपं परमात्मनः" इति वामनपुराणोक्तेः । ज्ञानात्मकं ज्ञानस्वरूपं । ब्रह्मादानादिकर्तृ यस्य तत्तथा । आत्मशब्दस्य आदानाद्यर्थत्वं च । "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते" इति पुराणवचनसिद्धं । तज्जगदादानादिकर्तृत्वं निरूपकत्वं च भेदेन विना नसम्भवतीति जगद्ब्रह्मणोर्भेद एव विद्वत्सम्मत इति भावः । तदुक्तं सर्वज्ञभगवत्पादैः । "वैलक्षण्याद्धरेर्भिन्नं तत्तच्चापि तदात्मकम् । इति विश्वं प्रपश्यन्ति ज्ञाननिष्ठा हरेः प्रियाः" इति । अन्येतु यदेतदित्यादिश्लोकत्रयं जगद्ब्रह्मणोरभेदपरतया व्याचक्षते । तदुक्तप्रमाणविरोधाज्जडाजडैक्यानुपपत्तेश्च अविचारितरमणीयमिति बोद्धव्यं ॥ ४१ ॥ सर्वभूतात्मन् सर्वभूतानामन्तर्यामिन् । भवन्त्यस्मिन्निति भावो निवासः तस्मै । उर्वीमुद्धर एवं करणेन नोऽस्माभ्यं शं सुखं देहि ॥४२॥

[ पा० ] १ भ छ म भूतात्मन २ ग भावाय [विष्णु चि० पा०] भावाय ३ [रत्न० पा०] धनंजय

ब्रह्मरूपधरो देवस्ततोऽसौ रजसा वृतः ।
चकार सृष्टिं भगवांश्चतुर्वक्त्रधरो हरिः ॥ ५० ॥
निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥५१॥
निमित्तमात्रं मुक्त्वैवं नान्यत्किञ्चिदपेक्षते ।
नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम् ५२॥
इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे चतुर्थोऽध्यायः ॥ ४ ॥

विष्णुचित्तीयम् ।

मिति । किमहुंपादानकारणमिति तत्राह—प्रधानमिति । प्रधानं कारणं उपादानं तद्भूताः । सृज्यशक्तयः सृज्यप्रतियोगिन्यः । परमेश्वरशक्तय एव उपादानमित्यर्थः । प्रधानकारणीभूता इति यदा पाठस्तदा मुख्यसाधनीभूताः शक्तय इति योजनीयं ॥ ५१ ॥ तदेव स्पष्टयति—निमित्तमात्रमिति । सृज्यं वस्तु निमित्तकारणं विना स्वोत्पत्तौ कारणान्तरं नापेक्षते । किन्तु स्वशक्त्यैव स्वोपादानभूतया

श्रीधरीयम् ।

मशब्देन महर्लोको गृह्यते ॥ ४९ ॥ तदेवं भूम्युद्धारादिलोकरचनापर्यन्ता हरेर्लीलोक्ता । अथ तेनैव ब्रह्मरूपेण कृतां देवादिसृष्टिमाह—ब्रह्मरूपेति ॥ ५० ॥ असौ हरिः ब्रह्मरूपधरः रजसा वृतः सृष्टिं करोतीत्युक्तं । तत्र रजोगुणस्य कर्मासक्तिदुःखादिहेतुत्वात् ब्रह्मणो नित्यं कर्मदुःखित्वादिप्राप्तिमाशङ्क्याह—निमित्तमात्रमिति । असौ हरिः ब्रह्मरूपधरः। अयमर्थः सृज्यानां सर्गे ब्रह्मा निमित्तमात्रं पर्जन्यवत् । सन्निधिमात्रेण साधारणकारणमेव । न तु प्रतिसृज्यं स्वयं व्याप्रियते । तथा सन्निधिमात्रेण गन्धः क्षोभाय जायत इत्यर्थः ॥ ५१ ॥ निमित्तमात्रमिति । निमित्तमात्रसमवधाने सति कारणात्मना स्थितं । सृज्यवस्तु स्वपरिणामशक्त्यैव वस्तुतां स्थूलरूपतां नीयते । निमित्तादन्यत्स्थूलरूपपरिणामार्थं नापेक्षते । यथा तृणादिबीजेषु सूक्ष्मात्मना स्थितमङ्कुरादि पर्जन्ये सति स्वपरिणामशक्त्यैव यथा तथा

विष्णुचित्तीयम् ।

तिपातालानामप्युपलक्षणम् ॥ ४९ ॥ ब्रह्मरूपेति । चतुर्वक्त्रधर इति हरेः ब्रह्मरूपधरत्वया चतुर्वक्त्रत्व शुभम् ॥ ५० ॥ निमित्तमात्रमिति । सृज्यशक्तयः जीवानां प्राचीनकर्मवासनाः ॥ ५१ ॥ निमित्तमात्रमिति । निमित्तमात्रमेन परमपुरुषं मुक्त्वा नान्यत्किञ्चिद्विशेषकारणमपेक्षते । वस्तु देवादि । स्वशक्त्या स्वकर्मभिः । वस्तुता तत्तद्रूपता । जीवकर्मायत्तत्वाद्विचित्रसृष्टेः तेषु प्रधानकारणत्वोक्तिरौपचारिकी

दत्तात्रेयीयम् ।

इत्यमहामलस्य पदेन महर्लोकस्य ग्रहणात् । तत्साहित्याभिप्रायेणाय चतुर्लोकः ॥ ४९ ॥ एवं मत्स्ये भूम्युद्धारादिकमुक्त्वा पुनःसृष्ट्यादिकर्ता स एवेत्याह—ब्रह्मरूपधर इत्यादिना । ब्रह्मणि स्थितः ब्रह्मरूपधरः रजसा वृतः सृष्टिकारणीभूतरजोगुणयुक्तः । चतुर्वक्त्रधरः चतुर्वक्त्रं ब्रह्माणं धरतीति तथोक्तः । अनेन चतुर्मुखस्य तदधीनकर्तृत्वमिति दर्शितं ॥ ५० ॥ विष्णोर्जगत्कारणत्वोक्त्या प्राप्त मह्तत्वादिविकारित्वशङ्कां निरस्यति—निमित्तमात्रमित्यादिना । असौ हरिर्निमित्तमात्रं न तु स्वयं विक्रियते । "यथा-सन्निधिमात्रेण गन्धः क्षोभाय जायते" इत्यादि प्रागेवोक्तत्वात् । तर्हि कार्याणां कथं विकार इत्यत आह —प्रधानेति । सृज्यानां कार्याणां शक्तयः स्वभावसामर्थ्यानि प्रधानकारणीभूताः विकारे मुख्यकारणभूता यतः ॥ ५१ ॥ तदेवाविष्करोति—निमित्तमात्रमिति । निमित्तसमवधाने सति कारणात्मना स्थितं सृज्यं वस्तु स्वपरिणामशक्त्यैव वस्तुतां स्थूलरूपतां नीयते निमित्तादन्यत्स्थूलरूपपरिणामार्थं नापेक्षते

[पा० ] १ ढ ठ सर्गकर्मणां ख च. सर्वकर्मणि २ स भूत ३ ज—ड. मुक्त्वैव.

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चपर्वाविद्यासर्गकथनम् ॥ १ ॥ प्राकृतवैकृतादिनवप्रकारसृष्टिनिरूपणम् ॥ २ ॥ देवासुरपितृमनुष्यसरीसृपपश्वादीनां सृष्टिवर्णनम् ॥ ३ ॥ वेदानामाविर्भावकथनम् ॥ ४ ॥ देवर्षीणां नामधेयादिकरणम् ॥ ५ ॥

श्रीमैत्रेय उवाच ॥

यथा ससर्ज देवोऽसौ देवर्षिपितृदानवान् ।
मनुष्यतिर्यग्वृक्षादीन्भूव्योमसलिलौकसः ॥ १ ॥
यद्गुणं यत्स्वभावं च यद्रूपं च जगद्द्विज ।
सर्गादौ सृष्टवान्ब्रह्मा तन्ममाचक्ष्व कृत्स्नशः ॥ २ ॥

श्रीपराशर उवाच ॥

मैत्रेय कथयाम्येतच्छृणुष्व सुसमाहितः ।
यथा ससर्ज देवोऽसौ देवादीनखिलान्विभुः ॥ ३ ॥

चित्सुखीयम् ।

ज्ञानया मूलप्रकृतिशब्दवाच्यया वस्तुतां कार्यात्मतां नीयत इत्यर्थः ॥ ५२ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे चतुर्थोऽध्यायः ॥ ४ ॥

यद्गुणमिति । सत्त्वादयो गुणाः । स्वभावः शान्तघोरमूढत्वलक्षणरूपमितरव्यावृत्तमसाधारणं स्वरूपं ॥ २ ॥ यथा पुरा पूर्वस्मिन्कल्पे यथा सृष्टिरभूत्तथेदानीमपि चिन्तयतोऽबुद्धिपूर्वको मिथ्याज्ञानलक्षणा-

श्रीधरीयम् ।

परिणमते तद्वत् । अतो नोक्तदोषप्रसङ्ग इत्यर्थः ॥ ५२ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे चतुर्थोऽध्यायः ॥ ४ ॥

ततः क्षितिं समां कृत्वा पृथिव्यां सोऽचिनोद्गिरीन् । यथाविभागं यथास्थानं प्राक्सर्गदग्धानखिलान् पर्वतांश्च ब्रह्मरूपधरो देवः सृष्टिं चकारेत्युक्तं । तत्प्रकारं जिज्ञासुः पृच्छति—यथेत्यादिद्वाभ्यां मैत्रेयः । यथेति ॥ भूव्योमसलिलान्योकांसि स्थानानि येषां तान् ॥ १ ॥ यद्गुणमिति । यद्गुणमित्यादि गुणः सत्त्वादिः । स्वभावः शान्तघोरत्वादिः । रूपं द्विपाच्चतुष्पादाद्याकारं । यादृग्गुणशीलाकारमित्यर्थः

विष्णुचित्तीयम् ।

॥ ५२ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे चतुर्थोऽध्यायः ॥ ४ ॥

अथ वैकृतसर्गं विस्तरेण पृच्छति यथेति ॥ १ ॥ यद्गुणमिति । गुणाः सत्त्वाद्याः स्वभावः शीलं

रत्नाभेदीयम् ।

इत्यर्थः ॥ ५२ ॥ इति श्रीरत्नात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे चतुर्थोऽध्यायः ॥ ४ ॥

भूम्युद्धारानन्तरं ब्रह्मरूपधरो देवः सृष्टिं चकारेत्युक्तं तामेव विस्तरतो ज्ञातुं पृच्छति—यथा ससर्जेत्यादिना । असौ ब्रह्मरूपधरो देवः । भूव्योमसलिलौकसः भूव्योमसलिलानि ओकांसि स्थानानि येषां ते तथोक्तास्तान् ॥१॥ गुणाः सत्त्वाद्याः । स्वभावः शीलं । रूपं द्विपाच्चतुष्पादाद्याकारः । यादृग्गुणशीलाकारं जगदित्यर्थः ॥२॥ सृजेषु देवानां प्राधान्याद्देवादीनित्युक्तं । ननुप्रथमसृष्टाभिप्रायेण । "तृतीयो

रत्नगर्भीयम् ।

दिग्णी भवतु इति संबन्धः ॥ ५४ ॥ इति श्रीरत्नगर्भभट्टाचार्यकृतश्रीविष्णुपुराणव्याख्यायां प्रथमांशे चतुर्थोऽध्यायः ॥ ४ ॥

अविद्यामुख्ययोस्तिर्यगूर्ध्वार्वाक्स्रोतसामपि । विसृष्टिः पश्चमे प्रोक्ता स्वगुणैः फलधारया ॥ तिर्यक्स्रोतोऽभ्यवर्ततेति पाठे तस्य ब्रह्मणस्तिर्यक्स्रोतः सत्त्वजातत्वात्सर्गोऽपि तिर्यक्स्रोतोऽभि-

[ पा० ] १ घ. ङ. प्रज्ञवान्. २ क. ख. घ. च—ट त्रिलगत्. ३. तत्त्वम . १ ग. ३. प्रभु.

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ ४ ॥
तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥५॥

चित्सुखीयम् ।

विद्यापूर्वक तमोमयो मोहावहक सर्ग प्रादुर्भूत इत्यन्वय ॥ ४ ॥ तमेवार्थं स्पष्टयति—तमोमोह इत्यादिना । तत्र तमोनामानात्मन्यात्मप्रत्यय । मोह ऐश्वर्यादिविषये स्वामित्वबुद्धि । महामोह शब्दादिविषयभोगेषु पुन पुनरिच्छा । तामिस्र भोगप्रतिकूलेषु द्वेष ॥ अन्धसञ्ज्ञिता अन्धतामिस्र । विनाशाशङ्कोद्भव भय । एतेषु "अविद्याऽस्मितारागद्वेषाभिनिवेशा पञ्चक्लेशा" इति पातञ्जलयोगशास्त्रे

श्रीधरीयम् ।

॥ २ ॥ ३ ॥ अविद्या विना सूक्ष्मेषु देहेषु जीवाना कर्तृत्वभोक्तृत्वाद्यसम्भवात् प्रथममविद्याविभागमाह—सृष्टिमिति । अबुद्धिपूर्वक अनवधानमूल । तमोमय अविद्यावृत्तिरूप ॥ ४ ॥ तदेवाह—तम इति । अन्धसञ्ज्ञक अन्धतामिस्र । पञ्चपर्वाणि वृत्तिविशेषा यस्या सा । तत्र तमो देहादावनात्मन्यात्माभिमान । मोहस्तत्सम्बन्धिषु पुत्रादिषु स्वाम्यहमस्मीत्यभिमान । महामोह शब्दादिभोगस्पृहा । तामिस्र तत्प्रतिघाते क्रोध । अन्धतामिस्रो विनाशादिशङ्कया नित्य तद्रक्षणाद्यभिनिवेश । एते पञ्चविपर्यया पातञ्जले क्लेशशब्देनोक्ता —"अविद्याऽस्मितारागद्वेषाभिनिवेशा पञ्चक्लेशा" इति ॥ ५ ॥

विष्णुचित्तीयम् ।

रूपमाकार ॥ २ ॥ ३ ॥ सृष्टिमिति । यथापुरा यथापूर्वम् कल्पादिषु तथा चिन्तयत । अबुद्धिपूर्वक विशेषध्यानरहित । तमोमय तमोगुणप्रचुर । सर्गो नगसर्ग ॥ ४ ॥ तमोमोह इति । अविद्याप-

रत्नगर्भीयम् ।

देवसर्गस्तु स स्मृत" इति देवसर्गस्य तृतीयत्वेन वक्ष्यमाणत्वात् ॥ ३ ॥ यथापुरा यथापूर्वं । अविद्याया द्वैधेषु प्राधान्यात्प्रथम तत्सृष्टिमाह—अबुद्धिपूर्वक इति । अ विष्णु "अ इति ब्रह्मे"ति श्रुते । तस्मिन्बुद्धिरबुद्धिस्तत्पूर्वक । ब्रह्मण सर्वकार्येषु विष्णुविषयकबुद्धित्वेऽप्यविद्यासर्गेण तस्यापि बुद्धिर्भ्रंशो भविष्यतीति भीत्यैव विशेषतो विष्णुबुद्धित्वमत्रोक्तमिति बोध्यम् । तमोमय भूताना तामसाशरूपस्य तमसो वृत्तिरूप । तदुक्त तत्त्वविवेके । "अबुद्धिपूर्वकमिव ब्रह्मणो हरिबुद्धित । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन । तामसत्वात्तु भूताना सहस्र सत्त्वभागिना । शताशरजसामेकतमसा सर्ववेदिना । केवलस्तमसो योंऽश साऽविद्या पञ्चपर्विका । जातासिद्धुगवदेहादेस्त्वरक्ष पिशाचका" इति । अबुद्धिपूर्वकमिवेत्यत्र ब्रह्मण सर्वदा विष्णुबुद्धिपूर्वकत्वद्योतनार्थमेवेत्युक्त ॥ ४ ॥ सा एव तमोवृत्तीराह—तमइत्यादिना । तमआदिशब्दार्थस्तु । 'तमस्तु शार्वर प्रोक्त मोहश्चैव विपर्यय । तथाग्रहो महामोहस्तामिस्र क्रोध उच्यते । मरण त्वन्धतामिस्रमविद्या पाञ्चपर्विकेति 'भारतवचनात् । "तमोऽन्तताविपर्यासो मोहोऽन्यस्तु तदाग्रह" इति हरिवंशवचनाच्चावगन्तव्य । पञ्चपर्वा पञ्चप्रकारा ॥ ५ ॥

रत्नगर्भीयम् ।

धीयते उपचारादत पण्डत्व । तथाहि "बुद्धिकर्मेन्द्रिये चित्ते प्रवाहे वुनिचालने । स्रोतोगतौ समुद्रे च सान्तमिच्छन्ति सूरय" । इति शब्दमहार्णव । तथाच ब्रह्मणो बुद्धिकर्मेन्द्रियचित्तानि तिर्यक्षु अन्त-

[ पा० ] १ ग घ च छ वर्गाविषु

पञ्चधाऽवस्थितः सर्गो ध्यायतोऽप्रतिबोधवान् । बहिरन्तोऽप्रकाशश्च संवृतात्मा नगात्मकः ॥६॥ मुख्या नगा यतः प्रोक्ता मुख्यसर्गस्ततस्त्वयम् ॥७॥ तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं पुनः ॥ ८ ॥

चित्सुखीयम् ।

कथ्यन्ते । पञ्चपर्वा पञ्चावयवं ॥ ५ ॥ पञ्चधा वनस्पतिद्रुमौषधिगुल्मलताप्रकारेणावस्थित उत्पन्नः प्रकाशश्चैतन्यं तेन बहिरन्तश्च विवर्जित इत्याह—बहिरन्तोऽप्रकाशश्चेति । सामान्यचैतन्यसद्भावेऽपि विशेषचैतन्याभावात् । बहिरन्तश्चाप्रकाश इति केचित्पठन्ति । संवृतात्मा संवृतो नहि व्यक्त आत्मा इमिति यस्य स तथोक्तः । नगात्मकः स्थावरात्मकः ॥ ६ ॥ मुख्याः सर्गाणां मुखे भवाः । मुख्यसर्ग

श्रीधरीयम् ।

तत्रैवमविद्यायामुद्भूतायां सत्यां प्रथममत्यन्तं मोहमयं स्थावरसर्गमाह—पञ्चधेत्यादिसार्धेन—पञ्चधेति । तस्य सृष्टिं ध्यायतः नगात्मकः स्थावररूपः सर्गः पञ्चधाऽवस्थितः "वृक्षगुल्मलतावीरुत्समस्तास्तृणजातयः" इति । पञ्चमांशे वक्ष्यमाणपञ्चप्रकारो जात इत्यर्थः । तस्य सामान्यलक्षणम् । अप्रतिबोधवान् कोऽहमिति परामर्शशून्यः । बहिः शब्दादिविषये अन्तः सुखादौ च अप्रकाशः ज्ञानशून्यः । संवृतात्मा मूढस्वभावः ॥ ६ ॥ मुख्या इति । मुखमिव प्रथमं ब्रह्मणः सर्गे भवन्तीति मुख्याः । नगाः स्थावराः अत एव पर्वतानां स्थावरत्वेऽपि ब्रह्मसर्गात्प्रागेव मरुद्वेग राहुस्त्वामानानुप्रवेश इति पञ्चेत्युराम् । यद्वा । पर्वतानां पक्षच्छेदनिमित्तमागन्तुकम् । अतः स्थावरत्वं न स्वाभाविकमिति नानानुप्रवेशः ॥ ७ ॥ मुख्यसर्गापरितोषेण सर्गान्तरं ध्यायतस्तस्मात्त्रिविधदुःखहेतुस्तिर्यक्सर्गो जात इत्याह । तं दृष्ट्वेत्यादिसार्धैस्त्रिभिः—तमिति । असाधकं पुरुषार्थप्रवृत्तिशून्यं दृष्ट्वा । अपरं सर्गम् । अमन्यत

विष्णुचित्तीयम् ।

योगाः तमःप्रभृतयो महात्मनः प्रादुर्भूताः ॥ ५ ॥ एतत्समावकतया वृक्षादिरूपेण च पञ्चधा नगसर्ग इत्याह—पञ्चधेति । ज्ञानाल्पत्वप्राचुर्येण वृक्षगुल्मलतावीरुत्तृणेषु तम आविस्तमावस्थावस्था । अप्रतिबोधवानिति नगसर्गस्य तामसत्वे हेतुः । अप्रतिबोधवानिति वा पाठः । बहिःशब्दादिषु अन्तःसुखादिषु च अप्रकाशः प्रकृष्टज्ञानरहितः । जलादानक्षतमसरोहणदोहनादिभिर्वृक्षादीनां किंचिज्ज्ञानसिद्धेः । "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" । इत्यादेश्च संवृतात्मा तमसा संवृतचैतन्यः ॥ ६ ॥ मुख्या इति । मुख्याः तिर्यगादिसर्गेभ्यस्त्वादौ जाताः ॥ ७ ॥ तमिति । असाधकं कर्मानधिकारात्संसारान-

दत्तात्रेयीयम् ।

अविद्यासर्गमुक्त्वा वैकृतसर्गभेदान्दर्शयिष्यन्नत्यन्ततमःप्रचुरत्वान्मुख्याख्यं नगसर्गमाह—पञ्चधेति । सृष्टिं ध्यायतस्तस्य ब्रह्मणः सकाशाज्जातो नगात्मकः स्थावरात्मकः सर्गः पञ्चधाऽवस्थितः "वृक्षगुल्मलतावीरुत्समस्तास्तृणजातयः" इति पञ्चमांशे वक्ष्यमाणपञ्चप्रकारः स्थित इत्यर्थः ॥ तत्स्वरूपमाह—अप्रतिबोधवान् । एतादृशोऽहमिति ज्ञानशून्यः । बहिःशब्दादिविषये । अन्तःसुखादौ च । अप्रकाशः ज्ञानशून्यः । संवृतात्मा मूढस्वभावः ॥ ६ ॥ प्रवृत्तिनिमित्तकथनपूर्वकं नगसर्गस्य विशेषज्ञानमाह—मुख्या इति । नगानां मुख्यत्वं च प्रायशः परोपकर्तृत्वेन मुख्यगतिमत्त्वात् । तदुक्तं मत्स्यपुराणे । "स्थास्नुभिर्नियमान्मुख्या स्थितैर्गतिरवाप्यते । प्रायः परोपकर्तृत्वात्ते मुख्यस्रोतसस्तत" इति ॥ [illegible] ॥ उक्तसर्गापरितोषेण सर्गान्तरं चिन्तयतो ब्रह्मणस्तस्मात्त्रिविधदुःखदं तिर्यक्सर्गं वक्तुं तत्र निमित्तमाह—तमिति ।

रत्नगर्भीयम् ।

तालशिलानि यत्र तत्र जात इत्यर्थः । तिर्यक्स्रोतस्त्वे हेत्वन्तरमाह—यस्मादिति । तिर्यक्प्रवृत्तस्याहार-

[पा०] १ प च. ऽप्रतिबोधवान्. २ स. नगाद्यथोक्ता ३ स. ग. तत स्मृत . ४ धीय०[पा०] माममन्यत्परं.

तस्याभिध्यायतः सर्गस्तिर्यक्स्रोतोऽभ्यवर्तत ।
यस्मात्तिर्यक्प्रवृत्तिरस्य तिर्यक्स्रोतास्ततः स्मृतः ९
पश्चादयस्ते विख्यातास्तमःप्राया ह्यवेदिनः ।
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥१०॥
अहङ्कृता अहंमाना अष्टाविंशद्वधात्मकाः ।
अन्तःप्रकाशास्ते सर्वे आवृताश्च परस्परम् ॥११॥

चित्सुखीयम् ।

॥ ७ ॥ असाधकं पुरुषार्थस्यासाधकं । अमन्यत् अमन्यत ॥ ८ ॥ तिर्यगेव स्रोतो गमनं यस्य स तिर्यक्स्रोताः ॥ ९ ॥ अवेदिनः परलोकसाधनविवेकहीनाः । उत्पथग्राहिणः । उत्पथमनिष्टसाधनं गृह्णन्तीति ॥ १० ॥ अहङ्कृताः आत्मोत्कर्षवेदिनः । अहंमानाः अनात्मन्यात्माभिमानयुक्ताः । अष्टाविंशद्वधात्मकाः । एकादशेन्द्रियाणामपाटवानेकादशेन्द्रियवधाः । "आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभा-

श्रीधरीयम् ।

ग्याख्या इत्यर्थः । अमन्यत परं पुनरिति पाठः साधुः ॥ ८ ॥ तस्येति । तिर्यक्स्रोतोऽभ्यवर्ततेत्यत्र सन्धिरार्षः । यस्मात्तिर्यक्प्रवृत्तिस्तिर्यगाहारसञ्चारेण प्रवृत्तिः प्रकृष्टा वृत्तिः जीवनं यस्य सः ॥ ९ ॥ पश्चादय इति । पश्चादय इत्यादिसन्देन पश्वादयस्तेषां लक्षणं । तमःप्रायास्तमोऽधिकाः । अवेदिनः अनुसन्धानशून्याः । तथा च श्रुतिः—"अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकौ" इति । उत्पथग्राहिणः उन्मार्गवर्तिनः । भक्ष्याभक्ष्यगम्यागम्यादिविवेकरहिता इत्यर्थः । अज्ञाने विपर्ययज्ञाने सम्यग्ज्ञानाभिमानिनः ॥१०॥ अहङ्कृता इति । अहङ्कृताः साहङ्कारमेव कृतं कर्म येषां ते । अहंमानाः साहङ्कार एव मानः अवबोधो येषां ते । अष्टा-

विष्णुचित्तीयम् ।

प्रवर्तकम् ॥ ८ ॥ तस्येति । तिर्यक्स्रोता वायुवत्तिर्यक्प्रवृत्ताः । पार्श्वाभ्यामुत्पन्न इति वा ॥ ९ ॥ पश्चादय इति । अवेदिनः अविवेकिनः । उत्पथग्राहिणः मातृगमनादिदुर्मार्गगताः । अज्ञाने सम्यग्ज्ञानाभावेऽपि सम्यग्ज्ञानमानिनः ॥ १० ॥ अहङ्कृता इति । अहङ्कृता अवलिप्ताः । अहंमानाः तद्धेतुशरीरात्माभिमानिनः । अष्टाविंशद्वधात्मकाः अष्टाविंशतिप्रकारवधा वायूक्ताः । "एकादशेन्द्रियवधा नवधाऽभ्यद्य-

वृत्तान्तेयीयम् ।

स मुख्यसर्गमसाधकं पुरुषार्थसाधनप्रवृत्तिशून्यं मत्वा पुनः अपरं सर्गममन्यत दध्यौ ॥ ८ ॥ तस्य ब्रह्मणः तथाध्यायतस्तिर्यक्स्रोताः सर्गः अभ्यवर्तत अजायत । तिर्यक्स्रोतोऽभ्यवर्ततेत्यत्र सन्धिरार्षः । यस्मात्तिर्यक्प्रवृत्तास्ततः स सर्गस्तिर्यक्स्रोताःस्मृतः । तिर्यक्प्रवृत्तत्वञ्च । "नाधो नोर्ध्वं तिरश्चा तु पुनस्तत्रैव यज्जगिः । यज्ञोपयोगस्य सतामुपकारं विनाऽपि च ।"इति ब्रह्मपुराणवचनादवगन्तव्यं ॥ ९ ॥ ते तिर्यक्स्रोतसः पश्वादयो विख्याताः । आदिपदात्पक्ष्यादिकं गृह्यते । तेषां स्वरूपमाह । तमःप्रायाः अज्ञानप्रचुराः । अवेदिनः आहारनिद्रादिव्यतिरिक्तविषये ज्ञानशून्याः । "अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति नविदुःश्वस्तनं नलोकौ"इत्यैतरेयश्रुतिः । उत्पथग्राहिणः मातृगमनादिमार्गरताः । अज्ञानेऽयथार्थज्ञाने । ज्ञानमानिनः सम्यग्ज्ञानाभिमानिनः ॥ १० ॥ अहङ्कृताः अवलिप्ताः । अहंमानाः अहमित्यभिमानवन्तः । अष्टाविंशद्विधात्मकाः अष्टाविंशत्प्रकारस्व-

रत्नगर्भीयम् ।

गविर्येस्य सः ॥ ९ ॥ बहिः शब्दादौ । अन्तःसुखादौ चानावृताः अनावृतज्ञानाः । तत्रहेतुःप्रकाशा इति

[ पा० ] १ [रत्न० पा०] स्रोतोऽभ्यवर्तत २ ख भवृत्तस्य च. प्रवृत्तोऽसौ ३ क. ख. ङ. झ—ट. स्रोतस्तु .४ क. ख. घ च. छ ज विधात्मका ज ट ठ. विमानिता [चि० पा ] विधात्मिका .

**तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् । ऊर्ध्वस्रोतास्तृतीयस्तु सात्त्विकोर्ध्वमवर्तत १२॥**

चित्सुखीयम् ।

गौरः शरभश्चमरी तथा । एते चैकशफाः क्षत्तः शृणु पञ्चनखान्पशून् । श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्यकौ । सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः । कङ्कगृध्रवकाश्चैव भासभल्लूकबर्हिणः । हंससारसचक्राह्वकाकोलूकादयः खगाः" । अत्र मकरादिसर्गः पश्चिमसर्गश्चैक इत्यष्टाविंशतिसङ्ख्या गमयितव्या । आवृताश्च परस्परं अन्योन्यमप्यज्ञानवन्तः । पितृभ्रातृभ्यादिरूपेणापरिज्ञानात् ॥ ११ ॥

श्रीधरीयम् ।

भेतश्चः । अर्थोनामार्जनरक्षणव्ययादिदोषदर्शनेन शब्दादिपञ्चविषयोपरमात्पञ्च तुष्टयो बाह्यविषयत्वात् बाह्याः । एवं नव तुष्टयोऽभिहिताः । अष्टसिद्धीराह—ऊह इति । उपदेशानपेक्षमेवार्थोन्नयनमूहसिद्धिः । प्रासङ्गिकाच्छब्दश्रवणादर्थज्ञानं शब्दसिद्धिः । गुरूपदेशादेव ततोऽधिकार्थज्ञानमध्ययनसिद्धिः । दुःखत्रयविघातास्तिस्रः सिद्धयः । सुहृत्प्रार्थितार्थसिद्धिः विद्वत्तपस्विसुभूपालभ्याऽर्थसिद्धिः । इत्येता विपक्षासिद्धयः । अयञ्च इन्द्रियाशक्तितुष्टिसिद्धिरूपस्त्रिविधः । सिद्धेरुक्तेः पूर्वोऽङ्कुशः मतिमात इति एवं श्लोकत्रयस्यार्थः । आसाञ्च तुष्टिसिद्धीनाम् अम्भाख्या सलिला चैत्यादिपारिभाषिकं संज्ञान्तरं तत्तद्यान्तरभेदश्च विस्तरभयान्न लिख्यते । अष्टाविंशद्विधात्मिका इति वा पाठः । तदा तु भागवतोक्ताः । नव द्विशफाः षडेकशफाः त्रयोदश पञ्चनखाः इत्यष्टाविंशतिभेदा बाह्याः । तदुक्तम् "गौरजो महिषः कृष्णः शूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम । खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः क्षत्तः शृणु पञ्चनखान्पशून् । श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्यकौ । सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः" । इति ॥ ११ ॥ तिर्यक्सर्गापरितोषेण ध्यायतो देवसर्गोऽभूदित्याह—तमप्यसाधकमित्यादित्रिभिः—तमिति । ऊर्ध्वमुपरि देवाद्बहिरेव स्रोत आहारप्रहणं

विष्णुचित्तीयम् ।

वैदिकस्य प्रथमाच्छादनप्रतिग्रहादानशय्याकौतुकमङ्गलाचरणादिना जयः । मित्रयोगवशादर्थसिद्धिरधिगम्याख्या । विद्वत्तपस्विसुभूपालभ्यार्थसिद्धिः सदा प्रमुदितास्येत्यष्टौ सिद्धयः । नव तुष्टयः । इन्द्रियाद्यशक्तयश्च मोक्षान्तरायाः । उक्तं च साङ्ख्ये "एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा । सप्तदशधा तु बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् । आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्याविषयोपरमात्पञ्चनव तुष्टयोऽभिहिताः । ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" इति । त्रिविधः विपर्ययः शक्तिस्तुष्टिरिति । सिद्धेर्मोक्षस्याङ्कुशः अन्तरायः । आवृताः परस्परं पितृपुत्रत्वादिसम्बन्धानभिज्ञाः ॥ ११ ॥ तमिति । ऊर्ध्वस्रोताः अस्पृष्ट-

दत्तात्रेयीयम् ।

खरादिचमर्यन्ताः षडेकशफाः । श्वादिगोधान्ताः एकादश पञ्चनखाः । जलजाः पक्षिण इति द्विधा द्वयमित्यष्टाविंशतिप्रकाराः इति भावः । अन्तःप्रकाशाः अन्तः हृदि प्रकाशो ज्ञानं येषां ते तथा । अप्रयत्नाद्यदृदयङ्गमं तदेव जानन्ति नशास्त्रयुक्तिभ्यामित्यर्थः । इदंचस्थावराणां तिरश्चांच साधारणलक्षणं । तदुक्तंपाद्मे । "तिरश्चीनाः स्थावराश्च अन्तस्पर्शा इतीरिताः । यत्प्रत्यक्षानुमानाभ्यां हृद्ज्ञानं नशास्त्रतः ।"इति । आवृताश्च परस्परं परस्परं भगिन्यादिसंबन्धानभिज्ञाः ॥ ११ ॥ तमिति । तृतीयः सर्गः ऊर्ध्वस्रोताः ऊर्ध्वस्रोतश्शब्दवाच्यः । सात्त्विकः भूतांशः सत्त्वगुणजन्यः । तदुक्तं तत्त्वविवेके । "भौति-

[पा० ] १ ख साधनं. २ प. दृष्ट्वा.

ते सुखप्रीतिबहुला बहिरन्तश्च नावृताः ।
प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोद्भवाः स्मृताः १३
तुष्टात्मानस्तृतीयस्तु देवसर्गस्तु स स्मृतः ।
तस्मिन्सर्गेऽभवत्प्रीतिर्निष्पन्ने ब्रह्मणस्तदा ॥१४॥
ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ।
असाधकांस्तु ताञ्ज्ञात्वा मुख्यसर्गादिसम्भवान्
तथाऽभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः ।
प्रादुर्बभूव चाव्यक्तादर्वाक्स्रोतास्तु साधकः १६

विष्णुचित्तीयम् ।

ऊर्ध्वस्रोतस्त्वमुपपादयति—त इति । ऊर्ध्वमवर्तत इत्यध्याहरणीयं । तुष्टमानसाः । प्रीतिर्हर्षः ॥ १३ ॥ दध्यौ ध्यातवान् ॥ १५ ॥ सत्याभिध्यायिनः अमोघसङ्कल्पस्य । अव्यक्तात् महदादिपरम्परया ॥ १६ ॥

श्रीधरीयम् ।

यस्य सः अमृतदर्शनादेव तृप्तिः । तथा च श्रुतिः "न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" इति । सात्त्विकोर्ध्वं सात्त्विकं सुखप्रकाशादिकम् ऊर्ध्वमधिकं यथा भवत्येवमवर्तत ॥ १२ ॥ तदेवाह—त इति । सुखं विषयेन्द्रियसंयोगजं । प्रीतिः तन्निमित्तो हर्षः सत्त्वाधिक्यात् । सुखप्रीतिबहुला येषाम् ॥ १३ ॥ तुष्टात्मान इति । तस्मिन्सर्गे सुन्दरत्वात्प्रीतिरभवत् ॥ १४ ॥ तथाप्यपरितोषेण मनुष्यसर्गं सृष्टवानित्याह—ततोऽन्यमित्यादिचतुर्भिः ॥ १५ ॥ तथेति । सत्याभिध्यायिनः सत्यसङ्कल्पस्य । भगवद्ध्यानशीलस्येति वा । अव्यक्तादिति । मुख्यादिसर्गेष्वपि समानं तेष्वपि तस्यानुस्यूतत्वात् । तथा च वायुः—"अव्यक्ताज्जायते चास्य मनसा यद्यदिच्छति । वशीकृतत्वात्त्रैगुण्यात्सापे-

विष्णुचित्तीयम् ।

भूमिकः । सात्त्विकोर्ध्वमित्यर्थः सन्धिः । ऊर्ध्वमवर्तत सुरलोकेऽवर्तत ॥ १२ ॥ त इति । सुखप्रीतिबहुलाः विषयानुभवदशा सुखं । तज्जनिता निर्वृतिः प्रीतिः । प्रकाशाः प्रदृष्टज्ञानाः ज्ञानविरोधरहिताः ॥ १३ ॥ १४ ॥ तत इति । मुख्यसर्गः आदिर्येषां सम्भवानां सर्वाणां ते तथोक्ताः ॥ १५ ॥ तथेति । सत्याभिध्यायिनः सदा सत्यसङ्कल्पस्य । अव्यक्तादित्येतच्छरीरोपादानप्रकृतिद्वारोपलक्षणम् । इदं च सर्वसर्गेष्वपि समम् । "अव्यक्ताज्जायते चास्य मनसा यद्यदिच्छति । वशीकृतत्वात्त्रैगुण्यात्सापेक्षत्वात्स्वभावतः" । इति वायूक्तेः । साधकः "अग्नौ प्रास्ताहुतिः सम्यगादित्यम्" इत्यादिप्रकारेण यागादिना

दत्तात्रेयीयम् ।

केन तु सत्त्वेन गूढं ब्रह्मण आण्डजम् । कर्म यत्रापि तु तमः पतनेन प्रकीर्तितम् । ततो रजस्तलस्त्वेवं पुनरिन्द्रादिनामभि"रिति । ऊर्ध्वस्रोतश्शब्दव्याख्याने प्रवृत्तिनिमित्तमाह—ऊर्ध्वमिति । सात्त्विकोर्ध्वमिति सन्धिरार्षः । यतो देवाः नियमेनोर्ध्वं सञ्चारशीलाः सर्गः ऊर्ध्वस्रोता इत्यर्थः । तदुक्तं मत्स्यपुराणे । "नियमादूर्ध्वसञ्चारा देवा मोक्षैकभागिनः । ऊर्ध्वस्रोतस इत्येव तस्मात्ते परिकीर्तिताः ।"इति ॥ १२ ॥ तेषां स्वरूपमाह—त इति । प्रकाशाः प्रकृष्टज्ञानवन्तः ॥ १३ ॥ तस्मिन्देवसर्गे ज्ञानादिगुणातिशयेन पूर्वसर्गापेक्षयाऽतिशयेन प्रीतिरभवत् ॥ १४ ॥ ततो मुख्यतिर्यक्स्रोतसोऽज्ञाः सामर्थ्यविरहासाधकत्वेन देवानां तु सिद्धज्ञानत्वेन रूपेण पुरुषार्थसाधनत्वाभावान्मुख्यसर्गादिसम्भवानसाधकान्मत्वा तत्साधकं मानुषसर्गमुत्तमं दध्यावित्यर्थः ॥१५॥ तथेति । सत्याभिध्यायिनः सत्यसङ्कल्पस्य । "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुतेः । अव्यक्तात्प्रकृतेः । एतच्च मानुषसर्गेऽपि समम् । "अव्यक्ताज्जायते चास्य

स्वधर्मीयम् ।

॥ १३ ॥ तुष्टात्मानः तुष्टाचाराः । तुष्टात्मन इति पाठः । तदा ब्रह्मणो विशेषणम् । अत आह ।

[ पा० ] १ ज. ट. ठ तुष्टात्मक. २ घ तस्य तु. ३ घ. प्रेम्णा. ४ क—घ घ. ङ झ—ठ मनुष्यसर्गस्य. ५ ड. स्रोतस्तु मानुष.

यस्मादर्वाग्व्यवर्तन्त ततोऽर्वाक्स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः ॥१७॥
तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः साधकास्तु ते १८॥
इत्येते कथिताः सर्गाः षडत्र मुनिसत्तम ।
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ॥१९॥

चित्सुखीयम् ।

अर्वाक् व्यवर्तन्त । स्वर्गमपि गत्वा पुनरागमनात् ॥ १७ ॥ साधकाः ज्ञानकर्मभ्यामपेक्षितपुरुषार्थसाधनात् ॥ १८ ॥ षडितिरर्वाक्स्रोतसो विहाय षडिति यदुक्तं तदेव संगृह्णाति—प्रथम इत्यादिना । ब्रह्मणः

श्रीधरीयम् ।

क्षत्वात्स्वभावतः ।" इति ॥ १६ ॥ यस्मादिति । यस्मादर्वागधः प्रविष्टेनाहारेण व्यवर्धन्त ॥ १७ ॥ तस्मादिति । तस्मात्तमस उद्रेकाद्दुःखबहुलाः । रजोधिकत्वाद्भूयोभूयश्च कर्मशीलाः । प्रकाशबहुलत्वात् बहिरन्तश्च प्रकाशाः प्रकृष्टज्ञानाः । साधकाः कर्मज्ञानाधिकारित्वात् ॥ १८ ॥ इतीति । षडत्रेति । द्वितीयाध्यायोक्तेः सप्त षडेते सर्गाः । तथाहि । इन्द्रियदेवतासर्गस्य वाह्यदेवतासर्गस्य च वैयासासर्गद्वयेनैक्यम् । इन्द्रियसर्गेण सह भेदश्च विवक्ष्यते । अहङ्कारविद्यासर्गयोर्बुद्धिभेदत्वात् । बुद्ध्यात्मकमहत्तत्त्वान्तर्भावः । भौतिकब्रह्माण्डसर्गस्य च भूतसर्गान्तर्भावः । एवं च सति महत्तत्त्वभूतेन्द्रियसर्गास्त्रयः । मुख्यतिर्यङ्मनुष्यसर्गाश्च त्रयः । इत्येवं षडेते सर्गाः कथिता इत्यर्थः । तानेव किंचि-

विष्णुचित्तीयम् ।

लोकसाधकः ॥ १६ ॥ यस्मादिति । अर्वाक् भूमौ व्यवर्तन्त । व्यवर्धन्तेति पाठान्तरम् ॥ १७ ॥ १८ ॥ इतीति । षडत्रेति नगाद्यश्चत्वारः । अविद्याबन्धतुष्टिसिद्धिरूपोऽनान्तरीयकोऽनुग्रहसर्गं एकः । अत्र वायुः । "अष्टमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः । विपर्ययेण शक्त्या च सिद्ध्या तुष्ट्या तथैव च । स्थावरेषु विपर्यासात्तिर्यग्योनिष्वशक्तितः । सिद्ध्यात्मना मनुष्येषु तुष्ट्या देवेषु कृत्स्नशः ।" इति । तस्य तस्य विपर्ययादितरेषामनुग्राहकत्वात् । देवसर्गान्तर्भूतः कुमारसर्ग इत्येके । सप्तात्रेतिपाठे नगाद्यश्चत्वारः

दत्तात्रेयीयम् ।

मनसा यद्यदिच्छति । वशीकृतत्वाद्वैगुण्यात्सापेक्षत्वात्स्वभावतः ।" इति वायूक्तेः । प्रादुर्भूतः सर्ग इति शेषः । साधकः पुरुषार्थ इति शेषः ॥ १६ ॥ मानुषेष्वर्वाक्छब्दप्रवृत्तिनिमित्तमाह—यस्मादिति । पुरुषार्थहेतुप्रयत्नेन विना प्रायोऽधोगतिमत्त्वान्मानुषा अर्वाक्स्रोतस इत्युच्यन्त इत्यर्थः । तदुक्तं ब्रह्मपुराणे । "प्रायोऽधोगमनं यस्मात्प्रयत्नेन विना भवेत् । अर्वाक्स्रोतस इत्येव मानुषाः परिकीर्तिताः ।" इति । ते च त्रिविधा इत्याह—ते चेति । प्रकाशबहुलाः ज्ञानाधिकाः । सत्त्वगुणकार्यत्वात् तेषां सात्त्विकत्वं दर्शितं । तमोद्रिक्तास्तमोनिष्ठाः । रजोधिकाः रजोनिष्ठाः ॥१७॥ तस्मात्तमोनिष्ठाः दुःखबहुलाः । रजोनिष्ठाः भूयोभूयश्च कारिणः । कर्मपराः सात्त्विकाः बहिरन्तश्च प्रकाशाः बहिरन्तर्विषये प्रकृष्टज्ञानवन्तः । ते त्रिविधाः मानुषाः । साधकाः स्वस्वगतिसाधकाः ॥ १८ ॥ सर्गप्रपञ्चमुपसंहरति—इतीति । इत्युक्तप्रकारेण मुख्यसर्गादयः षट्सर्गाः कथिता यद्यपि मुख्यादयश्चत्वारः सर्गा उक्ताः । तथाऽपि अर्वाक्स्रोतससर्गस्य सात्त्विकादिभेदेन त्रैविध्यात्तत्त्रित्वाभिप्रायेण षडित्युक्तं । ननु मुख्यसर्गाद्यपेक्षया पञ्चपर्वाविद्यासर्गस्य पूर्वमुक्तत्वात्तदारभ्य गणनायां सप्तसर्गाः स्युः । अतः कथं षडितिचेन्न इत्थं अविद्यासर्गस्य भूतांशतमःकार्यत्वेन भूतसर्गान्तर्भूतत्वेन प्राकृतत्वाद्वैकृतमुख्यसर्गादिभिरपरिगणनं । तर्हि भूतसर्गनिरूपणेनैवाविद्यासर्गस्यापि सिद्धत्वाद्ब्रह्माण्डवैकृतसर्गनिरूपणावसरे तन्निरूपणं कुत इति चेत्

[ पा० ] १ रा च छ म ह प्रवर्तन्ते [श्रीध०पा०] व्यवर्धन्त. २ म स्रोतस स्मृता . ३ [विष्णुचि०पा०] सप्तात्र

अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च यः ।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः २४
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥२५॥

विष्णुचित्तीयम् ।

येऽभ्य । प्राकृताः प्रकृतिसहितब्रह्मजन्याः महत आकाशादिसहिततन्मात्राणामिन्द्रियाणांच त्रयः सर्गाः ॥ २४ ॥ अहङ्कारविकारात्पयोत्पादकत्वात् वैकृतसनत्कुमारादीनां विकारान्तरानुत्पादकत्वात् । तेन

श्रीधरीयम् ।

पूर्वमुक्तः ॥ २२ ॥ २३ ॥ इदानीं सात्त्विकतामसोभयस्वभावमपरं देवसर्गमाह—अष्टम इति । स च वायुप्रोक्तिविवृतः । "अष्टमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः । विपर्ययेण च शक्त्या सिद्ध्या तुष्ट्या तथैव च । स्थावरेषु विपर्यासात्तिर्यग्योनिष्वशक्तितः । सिद्ध्यात्मना मनुष्येषु तुष्ट्या देवेषु कृत्स्नशः" इति । विपर्यासाः पञ्च तमो मोह इत्यादयः । अशक्तिरेकादशेन्द्रियवैकल्यलक्षणा । सिद्धिरष्टविधा । तुष्टिश्च नवविधा प्रोक्ता प्रागेव प्रपञ्चिता । स्थावरादिष्वस्यान्यविपर्यासादिस्वभावेषु सत्त्वभावानुग्राहको देवतासर्गोऽनुग्रहशब्देनोच्यते । स च स्थावरेषु तिर्यक्षु च तमःपोषकत्वात्तामसः । मनुष्येषु सिद्धिः तुष्ट्यनुरूपसत्त्वोपबृंहकत्वात् सात्त्विक इत्यर्थः । पञ्चैते मुख्यसर्गादयो वैकृताः विकृतीनां सर्गाः । महदादयः प्राकृताः ॥ २४ ॥ देवतासर्गान्तरमाह—प्राकृत इति । कौमारः नीललोहितरुद्रसनत्कुमारादीनां सर्गः । तत्र सनत्कुमारादिसर्गो वैकृतः विकृतिभूतेन ब्रह्मणा कृतत्वात् । रुद्रसर्गस्तु प्राकृतः प्रकृतितः स्वयमेव उद्भूतत्वादिति केचित् । तथा च वक्ष्यति "प्रादुरासीत्प्रभोरङ्के कुमारो

विष्णुचित्तीयम् ।

ऽन्तर्भावः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अष्टम इति । सात्त्विकस्तामसश्च स इति । तत्र विपर्ययाशक्ती तामस्यौ । सिद्धितुष्टी सात्त्विक्यौ । एते मुख्यादयः पञ्च वैकृताः । विकृतिकृतत्वात् महदाद्यास्त्रयःप्राकृताः । प्रकृतिकृतत्वात् ॥ २४ ॥ प्राकृत इति । प्राकृतो वैकृतश्चेति कौमारो द्विविधः । सनत्कुमारादिरूपो नीललोहितकुमाररूपश्च । तत्र प्रथमः प्राकृतप्रलयावसरसृष्टत्वात्प्राकृतः । द्वितीयः

दत्तात्रेयीयम् ।

॥ २२ ॥ अर्वाक्स्रोतसः सर्गः सप्तमः ॥ २३ ॥ अष्टमोऽनुग्रहः अनुग्रहनामकः । स तु सात्त्विकः तामसश्च । सात्त्विकादिभेदेन त्रेधाविभक्तस्यार्वाक्स्रोतस्सर्गस्य राजसमानुषसर्गस्य सप्तमत्वेन सात्त्विकतामससर्गयोरेवानुग्रहसर्गत्वेनैकत्वविवक्षयाऽष्टमत्वोक्तिः । सात्त्विकानां स्थितौ कर्तव्यायां भगवदनुग्रहविषयत्वं । संहारे तु कर्तव्ये तामसानामनुग्रहविषयत्वमिति तत्सर्गस्यानुग्रहशब्दवाच्यत्वं बोध्यं । एते मुख्यादयः पञ्च सर्गा वैकृताः विकृतब्रह्माण्डान्तर्जन्यत्वाद्वैकृताः । तदुक्तं तत्त्वविवेके । "अण्डन्तु विकृतं ज्ञेयं तज्जो वैकृत उच्यत" इति । महदादयस्त्रयः प्राकृताः । महदादीनां प्राकृतत्वंच पूर्वमेव विवृतं ॥ २४ ॥ विवक्षाभेदेन देवतासर्गान्तरमाह—प्राकृतइति । नवमः सर्गः कौमारः । सतु प्राकृतो वैकृतश्च । वैकारिकत्वेन प्राकृतानां देवानां विकृतरूपाण्डान्तर्भूमौ जननात्तेषां सर्गः प्राकृतोवैकृतश्चेत्युभयात्मकः । वैकारिकाणांदेवानांपुनर्ब्रह्माण्डान्तर्जननरूपवैकृतसर्गं ऊर्ध्वस्रोतस्सर्गं षष्ठ । स च षष्ठत्वेन प्रागुक्तएव । ततोऽन्यो देवसर्गो नवमः कोवा स्यादितिचेत्सत्यं । ऊर्ध्वस्रोतसो देवाः द्विविधाः । संपूर्णभोगिन ईषद्भोगिनश्चेति । तत्रेषद्भोगिनामूर्ध्वस्रोतस्त्वेऽपीषद्भोगित्वनिमित्तेन तेषां सर्गः कौमारसंज्ञया नवमत्वेन गण्यते । इत्यतो नविरोधः । तदुक्तं तत्त्वविवेके । "कुमारन्तीति कौमारो देवानामण्डजोद्भवः । वैकारिकाणां जननात्प्राकृतो वैकृतश्च सः । वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुकः । उभयात्मकत्वे तेनैव प्रोच्यन्ते-

प्राकृता वैकृताश्चैव जगतो मूलहेतवः ।
सृजतो जगदीशस्य किमन्यच्छ्रोतुमिच्छसि २६॥
[इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
श्रीचित्सुखमुनिमतरीत्या पञ्चमोऽध्यायः ॥५॥]

श्रीमैत्रेय उवाच ॥

संक्षेपात्कथितः सर्गो देवादीनां मुने त्वया ।
विस्तराच्छ्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम २७

श्रीपराशर उवाच ॥

कर्मभिर्भाविताः पूर्वैः कुशलाः कुशलैस्तु ताः ।
ख्यात्या तया ह्यनिर्मुक्ताः संहारे ह्युपसंहृताः २८
स्थावरान्ताः सुराद्यास्तु प्रजा ब्रह्मंश्चतुर्विधाः ।
ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसास्तु ताः२९

चित्सुखीयम् ।

प्राकृतो वैकृतश्च कौमारः सर्ग इति केचित् ॥ २६ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे पञ्चमोऽध्यायः ॥ ५ ॥

[अन्येषांमतरीत्याऽत्र अध्यायसमाप्तिर्नास्ति]

एवं ब्रह्मणो मानससृष्टिमुक्त्वा इदानीं शरीरात्सृष्टिमस्मिन्नध्याये प्रपञ्चेनाभिधत्ते—कर्मभिरिति । भाविताः वासिताः धर्मवासनावन्त इति यावत् । प्रजा जज्ञिर इत्युत्तरेण संबन्धः । ख्यात्या बुद्ध्या तया तत्तत्कर्मानुचिततया अनिर्मुक्ताः अविमुक्ताः ॥ २८ ॥ अंशास्तेवानीति समन्त्यर्थे द्वितीया । अथवा

श्रीधरीयम् ।

नीललोहितः" इति । अन्ये त्वाहुः—रुद्रसर्गो विकृत्यन्तरजनकत्वादप्राकृतः । सनत्कुमारादीनां नैष्ठिकानां सर्गोऽपि विकृत्यन्तरानुत्पादकत्वादीश्वर इति ॥ २५ ॥ प्राकृता इति । जगत्सृजत ईश्वरस्य जगतो मूलहेतवः एते नव सर्गाः समाख्याता इति पूर्वेणान्वयः ॥ २६ ॥ २७ ॥ ब्रह्मणः शरीराद्विस्तरेण सृष्टिं वक्तुमादौ तावत्सनिमित्ता मानसी सुरादिसृष्टिं पूर्वोक्तामनुवदति कर्मभिरित्यादिद्वाभ्याम् —कर्मभिरिति । पूर्वैः कर्मभिः भाविता अधिवासिता अतस्ताः प्रजाः संहारे उपसंहृता अपि तया ख्यात्या तत्कर्मानुसारिण्या बुद्ध्याऽनिर्मुक्ताः नितरामनिर्मुक्ताः संस्काररूपेण स्थिता एव जज्ञिर इत्युत्तरेणान्वयः ॥ २८ ॥ स्थावरान्ता इति । सुराद्याः सुरनृतिर्यक्स्थावराः एव चतुर्विधाः ॥ २९ ॥

विष्णुचित्तीयम् ।

कल्पादौ ब्रह्मणा सृष्टप्रायत्वादैकृतः । अतः कौमारः प्राकृतो वैकृतश्च । एषु महदाद्याख्यः प्रजापतेर्विष्णोः स्वरूपेणावस्थितस्य । मुख्यादयः षट् चतुर्मुखेनावस्थितस्येति विभागः ॥ २५ ॥ २६ ॥ २७ ॥ कर्मभिरिति । भाविताः वासिताः प्रबलरूपेण वासिताः । ख्यात्या पूर्वज्ञानवासनया ॥ २८ ॥ स्थावरान्ता इति । अतः कर्मभेदाच्चातुर्विध्यं प्रजानां पुण्यतारतम्येन ब्रह्मणो मनस्यनुध्यातेभ्यश्चतुर्विधा जन्म वदन्

दृशार्थेवीयम् ।

ऽष्टगणा अपी"ति । अष्टविधाश्चेषड्योगिनस्तत्रैवोक्ताः । "प्रोक्ता अष्टविधा देवा" इत्यादिना । विजयध्वजतीर्थस्तु कौ भूमौ मारं निर्माय तस्यारः प्राप्तिर्यस्य स इति कौमारशब्दो व्याख्यातः । प्राकृतो वैकृतश्चेति चकारेण उभयात्मककौमारसर्गः समुच्चीयते ॥ २५ ॥ जगत्सृजत ईशस्य जगतो मूलहेतवः एते नव सर्गाः व्याख्याता इत्यन्वयः ॥ २६ ॥ ब्रह्मणः शरीरात् विस्तरेण सृष्टिं वक्तुमादौ तावत्सनिमित्तां मानसीं सृष्टिमनुवदति—कर्मभिरिति । कुशलाकुशलैः पुण्यपापरूपैः कर्मभिर्भाविता अधिवासिताः । अतस्ताः प्रजाः संहारे उपसंहृता अपि तया ख्यात्या तत्कर्मानुसारिण्या पूर्वज्ञानवासनया अनिर्मुक्ता नितरामविमुक्तास्सत्यश्च जज्ञिर इत्युत्तरेणान्वयः ॥ २८ ॥ सुराद्याः स्थावरान्ताः सुरनरतिर्यक्स्थावरा इति

[ पा० ] १ ॥ मानसी सुता .

ततो देवासुरपितॄन्मनुष्यांश्च चतुष्टयम् ।
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत् ॥३०॥
युक्तात्मनस्तमोमात्रा उद्रिक्ताऽभूत्प्रजापतेः ।
सिसृक्षोर्जघनात्पूर्वमसुरा जज्ञिरे ततः ॥ ३१ ॥
उत्ससर्ज ततस्तां तु तमोमात्रात्मिकां तनुम् ।
सा तु त्यक्ता तनुस्तेन मैत्रेयाभूद्विभावरी ॥३२॥
सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः ।
सत्त्वोद्रिक्ताः समुद्भूता मुखतो ब्रह्मणो द्विज ॥३३॥
त्यक्ता साऽपि तनुस्तेन सत्त्वप्रायमभूद्दिनम् ।
ततो हि बलिनो रात्रावसुरा देवता दिवा ॥३४॥

चित्सुखीयम् ।

देवादयः अम्भःशब्दवाच्याः । "तानि वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरोऽसुरा" इतिश्रुतेः । स्वमात्मानं चित्तं अयूयुजत् । एकाग्रं कृतवानित्यर्थः ॥ ३० ॥ सिसृक्षुरन्यदेहस्थस्तां तनुमुत्ससर्जेति पूर्वेणान्वयः । यद्वा सिसृक्षुरन्यदेहस्थो यदा भवत्तदा सुरा अभवन्नित्यन्वयः । प्रीतिः सत्त्वं कार्येणान्यस्य कारणे उपचारात् ॥ ३३ ॥ सत्त्वप्रायं प्रकाशबहुलं सत्त्वप्रचुरस्य स्वकार्ये प्रकाशकत्वात् ॥३४॥

श्रीधरीयम् ।

इदानीं शरीरात्सृष्टिमाह—तत इत्यादिना यावदध्यायसमाप्ति—तत इति । देवादीनां चतुष्टयं चतुर्गणान् । अम्भांसि अम्भःसंज्ञान् । सिसृक्षुः स्रष्टुमिच्छुः । आत्मानं मनः अयूयुजत् समाधत्तेत्यन्वयः । "तानि ह वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरोऽसुराः" इति श्रुतेः देवादीनामम्भःसंज्ञा ॥ ३० ॥ युक्तात्मन इति । तमसो मात्रा लेशः स्वप्रधानत्वादुद्रिक्ताऽभूत् ॥ ३१ ॥ उत्ससर्जेति । तमोमात्रात्मिकां तनुमिति विशेषणात् तमोमयं भावमुत्ससर्जेत्यर्थः । त्यक्तेत्युत्तरत्रापि । विभावरी रात्रिः । श्रुतिश्च —'सा तमिस्राऽभवत्' इति ॥ ३२ ॥ सिसृक्षुरिति । अन्यदेहस्थः सात्त्विके भावे स्थितः सन् सिसृक्षुः प्रीतिं सुखमवाप । मुखतः "स मुखाद्देवानसृजत" इति श्रुतेः ॥ ३३ ॥ त्यक्तेति । सत्त्वप्रायं सत्त्वप्रकाशात्मकं दिनमभूत् रात्रिरभूदित्यादि कथनस्य उपयोगमाह—ततो हीति । यतस्तमोमय्या रात्रिभूतायास्तनोर्जाताः ततो ह्यसुरा रात्रौ बलिनः अतस्तत्सृष्टा रात्रौ बलवन्त इत्यर्थः । एवं देवा-

विष्णुचित्तीयम् ।

प्रथमं मनसो जन्माह—ब्रह्मण इति । मानसास्तु ता इति पाठान्तरम् । ताः प्रजाः पार्थिवीरिति शेषः ॥ २९ ॥ अथ शारीरप्रजासर्गमाह—तत इति । अम्भस्संज्ञं देवादिचतुष्टयं सिसृक्षुः स्वमात्मानम् अयूयुजत् योजितवान् । शरीरान्तरेणेति शेषः ॥ ३० ॥ युक्तात्मन इति । तमोमात्रा तमोगुणांशः ॥ ३१ ॥ ३२ ॥ सिसृक्षुरिति । अन्यदेहस्थः सात्त्विकदेहस्थः ॥ ३३ ॥ ३४ ॥

रत्नगर्भीयम् ।

चतुर्विधाः मानसीः मानस्यः काश्चिदिति शेषः ॥ २९ ॥ मानससर्गानन्तरं शरीरप्रजासर्गमाह—तत इत्यादिना । अंभांसि अंभःसंज्ञान् । देवासुरपितृमनुष्यान् । चतुष्टयं चतुःसंख्याकान् । सिसृक्षुः स्वमात्मानमयूयुजत् शरीरान्तरेण योजितवान् । देवादीनामंभःसंज्ञा च । "तानि वा एतानि चत्वार्यंभांसि देवा मनुष्याः पितरोऽसुरा" इति श्रुतिसिद्धा ॥३०॥ तमोमात्रा तमोगुणांशः । उद्रिक्ताऽभूत् शरीराकारेण परिणताऽभूत् ॥३१॥ विभावरी अन्धकारमयरात्रिरासीत् । सा तमिस्राऽभवदिति श्रुतेः ॥३२॥ अन्यदेहस्थः सात्त्विकदेहस्थः सन् सिसृक्षुः प्रीतिं सुखमाप । मुखतः आस्यात् । "समुखाद्देवानसृजत" इतिश्रुतेः ॥ ३३ ॥ सत्त्वप्रायं प्रकाशात्मकं दिनमासीदित्यर्थः । विभावर्यादिकथनस्योपयोगमाह—ततो हीति । यतस्तमोमय्याः रात्रिभूतायास्तनोरसुरा जाताः ततो रात्रौ बलिनः । एवं देवा अपीति

[पा०] १ घ. मनुष्यांस्तदपि. २ क. ग. घ. ङ. छ. ट. त्यक्ताऽऽत्मना. ३ ग—घ. तमसेन.

सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥ ३५ ॥
उत्ससर्ज ततस्तां तु पितॄन्सृष्ट्वाऽपि स प्रभुः ।
सा चोत्सृष्टाऽभवत्सन्ध्या दिननक्तान्तरस्थिता ॥
रजोमात्रात्मिकामन्यां जगृहे स तनुं ततः ।
रजोमात्रोत्कटा जाता मनुष्या द्विजसत्तम ॥३७॥
तामप्याशु स तत्याज तनुं सद्यः प्रजापतिः ।
ज्योत्स्ना समभवत्साऽपि प्राक्सन्ध्या याऽभिधीयते

ज्योत्स्नागमे तु बलिनो मनुष्याः पितरस्तथा ।
मैत्रेय सन्ध्यासमये तस्मादेते भवन्ति वै ॥३९॥
ज्योत्स्ना रात्र्यहनी सन्ध्या चत्वार्येतानि वै प्रभोः ।
ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि तु ॥४०॥
रजोमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
ततः क्षुद्ब्रह्मणो जाता जज्ञे कामस्तया ततः ॥४१॥
क्षुत्क्षामानन्धकारेऽथ सोऽसृजद्भगवांस्ततः ।
विरूपाः श्मश्रुला जातास्तेऽभ्यधावंस्ततः प्रभुम् ॥

विष्णुचित्तीयम् ।

यदा तस्यात्मनोः ज्योत्स्ना प्रकाशः पितरस्तथेति पश्चिमसन्ध्यासमये बलिनइत्यन्वयः ॥ ३८ ॥ ३९ ॥ अन्ध-

श्रीधरीयम् ।

दिव्यपि द्रष्टव्यम् ॥ ३४ ॥ सत्त्वमात्रात्मिकामिति । अन्यां तनुं जगृहे गृहीत्वा चात्मानं जगत्पितृव-न्मन्यमानस्य पार्श्वाभ्यां पितरो जाताः । यथाह वायुः "पितृवन्मन्यमानस्तु पुत्रान्प्राध्यायत प्रभुः । स पितॄनुपपक्षाभ्यां रात्र्यह्नोरन्तरेऽसृजत् ।" इति ॥ ३५ ॥ ३६ ॥ ३७ ॥ तामिति । सद्य इत्यनेन तत्तद्बुद्धियुक्ति-मन्तरेण स्वतनुत्यागो नास्तीति दर्शितं । ज्योत्स्ना प्रभातम् ॥ ३८ ॥ ज्योत्स्नेति । सन्ध्यासमये सन्ध्ययो-पलक्षिते अपराह्ण इत्यर्थः । "अपराह्णः पितॄणाम्" इति श्रुतेः । तस्मात् ज्योत्स्नाधर्मात् सन्ध्यासमयाच्च ॥ ३९ ॥ ज्योत्स्ना रात्र्यहनीति । ब्रह्मणस्तु शरीराणीत्युपासकानामुपासनार्थमुक्तम् ॥ ४० ॥ रजोमा-त्रेति । तया क्षुधया ततः व्याप्तरसन् ॥ ४१ ॥ क्षुदिति । अन्धकारे स्थित्वा असृजत् । तं प्रभुमभ्य-

विष्णुचित्तीयम् ।

सत्त्वमात्रात्मिकामिति । पितृवन्मन्यमानस्य आत्मानमिति शेषः । पार्श्वाभ्यां पितृजन्म प्रजनान्मनुष्यजन्म "मुखादजनयद्देवान्स पितॄनथ पक्षतः । जघनादसुरान् सर्वान् प्रजनादपि मानुषान्" इति मात्स्योक्तेः ॥३५॥ ३६ ॥ ३७ ॥ ३८ ॥ ज्योत्स्नागमे प्राक्सन्ध्योपलक्षिते पूर्वाह्णे । सन्ध्यासमये चरमसन्ध्योपल-क्षितेऽपराह्णे । अतस्ते तदा पूज्याः "अपराह्णः पितॄणाम्" इति श्रुतेः ॥३९॥ ४० ॥ ४१ ॥ क्षुदिति ।

दत्तात्रेयीयम् ।

द्रष्टव्यं ॥ ३४ ॥ तां तनुं गृहीत्वाऽऽत्मानं जगत्पितृवन्मन्यमानस्य ब्रह्मणः पार्श्वाभ्यां पितरो जाता इत्यर्थः ॥ ३५ ॥ दिननक्तान्तरस्थिता । आदौ दिनं ततो नक्तं तयोरन्तरे स्थितिर्यस्याः सा सायंसन्ध्या ॥ ३६ ॥ आशु इत्यनेन तामेव शरीरं व्यसृजत् ब्रह्मा ननु निजमिति ज्ञायते । तथोक्तं कौर्मे । "व्यसृ-जन्मलवद्देहं मायां ननु निजं पुरा । ब्रह्मा तथाहरादित्वं प्राप देवादिदैवत"मिति । पुरा सृष्टिसमये ॥३८॥ ज्योत्स्नाशब्देन प्रभातं विवक्षितं । मनुष्याः जाताः प्रजनादितिशेषः । तदुक्तं मत्स्यपुराणे । "मुखा-दजनयद्देवान्सपितॄनुपपक्षतः । जघनादसुरान्सर्वान्प्रजनादपिमानुषानि"ति । सन्ध्यासमये सन्ध्यायो-गोपलक्षितापराह्णे । "अपराह्णः पितॄणा"मितिश्रुतेः । तस्माज्ज्योत्स्ना सन्ध्यात्मकशरीरोत्पन्नत्वात् ॥३९॥ त्रिगुणोपाश्रयाणि । ज्योत्स्ना राजसी रात्रिः तामसी अहस्सन्ध्ये सात्त्विक्यौ इति भावः ॥ ४० ॥ ततस्त-मोरन्यां । तनुग्रहणात् । क्षुन् पार्थिवधातुकः कोऽपिविकारः । तया क्षुधया । ततः कोपात् ॥४१॥ अन्धकारे

[ पा० ] १ क. ग. घ. च ■ ठ—ड. स्थिति. २ ख घ. ङ. ध. मात्रात्मिका. ३ ग तनुमाप. ४ ग. घ. ध. ङ. ठ ज्योत्स्नोद्भवेतु. ड ज्योत्स्नायामेव ५ क. ग. घ. च—ञ. ट. ढ. विभो । ६ क. ग—ङ. कोप. ख. मोहः. ७ क—छ. प्रभु.

मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु जक्षणात् ॥४३॥
अप्रियेण तु तान्दृष्ट्वा केशाः शीर्यन्त वेधसः ।
हीनाश्च शिरसो भूयः समारोहन्त तच्छिरः ॥४४॥
सर्पणात्तेऽभवन् सर्पा हीनत्वादहयः स्मृताः ।
ततः क्रुद्धो जगत्स्रष्टा क्रोधात्मानो विनिर्ममे ।
वर्णेन कपिशेनोग्रभूतास्ते पिशिताशनाः ॥४५॥
ध्यायतोऽङ्गात्समुत्पन्ना गन्धर्वास्तस्य तत्क्षणात् ।
पिबन्तो जज्ञिरे वाचं गन्धर्वास्तेन ते द्विज ॥४६॥

विष्णुचित्तीयम् ।

कारे तमसि तमोगुणोद्भूम इति यावत् ॥ ४२ ॥ एष पिता रक्ष्यतामिति यैरुक्तं ते राक्षसाः । ये पुनस्तेषां मध्ये खादाम इत्यूचुस्ते जक्षणात् भक्षणाद्यक्षाः । यक्षणादित्यत्र जकारस्थाने यकारश्छान्दसः ॥ ४३ ॥ अप्रियेण द्वेषेण । ङिप अशीताविस्येषार्थतास्मरणात् । अशीर्यन्तेति वक्तव्ये अकारलोपश्छान्दसः ॥ ४४ ॥ गन्धर्वपदनिरुक्तिद्वारा तत्सर्गमाह—ध्यायत इति । निरुक्तार्थमाह—पिबन्त इति ।

श्रीधरीयम् ।

धावन् भक्षयितुमिति शेषः ॥ ४२ ॥ मैवमिति । तेषामेव मध्ये येऽन्ये जक्षामः खादाम इत्यूचुः ते जक्षणाद्भक्षणाध्यवसायात् यक्षाः । "जक्ष भक्षहसनयोः" । जक्षा इति वक्तव्ये यकारः परोक्षार्थः । "परोक्षप्रिया इव हि देवाः" इति श्रुतेः ॥ ४३ ॥ अप्रियेणेति । शीर्यन्त आशीर्यन्त आहीयन्तेत्यर्थः । शिरसो हीनास्सन्तः पुनस्तच्छिरस्समारूढाः ॥ ४४ ॥ सर्पणादिति । सर्पणाच्छिरस्समारोहणात्क्रोधात्मानः क्रोधात्मकान् । विभक्तिव्यत्यय आर्षः ॥ ४५ ॥ ध्यायत इति । गां वाचं धयतः पिबतः गायत

विष्णुचित्तीयम् ।

अन्धकारे क्षिप्त्वेति शेषः ॥ ४२ ॥ मैवमिति । रक्ष्यतामेष इत्यत्रेतिशब्दस्यानुषङ्गः । जक्षणात् भक्षणार्थोक्तेः यक्षणं जक्षणमपि भक्षणमतो यक्षाः ॥ ४३ ॥ अप्रियेणेति । अस्य वेधसः शिरसः केशाः अप्रियेण हीना भूत्वा शीर्यन्त । समारोहन्त व्यसर्पन् ॥ ४४ ॥ सर्पणादिति । क्रोधात्मनः क्रोधात्मकान् । कपिशेन वर्णेनोपलक्षिताः भूताः । अभवन्निति शेषः ॥ ४५ ॥ ध्यायत इति । ध्याय-

दत्तात्रेयीयम् ।

क्षिप्त्वेति शेषः । अभ्यधावन् भक्षयितुमेवेति शेषः ॥ ४२ ॥ एष मा भक्ष्यमाणयोगो माऽस्तु । भो एष रक्ष्यतामिति तेषां मध्ये यैरुक्तं ते राक्षसाः । येऽन्ये जक्षामः खादाम इत्यूचुस्ते जक्षणात् भक्षणाध्यवसायाद्यक्षा जाताः । जक्ष भक्षहसनयोरिति धातुः । जक्षा इति वक्तव्ये यक्षा इति वर्णविपर्ययो निर्वचनत्वात् ॥ ४३ ॥ ता तु तनु रजोमात्रात्मिकामित्युक्ता तनु । अप्रियेण दृष्ट्वा स्थितस्यास्य वेधसः केशास्तत्तनुगताः केशाः शीर्यन्त आहीयन्तेत्यर्थः । शिरसोहीनाः क्षीणास्सन्तः तच्छिरः पुनः समारोहन्त समारुरुहुः ॥ ४४ ॥ सर्पणाच्छिरस्समारोहणात्सर्पा अभवन् । हीनत्वादहयः । अप्रियेण ता दृष्ट्वानेन तनुत्याग एवाभिप्रेतः । "सर्गेऽनुपचिते क्रोधादुत्ससर्ज हितद्वपुः—येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग जज्ञिरे । सर्पा विसर्पतः क्रूरा नागा भोगोरुकन्धराः" इति भागवतोक्तेः । क्रोधात्मानः क्रोधात्मकान् । विभक्तिव्यत्ययश्छान्दसः । कपिशेन पिङ्गलेन । उपलक्षिताः भूताः प्राणिविशेषाः ॥ ४५ ॥ अङ्गात् सुरूपदेहात् । "कान्त्या ससर्ज भगवान्गन्धर्वाप्सरसां गणान् । विससर्ज तनुं तां वै ज्योत्स्नां कान्तिम-

[ पा० ] १ ग ज खादुर्जक्षाम २ ख भक्षणात्. ग ङ ट. ठ भक्षणात् ३ क ख घ ड. ध ङ च अप्रियेणासतान् ट ठ ड अप्रियावचतान् ४ क गायतोऽङ्गात् ङ—ट भवन्तोगात्समुद्भूता. ५ ग स्तुवन्तो. [ वि० पा० ] पिबतो

एतानि सृष्ट्वा भगवान्ब्रह्मा तच्छक्तिचोदितः ।
ततः स्वच्छन्दतोऽन्यानि वयांसि वयसोऽसृजत्॥४७॥
अवयो वक्षसश्चक्रे मुखतोऽजाः स सृष्टवान् ।
सृष्टवानुदराद्गाश्च पार्श्वाभ्यां च प्रजापतिः॥४८॥
पद्भ्यां चाश्वान्समातङ्गान्रासभान्गवयान्मृगान् ।
उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्याश्च जातयः ॥४९॥
ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ।
त्रेतायुगमुखे ब्रह्मा कल्पस्यादौ द्विजोत्तम ।
सृष्ट्वा पश्वोषधीः सम्यग्युयोज स तदाऽध्वरे॥५०॥

विष्णुचित्तीयम् ।

गां वाचं धयन्तः पिबन्तः गानशीला इत्यर्थः ॥ ४६ ॥ तच्छक्तिचोदितः । तस्य विष्णोः शक्त्या चोदितः प्रेरितः ॥ ४७ ॥ न्यङ्कून् कृष्णमृगान् ॥ ४९ ॥ स्थिरयां पश्वादिसृष्टिरित्यत आह—त्रेतेति । कल्पस्यादौ यत् कृतयुगानन्तरं त्रेतायुगं तदा पश्वादीनध्वरे युयोज । ध्यानप्रधानकृतयुगे यज्ञाप्रवृत्तेः

श्रीधरीयम् ।

इत्यर्थः । गां पिबन्तो गायन्तो जज्ञिरे । तेन गन्धर्वाः ॥ ४६ ॥ एतानीति । तच्छक्तिचोदितः तेषां सृज्यानां शक्तिभिः प्राक्कर्मरूपाभिः प्रयुक्तः सन् । तत्तद्बुद्धिवृत्तिभिः एतानि सृष्ट्वा । स्वच्छन्दतः तत्तत्कर्मवशादैश्वरपया स्वेच्छया । वयसो देहावस्थाविशेषात् । वयांसि पक्षिणः ॥ ४७ ॥ अवय इति । अवयो मेषान् । विभक्तिव्यत्यय आर्षः ॥ ४८ ॥ पद्भ्यामिति । अश्वतरान् खरतोऽश्वायां जातान् । न्यङ्कून् कृष्णसारादिवन्यमृगविशेषान् । अन्याश्च जातयः तिर्यग्जातीः ॥ ४९ ॥ ओषध्य इति । तदेवं कल्पस्यादावेव पशूनोषधीश्च सृष्ट्वा अनन्तरं त्रेतायुगमुखे प्राप्ते सम्यग्ग्राम्यारण्यव्यवस्थया तथाऽध्वरे साधनतया युयोज ।

विष्णुचित्तीयम् ।

योऽज्ञाविति । पिबतो जज्ञिरे वाचमितिच पाठान्तरम् । ध्यायतेर्धकारेणापादिति गकारेण वाचमिति धकारेण गन्धर्वपदनिर्वचनम् ॥ ४६ ॥ एतानीति । तच्छक्तिचोदितः तेषां सृज्यानां धर्मचोदितः । वयांसि पक्षिणः ॥ ४७ ॥ अवय इति । अवयः अवीन् ॥ ४८ ॥ पद्भ्यामिति । मृगान् हरिणान् । अश्वगर्दभसङ्करोऽश्वतरः "न्यङ्कुस्तु शम्बराकारशिरोजविपुलोमतः" इति वैजयन्ती । अन्यो मृगादिजातीः ॥ ४९ ॥ ओषध्य इति । ओषध्यः फलपाकान्ताः व्रीह्यादयः । फलमूलिन्यः निष्पावप्रभृतयः । त्रेतायुगमुखे "यजन्त्यश्वं त्रेतायाम्" इति वक्ष्यमाणत्वात् । कल्पादौ त्रेतायुगमुखे यज्ञप्रथा-

एतद्वैषीयम् ।

स्तौ प्रिया"मितिभागवतोक्तेः । वाचं पिबन्तो जज्ञिरे तेन गन्धर्वाः । अनेन गां धयन्तो यान्ति इति गन्धर्वशब्दनिर्वचनं दर्शितं । अत्र गमिरादि इत्यादिकं निर्वचनादुपपन्नं ॥ ४६ ॥ तच्छक्तिचोदितः तेषां सृज्यानां शक्तिभिः प्राक्कर्मरूपादिभिः चोदितः प्रेरितः तदनुसारेण प्रवृत्त इति यावत् । एतानीति सामान्यवचनान्नपुंसकं । स्वच्छन्दतः स्वेच्छया । वयसो देहावस्थाविशेषलक्षणात् वयांसि पक्षिणः ॥ ४७ ॥ अवयो मेषान् । विभक्तिव्यत्ययः छान्दसः ॥ ४८ ॥ अश्वतरान् वेसरान् । न्यङ्कून् कृष्णसारान् । "कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः" इत्यमरः । अन्याश्च तिर्यग्जातयः ॥ ४९ ॥ एवं सृष्टानां पश्वादीनां विनियोगमाह—त्रेतायुगमुखइति । कल्पस्यादावेव पशूनोषधीश्च सृष्ट्वा अनन्तरं त्रेतायुगमुखे प्राप्ते तानध्वरे साधनतया युयोज । कृतयुगे यज्ञाभावात्प्रथमेत्रेतायुगमुखे इत्युक्तं ॥ ५० ॥

[पा०] १ क. कल्पोत्पाता . २ ख ग. पृष्टत्.

गौरजः पुरुषो मेषश्चाश्वाश्वतरगर्दभाः ।
एतान्ग्राम्यान्पशूनाहुरारण्यांश्च निबोध मे ॥५१॥
श्वापदा द्विखुरा हस्ती वानराः पक्षिपञ्चमाः ।
औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥५२॥
गायत्रं च ऋचश्चैव त्रिवृत्स्तोमं रथन्तरम् ।
अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥५३॥
यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा ।
बृहत्साम तथोक्थ्यं च दक्षिणादसृजन्मुखात् ॥५४॥
सामानि जगतीच्छन्दः स्तोमं सप्तदशं तथा ।
वैरूपमतिरात्रं च पश्चिमादसृजन्मुखात् ॥५५॥
एकविंशमथर्वाणमाप्तोर्यामाणमेव च ।
अनुष्टुभं च वैराजमुत्तरादसृजन्मुखात् ॥५६॥
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।
देवासुरपितॄन्सृष्ट्वा मनुष्यांश्च प्रजापतिः ॥५७॥

चित्सुखीयम् ।

॥ ५० ॥ त्रिवृदिति स्तोमविशेषः । प्रथमात् पूर्वदिगवस्थितात् ॥५३॥ उक्थ्यः यज्ञविशेषः ॥५४॥ एक-

श्रीधरीयम् ।

कृतयुगे यज्ञानामप्रवृत्तेः ॥ ५० ॥ ग्राम्यारण्यभेदमेवाह—गौरित्यादिद्वाभ्याम् ॥ ५१ ॥ श्वापदा इति । श्वापदाः व्याघ्रादयः । द्विखुराः गवादयः । औदकाः कूर्मादयः । सरीसृपाः सर्पगोधादयः ॥ ५२ ॥ पूर्वादिमुखेभ्यः सृष्टिमाह चतुर्भिः—गायत्रमिति । गायत्रं छन्दः । ऋचो ऋग्वेदः । त्रिवृत्स्तोमः स्तोत्र-साधनभूतानां ऋचां समुदायम् । रथन्तरं साम । यज्ञानां मध्ये अग्निष्टोमं सोमयागसंस्थाविशेषम् ॥५३॥ यजूंषीति । यजूंषि यजुर्वेदः । उक्थ्यं सोमसंस्थाम् ॥ ५४ ॥ सामानीति । सामानि सामवेदः । वैरूपं साम । अतिरात्रं सोमयागसंस्थाविशेषम् ॥ ५५ ॥ एकविंशमिति एकविंशतिस्तोमः । अथर्वाणम् अथर्ववेदम् । आप्तोर्यामाणं सोमसंस्थाम् । अनुष्टुप् छन्दः । वैराजं साम ॥ ५६ ॥ सृष्टानां सर्वेषां भूतानां धर्मस्वभावादि

पिण्डुविनीयम् ।

विसृष्टिः "तानि धर्माणि प्रथमान्यासन्" 'व्यालम्भत' इत्यादिश्रुत्यानयोग एव कृतयुगे ॥ ५० ॥ ५१ ॥ श्वापदा द्विखुरा इति ॥ श्वापदाः व्याघ्राद्याः । द्विखुराः गवाद्याः । औदकाः नक्राद्याः । सरीसृपाः सर्प-गोधाद्याः ॥ ५२ ॥ गायत्रमिति । त्रिवृत्पञ्चदशसप्तदशैकविंशाः स्तोमाख्याः सामभुक्तिविशेषाः रथ-न्तरबृहद्वैरूपवैराजाः सामभुक्तिविशेषाः । अग्निष्टोमाद्याः सोमसंस्थाविशेषाः ॥ ५३ ॥५४॥५५॥५६॥ उच्चावचानीति । उच्चावचान्युत्कृष्टनिकृष्टान्यनेकविधानि । जीवानां विषमसृष्टिः कर्मापेक्षिता यद्यु तत्स-

कृत्तानेयीयम् ।

नरमेधेषु पुरुषस्य पशुत्वात्तस्यापि पशुगणनम् ॥ ५१ ॥ श्वापदाः व्याघ्रादयः ।द्विखुराः गवादयः । औ-दकाः मत्स्यादयः । सरीसृपाः सर्पाद्याः ॥ ५२ ॥ पूर्वादिमुखेभ्यः क्रमात्सृष्टिमाह—गायत्रमित्यादिना । गायत्रं गायत्रीच्छन्दः ऋचो ऋग्वेदः । त्रिवृत्स्तोमं स्तोत्रसाधनभूतानां त्रिरावृत्तानां गीयमानानामृचां समु-दायविशेषः । रथन्तरं साम । यज्ञानां मध्ये अग्निष्टोमं सोमयागसंस्थाविशेषः । प्रथमान्मुखात् ॥ ५३ ॥ यजूंषि यजुर्वेदः । त्रिष्टुभमेव त्रैष्टुभम् । स्तोमं स्तोमाख्यपञ्चदशावृत्तम् ॥ ५४ ॥ वैरूपं साम । अतिरात्रं यागविशेषः ॥ ५५ ॥ एकविंशं एकविंशत्यावृत्तं स्तोमं । अथर्वाणं अथर्ववेदः । आप्तोर्यामाणं यागविशेषः । अनुष्टुप् छन्दः । वैराजं साम । अत्र ऋगादिवेदानामपौरुषेयत्वेन नित्यत्वात्तदुत्पत्तिकथनं तदभिव्यक्तिपरं । तदवान्तराभिमानिदेवतोत्पत्तिपरत्वा बोद्धव्यं । तदुक्तं ब्रह्माण्डे । "वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपे-क्षया । अवान्तराभिमानानां देवानां वा व्यपेक्षया । नानित्यत्वात्कुतस्तेषामनित्यत्व स्थिरात्मना"मिति ॥ ५६ ॥ जीवानां विषमसृष्टेः कर्मापेक्षतां वक्तुं पूर्वोक्तं सर्गमनुवदति—उच्चावचानीत्यादिना । उच्चावचानि उत्कृ-

[ पा० ] १ ङ ढ उदका २ घ छ ट ठ त्रिवृत्साम ३ ख ग निर्ममे दक्षिणमुखात् ज ड निर्ममे प्रथमामुखात्

इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः ।
नानात्वं विनियोगं च तथैव व्यसृजत्स्वयम् ॥६२॥
नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥६३॥
ऋषीणां नामधेयानि यथा वेदश्रुतानि वै ।
तथा नियोगयोग्यानि ह्यन्येषामपि सोऽकरोत् ॥६४॥

चित्सुखीयम् ।

डाम्बरं कर्म । अहिंस्रं तद्विपरीतं । मृदु उपकारकं । क्रूरं तद्विपरीतं । धर्माधर्मौ विहितप्रतिषिद्धकर्मणी । ऋतानृते सत्यानृतवचनलक्षणे कर्मणी । तद्भाविता तया ज्ञात्या वासिता । तज्जातीयं कर्म । तस्मै तज्जातीयाय । जात्यभिप्रायश्चैकवचनं ॥ ६१ ॥ नानात्वं पृथग्भावं । विनियोगं कार्यविशेषं । पृथिव्या धारणं अपां क्लेदनमित्यादि ॥ ६२ ॥ यथानियोगयोग्यानि । यज्ञादौ गोत्रत्वेन विनियोगार्हाणि ॥ ६४ ॥

श्रीधरीयम् ।

साधुकर्मोऽपि किञ्चिदधर्मं यथा—राज्ञां चौरादिरक्षणं । क्रूरमपि किञ्चिद्धर्मं यथा राज्ञां दुष्टशासनं । सत्यमपि किञ्चिदधर्मं यथा ब्राह्मणादिवधभाषी । तद्वदनृतमनृतमपि ब्राह्मणादिरक्षणे धर्मं । अतो धर्माधर्मविपरीतयोः पृथग्ग्रहणं तद्भाविता तैर्हिंस्रादिकर्मभिर्वासिता । तस्मादद्यापि यो यद्वासनावासितः तस्मै तदेव रोचते ॥ ६१ ॥ इन्द्रियार्थेष्विति । एवं तद्वासनानुसारेणैवेन्द्रियार्थेषु नानात्वम् अनुसमन्न फलं तृणमित्यादि भोगविषयविभागं । भूतेषु नानात्वं जलस्थलचरादिविभागं । शरीरेषु नानात्वं द्विपाच्चतुष्पादित्यादिविभागं विनियोगं चानेन जीवेनेदं कार्यमित्यादि । तत्तत्कर्मानुसारेण स्वयमेवासृजत् ॥ ६२ ॥ नामेति । नाम इन्द्रोऽग्निर्यम इत्यादि । रूपं च वज्रहस्तेत्यादि । कृत्यानां वर्षदहनसंयमादीनां । प्रपञ्चनं तत्तदान्तरभेदम् ॥ ६३ ॥ किञ्च—ऋषीणामिति । ऋषीणां वसिष्ठादीनां नामानि 'तस्माद्वासिष्ठो ब्रह्मा कार्यः' इत्यादि नियोगयोग्यानि तत्तत्सूक्तमन्त्रादिदर्शनयोग्यानि च । वेदे यथा-

विष्णुचितीयम् ।

तज्जन्यधर्माधर्मौ च येन वासितौ यः तत्करोति तत्तस्मै रोचते ॥ ६१ ॥ इन्द्रियार्थेष्विति । इन्द्रियेषु तदर्थेषु च नानात्वं श्रोत्रादित्वशब्दादित्वविभागं । भूतेषु नानात्वं भूसमुद्रद्युलोकादिभोगदेशविभागं । शरीरेषु नानात्वं द्विपाच्चतुष्पादादिभोगायतनविभागं । तेषां विनियोगम् अस्य जीवस्यायं देहः अयं लोकोऽनेन इन्द्रियेणेदं भोग्यमित्येवलक्षणं । धातैव स्वातन्त्र्येण व्यसृजत् तेभ्य आदिष्टवान् । "नानात्वं विनियोगं च धातैव व्यदधात्स्वयम्" इति पाठान्तरम् ॥ ६२ ॥ नामेति । देवादिस्थावरान्तानां भूतानां । नाम सुरनरमृगखगवृक्षादिजात्यभिधानं । रूपम् अनिमेषद्विपदचतुष्पदशाखित्वादि । कृत्यं हविर्भोगयज्ञाद्यनुष्ठानसुखमसाधुपादनत्वादिकम् 'ऐन्द्रं दधि, ब्राह्मणोऽधीनादधीत, खादिरं यूपं कुर्वीत' इत्यादि वेदशब्देभ्य एव ज्ञात्वा निर्ममे ॥ ६३ ॥ किञ्च । ऋषीणामिति । ऋषीणां वसिष्ठादीनाम् अन्येषाम् इन्द्रहरिश्चन्द्रादीनां च । तत्तल्लोकव्यापारनियुक्तानां । तत्तत्क्रियोपाधिकं नाम अध्वर्युयजमानसम्राडादिकं च यद्वत् वेदश्रुतमेव तत्तत् सङ्केतितवान् । वसिष्ठेन्द्रादिव्यक्तीनामनित्यत्वेऽपि

वृत्तात्रवीयम् ।

अयं लोकः अनेनेन्द्रियेणेदं भोग्यादिरूपं च । धातैव तत्तत्कर्मानुसारेण स्वयमसृजत् ॥ ६२ ॥ भूतानां देवादिस्थावरान्तानां । नाम इन्द्रेत्यादिकं । रूपं सहस्राक्षत्वादिरूपं । कृत्यानां वर्षादिकार्याणां प्रपञ्चनं तदवान्तरविस्तारं । वेदशब्देभ्यो ज्ञात्वेति शेषः ॥ ६३ ॥ ऋषीणां वसिष्ठादीनां । अन्येषामपि हरिश्चन्द्रादीनां । नियोगयोग्यानि तत्तत्कर्मनियोगे तत्तत्सूक्तमन्त्रादिदर्शने च योग्यानि नामधेयानि वेदे यथा

[पा०] १ छ धातैव व्यदधात्स्वयं २ छ झ ट ठ प्रवर्तेन ३ छ एवासौ ४ ज ट ठ ड वेदश्रुतेन झ वेदेश्रुतानि ५ ज ढ ट ड सर्वेषामपि

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ६५
करोत्येवंविधां सृष्टिं कल्पादौ स पुनःपुनः ।
सिसृक्षाशक्तियुक्तोऽसौ सृज्यशक्तिप्रचोदितः ॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे पञ्चमोऽध्यायः ॥ ५ ॥

[श्रीचित्सुखमुनिमतरीत्या षष्ठोऽध्यायः ॥ ६ ॥]

विष्णुचित्तीयम् ।

पर्यये विपर्यये सति । पर्यायेणेति वा तृतीयार्थे सप्तमी । भावा. कार्याणि ॥ ६५ ॥ सृज्यशक्तिप्रचोदितः । सृज्यप्रतियोगिनीभिः शक्तिभिः प्रचोदितः प्रेरित. । सिसृक्षाप्रवर्तेरिच्छारूपायाः सामर्थ्यलक्षणायाः शक्तेर्भिन्नत्वात्पृथङ्निर्देश इति द्रष्टव्यं ॥ ६६ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे षष्ठोऽध्यायः ॥ ६ ॥

श्रीधरीयम् ।

भूतानि तथैव कृतवान् ॥ ६४ ॥ ननु देवादीनामनित्यानां कथं नित्यत्वेन वेदेनाभिधानमित्याशङ्क्य प्रवाहनित्यत्वं दृष्टान्तेन दर्शयति—यथेति । यथा वसन्तादौ ऋतौ यानि ऋतुलिङ्गानि पुष्पफलादीनि । पर्यये तस्य ऋतोः पुनरावृत्तौ । तानि तज्जातीयान्येव दृश्यन्ते । तथैव युगमन्वन्तरकल्पादिषु भावा देवादयः ॥ ६५ ॥ उपसंहरति—करोतीति । सिसृक्षा च शक्तिश्च सर्गविषया । ताभ्यां युक्त ॥ ६६ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चमोऽध्यायः ॥ ५ ॥

विष्णुचित्तीयम् ।

वस्तुवादस्य निरवकाशत्वाभावात् श्रीहरादिपदानामिति शैवत्वमितरेतरोपपत्तिः ॥ ६४ ॥ प्रवाहनित्यत्वं दृष्टान्तेन दर्शयति—यथेति । ऋतुलिङ्गानि पुष्पफलादीनि । पर्यये पुनरावृत्तौ । यानितानि तत्तज्जातीयान्येव । युगादिषु युगकल्पाद्यावृत्तिषु ॥ ६५ ॥ करोतीति । सिसृक्षाशक्तियुक्तः सृष्टीच्छाशक्त्या युक्त । सृज्यशक्ति. कर्म ॥ ६६ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चमोऽध्यायः ॥ ५ ॥

रत्नगर्भीयम् ।

भूतानि तथा कृतवान् ॥ ६४ ॥ इन्द्रादिदेवानां वसिष्ठादिऋषीणां चानित्यत्वात्कथमनादिवेदेनाभिधानमित्याशङ्कायां तत्तदिन्द्रादिव्यक्तीनां सादित्वेऽपि तत्प्रवाहस्यानादित्वात्तेषामनादिवेदेनाभिधानं व्रीह्यादीनामिवोपपद्यत इति परिहारमभिप्रेत्य तत्प्रवाहनित्यत्वं दृष्टान्तेन दर्शयति—यथेति ॥ ऋतुषु वसन्तादिषु यानि पुष्पफलानि लिङ्गानि भवन्ति । पर्यये तत्पर्वतः पुनरागमे तानि तान्येव तज्जातीयान्येव दृश्यन्ते । तथैव युगादिषु युगपर्यायावृत्तेषु भावाः देवादय. ॥ ६५ ॥ उपसंहरति—करोतीति । सिसृक्षाशक्तियुक्तः सिसृक्षा सृष्टीच्छा शक्तिः सामर्थ्यं च ताभ्यां युक्तः । सृज्येषु विषये ईश्वरशक्त्या चोदितः प्रेरित· ॥ ६६ ॥ इति श्रीवत्साङ्कायाचार्यविरचितायां गुरुचिन्तामणिश्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चमोऽध्यायः ॥ ५ ॥

रत्नगर्भीयम् ।

सर्गनिमिति ॥ १४ ॥ सर्वाण्यपाश्च या च ॥ ४८ ॥ भावा देवादयस्तथा अनादित्वादेवेन विधान्त इत्यर्थः ॥ ६५ ॥ इति श्रीरत्नगर्भभट्टाचार्यकृतश्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चमोऽध्यायः ॥ ५ ॥

---

[पा०] १ छ मार्गी २ म युगयुगे ३ ग गर्भांती




संस्कृतनूतनपुस्तकानि ।

# श्रीमद्भगवद्गीता ।

## ( व्याख्याष्टक ८ मण्डिता । )

मूल्यं ८ रु., मार्गव्ययः १ रूप्यकः

१ शाङ्करभाष्येण २ आनन्दगिरिव्याख्यायुजा सहिता ३ नीलकण्ठी ४ मधुसूदनी
५ भाष्योत्कर्षदीपिका ६ श्रीधरी ७ अभिनवगुप्तपादाचार्यव्याख्यायुता
तथा ८ गूढार्थतत्त्वालोकाख्येन मधुसूदनीव्याख्याविवरणेन
श्रीधर्मदत्तशर्म( प्रसिद्धबच्चाशर्म )मैथिलप्रणीतेन
सहिता च ।

भगवदर्जुनसंवादरूपस्योपनिषद्गर्भस्यात एवातिगभीरार्थस्य गीताशास्त्रस्याशयस्तत्त्वबिभित्सया परमकारुणिकेन साक्षाच्छंकरावतारेण श्रीमच्छङ्कराचार्येण भाष्यं व्यरचि । तदनु च क्षुण्णतत्पद्वीकैर्बहुधरनीलकण्ठ-मधुसूदनसरस्वतीप्रभृतिभिरपि विशेषनिर्दिष्टा व्याख्या अपि निजमतिविभवानुसारेण व्यङ्ग्यार्थ-गूढार्थतात्पर्यदर्शिन्यो व्यरच्यन्त । आसन्नेतावधि तासु काश्चन मुद्रिता परं च तासामेकपद्येन योऽभ्यासवादासमभावादखिलवेदान्तरसिकमनुजप्राणिनो युगपदास्वादयितुं सर्वाभिःसारि सह मयद्विर्मुद्रणीयमिति चिरादिद्धसङ्कल्पेन मया भूर्भोराय तत्सूचित महतायासेनाद्य मर्पयगतु मन्य मति:व्याख्यानं भिर्वेरपि मनोहरैरायसाक्षरैः सुदृढभिषणपत्रेषु । स्वर्गभविष्यत्तस्य मद्विरहान्तरङ्गसौन्दर्यप्रकर्षो दर्शनसमकालमेवेति प्रपञ्चेनालम्

---

# उज्ज्वलनिलमणिः । (अलंकारः)

मूल्य २ रु , मार्गव्यय. ६ आणकाः

श्रीमद्रूपगोस्वामिप्रणीत , श्रीजीवगोस्वामिप्रणीतया लोचनरोचनाख्यया, श्रीमद्विश्वनाथविरचितआनन्दचन्द्रिकाव्याख्यया च सहित । काव्यमालाद्वारा प्रकाशितेष्वनेकग्रन्थेष्वयमुत्तमकोटिकोऽस्ति। अत्र ग्रन्थप्रणेत्रा श्रीराधाकृष्णयुगलस्य प्रेमलीलाप्रतिपादनमिषेणाखिलरसानां क्रमेण समावेशोऽतीव मधुरालापपद्ये कृतोऽस्ति । मुहुः परिशीलितोऽयं विद्वद्वर्गचमत्काराय स्यात् ।

---

# उपदेशसाहस्री ।

भगवत्पादाचार्यप्रणीता, पदयोजनिकाख्यया श्रीमद्रामतीर्थविरचितव्याख्यया सहिता ।

प्रथमो भागः ।

मूल्यं ८ आणकाः, मार्गव्ययः २ आणकौ

गद्यग्रन्थरूपेऽस्मिन्भागे बोधप्रदं प्रकरणत्रयं गुरुशिष्यसंवादात्मकं विद्यते । भगवत्पादाचार्यैरेतत्प्रणयनद्वाराऽखिलविविदिषावद्भ्योऽद्वैतवेदान्तोपदेशोऽतिलळिततया सरण्या विहितोऽस्ति । परिशीलयतां चैनमनायासेनाद्वैतवेदान्तसिद्धान्तज्ञानं चेतोरञ्जनं चेत्युभयविधो लाभो भविष्यति । निर्दिष्टा व्याख्यापि ग्रन्थलापनेऽत्यन्तं साहाय्यकारिण्यस्ति ।

---

द्वितीयो भागः ।

मूल्यं १ रु., मार्गव्ययः ४ आणकाः

अस्या उपदेशसाहस्र्या द्वितीयो भागः पद्यात्मकः १९ एकोनविंशतिप्रकरणात्मकः पूर्वमेवाङ्कितोऽस्ति । तत्रापि भगवत्पादाचार्यैर्गुरुशिष्यसंवादरूपेणाद्वैतवेदान्तोपदेशः सर्वोत्कृष्टतया वर्णितोऽस्ति ।

---

# पातञ्जलमहाभाष्यम् ।

## ( विधिशेषरूपं द्वितीयं खण्डम् । )

मूल्यं ४॥ रु., मार्गव्ययः ६ आणकाः

प्रथमाध्यायद्वितीयपादादिद्वितीयाध्यायान्तम् । कैयटप्रणीतप्रदीपेन नागेशकृतोद्द्योतेन च परिवृतम् । इदमपि नवाह्निकवत् सुविभक्तमुद्रणपरिपाट्यैव पूर्वपक्षि–सिद्धान्त्येकदेशि–सिद्धान्त्युक्तिभिस्तद्वन्तर्गतैरवान्तरविषयैश्च संविभज्य संयोज्य च यथास्वं शिरोलेख( हेडिंग )न संविभक्तविषयसूचनेन विभूष्य च कृतसंविभागप्रदीपोद्द्योतयोरधस्तात्संनिवेशनेन मुद्रितम् । येनास्यानविशिक्षिता अपि रहस्यमवगच्छेयुः ।

---

# श्रीमद्भागवतम् ।

## श्रीधरीव्याख्यासंवलितम् ।

रफपत्राणि मूल्यं ७॥ रु., ग्लेजपत्राणि मूल्यं ९ रु., मार्गव्ययः १॥ रूप्यकः

# मीमांसापरिभाषा ।

### श्रीमत्कृष्णयज्वप्रणीता ।

मूल्यं ४ आणकाः, मार्गव्ययः १ आणकः

लघुतरोऽप्ययं ग्रन्थो मीमांसाशास्त्रगहनप्रविविक्षूणां विद्यार्थिनामध्यापकानां चातीवोपकारकोऽस्ति । सर्वोवौ पाठिते चास्मिन्मीमांसाशास्त्रस्य प्रतिपाद्यविषयाणां तदीयपारिभाषिकशब्दानां सद्भावपरिपाट्याश्च ज्ञानमनायासेन करतलीकृतमिव स्यात् । अस्य सर्वेषां सौलभ्याय यथायथविषयविभागान्विधाय तत्तदर्थोद्बोधकैः शिरोलेखैस्तत्रतत्र स्पष्टीकरणपूर्वकं पाठान्तरैरनवबोध्यस्थलेषु विपुलटिप्पणैश्च संयोज्य संशोध्य चायं मुद्रितोऽस्ति ।

---

# मीमांसान्यायप्रकाशः ।

### ( आपोदेवी । )

मूल्यं ८ आणकाः, मार्गव्ययः १ आणकः

अयं पूर्वमीमांसाशास्त्रस्य सुप्रसिद्धः प्रकरणग्रन्थोऽध्येतॄणामध्यापकानां चातीवोपकारकोऽस्ति । अस्य प्राचीनानि हस्तलिखितानि मुद्रितानि च कतिपयपुस्तकानि संपाद्य पाठान्तरैः स्थलविशेषे विशेषटिप्पणैश्च सनाथीकृतोऽयमङ्कितः ।

---

# पादुकासहस्रम् ।

### वेङ्कटनाथदेशिकप्रणीतम् ।

### श्रीनिवासकृतपरीक्षाख्यव्याख्यासहितम् ।

मूल्यं २। रु., मार्गव्ययः ४ आणकाः

अनुपममिदं स्तोत्ररत्नरूपं काव्यं विद्वज्जनमनोविनोदायाद्यमखिलकाव्यचूडामणीभूय वरीवर्ति । अत्र कविसार्वभौमेन श्रीरामपादुकैव हृद्यैः सहस्रपद्यैरपूर्वत्वेन वर्णितास्ति । रसपूर्णत्वेऽपि कचन स्वेष्टविवक्षितमदापयन्पद्यबन्धाद्योऽत्र बन्धा नैकशः साधिता इत्यहो कविप्रौढी ।

---

## षष्ठोऽध्यायः ॥ ६ ॥

चातुर्वर्ण्यव्यवस्था ॥ १ ॥ मनुष्यजन्मप्रशंसा ॥ २ ॥ दुर्गपुरखर्वटग्रामादिभूविभागकरणकथनम् ॥ ३ ॥ विप्रादीनां कर्मनिरूपणम् ॥ ४ ॥ यज्ञप्रशंसा ॥ ५ ॥ वेदनिन्दकानां यज्ञव्याहन्तॄणां च रौरवादिनरकप्राप्तिकथनम् ॥ ६ ॥

॥ श्रीमैत्रेय उवाच ॥

अर्वाक्स्रोतास्तु कथितो भवता यस्तु मानुषः ।
ब्रह्मन्विस्तरतो ब्रूहि ब्रह्मा तमसृजद्यथा ॥ १ ॥
यथा च वर्णानसृजद्यद्गुणांश्च प्रजापतिः ।
यच्च तेषां स्मृतं कर्म विप्रादीनां तदुच्यताम् ॥ २ ॥

श्रीपराशर उवाच ॥

सत्याभिध्यायिनः पूर्वं सिसृक्षोर्ब्रह्मणो जगत् ।
अजायन्त द्विजश्रेष्ठ सत्त्वोद्रिक्ता मुखात्प्रजाः ॥ ३ ॥
वक्षसो रजसोद्रिक्तास्तथा वै ब्रह्मणोऽभवन् ।
रजसा तमसा चैव समुद्रिक्तास्तथोरुतः ॥ ४ ॥
पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज द्विजसत्तम ।
तमःप्रधानास्ताः सर्वाश्चातुर्वर्ण्यमिदं ततः ॥ ५ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
पादोरुवक्षस्थलतो मुखतश्च समुद्गताः ॥ ६ ॥
यज्ञनिष्पत्तये सर्वमेतद्ब्रह्मा चकार वै ।
चातुर्वर्ण्यं महाभाग यज्ञसाधनमुत्तमम् ॥ ७ ॥

श्रीधरीयम् ।

विस्तरतो ब्रूहीति यदुक्तं तदेव विवृणोति—यथा चेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ पद्भ्यामिति । ताश्चतुर्विधाः मुखादिभ्यः सृष्टाः प्रजाः । इद प्रसिद्धं । चातुर्वर्ण्यं चत्वारो वर्णाः ॥ ५ ॥ एतदेव विभागेन स्पष्टयति—ब्राह्मणा इति । पादोरुवक्षस्थलतो मुखतश्चेति ब्राह्मणादिभिः प्रातिलोम्येन सम्बन्धः ॥ ६ ॥ तत्सृष्टेः प्रयोजनमाह—यज्ञनिष्पत्तय इति । सर्वमेतद्यज्ञसाधनभूतम् उत्तमं चातुर्वर्ण्यं चकारेत्यन्वयः । यद्यपि "अवैद्यत्वादभावः कर्मणि स्यात्" इति सूत्रयन् जैमिनिः शूद्रस्याध्ययनाद्यभावाद्यज्ञाधिकारं न मन्यते । तथापि द्विजशुश्रूषाद्वारेण तत्साधनत्वात् । "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हाप-

विष्णुचित्तीयम् ।

अथ यज्ञादिसाधकानां मनुष्याणां वर्णाश्रमकर्मजीविकागतिसृष्टुत्सुः पृच्छति—अर्वागिति ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ यज्ञनिष्पत्तय इति । शूद्रस्याध्ययनाद्याभावात्तत्साध्ययज्ञानधिकारेऽपि

रत्नगर्भीयम् ।

उक्तसृष्टिषु मनुष्यास्साधकास्तु ते इत्यादिनाऽर्वाक्स्रोतसां साधकत्वमुक्तं । तत्केन प्रकारेणेति जिज्ञासुः पृच्छति—अर्वागित्यादिना ॥ १ ॥ विस्तरमेव विवृणोति यथा चेति । वर्णान् ब्राह्मणादिचतुर्वर्णान् ॥ २ ॥ सत्याभिध्यायिनः परमात्माभिध्यायिनः ॥ ३ ॥ ४ ॥ ताः सर्वाः पद्भ्यां जाताः । ततः सात्त्विकत्वाद्युक्तहेतोः । चातुर्वर्ण्यं चत्वारो वर्णाः ॥ ५ ॥ तदेव विभज्य दर्शयति—ब्राह्मणा इति । पादोरुवक्षस्थलतो मुखतश्चेत्यस्य ब्राह्मणादिभिः प्रातिलोम्येन संबन्धः । ब्राह्मणादीनां चतुर्मुखमुखाद्युत्पत्तिकथनं न साक्षात्किन्तु तत्तद्वर्णात्मकस्य तत्तद्वर्णाभिमानिनः उत्पत्तिद्वारेणैव । तदुक्तं वाहूण्ये । "ब्रह्माभिमानी तु भृगुरजनि ब्रह्मणो मुखात् । क्षत्राभिमानी तु मनुर्ब्रह्मबाह्वोरजायत । ऊर्वोर्विडभिमानी च वायुः पादात्कृतिस्तथा । एते पूर्वं हरेर्जाताः ब्रह्मणस्तदनन्तरं" इति ॥ ६ ॥ वर्णसृष्टेः प्रयोजनमाह—यज्ञेति । यज्ञसाधनं अतएवोत्तमं । एतत्सर्वं चातुर्वर्ण्यं यज्ञनिष्पत्तये चकारेत्यन्वयः । शूद्रस्याध्ययनाद्याधान-

रत्नगर्भीयम् ।

षष्ठेऽर्वाक्स्रोतसां सर्गो वर्णकर्मादि वर्ण्यते । सत्त्वादिगुणभावेन गतिरप्यमरादिषु ॥ मन्मार्गगा-

[ पा० ] १ घ. च. ग. घ. चर्म. २ च. तदुच्यते ३ घ. वक्षो. ४ श—ङ. च. ट. ठ तथाऽन्या.,

वि ११

यज्ञैराप्यायिता देवा वृष्ट्युत्सर्गेण वै प्रजाः ।
आप्याययन्ते धर्मज्ञ यज्ञाः कल्याणहेतवः ॥८॥
निष्पाद्यन्ते नरैस्तैस्तु स्वधर्माभिरतैस्सदा ।
विशुद्धाचरणोपेतैः सद्भिः सन्मार्गगामिभिः ९॥

स्वर्गापवर्गौ मानुष्यात्प्राप्नुवन्ति नरा मुने ।
यच्चाभिरुचितं स्थानं तद्यान्ति मनुजा द्विज १०॥
प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्वर्ण्यव्यवस्थिताः ।
सम्यक्छ्रद्धासमाचारप्रवणा मुनिसत्तम ॥११॥

विष्णुचित्तीयम् ।

कल्याणहेतव इत्यत्र इत्यध्याहारः ॥ ८ ॥ सम्यक् श्रद्धासमाचारेण चातुर्वर्ण्यव्यवस्थितौ प्रवणा

श्रीधरीयम् ।

येन्" इति स्मृतेः । पाकयज्ञादिषु साक्षादधिकाराच्च न विरोधः ॥ ७ ॥ यज्ञनिष्पादनस्योपयोगमाह— यज्ञैरिति । आप्यायितास्तर्पिताः देवाः वृष्ट्युत्सर्गेण ताः यज्ञकर्त्रीः प्रजाः तर्पयन्ति— "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः । अतो यज्ञाः कल्याणहेतवः ॥८॥ तेषु श्रेष्ठान् अधिकारिणः दर्शयति— निष्पाद्यन्त इति । स्वधर्मेषु श्रौतेष्वभिरतैः । विशुद्धाचरणं स्मृत्यादिविहितं तदुपेतैः । पाठान्तरे विरुद्धाचरणाद्पेतैः निवृत्तैः सद्भिः विद्वद्भिः सन्मार्गगामिभिः शिष्टाचारानुवर्तिभिः ॥ ९ ॥ अतो धर्माधिकारित्वान्मनुष्याँल्लौति— स्वर्गापवर्गाविति । यच्चाभिरुचितं स्थानं सत्यलोकादि ॥१०॥ प्रजा इति । तदेवं चातुर्विध्यं व्यवस्थिताः प्रजाः सृष्टाः । सम्यक् श्रद्धया परमसमा-

विष्णुचित्तीयम् ।

नमस्कारैकमत्रपाकयज्ञाद्यधिद्विजशुश्रूषाद्यधिकारित्वाच्चातुर्वर्ण्यं यज्ञसाधनमित्युक्तम् ॥ ७ ॥ ८ ॥ निष्पाद्यन्त इति । भवनरक्षणवाणिज्यपरिचर्याणां गुर्वायत्तसाध्यत्वाद्विप्रादीनां तत्तत्साध्यत्त्वियोपजीवित्वं स्वाध्यायः श्रद्धापूर्वकं स्वकर्म । सन्मार्गः शिष्टाचारः ॥ ९ ॥ स्वर्गापवर्गाविति । मानुष्यं

रत्नगर्भीयम् ।

तत्साध्ययज्ञानधिकारेऽपि नमस्कारपाकयज्ञश्राद्धद्विजशुश्रूषाद्यधिकारित्वाच्चातुर्वर्ण्यं यज्ञसाधनमित्युक्तं ॥७॥ यज्ञनिष्पत्तये इत्युक्तं तस्योपयोगमाह— यज्ञैरित्यादिना ॥ आप्यायिताः तर्पिताः । देवाः वृष्ट्युत्सर्गेण यज्ञकर्त्रीः प्रजाः अप्याययन्ति तर्पयन्ति । "अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः । ततः कल्याणहेतवो यज्ञाः नरैर्निष्पाद्यन्त इति द्वयोरन्वयः ॥ ८ ॥ तदन्विशिनष्टि— स्वधर्मेति । स्वकर्माभिरतैः स्ववर्णोचितकर्माभिरतैः । विहिताचरणोपेतैः विहिताचारवद्भिः । पाठान्तरे विरुद्धाचरणापेतैः निषिद्धाचारनिवृत्तैः । सद्भिः ज्ञानिभिः सन्मार्गगामिभिः विशिष्टाचारानुवर्तिभिः ॥ ९ ॥ मानुष्यात् मनुष्यत्वं प्राप्य अभिरुचितं भौमस्वर्गादिकं ॥ १० ॥ प्रजास्ता इत्यस्य प्रवृत्तवन्तीत्युत्तरेणान्वयः । चातुर्वर्ण्यव्यवस्थिताः चातुर्वर्ण्यव्यवस्थायुक्ताः ॥ ११ ॥

रत्नगर्भीयम् ।

येभिः सन्मार्गः सदाचारः मोक्षप्राप्त्युपायो वा तद्गामिभिः ॥ ९ ॥ अभिरुचितं स्थानं उपासनानुसारसमये यामनादिपरसत्यलोकानपि मनुष्या ज्ञानद्वारा मोगार्थं लोकान्संप्राप्य तेषु यान्तीति मनुष्य-

[पाठ०] १ क. ग., घ—ट. स्वधर्माभिरतैः. २ ग घ च, छ ज झ. विरुद्धाचरणापेतैः ३ ट. ञ विशुद्धाचरणो । ४ प्राप्नुवन्ति वै महामुने. ४ ञ यच्चाभिरुचितं । क. ख. यद्यप्यभिरुचितं. ५ ख—ट. ञ—ट. सृष्टाश्चा. ६ ग. ताश्च. धर्मगामाश्च.

यथेच्छावासनिरताः सर्वबाधाविवर्जिताः ।
शुद्धान्तःकरणाः शुद्धाः कर्मानुष्ठाननिर्मलाः ॥ १२ ॥
शुद्धे च तासां मनसि शुद्धेऽन्तःसंस्थिते हरौ ।
शुद्धज्ञानं प्रपश्यन्ति विष्ण्वाख्यं येन तत्पदम् ॥ १३ ॥
ततः कालात्मको योऽसौ स चांशः कथितो हरेः ।
स पातयत्यघं घोरमल्पमल्पाल्पसारवत् ॥ १४ ॥

चित्सुखीयम् ।

यान्तीत्यन्वयः ॥ ११ ॥ शुद्धाः जातितो विशुद्धा इति यावत् । तत्र हेतुः सर्वानुष्ठाननिर्मला इति ॥ १२ ॥ ततः किं स्यादित्याह—शुद्धेचेति । शुद्धे मनसि सुविशुद्धे निष्कले हरावन्तर्मनसि संस्थिते सति शुद्धं ज्ञानं भवति । येन ज्ञानेन तत्पदं प्रपश्यन्तीत्यन्वयः ॥ १३ ॥ तर्हीदानीमपि किमित्येवं प्रजा न पश्यन्तीत्यत आह—तत इति । अल्पाल्पसारवत् सारो बलं । अल्पादप्यल्पसारं प्रथममभिभवितुमसमर्थं । पश्चात्क्रमेणाभिभवितुं समर्थं समर्थतरञ्च । प्रजाः स्वयं पातयतीत्यन्वयः ॥ १४ ॥

श्रीधरीयम् ।

चारः तस्मिन्प्रवणाः ॥ ११ ॥ चातुर्वर्ण्यव्यवस्थया धर्मानुष्ठानफलमाह—यथेत्यादिद्वाभ्याम्—यथेति । यथेच्छया वासः गिरिकन्दरादिस्थानं तस्मिन्निरताः । यतः सर्वबाधाभिः शीतोष्णाशनपिपासादिबाधाभिर्विवर्जिताः । शुद्धाः सत्कुलीनाः ॥ १२ ॥ शुद्धे चेति । तासां शुद्धज्ञानं भवति । येन ज्ञानेन तत्पदं प्रपश्यन्ति ॥ १३ ॥ तदेवं धर्मानुष्ठानफलमुक्तम् इदानीं कालवशेन सद्वैकल्यात्प्राणिनामनिष्टप्राप्तिमाह—तत इत्यादिना ।—तत इति । ततस्त्रेतायुगे किञ्चिदपक्रान्ते सति । स प्रसिद्धः कालात्मको योऽसौ हरेरंशः कथितः । सः अघं पापं । रागादिकं विषयाभिलाषद्वेषमात्सर्यादिकम् । असाधकं पुरुषार्थप्रतिबन्धकं । तासु प्रजासु पातयति प्रक्षिपतीति द्वयोरन्वयः । कथंभूतं । घोरं बहुदुःखप्रदम् । अल्पाल्पसारवत् अत्यल्पसुखदं । यद्वा अत्यल्पबलम् । उत्पत्तिसमय एव धृतिमता पुंसा जेतुं शक्यम्

विष्णुचित्तीयम् ।

मनुष्यरमे । अभिरचितं भौमस्वर्गपातालादि ॥ १० ॥ प्रजा इति । व्यवस्थितावितिति पाठे व्यवस्थितौ नियमे ॥ ११ ॥ यथेति । यथेच्छ आवासः वासस्थानम् आश्रमो वा । शुद्धान्तःकरणाः अहङ्कारफलसङ्गहीनाः । शुद्धाः स्नानादिना ॥ १२ ॥ शुद्धे चेति । शुद्धे अनुष्ठानेन विरागे । शुद्धज्ञानं शुद्धज्ञानस्वरूपम् ॥ १३ ॥ तत इति । ततः त्रेतामुखानन्तरम् । अल्पमल्पाल्पसारवत् इति पाठे अल्पम् अद्भुतं

दत्तात्रेयीयम् ।

यथेच्छावासनिरताः स्वेच्छयाऽनिषिद्धगिरिकन्दराद्याश्रमे निरताः । तत्र हेतुः सर्वबाधाभिः शीतोष्णादिपीडाभिः विवर्जिताः । शुद्धान्तःकरणाः अहङ्काराद्यन्तःकरणमलरहिताः । शुद्धाः सत्कुलीनाः । सर्वानुष्ठाननिर्मलाः सर्वाणि अनुष्ठानानि निर्मलानि फलाभिसन्धिरहितानि यासां ताः ॥ १२ ॥ शुद्धे निर्दुष्टे हरौ शुद्धे विरागे मनसि अन्तर्बाह्यव्यापारविना संस्थिते सति शुद्धज्ञानं निर्दुष्टज्ञानात्मकं विष्ण्वाख्यं परं ब्रह्म प्रपश्यन्ति । अपरोक्षतया जानन्ति । येन साक्षात्कृतविष्णुना तत्पदं वैकुण्ठादितत्स्थानं भवति ॥ १३ ॥ एवं कृतयुगे उत्पन्नानां चतुर्णां वर्णानां प्रायः स्थितिमुक्त्वा त्रेतायुगादौ तेषां स्थितिमाह—तत इत्यादिना । ततः कृतयुगानन्तरं कालात्मको योऽसौ तस्य हरेरंशः कथितः सः घोरं बहुदुःखप्रदं ।

रत्नगर्भीयम् ।

स्तुतिः ॥ १० ॥ तर्हि किं मानुष्यं प्राप्यैव यान्ति । नेत्याह ॥ ११ ॥ सर्वाबाधा इति पाठे आबाधा शीतादिदुःखं । शुद्धं रागादिहीनं अन्तःकरणं मनो यासां ताः ॥ १२ ॥ अल्पल्पसारवदिति पाठे

१ छ. यथेष्टवासा. २ [रत्न॰ पा॰] सर्वाबाधा. ३ ग—ङ. सर्वानुष्ठान । क. ख. सदनुष्ठान ४ क—ङ. विष्ण्वाख्य. ५ ख. ङ. परमं पद. ६ [चित्सु॰ पा॰] पातयत्यघं. ७ [रत्न॰ पा॰] मल्पाल्पसारवत्.

तासु क्षीणास्वशेषासु वर्धमाने च पातके । द्वन्द्वाभिभवदुःखार्तास्ता भवन्ति ततः प्रजाः॥१७॥ ततो दुर्गाणि ताश्चक्रुर्धान्वं पार्वतमौदकम् । कृत्रिमं च तथा दुर्गं पुरखर्वटकादिकम् ॥१८॥

चित्सुखीयम् ।

कामावसायित्वमित्येवंलक्षणाः । यद्वा "प्रातिभश्रावणो दर्शस्वादो गन्धस्तथैव च । वेदनाश्रमआवर्त इत्यष्टौ सिद्धिलक्षणाः" इत्येवंविधा अष्टसिद्धयः ॥ १६ ॥ कृत्रिमं खातप्राकारादि । खर्वटं ग्रामशतद्वयमध्ये प्रत्तमग्रामः । अन्यत्रचोक्तं । "औदकं पार्वतं वार्क्षमैरेणं धान्वनं तथा । इत्थं प्रशस्तमरीभिर्दुर्गं षड्विधं स्मृतं" । पुरे खर्वटादियुक्तं । "ग्रामो वृत्यावृतः स्यान्नगरमकुषुक्तेर्गोपुरोद्भासिशालं खेटं नद्यादिवेष्टापरिवृतमभितः खर्वटः पर्वतेन । ग्रामैर्युक्तं महोजं दलितदशशतैः पत्तनं रत्नयोनिर्द्रोणाख्यं सिन्धुवेलावलयमुप-

श्रीधरीयम् ।

विशोका नाम पञ्चमी । परमात्मपरत्वेन तपोध्यानादिनिष्ठता । षष्ठी च कामचारित्वं सप्तमी सिद्धिरु-च्यते । अष्टमी च तथा प्रोक्ता यत्र कचन शायिता" इति ॥१६॥ तास्विति । शीतोष्णादिद्वन्द्वैरभिभवः तेन सम्भूतैः दुःखैरार्ताः पीडिताः ॥ १७ ॥ ततश्चोरादिभयपरिहारार्थं दुर्गादि, शीतोष्णादिप्रतीकारार्थं गृहान्, जीविकार्थं कृषिवाणिज्यादीनि चकुरित्याह ततो दुर्गाणीत्यादिना—तत इति । कृत्रिमं परिखा-द्यावृतं प्राकारादि । पुरादीनां लक्षणं भृगुणोक्तम्—"नृपावासः पुरी प्रोक्ता विशां पुरमपीष्यते । एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् । मिश्रं तु खर्वटं नाम नदीकूपसमाश्रयम् । विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति वै । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव तु । पण्यक्रियात्रिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् । अनेकजातिसम्बन्धं नैकशिल्पिसमाकुलम् । सर्वदैवतसम्बन्धं नगरं त्वभिधीयते" इति ॥ १८ ॥

विष्णुचित्तीयम् ।

सर्वाः सर्वानन्त्याश्च योगिनः" इति । वाक्सृष्टिमयी सकृदुक्त्या सस्यनिष्पत्तिः । गृहवृक्षात्मिका इच्छया गृहवृक्षोद्गमः । संकल्पसिद्धिः संकल्पेनाभिगता सिद्धिः । कल्पवृक्षात्मिका भरद्वाजाश्रमवत् । प्रकाम-वृष्टिः निकामेनिकामे वृष्टिः । अकृष्टपच्यसिद्धिः अकृष्टपच्यभूमित्वमिति पुराणेष्वष्टसिद्धयो बहुधोक्ताः ॥ १६ ॥ तास्विति । द्वन्द्वं शीतोष्णादि ॥ १७ ॥ तत इति । धान्वं बहिर्निर्जलं मरुदुर्गम् । धान्वं पार्वतमिति पाठः । कृत्रिमं क्रियानिर्वृत्तं वनादि । पुरादिलक्षणं भृगूक्तम् । "नृपावासः पुरी प्रोक्ता विशां पुरमितीष्यते । एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् । मिश्रं तत्खर्वटं नाम नदीगिरिसमाश्रितम्"

दयालेशीयम् ।

रत्वेन तपोध्यानादिनिष्ठता । षष्ठी च कामचारित्वं सप्तमी सिद्धिरुच्यते । अष्टमी च तथा प्रोक्ता यत्र कचन शायिते"ति ॥ १६ ॥ पातके वर्धमानेसति तासु सिद्धिषु क्षीणासु प्रत्युतान्योन्यशीतोष्णादिद्व-न्द्वैरभिभवात् दुःखैः आर्ताः पीडिताः ॥ १७ ॥ ततश्चोरादिभयपरिहारार्थं दुर्गाणि, शीतोष्णादिप्रती-कारार्थं च गृहाणि जीविकार्थं च कृषिवाणिज्यादीनि कृतवत्य इत्याह—ततइत्यादिना । तान्येव दुर्गा-ण्याह । धान्वमित्यादिना । धान्वं बहिर्निर्जलं मरुदेशादवदुर्गं । कृत्रिमं क्रियानिर्वृत्तं प्राकारादिदुर्गं पुरा-दिलक्षणंच भृगुणा प्रोक्तं ॥ "नृपावासः पुरी प्रोक्ता विशां पुरमपीष्यते । एकतो यत्र तु ग्रामो नगरं चैकतः स्थितं । मिश्रं तत्खर्वटं नाम नदीगिरिसमाश्रितं । विप्राश्च विप्रभृत्याश्च यत्रचैव वसन्तिवै । स

रत्नगर्भीयम् ।

अल्पं प्रमाणतः । अत्यल्पसारवत् । क्षीणयत्नं चेतश्चेः ॥ १४ ॥ वार्क्षादीनि वृक्षादिभवानि ॥ १८ ॥

१ ग. ज—द. पार्थं । च न. मन्यं । ए. स्थानं.

व्रीहयस्सयवा माषा गोधूमाश्चाणवस्तिलाः ।
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः ॥ २४ ॥
श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ।
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ॥२५॥
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश ।
यज्ञनिष्पत्तये यज्ञस्तथाऽऽसां हेतुरुत्तमः ॥२६॥
एताश्च सह यज्ञेन प्रजानां कारणं परम् ।
परापरविदः प्राज्ञास्ततो यज्ञान्वितन्वते ॥२७॥
अहन्यहन्यनुष्ठानं यज्ञानां मुनिसत्तम ।
उपकारकरं पुंसां क्रियमाणाघशान्तिदम् ॥ २८ ॥
येषां तु कालसृष्टोऽसौ पापबिन्दुर्महामुने ।
चेतस्सु ववृधे चक्रुस्ते न यज्ञेषु मानसम् ॥२९॥

चित्सुखीयम् ।

गोलय इत्यर्थः ॥ २५ ॥ यज्ञो हेतुरासामोषधीनां वृष्ट्यादिद्वारेण यज्ञानां कारणमित्यध्या-

श्रीधरीयम् ।

॥ २३ ॥ व्रीहय इति । व्रीह्यादि श्यामाकान्ता ग्राम्या नव याज्ञिकाः यज्ञसाधनभूताः ॥ २४ ॥ श्यामाका इति । आरण्याः नीवाराद्याः पञ्चयज्ञसाधनभूताः । यद्वा श्यामाका ग्राम्यारण्याः । तृणधा-न्यरूपत्वात् । नीवारा आरण्याः व्रीहयः । जर्तिलाः आरण्यास्तिलाः । गवेधुकाः कुसुम्भाः । वेणुयवः वंशबीजं । मर्कटका आरण्याः प्रियङ्गवः ॥ २५ ॥ ग्राम्यारण्या इति । एताश्चतुर्दशयज्ञनिष्पत्तये स्मृता इत्यन्वयः । यज्ञश्चासामोषधीनां हेतुः कारणं वृष्टिरूपेण ॥ २६ ॥ एता इति । प्रजानां वृष्टिः कारण पुष्टिहेतुत्वात् । परापरविदः यज्ञाः कारणं प्रजास्तत्कारणमित्येवविदः ॥ २७ ॥ अहन्यहनीति । अह-न्यहनि पञ्चमहायज्ञानामनुष्ठानं पुंसां गृहस्थानां प्रत्यहं क्रियमाणस्य पञ्चसूनालक्षणस्य पापस्य शान्तिदं नाशकरम् ॥ २८ ॥ तदेवं ब्रह्माण्डसृष्टानां यज्ञाङ्गभूतानामोषधीनां कृष्यादिप्रवृत्त्या प्रधाहनिरत्यमुक्तं । यज्ञानाश्च दृष्टादृष्टलक्षणं महत्फलमुक्तं । तथाप्येतेषां वैदिकानुष्ठाने पूर्वोपक्षिप्तमेव रागादिकं कारणमाह—

विष्णुचित्तीयम् ।

चणकः हरिमन्थकः । कणः गोण्युपादानत्वक् ॥ २२ ॥ २३ ॥ २४ ॥ श्यामाका इति । श्यामाकाः तृणधान्यम् । नीवारः सशूको व्रीहिः । जर्तिला वनतिलाः । गवेधुकाः कुसुम्भसदृशबीजाः । वेणुयवाः वंशबीजानि । मर्कटकाः प्रियङ्गुभेदाः । नागवल्लाख्यद्रुमबीजानि वा ॥ २५ ॥ ग्राम्येति । आसाम् ओषधीनां हेतुः वर्धकः ॥ २६ ॥ २७ ॥ अहन्यहनीति । यज्ञानां पंचमहायज्ञानामनुष्ठानं । नित्यं क्रियमाणाघं 'पञ्चसूना गृहस्थस्य' इत्यादिना मनूक्तं । अत्र तु पूर्वं अल्पाल्पसारत्वविरुक्तं । तस्यापस्य

दत्तात्रेयीयम् ।

त्वचः ॥ २२ ॥ इत्येताः ग्राम्याणां कृषिसाध्यानामोषधीनां जातयः सप्तदश तासु ॥ २३ ॥ व्रीहय इति । याज्ञिकाः यज्ञसाधनभूताः । ग्राम्याः आरण्याश्च मिलित्वा चतुर्दशौषध्यो व्रीह्यादिश्यामाकान्ताः नव-ग्राम्याः ॥ २४ ॥ नीवाराद्याः आरण्याः । नीवाराः आरण्यव्रीहयः । जर्तिलाः आरण्यतिलाः । गवे-धुकाः कुसुम्भसमानबीजाः श्वेतगुञ्जा इति प्रसिद्धाः । वेणुयवाः वेणुबीजानि । मर्कटकाः आरण्यप्रिय-ङ्गवः ॥ २५ ॥ ग्राम्यारण्याश्चैताश्चतुर्दश यज्ञनिष्पत्तये स्मृता इत्यन्वयः । उत्तमः साङ्गो यज्ञः । आ-सामोषधीनां हेतुः वृष्टिद्वारेण वृद्धिकरः ॥ २६ ॥ एता ओषध्यः यज्ञेनसह प्रजानां परं कारणं । वृष्टि-हेतुत्वाज्जीवनकारणं । परापरविदः यज्ञाः कारणं प्रजा यज्ञकारणमित्येवंविदः ॥ २७ ॥ यज्ञानां पञ्च-महायज्ञानामनुष्ठानं अहन्यहनि पुंसां गृहस्थानां प्रत्यहं क्रियमाणस्य "कंडनीपेषणी" त्यादिस्मृत्युक्तपञ्च-सूनालक्षणस्य पापस्य शान्तिदं नाशकरं । उपकारकरं परलोककरं ॥ २८ ॥ परापरविदो यज्ञान्वितन्वन

[ पा० ] १ ख. तथा

वेदवादांस्तथा वेदान्यज्ञकर्मादिकं च यत् ।
तत्सर्वं निन्दयामासुर्यज्ञव्यासेधकारिणः ॥३०॥
प्रवृत्तिमार्गव्युच्छित्तिकारिणो वेदनिन्दकाः ।
दुरात्मानो दुराचारा बभूवुः कुटिलाशयाः ॥३१॥
संसिद्धायां तु वार्तायां प्रजाः सृष्ट्वा प्रजापतिः ।
मर्यादां स्थापयामास यथास्थानं यथागुणम् ॥३२॥

वर्णानामाश्रमाणां च धर्मान्धर्मभृतां वर ।
लोकांश्च सर्ववर्णानां सम्यग्धर्मानुपालिनाम् ॥३३॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वनिवर्तिनाम् ॥३४॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम् ।
गान्धर्वं शूद्रजातीनां परिचर्यानुवर्तिनाम् ॥३५॥

विष्णुचित्तीयम् ।

हारः ॥ २८ ॥ तर्हि सर्वे किमिति न कुर्वन्तीत्यत आह—येषामिति ॥ २९ ॥ व्यासेधकारिणः निषेधकारिणः ॥ ३० ॥ यथास्थानं यथागुणं इति । वक्ष्यमाणस्थानगुणानुसारेण मर्यादां व्यवस्थां कृतवानि-

श्रीधरीयम् ।

येषांत्विस्यादित्रिभिः—येषां स्थिति ॥ २९ ॥ वेदानिति । यज्ञानां व्यासेधकारिणः प्रतिद्वन्द्वारः ॥३०॥ अत एव प्रवृत्तीति । प्रवृत्तिमार्गव्युच्छित्तिकारिणः प्रवृत्तिमार्गोच्छेदकारिणः । यज्ञाननुष्ठाने देवैर्वर्षप्रदानाभावेन प्रजावृद्धेरसिद्धिः ॥ ३१ ॥ संसिद्धायामिति । तदेवं प्रजाःसृष्ट्वा तासां वार्तायाश्च कृष्यादिना संसिद्धायां सत्यां । यथागुणं सत्वोद्रेकानुसारेण । ब्राह्मणादीनां वर्णानां गृहस्थाद्याश्रमाणाञ्च । मर्यादां धर्मव्यवस्थां । यथास्थानं तत्तत्स्वधर्मानुष्ठानानुसारेण । लोकव्यवस्थाञ्च कृतवानित्यर्थः ॥ ३२ ॥ तदेवाह-वर्णानामित्यादिना यावदध्यायसमाप्ति ॥ ३३ ॥ प्राजापत्यमिति । क्रियावतां नित्यनैमित्तिकाग्निहोत्राद्यनुष्ठातॄणां । प्राजापत्यं स्थानं पितृलोकः "कर्मणा पितृलोकः" इति श्रुतेः ॥ ३४ ॥ वैश्यानामिति ।

विष्णुचित्तीयम् ।

शान्तिदं नाशकरमित्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ प्रवृत्तीति । यज्ञप्रवृत्त्या प्रवृत्तिः सर्गः प्रजासर्ग इत्यर्थः ॥ ३१ ॥ संसिद्धायामिति । कृषिरूपायां वार्तायां संसिद्धायाम् ओषधिद्वारा प्रजाः सृष्ट्वा यथास्थानम् अस्मिन्देशेऽयं धर्म इति । यथागुणं रागिणां काम्यं कर्म । विरक्तानां तु निवर्तकमित्यादि व्यवस्थां स्थापयामास ॥ ३२ ॥ ३३ ॥ प्राजापत्यमिति । प्राजापत्यं भूम्यादिलोकः । ब्राह्मणानां क्रिया-

[illegible]

इत्युक्तं कल्पैतत्प्रकरणे पूर्वोक्तरागादिपापाभिवृद्धिरेव सन्निमित्तमित्याह—येषामित्यादिना । कालसृष्टः कालाख्यहरिविष्णुना सृष्टः उत्पादितः पापबिन्दुः पापाङ्कुरः रागादिः । येषां चेतस्सु प्ररूढे तं वर्षसु मानसं मनो न चकुरित्यन्वयः ॥ २९ ॥ यज्ञव्यासेधकारिणः यज्ञनिषेधकारिणः ॥ ३० ॥ अतएव प्रवृत्तिमार्गव्युच्छित्तिकारिणः । प्रवृत्तिमार्गस्य सर्गस्य प्रजावृद्धेर्व्युच्छित्तिकारिणः । यज्ञाननुष्ठाने देवैर्वर्षप्रदानाभावेन प्रजावृद्धेरसिद्धेरिति भावः ॥ ३१ ॥ तदेवं प्रजापतिः ब्रह्मा प्रजाः सृष्ट्वा तासां वार्तायां कृष्यादिजीविकायां संसिद्धायां सत्यां यथास्थानं तत्तद्देशानुसारेण यथागुणं तत्तत्संस्कारादिगुणानुसारेण ब्राह्मणादिवर्णानां गृहस्थाद्याश्रमाणां च मर्यादां धर्मव्यवस्थां लोकव्यवस्थां च स्थापयामास । कृतवानित्यर्थः ॥ ३२ ॥ ३३ ॥ तत्तल्लोकानाह—प्राजापत्यमिति । क्रियावतां यज्ञादिक्रियावतां गृहस्थानां प्राजापत्यं स्थानं पितृलोकः ॥ "कर्मणा पितृलोक" इति श्रुतेः । ऐन्द्रं स्थानं इन्द्रलोकः ॥ ३४ ॥ मारुतं स्थानं देव-

[ पा० ] १ क—ग. वेदान्वेदं । ङ. धर्मव्यापान. २ क—ग. ङ. च. छ. ज. देवान्. ३ ग. ड. ब. ड. यज्ञांश्च. ४ ग. धर्मांश्चिदा. ५ घ. ग. वर्तिनां. ६ क—ज. ग—ट. वर्तिनां. ७ क—घ. ङ. छ. निवर्तनां. ८ ग—ङ. ग. परिचर्यांनु.

अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ३६॥
सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम् ३७
योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम् ३८
एकान्तिनः सदा ब्रह्मध्यायिनो योगिनश्च ये ।
तेषां [illegible] परमं स्थानं यत्तत्पश्यन्ति सूरयः ३९ ॥
गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ४०॥

श्रीधरीयम् ।

मारुतं स्थानं देवलोकः ॥ ३५ ॥ अष्टाशीतिसहस्राणीति । गुरुवासिनां नैष्ठिकब्रह्मचारिणां जनलोकम् ॥ ३६ ॥ सप्तर्षीणामिति । वनौकसां वानप्रस्थानां तपोलोकम् । न्यासिनां सन्न्यासिनां । ब्राह्मणानां विशेषं वक्तुं पूर्वोक्तमेव स्थानमनुवदति प्राजापत्यमिति । ब्रह्मसंज्ञितं सत्यलोकस्थानं । 'सन्न्यासाद्ब्रह्मणः स्थानम्' इति वचनात् ॥ ३७ ॥ योगिनामिति । योगिनां ज्ञानिनाम् ॥ ३८ ॥ तदेव स्पष्टयति । एकान्तिन इति ॥ ३९ ॥ भगवदुपासकानामपि क्रममुक्त्या तदेव स्थानमित्याशयेनाह—गत्वेति

विष्णुचित्तीयम् ।

व्रतां नित्यनैमित्तिकक्रियावताम् ॥ ३४ ॥ ॥ ३५ ॥ अष्टाशीतीति । गुरुवासिनां ब्रह्मचारिणाम् ॥३६॥ सप्तर्षीणामिति । न्यासिनां संन्यासिनां । देवयानमार्गस्थो ब्रह्मसंज्ञितः सत्यलोकः ॥ ३७ ॥ योगिनामिति । आश्रमेष्वेव ये प्रतीकोपासका योगिनस्तेषाममृतं विष्णुपदाख्यं ध्रुवादुपरिस्थानं । यतो गङ्गा प्रवहतीति वक्ष्यमाणम् ॥ ३८ ॥ एकान्तिन इति । परमं स्थानं परमव्योम ॥ ३९ ॥ भगवदुपासकानामेवापुनरावृत्तिरितरेषां तु निवृत्तिरेवेत्याह—गत्वेति । चन्द्रसूर्यादिग्रहणं तेषां कालनेतृत्वविशेषात् एतद्विलक्षणानां ब्रह्मादीनामप्युपलक्षणम् । चन्द्रसूर्यादयोऽपि स्वंस्वमधिकारं गत्वा प्राप्य । अन्ते प्रलयकाले निवर्तन्ते । ते स्वपदाद्भ्रश्यन्ति । द्वादशाक्षरादिना मन्त्रेण भगवदुपासका न निवर्तन्ते न च पुनरावर्तन्ते । एतद्व्यतिरिक्तास्सर्वेऽपि निवर्तन्त एव । "अनावृत्तिः शब्दात् । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति

कृष्णत्रैवीयम् ।

लोकः । परिचर्यासु त्रैवर्णिकपरिचर्यासु ॥ ३५ ॥ अष्टाशीतिसहस्राणि यतीनां प्रसिद्धानि सन्ति तेषां यत्स्थानं तदेव तत्समीपस्थमेव ब्रह्मचारिणां नैष्ठिकब्रह्मचारिणां । यतीनां च स्थानं "यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यगः । आदित्यमण्डलस्थस्तु ज्ञानिनां ब्रह्मचारिणाम्"इति ब्रह्माण्डपुराणोक्तं—द्रष्टव्यं । वनिना वानप्रस्थानां ॥ ३६ ॥ ब्रह्मवर्णभेदं पूर्वोक्तस्थानमाश्रमभेदेनाप्याह—प्राजापत्यमिति ॥ ब्राह्मं स्थानं सत्यलोकः ॥ "संन्यासाद्ब्रह्मणःस्थान"मितिवचनात् ॥ ३७ ॥ योगिनां ज्ञानिनां । अमृतं मुक्तिस्थानं ॥ ३८ ॥ तदेव विवृणोति—एकान्तिन इति । सूरयो यत्पश्यन्ति तत्परमं स्थानं वैकुण्ठादि विष्णोःपदं । तथा च श्रुतिः । "तद्विष्णोःपरमंपदंसदापश्यन्तिसूरय"इति ॥ ३९ ॥ विष्णुलोकगतानामप्यधिकारिणां देवानां निवृत्तिरस्तीत्याह—गत्वेति । चन्द्रसूर्यादयो ग्रहास्तेनैतत् ब्रह्मादीनामप्युपलक्षणं । गत्वागत्वा निवृत्तिस्तु यावदधिकारमेव । अधिकारसमाप्त्यनन्तरं महाप्रलये ब्रह्मणासह मुक्तास्सन्तो ननिवर्तन्ते इति द्रष्टव्यं । अधिकारिणां द्वादशाक्षरचिन्तकानां पुनरावृत्तिरेव नास्तीत्याह—अद्यापीति । सूर्यादिवन्नपुनरावर्तन्ते । जीवन्मुक्तास्सन्तो महाप्रलयपर्यन्तं विष्णुलोकएव स्थित्वा ब्रह्मणासह मुच्यन्ते इति भावः । तदुक्तं वामने । "विष्णोर्लोकं वदैवैके यान्ति कालान्तरे परे । आब्रह्मैवहरेः केचिदापूर्तैः

[ पा० ] १ ग. ग—ज. ट ठ. यतीनामूर्ध्वं २ क. प. ट—छ नाह्यं सन्न्यासिना एतत. ३ घ. ज—ड. तद्विष्णोः परमपदं । ३ स्वधर्ममनुवर्तिनां. ४ छ. प्रवर्तन्ते.

ते सर्वे समवर्तन्त ये मया प्रागुदाहृताः ।
देवाद्याः स्थावरान्ताश्च त्रैगुण्यविषये स्थिताः २
एवं भूतानि सृष्टानि चराणि स्थावराणि च ॥३॥
यदाऽस्य ताः प्रजाः सर्वा न व्यवर्धन्त धीमतः ।
अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् ४
भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ।
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसान् ५ ॥
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ ६ ॥
ख्यातिं भूतिं च संभूतिं क्षमां प्रीतिं तथैव च ।
सन्नतिं च तथैवोर्जामनसूयां तथैव च ॥ ७ ॥
प्रसूतिं च ततः सृष्ट्वा ददौ तेषां महात्मनाम् ।
पत्न्यो भवध्वमित्युक्त्वा तेषामेव तु दत्तवान् ८

चित्सुखीयम् ।

तच्छरीरसमुत्पन्नैः ब्रह्मणो देहाज्जातैः । कार्यैः शरीरैः ॥ १ ॥ त्रैगुण्यविषये स्थिताः सत्त्वादिगुणानां गोचरे स्थिताः । तद्युक्ता इति यावत् ॥ २ ॥ सौम्यासौम्यैः पुरुषत्वं बिभेद । स्त्रीत्वं च शान्ताशान्त-

श्रीधरीयम् ।

त्रेण भूतोपादानंविना भौतिकानां देहानां कथं जन्म । कथं जडात्तच्छरीराचेतनानां जीवानां जन्मेति । तत्राह । तच्छरीरेति । तस्य ब्रह्मणः शरीरात्समुत्पन्नैः कार्यैर्देहैः करणैरिन्द्रियैश्च सह मनसा निमित्त-भूतेन मानस्यः प्रजा जज्ञिरे । ब्रह्मशरीरस्थभूतान्येव तद्देहानामुपादानकारणमित्यर्थः । तथा धीमतश्चे-तनसमष्टिजीवस्य तस्य ब्रह्मणः जडेभ्योऽपि गात्रेभ्यः उत्पद्यमानैर्देहैस्सह तत्सङ्कल्पमात्रात् उद्बुद्धसं-स्कारा व्यष्टिक्षेत्रज्ञाः समवर्तन्त आविर्भूता इत्यर्थः ॥ १ ॥ तानेवाह—ते सर्वे इति ॥ २ ॥ ३ ॥ यौनसृष्टेः प्रयोजनमाह—यदाऽस्येति । न व्यवर्धन्त पुत्रपौत्रादिरूपेण प्रवृद्धिं न प्राप्ताः । तदाऽन्यान् यौनसृष्टेः प्रवर्तकान्भृग्वादीन् सृष्टवान् ॥ ४ ॥ ५ ॥ आत्मनः सदृशानिति यदुक्तं तदेव ब्रह्मसमा-

विष्णुचित्तीयम् ।

ऽवयवेभ्यः कार्यकरणैः सह समवर्तन्त ॥ १ ॥ ते सर्वे इति । ते देवाद्याः स्थावरान्ता जीवास्त्रैगुण्य-वशीकृताः समवर्तन्त ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ नव ब्रह्माण इति । पुराणे ब्रह्माण्डादौ ॥ ६ ॥ ७ ॥

दत्तात्रेयीयम् ।

सङ्कल्पमात्रेण भौतिकानां देहानां भूतोपादानं विना कथमुत्पत्तिरिति तत्राह—तच्छरीरेति । तस्य ब्रह्मणः शरीरात्समुत्पन्नैः कार्यैर्देहैः करणैरिन्द्रियैश्च सह मनसा निमित्तभूतेन मानस्यः प्रजाः जज्ञिरे । ब्रह्म-शरीरस्थभूतान्येव तच्छरीरोपादानमिति भावः । किंच क्षेत्रज्ञाः जीवाः तस्य ब्रह्मणो गात्रेभ्यः सम-वर्तन्त उत्पन्नाः ॥ १ ॥ त्रैगुण्यविषयाः सत्त्वादिगुणत्रयोपेताः । ये प्रागुदाहृताः "स्थावरान्ताः सुराद्याश्च"त्यादिना मानसत्वेन प्रागुदाहृताः देवाद्याः स्थावरान्ताः समवर्तन्त पूर्वमेवोत्पन्नास्तेऽपि स्थिता इत्यन्वयः ॥ २ ॥ ततःकिमित्यत आह—एवमिति एवंभूतानि उक्तप्रकाराणि ॥ ३ ॥ यदा ताः प्रजाः सर्वाः नव्यवर्धन्त पुत्रपौत्रादिरूपेण वृद्धिं नप्राप्ताः तदाऽन्यानात्मनस्सदृशान् सत्त्वगुणोद्रेकेण सदृशान् मानसान्पुत्रान् असृजत् ॥ ४ ॥ अथ अन्यानपि भृग्वादीन् मिथुनसृष्टिप्रवर्तकानसृजदि-त्याह—भृगुमित्यादिना । अत्राप्यसृजदित्यस्यानुषङ्गः ॥ ५ ॥ एते भृग्वादयो नव ब्रह्माणः ब्रह्मणा-

रत्नगर्भीयम् ।

असृजत्सप्तमे पुत्रान्मानसान्सृष्टिवृद्धये । स्वयं पुत्रादिभिः सृष्टिं दैहिकीं व्यतनोत्पुनः ॥ चिदचिद्ब्र

१ क—ङ. छ. तदाऽन्यान्. २ ७–८ श्लोकौ क. ध. पुस्तकयोर्मात्रं दृश्येते.

सनन्दनादयो ये च पूर्वसृष्टास्तु वेधसा ।
न ते लोकेष्वसज्जन्त निरपेक्षाः प्रजासु ते ९ ॥
सर्वे तेऽभ्यागतज्ञाना वीतरागा विमत्सराः ।
तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ॥ १० ॥
ब्रह्मणोऽभून्महान्क्रोधस्त्रैलोक्यदहनक्षमः ।
तस्य क्रोधात्समुद्भूतज्वालामालातिदीपितम् ॥
ब्रह्मणोऽभूत्तदा सर्वं त्रैलोक्यमखिलं मुने ॥ ११ ॥
भ्रुकुटीकुटिलात्तस्य ललाटात्क्रोधदीपितात् ।
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः ॥ १२ ॥
अर्धनारीनरवपुः प्रचण्डोऽतिशरीरवान् ।
विभजात्मानमित्युक्त्वा तं ब्रह्मान्तर्दधे ततः १३
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाऽकरोत् ।
बिभेद पुरुषत्वं च दशधा चैकधा पुनः ॥ १४ ॥
सौम्यासौम्यैस्तदा शान्ताशान्तैः स्त्रीत्वं च स प्रभुः ।
बिभेद बहुधा देवः स्वरूपैरसितैः सितैः ॥ १५ ॥

श्रीधरीयम् ।

एतया दर्शयति नवमब्राह्मण इति ॥ ६ ॥ ७ ॥ ८ ॥ क्रोधाद्रुद्रसृष्टिं तत्रैव मनुसृष्टिं च वक्तुं ब्रह्मणः क्रोधकारणं दर्शयन्नाह—सनन्दनाद्य इति ॥ ९ ॥ सर्व इति । अभ्यागतज्ञानाः प्रकृष्टज्ञानाः । सर्वे तेऽनागतज्ञाना इति पाठान्तरे अनागतेऽर्थे ज्ञानं येषां ते एवं तेषु प्रजासृष्टौ निरपेक्षेषु सत्सु महात्मनः सृष्टिविस्तारे प्रवृत्तस्य ॥ १० ॥ ब्रह्मण इति । ब्रह्मणः क्रोधोऽभूत् । तस्य ब्रह्मणः क्रोधात्समुद्भूतानां ज्वालानां मालाभिरभितो दीपितं त्रैलोक्यमित्यन्वयः ॥ ११ ॥ १२ ॥ अर्धनारीनरवपुरिति । अर्धाभ्यां नारी नरश्च वपुर्यस्य सः । प्रचण्डः अतिक्रोधनः । आत्मानं पुरुषाकारं देहं विभज पृथक्कुर्विति तमुक्त्वा अन्तर्दधे अन्तर्धानं गतः ॥ १३ ॥ १४ ॥ सौम्यासौम्यैरिति । सौम्यासौम्यैरित्यस्य

विष्णुचित्तीयम् ।

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तथोक्त इति । स्त्रीत्वं पुरुषत्वं च द्विधाऽकरोत् । पृथक्

वैष्णवाकूतचन्द्रिका ।

भाव इति पुराणे ब्रह्माण्डादौ निश्चयं गताः निश्चिताः ॥ ६ ॥ ७ ॥ ८ ॥ पूर्वसृष्टाः भृग्वादिभ्यः पूर्वसृष्टाः । लोकेषु प्रजासर्गेषु । निरपेक्षत्वे हेतुमाह—निरपेक्षा इति ॥ ९ ॥ तत्रापि हेतुमाह—सर्व इति । अभ्यागतज्ञाना आविर्भूतब्रह्मसाक्षात्काराः । अनागतेति पाठे अनागते भविष्यदर्थे अनुपादेयज्ञानाः । तेषु एवं प्रजासृष्टौ निरपेक्षेषु सत्सु महान् क्रोधोऽभूत् । सृष्टिविषयकसाक्षोल्लङ्घननिमित्तः । अखिलं त्रैलोक्यं तस्य ब्रह्मणः क्रोधात् समुद्भूतानां ज्वालानां मालाभिः विदीपितं प्रकाशितमभूत् ॥ १० ॥ ११ ॥ १२ ॥ अर्धनारीनरवपुः अर्धाभ्यां नारीनराकारवपुर्यस्य सः । तथा प्रचण्डः प्रकर्षेणक्रोधनः । अतिशरीरवान् स्थूलः । आत्मानमर्धनारीनरात्मकं देहं विभज पृथक्कुर्विति तं रुद्रमुक्त्वा ब्रह्मा अन्तर्दधे । अन्तर्धानं गतः ॥ १३ ॥ स्त्रीत्वं पुरुषत्वं स्त्रीरूपं पुरुषरूपमिति द्विधाऽकरोत् । दशधा चैकधा च एकादशधा ॥ १४ ॥ सौम्यासौम्यैरित्यस्य विवरणं शान्ताशान्तैरिति । बहुधा उक्तप्रकारेण बहुधा । यद्यपि सनकादिसर्गानन्तरमेव रुद्रसर्गः । पश्चात् भृग्वादिसर्ग इति क्रमः तथैव भागवतोक्तेः । तथाऽपि मनवाद्युत्पत्त्यनन्तरमेव भृग्वा-

रत्नगर्भीयम् ।

न्यिरूपाद्धङ्काराभिमानिनो रुद्रस्य विरहेण विदंशाभिभवे सृष्टिसामर्थ्यं नभवेदिति भावः ॥ १३ ॥

[ पा० ] १ ख. घ. सनन्दनकमुखा. २ ङ. सर्वे ते योगिनो इताः । श्रीघ० [पा०] सर्वे तेऽनागतज्ञाना.
३ ङ. मुद्भूतं ज्वालामालाविदीपितं ४ ङ. ब. य ता

ततो ब्रह्माऽऽत्मसंभूतं पूर्वं स्वायंभुवं प्रभुः ।
आत्मानमेव कृतवान्प्रजापाल्ये मनुं द्विज १६॥
शतरूपां च तां नारीं तपोनिर्धूतकल्मषाम् ।
स्वायंभुवो मनुर्देवः पत्नीत्वे जगृहे विभुः ॥१७॥
तस्मात्तु पुरुषाद्देवी शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम् ॥१८॥
कन्याद्वयं च धर्मज्ञ रूपौदार्यगुणान्वितम् ।
ददौ प्रसूतिं दक्षाय आकूतिं रुचये पुरा ॥१९॥
प्रजापतिः स जग्राह तयोर्जज्ञे सदक्षिणः ।
पुत्रो यज्ञो महाभाग दंपत्योर्मिथुनं ततः २०॥

विद्युत्तीयम् ।

रूपैः । द्विप्रकारं ॥ १५ ॥ प्रजापतिरिति । सच रुचिः प्रजापतिः । यामाकूतिं पत्नीत्वेन जग्राह । तयोर्दंपत्योः दक्षिणया सहितो यज्ञः पुत्रो मिथुनं पतिपत्नीलक्षणं जज्ञे इत्यन्वयः ॥ २० ॥

श्रीधरीयम् ।

विवरणं शान्ताशान्तैरिति ॥ १५ ॥ तत इति । तत एकादशधा विभागात्क्रोधांशे निर्गते सति सात्त्विकस्वभावं सुतं पूर्वमात्मदेहात्सम्भूतम् अत एव "आत्मा वै पुत्रनामाऽसि" इति श्रुतेरात्मानमेव तं मनुं प्रजापालनार्थमकरोदित्यर्थः ॥ १६ ॥ शतरूपामिति । तां स्वदेहार्धभूतां नारीं पत्न्यर्थं जगृहे । तपसा निर्धूतकल्मषामिति च देव इति च विभुरिति च सापिण्ड्यदोषपरिहारार्थमुक्तम् ॥ १७ ॥ तस्मादिति । व्यजायत प्रासूयत ॥ १८ ॥ १९ ॥ प्रजापतिरिति । सरुचिस्तां जग्राह । तयोर्दक्षिणासहितो यज्ञो

विष्णुचित्तीयम् ।

चकार । पुंस्त्वं चैकादशविधरूपभेदैः ॥ १४ ॥ १५ ॥ तत इति । आत्मसंभूतम् । अत एव स्वायंभुवं आत्मानमेव सं । प्रजापत्ये निमित्ते पूर्वं मनुं कृतवान् ॥ १६ ॥ शतरूपामिति । शतरूपाम् अर्धेन पुरुषोऽभवदर्धेन नारीत्युक्तायाः ब्रह्मपत्न्याः शतरूपायाः अंशभूतां । ब्रह्मांशभूतो मनुर्जगृहे ॥ १७ ॥ १८॥ कन्याद्वयमिति । प्रजापतिराकूतिं रुचये ददौ ॥ १९ ॥ प्रजापतिरिति । स रुचिर्जग्राह । तयोराकूति-

दत्तात्रेयीयम् ।

पुरुषस्त्रीकथनं तु मानसत्वसाधर्म्यादितियोध्यं ॥ १५ ॥ ततः भृग्वादिसर्गानन्तरं ब्रह्मा आत्मसंभूतं आत्मनः स्वस्मात्संभूतं आत्मानं । "आत्मावैपुत्रनामासी"तिश्रुतेः । आत्मसंभूतत्वादात्मानमेव स्वायंभुवं मनुं स्वायंभुवाख्यं मनुं प्रजापाल्ये प्रजापालनार्थमकरोत् ॥ १६ ॥ स्वायंभुवो मनुस्तां स्वेन सहोत्पन्नां शतरूपाख्यां नारीं पत्नीत्वे पत्न्यर्थं जगृहे । अत्र देव इति विभुरिति तपोनिर्धूतकल्मषामितिच सापिण्ड्यदोषपरिहारार्थमुक्तं । शतरूपायाः स्वायंभुवेन मनुना सहोत्पत्तिश्च "कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते । ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत । यस्तु तत्र पुमान्सोऽभून्मनुः स्वायंभुवः स्वराट् । स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः" इति भागवतेद्रष्टव्या ॥ १७ ॥ व्यजायत प्रासूयत ॥ १८ ॥ प्रजापतिर्मनुः । "आकूतिंरुचयेपुरा"इत्युक्त्या आकूतेः प्रसूत्यपेक्षया अग्रजत्वं दर्शितं ॥ १९ ॥ स प्रजापतिः रुचिः । तयोःदंपत्योः आकूतिरुच्योः । सदक्षिणः रमांशभूतया दक्षिणाख्यया सहितः साक्षाद्विष्ण्वंशभूतो यज्ञनामकः पुत्रो मिथुनं जज्ञे । "प्रजापतिः सभगवान्रुचिस्तस्यामजीजनत् । मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना । यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक् । या

[पा०] १ ख. इ. ज. झ. ट. ड. प्रभुं. २ ख. छ. ठ प्राजापत्ये । ठ. प्रजापात्ये ३ ख. ड. ढ. तयाकूतिं रुचे. ४ ख. ट ड. दांपत्यं मिथुनं.

यज्ञस्य दक्षिणायां तु पुत्रा द्वादश जज्ञिरे ।
यामा इति समाख्याता देवाः स्वायंभुवे मनौ २१
प्रसूत्यां च तथा दक्षश्चतस्रो विंशतिं तथा ।
ससर्ज कन्यास्तासां च सम्यङ्नामानि मे शृणु २२
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिर्मेधा पुष्टिस्तथा क्रिया ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदशी ॥
पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ।
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः २४
ख्यातिः सत्यथ संभूतिः
स्मृतिः प्रीतिः क्षमा तथा
सन्नतिश्चानसूया च
ऊर्जा स्वाहा स्वधा तथा ॥ २५ ॥
भृगुर्भवो मरीचिश्च तथा चैवाङ्गिरा मुनिः ।
पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ॥ २६ ॥
अत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम् ।
ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तम २७

विष्णुचित्तीयम् ।

स्वायंभुवे मनौ मन्वन्तरे । ते यामाः देवा इति यावत् ॥ २१ ॥ श्रद्धा आस्तिक्यबुद्धिः । कामस्तु स्वाभिलापः । दर्पः स्वस्मिन् सर्वाधिक्यज्ञानं । धृति आपद्यप्यक्षुण्णता । नियमोऽलङ्कृतव्यवहारः । तुष्टिः तृप्तिः ।

श्रीधरीयम् ।

नाम पुत्रो जज्ञे ॥ २० ॥ यज्ञस्येति । स्वायंभुवे मनौ मन्वन्तरे । यामा इति देवाः समाख्याताः ॥ २१ ॥ २२ ॥ आसां नामानि कथयन्नेव विवाहानाह—श्रद्धेत्यादिपञ्चभिः ॥ २३ ॥ २४ ॥२५॥

विष्णुचित्तीयम् ।

दम्पत्योर्दम्पत्योः सकाशाद् यज्ञः पुत्रो मिथुनं जज्ञे ॥ २० ॥ यज्ञस्येति । स्वायंभुवे मनौ मन्वन्तरे

दत्तात्रेयीयम् ।

स्त्री सा दक्षिणाभूतेरंशभूताऽनपायिनी" इति भागवतोक्तेः ॥ २० ॥ द्वादशयामानां प्रत्येकं नामानि "तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः । इध्मः कविर्विभुः स्वाह्नः सुदेवो रोचनो द्विषडि"ति भागवतोक्तानि द्रष्टव्यानि । स्वायंभुवे मनौ स्वायंभुवमन्वन्तरे ॥ २१ ॥ चतस्रो विंशतिपेत्यर्थः ॥२२॥ तासां कन्यानां नामानि वदन्नेव विवाहानप्याह—श्रद्धेत्यादिना ॥ २३ ॥ धर्मो यमापरनामा दक्षिणदिक्पतिः । दाक्षायणीःश्रद्धेत्युक्ताः त्रयोदशकन्याः ॥ २४ ॥ २५ ॥ भवो रुद्रः ॥ २६ ॥ ख्यात्याद्याः दक्षकन्याः भृग्वादयो यथाक्रमं जगृहुः । ननु भागवते "आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः" ॥ इति स्वायंभुवमनोः कन्यात्रयमुक्तं । तत्र च देवहूतेर्नवकन्याः ताश्च भृगुमरीच्यादिभिः परिणीताः । प्रसूतिः दक्षभार्या तस्याः षोडश कन्याः तत्र त्रयोदश धर्मभार्याः शेषास्तिस्रः अग्निपितृरुद्रभार्या इत्युक्तं । अत्र तु मनोः आकूतिःप्रसूतिरिति कन्याद्वयं । प्रसूतेश्चतुर्विंशतिकन्याः तत्र च त्रयोदश धर्मभार्याः । इतरा एकादश भृग्वाद्यष्टभिः रुद्रवह्निपितृभिः परिगृहीता इति भागवतविरुद्धमुच्यत इतिचेत् सत्यं । "क्वचित्क्वचित्पुराणेषु विरोधो यदिलक्ष्यते । कल्पभेदादिभिस्तत्र व्यवस्थासद्भिरिष्यते" । इत्यभियुक्तवचनात्कल्पभेदेन कथाभेदस्योपपन्नत्वान्नविरोधः । तदुक्तं स्कान्दे । "सृष्टिभेदादिरूपं तु कथापञ्चोत्तरं शतं । वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय च । इति । उक्तं वाराहे ॥ "कृतेनुपाण्डवकथां फाल्गुनमायगं तथा । विष्णोर्नृसिंहादिनाचैवमनाद्यसत्यदर्शिता । गतदापादकं चान्यदृते कल्पादिभेदतः । कथाभेदस्तु

रत्नगर्भीयम् ।

दांपत्यमिति पाठे तन्मिथुनं दांपत्यमगमदितिशेषः ॥ २० ॥ यज्ञियत्वात् इति पठित्वा लिङ्गविभक्त्योर्व्यत्ययःसंमन्यते ॥ २२ ॥ यद्वाम्रष्टादिरूपं जगित्रयं गुणत्रयमयं तत्कार्यं महदादि च षोडशिनयेन

[पा०] १ रत्न० [पा०] सम्यक्तो. २ ठ. शिष्टा कनीयस्य ३ क—ग ल—म. ट—ड. तामसी । स. तत्रिधि.

श्रद्धा कामं चला दर्पं नियमं धृतिरात्मजम् ।
सन्तोषं च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥ २८ ॥
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ॥ २९ ॥
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ।
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ॥ ३० ॥
सुखं सिद्धिर्यशः कीर्तिरित्येते धर्मसूनवः ।
कामाद्रतिः सुतं हर्षं धर्मपौत्रमसूयत ॥ ३१ ॥
हिंसा भार्या त्वधर्मस्य ततो जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां भार्या जज्ञे च वेदना ३२

विष्णुचित्तीयम् ।

सन्तोषः यदृच्छोपपन्नलाभे अलंबुद्धिः । पुष्टिः देहोपचयः । लोभः मात्राद्यधिकाभिलाषः ॥ २८ ॥ मेधा धारणावती बुद्धिः श्रुतं शास्त्रज्ञानं । क्रिया नीतिमच्चेष्टा । दण्डो दमः । नयः उपायपरिज्ञानं । विनयः आत्मनो हीनताद्योतनं ॥ २९ ॥ बोधः हेयोपादेयविनिश्चयः । बुद्धिः कार्याकार्यविज्ञानं । लज्जा स्वदोषप्रकाशनासहिष्णुता । विनयः आचारः । वपुः अङ्गसुन्दरत्वं । व्यवसायः उद्योगः । क्षेमः निरुपद्रवता । शान्तिः भोगवैतृष्ण्यं ॥ ३० ॥ सुखं विषयानन्दः । सिद्धिः कार्यनिष्पत्तिः । यशः परोक्षगुणकीर्तनं । कीर्तनं कीर्तिः जीवतो गुणकीर्तनं । अत्र चोत्तरत्र च तत्तदभिमानिन्यो देवताः ग्राह्याः । कामः स्त्रीविषयाभिलाषः । नन्दी रतिः । हर्षः विषयाभिध्यानजं सुखं ॥ ३१ ॥ हिंसा प्राणिपीडा । अनृतं असत्यवचनं । निकृतिः वञ्चना । ताभ्यामनृतनिकृतिभ्यां दम्पतिभ्यां । भयं स्वविनाशविज्ञानजं दुःखं । माया परव्यामोहिका चेष्टा । वेदना दुःखसाधनस्य साक्षात्कृतिः ॥ ३२ ॥ एतयोर्भयनरकयोर्मिथुनं मिथुनकारणं । भार्ये मायावेदने इति यावत् । तयोर्मायावेदनयोर्मध्ये माया भयात् मृत्युं सुतमुत्पादितवती

श्रीधरीयम् ।

॥ २६ ॥ २७ ॥ धर्मपत्नीनां त्रयोदशानां पुत्रानाह श्रद्धेत्यादिभिः—श्रद्धेति । चला लक्ष्मीः ॥ २८ ॥ मेधेति । क्रिया त्रिगुणात्मिका । अतस्तमोंशेन दण्डं रजोंशेन नयं सत्त्वांशेन विनयमनौद्धत्यरूपम् असूयत ॥ २९ ॥ बोधमिति । लज्जा शारीरं विनयं । वपुः सक्षात् व्यवसायमात्मजं प्रजज्ञे वै ॥ ३० ॥ सुखमिति । कीर्तिर्यशःसखं पुत्रमसूयत । रतिः कामस्य भार्या ॥ ३१ ॥ सर्वेव धर्मभार्याणां वंश उक्तः ।

विष्णुचित्तीयम् ।

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ श्रद्धेति । श्रद्धा कामं तथा दर्पमिति पाठे तथेत्यनेन क्रमप्राप्ता लक्ष्मीर्लक्ष्या । यथा कौर्मे "श्रद्धायास्तु सुतः कामो दर्पो लक्ष्म्याः सुतः स्मृतः" इति ॥ २८ ॥ मेधेति । क्रियाया तामस्या दण्डः राजस्या नयः सात्त्विक्या मनसोऽनौद्धत्यात्मा विनयः ॥ २९ ॥ बोधमिति । लज्जायास्तु शारीरो विनयः ॥ ३० ॥ ३१ ॥ धर्मप्रसङ्गादधर्मस्य सर्ग-

रत्नगर्भीयम् ।

विज्ञेयो मोहायैतेषु मिलते"ति ॥ २७ ॥ तत्र श्रद्धादिधर्मपत्नीनां सन्ततिमाह—श्रद्धाकाममित्यादिना । तथादर्पं लक्ष्मीरिति शेषः । "श्रद्धायास्तु सुतः कामो दर्पो लक्ष्म्याः सुतः स्मृतः" इति कौर्मोक्तेः । चला दर्पमिति पाठे चला लक्ष्मीः ॥ २८ ॥ क्रियायास्तामसादिभेदेन त्रिरूपत्वात्तत्क्रमेण दण्डादिपुत्रत्रयं । विनय अनौद्धत्य ॥ २९ ॥ क्रियासुतो विनयो मानसः । लज्जासुतो विनयः शारीरः । वपुः वपुस्संज्ञा व्यवसायं उद्योगं प्रजज्ञे ॥ ३० ॥ कीर्तिः यशस्सञ्ज्ञपुत्रं । रतिः कामस्त्री ॥ ३१ ॥ एवं धर्मभार्याणां

[पा०] १ घ—छ झ ञ तथा । क ख खा २ छ स्मृति ३ ट सुख वृद्धि । ज ॥ ॥ सुखवृद्धि । ग सत्व वृद्धि ४ क छ ज—ठ नामानन्दीसुत । ड नागानन्दासुत ५ झ ड निष्कृति । ग निदृति ६ क, ख, घ, च—ड, भय नरकमेव च

माया च वेदना चैव मिथुनं त्विदमेतयोः ।
तयोर्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ३३
वेदना स्वसुतं चापि दुःखं जज्ञेऽथ रौरवात् ।
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे ३४॥

दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्मलक्षणाः ।
नैषां पुत्रोऽस्ति वै भार्या ते सर्वे ह्यूर्ध्वरेतसः ३५
रौद्राण्येतानि रूपाणि विष्णोर्मुनिवरात्मज ।
नित्यप्रलयहेतुत्वं जगतोऽस्य प्रयान्ति वै ॥३६॥

विष्णुचित्तीयम्।

॥ ३३ ॥ रौरवात् नरकात् ॥ ३४ ॥ मृत्योर्भार्योपत्वात् ।-कर्थनाम तस्य प्रजाः दुःखोत्तराः दुःखा-धिकाः उत्तरकालभाविदुःखाविनाभूता इत्येषा । अधर्मलक्षणाः अधर्मसूचकाः तत्कार्यत्वात् । नैषां

श्रीधरीयम्।

अन्यासां तु दक्षकन्यानां पुत्रान् "देवौ धातृविधातारौ भृगोः ख्यातिरसूयत" इत्यादिना उत्तराध्या-यत्रये वक्ष्यति । तत्र पापवर्गोत्पत्त्या तत्प्रतियोगितया बुद्धिस्थस्याधर्मस्य वंशं प्रसक्तानुप्रसक्तेन च नित्यप्रलयमाह हिंसेत्यादिना—हिंसेति । धर्मोऽधर्मश्च ब्रह्मणः पुत्रौ "धर्मस्तनाद्दक्षिणतो यत्र नारायणः स्वयम् । अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयङ्करः" इति शुकोक्तेः ।-निकृतिर्वञ्चना ताभ्यामनृतनिकृ-तिभ्यां भयं नरकं भयनरकाख्यं पुत्रद्वयं जज्ञे ॥ ३२ ॥ मायेति । एतयोस्तु भयनरकयोर्यथाक्रमं 'माया च वेदना च' इति मिथुनं मिथुनत्वसम्पादकं भार्याद्वयञ्च ताभ्यामेव जज्ञे इत्यर्थः । तयोः मायावेदनयोर्मध्ये माया मृत्युं जज्ञे जनयामास । भयादित्यर्थसिद्धम् ॥ ३३ ॥ वेदनेति । वेदना च दुःखं स्वसुतं स्वयोग्यं सुतं । रौरवान्नरकाञ्जनयामासेत्यर्थः ॥ ३४ ॥ दुःखोत्तरा इति । दुःखोत्तराः दुःखोदर्काः । यतः अधर्मलक्षणाः पापरूपाः । यद्वा प्राचीनाधर्मज्ञापकाः । तद्रूपत्वादेषां व्याध्यादीनाम् । ऊर्ध्वरेतसः कार्यान्तरानुत्पादकाः । चरमकार्यदुःखभोगात्मकत्वात् ॥ ३५ ॥ रौद्राणीति । रौद्राणि

विष्णुचित्तीयम्।

माह—हिंसेति । तयोः अधर्महिंसयोरनृतं निकृतिश्च जज्ञे ताभ्यां निकृत्यनृताभ्यां माया भयं वेदना नरकं च जज्ञे ॥ ३२ ॥ मायेति । 'तयोरेतयोर्मिथुनद्वयम् । भयाज्जज्ञे' इति पाठे एतयोर्मिथुनयो-र्मध्ये माया भयात्तु मृत्युं जज्ञे । तयोर्जज्ञे इति पाठे माया मृत्युं सुषुवे भयादिति शेषः ॥ ३३ ॥ वेदनेति । रौरवात् भयं नरकमेव चेत्युक्तान्नरकात् ॥ ३४ ॥ दुःखोत्तरा इति । अधर्मलक्षणा अधर्मो वंशमूलभूतो लक्षणं येषां ते तथोक्ताः । ते व्याध्याद्याः । ऊर्ध्वरेतसः चरमकार्यस्य दुःखात्मकत्वात्का-

रत्नगर्भीयम्।

दक्षकन्यानां त्रयोदशानां सन्ततिमुक्त्वा अवशिष्टानामेकादशानां दक्षकन्यानां वंशं "देवौ धातृविधा-तारौ" इत्यादिनोत्तराध्यायत्रयेषु वक्ष्यति । अत्रवानद्धर्मवंशोक्तिप्रसङ्गात्तत्प्रतियोगित्वेन "धर्मस्तनाद्दक्षि-णतो यत्रनारायणः स्वयं । अधर्मः पृष्ठतोयस्मान्मृत्युर्लोकभयंकरः" इति भागवतोक्तेः ब्रह्मपुत्रत्वेन बुद्धि-स्थस्य अधर्मस्य वंशमाह—हिंसेत्यादिना । निकृतिः वञ्चना । ताभ्यां अनृतनिकृतिभ्यां भयं नरकं चेति पुत्रद्वयं जज्ञे ॥ ३२ ॥ एतयोर्भयनरकयोर्यथाक्रमं मायाचवेदनाचेति मिथुनं मिथुनत्वसंपादकं भार्या-द्वयं ताभ्यामेवानृतनिकृतिभ्यां जज्ञ इत्यर्थः । भयान्माया मृत्युं जज्ञे जनयामास । तयोरिति पाठे । तयोर्मायावेदनयोर्मध्य इत्यर्थः । भयादित्यर्थसिद्धं ॥ ३३ ॥ स्वसुतं स्वयोग्यं सुतं । रौरवात् नरकात् । मृत्योर्मायापुत्रात् ॥ ३४ ॥ दुःखोत्तराः दुःखोदर्काः । अधर्मलक्षणाः प्राचीनाधर्मज्ञापकाः । व्याध्या-दीनां तत्कार्यत्वात् । एषां व्याध्यादीनां ऊर्ध्वरेतसः चरमकार्यदुःखभोगात्मकत्वात्कार्यान्तरानुत्पादकाः ॥ ३५ ॥ रौद्राणि क्रूराणि । विष्णोरूपाणि विष्णुरेव एषु स्थित्वा तत्तत्कार्यं ददातीति विष्णोरूपाणी-

[ पा० ] १ [ वि० पा० ] तस्मादेतयोर्मिथुनद्वयम् । भयाज्जज्ञे । २ क. द—द. निश.

दक्षो मरीचिरत्रिश्च भृग्वाद्याश्च प्रजेश्वराः ।
जगत्यत्र महाभाग नित्यसर्गस्य हेतवः ॥३७॥
मनवो मनुपुत्राश्च भूपा वीर्यधराश्च ये ।
सन्मार्गनिरताः शूराः सर्वे स्थितिकारिणः ३८

मैत्रेय उवाच ॥

येयं नित्या स्थितिर्ब्रह्मन्नित्यसर्गस्तथेरितः ।
नित्याभावश्च तेषां वै स्वरूपं मम कथ्यताम् ॥३९॥

श्रीपराशर उवाच ॥

सर्गस्थितिविनाशांश्च भगवान्मधुसूदनः ।
तैस्तै रूपैरचिन्त्यात्मा करोत्यव्याहतो विभुः ४०
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विज ।
नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः ॥४१॥
ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते जगतीपतिः ।
प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम् ॥४२॥

## अष्टमोऽध्यायः ॥ ८ ॥

नीललोहितरुद्रसर्गकथनम् ॥ १ ॥ रुद्रस्याष्टमूर्तित्वकथनम् ॥ २ ॥ अष्टमूर्तीनां नामस्थानपत्न्यपत्यवर्णनम् ॥ ३ ॥ लक्ष्मीनारायणयोः सर्वात्मकत्वेन स्थितिवर्णनम् ॥ ४ ॥

श्रीपराशर उवाच ॥

कथितस्तामसः सर्गो ब्रह्मणस्ते महामुने । रुद्रसर्गं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ १ ॥

विष्णुचित्तीयम् ।

प्रतिक्षणं ॥ ४७ ॥ शक्तित्रयं सृष्टिशक्तिःस्थितिशक्तिःसंहृतिशक्तिरिति त्रयमेव गुणत्रयमयं । योऽतिया‍ति । अतीत्य ज्ञानेन परित्यज्य परित्यज्य परमात्मानं याति स यात्येव । अनावरणम्नार्थं त्रयमेवाह न्नावर्ततइति ॥ ४८ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे अष्टमोऽध्यायः ॥ ८ ॥ [ अन्येषां मतरीत्या सप्तमोऽध्यायः ॥ ७ ॥ ]

श्रीधरीयम् ।

विष्णुशक्तित्रयपरिष्कृत्या सृष्ट्यादिप्रवाहो भवति । अतो गुणातीतस्य न पुनस्तत्प्रवाह इत्याह—गुणत्रयेति । योऽतियाति अतिक्रामति । स परम्पदं यात्येव । पुनर्नावर्तते "न च पुनरावर्तते न च पुनरावर्तते" इति श्रुतेः ॥ ४८ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तमोऽध्यायः ॥ ७ ॥

दक्षजातानां धर्मस्य वंशोक्त्या तत्प्रतियोगितया बुद्धिस्थस्याधर्मस्य नित्यप्रलयहेतुं तामसं वंशमुक्त्वा इदानीं तदनुवादपूर्वकं प्रस्तुत दक्षकन्यान्वयमेवानुवर्तयितु सतीपरिणेतुर्नीललोहितरुद्रस्य सर्गमाह—त-

विष्णुचित्तीयम् ।

ऽपि अतो विष्णुशक्तिप्रेरितः कालभेदाद्विषयभेदाच सर्गादि करोति ॥ ४७ ॥ ४८ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तमोऽध्यायः ॥ ७ ॥

नित्यप्रलयहेतोरधर्मस्तेनाप्रसक्तस्य प्रसक्ताननुगुणसर्गमतिक्रम्य पूर्वोक्तकौमारसर्गान्तर्गतं तामसं रुद्रसर्गं

दत्तात्रेयीयम् ।

युगपत्सृष्ट्यादयः स्युरित्याशङ्क्याह—सृष्टीति । वैष्णव्यः विष्णुनियम्याः शक्तयः । परिवर्तन्ते परिवृत्त्यावर्तन्ते । विष्णुशक्तिना सर्गादिहेतुना कालभेदेन तत्रतत्र सञ्चरणाशयं पूर्वोक्तमेव इति भावः ॥ ४७ ॥ निस्त्रैगुण्यस्य तेषां सर्गादिकं केषाञ्च नेत्यत आह—गुणत्रयमयमिति । गुणत्रयमयं सत्त्वादिगुणत्रयात्मकं शक्तित्रयं सर्गादिव्यवान्तरकारणभूतं । इतरापेक्षया महत् मूलकारणं योऽतियाति अतिक्रामति । स पर परमात्मानं यात्येव । ततःपुनर्नावर्तते । "न च पुनरावर्तते" इति श्रुतेः ॥ ४८ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तमोऽध्यायः ॥ ७ ॥

दक्षकन्यानां वंश मनुपुत्रस्य धर्मपत्नीनां त्रयोदशानां वंश उक्तः तत्प्रसङ्गादधर्मप्रतियोगित्वेन बुद्धिस्थस्याधर्मस्य वंशो निरूपितः । इदानीं अवशिष्टख्यात्यादीनां दक्षकन्यानां वंश निरूपयितुकामः ख्यातेरुद्देशक्रमेण प्रथमप्राप्तत्वेऽपि तद्वंश्यानामितिविस्तृतत्वेन बहुत्त्वात्तत्र वक्ष्यन् सतीपरिणेतुः रुद्रस्य पूर्वोक्तसर्गानुवादपूर्वकं तस्य सर्गान्तरमाह—कथित इति । ब्रह्मणस्त्वत्तानान् । भ्रुकुटीकुटिलादित्यादिना तामसो ब्रह्मशरीरान्तर्गततमोगुणजन्यो रुद्रसर्गः कथितः । अधुना तामसभिन्नं रुद्रसर्गं प्रवक्ष्यामि

रत्नगर्भीयम् ।

अष्टमे रुद्रसर्गोऽथ प्रियव्रतप्रबोधितः । श्रीपते यथा विष्णुभक्त्या व्याप्तमेतच्चराचरं ॥ कथित

कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः ।
प्रादुरासीत्प्रभोरङ्के कुमारो नीललोहितः ॥२॥
रुरोद सुस्वरं सोऽथ प्राद्रवद्द्विजसत्तम ।
किं त्वं रोदिषि तं ब्रह्मा रुदन्तं प्रत्युवाच ह ॥३॥
नाम देहीति तं सोऽथ प्रत्युवाच प्रजापतिः ।
रुद्रस्त्वं देव नाम्नाऽसि मारोदीर्धैर्यमावह ।
एवमुक्तः पुनः सोऽथ सप्तकृत्वो रुरोद वै ॥४॥
ततोऽन्यानि ददौ तस्मै सप्त नामानि वै प्रभुः ।
स्थानानि चैषामष्टानां पत्नीः पुत्रांश्च स प्रभुः ॥५॥
भवं शर्वमथेशानं तथा पशुपतिं द्विज ।
भीममुग्रं महादेवमुवाच स पितामहः ॥ ६ ॥

श्रीधरीयम् ।

थिता इति । यद्यपि ख्यातिस्सत्यय सम्भूतिरित्युद्देशक्रमेण ख्यातेरन्वयं प्रथमं वक्तुं युक्तं । तथाऽपि तत्कथाया अतिविस्तरत्वादनन्तरं वक्ष्यति । यद्वा पूर्वोक्तात्तामसाद्रुद्रसर्गादन्योऽयं कुमारसर्गान्तर्भूतः सात्त्विको रुद्रसर्गस्तमिमं शृण्विति सम्बन्धः ॥ १ ॥ २ ॥ ३ ॥ नामेति । रुदन्प्रादुरासीदिति रुद्रनामनिरुक्तिः "एवमुक्तस्तु रुरुदुर्दुद्रुवुश्च समन्ततः । रोदनाद्द्रावणाच्चैव रुद्रनाम्नेति विश्रुताः" इति वायूक्तेः । हे देव नाम्ना त्वं रुद्रोऽसि रोदनाद्द्रावणाच्चेत्यर्थः ॥ ४ ॥ परमेश्वरस्यापि सतो रोदनादि शिशुत्वनाट्यं लोकसङ्ग्रहाय । पितृपारतन्त्र्यद्योतनार्थम् । अत एवाश्चर्याद्रोदनादेर्नामहेतोः रुद्रादिनामोपाधिभेदोऽष्टानामित्युच्यते—तत इति ॥ ५ ॥ अन्यानि सप्त नामानि ददावित्युक्तं तान्येवाह—भव-

विष्णुचित्तीयम् ।

प्रपञ्चयितुं प्रस्तौति—कथित इति ॥ १ ॥ २ ॥ ३ ॥ नामेति । रोदनद्रवणाभ्यां रुद्रनामनिरुक्तिः । "रोदनाद्द्रवणाच्चैव रुद्रनाम्नाऽभिविश्रुतः" इति वायूक्तेः ॥ ४ ॥ तत इति । नामानि रुद्रभवादीनि । स्थानानि सूर्या-

रत्नगर्भीयम् ।

तं शृण्विति संबन्धः । रुद्रस्योक्तरूपेण तामसत्वं तु "भौतिकं नतु सत्त्वेन युद्धे महणआण्डजं । रूपं तत्रापि तु तमः शतांशेन प्रकीर्तितं । तमोरुद्रस्ततस्त्वेव पुनरिन्द्रादिनाऽपि"रितिवत्कथंचिकवचनादवगन्तव्यं । अस्य सर्गस्य पूर्वोक्तैकादशमूर्त्यात्मकरुद्रसर्गापेक्षया अन्यत्वं वक्ष्यमाणरीत्या स्थानान्तरोत्पन्नत्वादष्टमूर्त्युत्पत्तिकरणाच्चावगम्यते । यद्वा पूर्वोक्त एकएव । तत्र कथितस्त्वादिनाऽनूद्यते । रुद्रसर्गं प्रवक्ष्यामीत्यस्य रुद्रात्सर्गो रुद्रसर्गस्तं प्रवक्ष्यामीत्यर्थः । प्रादुरासीत्प्रभोरङ्क इति रुद्रस्य नद्वितीयोत्पत्तिपरं किंतु पूर्वोत्पन्न एव रुद्रो ब्रह्मणोऽङ्के प्रादुरासीत्प्रादुर्भूतः । प्रत्यक्षवत्पादर्शित इत्यर्थेनायोपपन्नत्वात् । एकादशात्मकस्यापि तस्य वक्ष्यमाणाष्टमूर्त्यात्मकत्वं भावार्थवशादुपपद्यते । एकमेवैकादशधा विभागात् । एवं पक्षद्वयसंभावनायां यदत्रयुक्तं तद्विद्वद्भिरेव पर्यालोचनीयं ॥ १ ॥ आत्मनस्तुल्यं सकृत्वादिना । "नीललोहित इत्येवं तेनासावभवत्प्रभु"रिति स्कान्दोक्तेः । किंचित्साम्येन तुल्यं ॥ २ ॥ सुस्वरमित्युक्त्या रोदनादिशिशुत्वनाट्यं लोकसङ्ग्रहार्थं पितृपारतन्त्र्यद्योतनार्थेति दर्शितं ॥ ३ ॥ हे देव नाम्ना रुद्रोऽसीत्यनेन रोदनात् द्रवणाच्च रुद्रनामनिरुक्तिर्दर्शिता । उक्तंच वायुपुराणे । "एवमुक्तस्तु रुरुदुर्दुद्रुवुश्च समन्ततः । रोदनाद्द्रवणाच्चैव रुद्रनाम्नेति विश्रुताः" इति ॥ ४ ॥ ५ ॥ रुद्रनामकेन प्रधानेन

स्वगर्भीयम् ।

इति । तमसोऽधर्मादेरयं तामसः ॥ १ ॥ नीललोहित इति वर्णद्वययोगात् । भूत्वा लोहितत्वांशेन पुनर्नीलत्वमागतः । नीललोहित इत्येवं तेनासावभवत्प्रभुरिति स्कान्दोक्तेः ॥ २ ॥ देवस्यादित्या निषिद्ध-

[ पा० ] १ क. ख. घ. ङ. ज. झ. ढ—ञ. इत्यं द्विजसत्तम । ग. रुदन् द्विजसत्तम. २ क. ख. करोषीति तं. ३ घ. एवं तं प्रत्यभाषत. ४ म. सुव्रत- ५ ट. स रुदन् महातपाः. ६ ढ चैषां सप्तानां. ७ ढ. शर्वं महेशानं.

चक्रे नामान्यथैतानि स्थानान्येषां चकार सः ।
सूर्यो जलं मही वायुर्वह्निराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ७ ॥
सुवर्चला तथैवोषा विकेशी चापरा शिवा ।
स्वाहा दिशस्तथा दीक्षा रोहिणी च यथाक्रमम् ८

सूर्यादीनां द्विजश्रेष्ठ रुद्राद्यैर्नामभिः सह ।
पत्न्यः स्मृता महाभाग तदपत्यानि मे शृणु ९ ॥
एषां सूतिप्रसूतिभ्यामिदमापूरितं जगत् ॥१०॥
शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ।
स्कन्दः सर्गोऽथ सन्तानो बुधश्चानुक्रमात्सुताः ॥

चित्सुखीयम् ।

शिवा वायोः स्वाहा वह्नेः । अपरास्तु पाठक्रमेण ॥ ८ ॥ रुद्राद्यैर्नामभिस्सह रुद्रादिनामकानामधिष्ठातृत्वात् । सूर्यादीनां तदधिष्ठितानां तत्तन्नामयुक्तानां ॥ ९ ॥ सूतिप्रसूतैः । पुत्रपौत्रैः । सुवर्चलादिपाठक्रमेण पुत्रक्रमो द्रष्टव्यः । सर्गः तदभिमानिनीदेवता । सन्तानः सन्धितकर्माभिमानिनीदेवता ॥११॥

श्रीधरीयम् ।

मिति । तं भवादिनामान्युवाच तस्य भवादिनामानि कृतवानित्यर्थः ॥ ६ ॥ तदेवाह—चक्रे नामानीति । रुद्रभवादीनां सूर्यादीन्यष्ट स्थानानि । तान्येवाभिव्यक्तिस्थानत्वात् तनवः मूर्तय इत्युच्यन्ते । दीक्षितो ब्राह्मण इति स्वधर्मानुष्ठातरि क्षेत्रज्ञे परमात्माभिव्यक्तेस्तन्मूर्तित्वम् । "आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः । व्यापकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् । स्थानेष्वेतेषु ये रुद्रं ध्यायन्ति प्रणमन्ति च । तेषामष्टतनुर्देवो ददाति परमं पदम् ।" इति वायूक्तेः । सूर्यो जलं मही वायुर्वह्निरिति क्रमो द्रष्टव्यः । तथा सति सुवर्चलादीनां पत्नीनां यथाक्रमं सम्बन्धे वायोः शिवापतित्वं वह्नेः स्वाहेति सिध्यति । वक्ष्यमाणपुत्रक्रमेऽपि वह्नेः स्कन्दः पुत्र इत्युपपत्स्यते । ततः वह्निर्वायुरिति पाठे क्रमो न विवक्षितः ॥ ७ ॥ ८ ॥ ९ ॥ एषामिति । सूतिप्रसूतिभ्यां पुत्रैः पौत्रादिभिश्च ॥ १० ॥ ११ ॥

विष्णुचित्तीयम् ।

वीति । पत्नीः सुवर्चलादिकाः ॥ ५ ॥ ६ ॥ चक्रे नामानीति । अत्र वह्निर्वायुरिति पाठक्रमो न विवक्षितः । अग्नेर्देवतापत्नीपुत्राणां पशुपतिस्वाहास्कन्दानां पञ्चमस्थाने वक्ष्यमाणत्वात् ॥ ७ ॥ ८ ॥ सूर्यादीनामिति । सूर्यादीनां रुद्रमूर्तीनाम् ॥ ९ ॥ एषामिति । सूतिः पुत्रादिः । प्रसूतिः पौत्रादिः

दत्तात्रेयीयम् ।

सद्यादीनां अन्यानि सप्तनामानिददौतान्येवाह—भवमित्यादिनातं भवादिनामान्युवाच । तस्य भवादिसप्तनामानि कृतवानित्यर्थः ॥ ६ ॥ तदेवाह—चक्र इति । एषांरुद्रभवादीनां । तान्येव स्थानानि दर्शयति । सूर्ये इत्यादिना जलमह्याकाशशब्दैस्तदभिमानिनो देवाः विवक्षिताः । रुद्ररूपस्य सूर्यो भवस्य जलमित्यादिक्रमेण रुद्रादीनां सूर्यादयोऽष्टतनवः स्थानत्वान्मूर्तयः । वह्निर्वायुरिति पाठक्रमो न विवक्षितः । वायुर्वह्निरिति अर्थक्रमएव । तथा सति सुवर्चलादीनां पत्नीनां यथाक्रमसंबन्धे वायोः शिवा पत्नी वह्नेः स्वाहेति सिद्ध्यति वक्ष्यमाणपुत्रक्रमेऽपि वह्नेः स्कन्दः पुत्रः इत्युपपत्स्यते । वायुर्वह्निरिति क्वचित्पाठः । तत्रतु न काप्यनुपपत्तिः । दीक्षित इति ब्राह्मणविशेषणं ॥ ७ ॥ रुद्राद्यैर्नामभिः रुद्रादिनामवाच्यैस्सह सूर्यादीनां सुवर्चलादयः पत्न्यः स्मृताः । रुद्रसहितस्य सूर्यस्य सुवर्चला पत्नी । भवसहितस्य जलस्योमा । इत्यादिक्रमेण पत्न्यः स्मृता इत्यर्थः ॥८॥९॥ सूतिः पुत्रादिः प्रसूतिः पौत्रादिः ॥१०॥ लोहिताङ्गो भौमः मनोजवः कश्चन वायोः पुत्रः । वह्नेः स्कन्दः पुत्रः । आकाशस्य स्वर्गःतदधिष्ठितो

[ पा० ] १ [ श्रीभ० पा० ] वह्निर्वायु २ ज. ट. सवर्चला. ३ ग—ड. शोभा. ४ ग. ट. छ ज. ट. सुकेशी. ५ ख घ. छ. ज— ड. नरश्रेष्ठ ६ ड. महाभाग. ७ ड. सूतिप्रसूतैश्च इत्यापूरितं. ८ ग—ड. ज—ट. स्वर्गो.

एवंप्रकारो रुद्रोऽसौ सतीं भार्यामनिन्दिताम् ।
उपयेमे दुहितरं दक्षस्यैव प्रजापतेः ॥ १२ ॥
दक्षकोपाच्च तत्याज सा सती स्वकलेवरम् ।
हिमवद्दुहिता साऽभून्मेनायां द्विजसत्तम १३ ॥
उपयेमे पुनश्चोमामनन्यां भगवान्हरः ॥ १४ ॥
देवौ धातृविधातारौ भृगोः ख्यातिरसूयत ।
श्रियं च देवदेवस्य पत्नी नारायणस्य या ॥१५॥

श्रीमैत्रेय उवाच ॥

क्षीराब्धौ श्रीः समुत्पन्ना श्रूयतेऽमृतमन्थने ।
भृगोः ख्यात्यां समुत्पन्नेत्येतदाह कथं भवान् १६

श्रीपराशर उवाच ॥

नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥ १७ ॥

विष्णुचित्तीयम् ।

सतीं । भार्यां इतरासां स्थानाभिमानिनीनामधिकत्वादसाधारणत्वात् ॥ १२ ॥ तस्याश्चोत्तरत्र सन्तानाकथने हेतुमाह—दक्षकोपादिति ॥ १३ ॥ एवं दाक्षायणीनां त्रयोदशकन्यानां सन्तानमभिधाय सम्प्रति यवीयसीनां सन्तानाभिधानायाह—देवाविति ॥ १५ ॥ अर्थमात्युपायो नीतिः । नयो नीतिफलं । बोधोऽर्थे-

श्रीधरीयम् ।

उक्तस्य रुद्रसर्गस्य प्रस्तुतोपयोगमाह—एवं प्रकार इति । सती नाम दक्षस्य कन्याम् ॥१२॥ दक्षकोपादिति । दक्षस्य कोपात् । पित्रा दक्षेण रुद्रस्य कृतावज्ञानोद्भूतत्वाद्दक्षस्यास्सन्ततिर्नाभूदिति भावः ॥१३॥ उपयेम इति । अनन्यां मदेकनिष्ठाम् ॥ १४ ॥ देवाविति । श्रीमन्नारायणस्य या पत्नी तां श्रियं चासूयत ॥ १५ ॥ क्षीरोदाविति । प्रश्नः स्पष्टार्थः ॥ १६ ॥ नित्यैवेति । उत्तरस्यायं भावः । तस्या उत्पत्तिरेव भवेदय विरोधः । नित्याया एव सर्वगतायाः सर्वोत्मिकायाश्च विष्णुशक्तेरस्याः कार्यवशेन विष्णोरिवाविर्भावतिरोभावमात्रम् । अतः पूर्वं भृगुसुतारूपेणाविर्भूताया दुर्वाससः शापेन तिरोभूतायाः पुनः क्षीराब्धावाविर्भावो न विरुध्यत इति—तदेवाह—नित्यैवेत्यादिना यावदुत्तराध्यायसमाप्ति ॥१७॥

विष्णुचित्तीयम् ।

॥ १० ॥ ११ ॥ एवमिति । सती सतीनाम्नीम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ मैत्रेयश्चोदयति—क्षीराब्धाविति ॥ १६ ॥ परिहरति—नित्येति । जगत्पितुर्विष्णोरनपायिन्येषा जगन्मातृत्वेन तद्वन्नित्या । तस्याश्च विष्णोरिवाविर्भावतिरोभावौ स्तः । सा पूर्वं भृगोः सुतात्वेनाविर्भूता । पश्चादिन्द्रस्य दुर्वाससश्शापात्तिरोभूताऽमृतमथने प्रादुर्भूता । अतो न विरोधः । यथेति । सर्वगतो विष्णुर्यथा सर्वत्रास्ति इयमपि तथा सर्वत्रास्तीति । विष्णोः सर्वगतत्वसत्यज्ञानादिस्वरूपकल्याणगुणादीनामतिदेशः । अथवा भगवान्विभुत्वेन सर्वगतः अस्यास्त्वणुत्वेऽपि तत्रतत्र सन्निधानात्सर्वगतत्वमुक्तं इयं च सर्व-

रत्नगर्भीयम् ।

देवः । सन्तानो वीरिणस्तस्य पुत्रः । सोमस्य बुधः ॥ ११ ॥ रुद्रसर्गनिरूपणस्य प्रकृतोपयोगमाह—एवमिति । सती दक्षकन्या ॥ १२ ॥ दक्षकोपात् दक्षविषयकोपात् । अतस्तस्य अपत्यं नाभूदित्यभिप्रायः । मेनायां हिमवद्भार्यायां ॥ १३ ॥ अनन्यां मदेकनिष्ठां ॥ १४ ॥ इदानीं भृगोस्सन्ततिमाह—देवावित्यादिना । नारायणस्य या पत्नी तां श्रियं च असूयत ॥ १५ ॥ श्रियोऽतिशयितमहिमानं प्रपञ्चयितुमापाततो विरोधेन मैत्रेय आक्षिपति—क्षीराब्धाविति ॥ १६ ॥ उत्तरमाह—नित्यैवेति । एषा

[पा०] १ क—ढ भविन्दत. २ एतदर्धं ग. घ. पुस्तकयोर्नात्र दृश्यते । अन्येषु नास्ति. ३ ग सती सोमा ४ क्षीराब्धे श्री । ग ङ क्षीरोदाब्धौ ५ ग ञ ट ठ. प्रोक्ता

अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः ।
बोधो विष्णुरियं बुद्धिर्धर्मोऽसौ सत्क्रिया त्वियम्॥
स्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः ।
सन्तोषो भगवाँल्लक्ष्मीस्तुष्टिमैत्रेय शाश्वती १९॥
इच्छा श्रीर्भगवान्कामो यज्ञोऽसौ दक्षिणा त्वियम् ।
आज्याहुतिरसौ देवी पुरोडाशो जनार्दनः २०॥
पत्नीशाला मुने लक्ष्मीः प्राग्वंशो मधुसूदनः ।
चितिर्लक्ष्मीर्हरिर्यूप इध्मा श्रीर्भगवान्कुशः २१॥
सामस्वरूपी भगवानुद्गीतिः कमलालया ।
स्वाहा लक्ष्मीर्जगन्नाथो वासुदेवो हुताशनः २२॥

विष्णुचित्तीयम् ।

निश्चय । बुद्धि तज्जनिकान्तःकरणवृत्ति ॥ १८ ॥ अप्रयत्नप्राप्ते सुखसाधने अलंबुद्धि सन्तोष । तुष्टि तथालब्धार्थोपभोगजा प्रीति ॥ १९ ॥ इच्छा स्वेनाप्राप्तविषयविषयास्पृहा । काम प्राप्तविषयोपभोगाभिलाष ॥ २० ॥ चिति उत्तरवेदिस्थान । सोमो यागसाधनद्रव्यविशेष ॥ २१ ॥ उद्गीति

श्रीधरीयम् ।

लक्ष्मीनारायणयो सर्वात्मकत्वं तथा तयोपासनार्थं प्रपञ्चयति—अर्थो विष्णुरित्यादिना यावदध्यायपरिसमाप्ति । अर्थ इति । वाणी अर्थाभिधायिका वाक् इयं श्री । नीतिरेषा श्री । नय सामाद्युपाय । बोधो अर्थप्रकाश । बुद्धिस्तदभिव्यञ्जिकाऽभिधावृत्ति । धर्मोऽपूर्वम् । सत्क्रिया यागादि ॥ १८ ॥ स्रष्टेति । भूधरो गिरि । भूपतिर्वा । पतन्नृत्तालाभेऽप्यलं प्रत्यय सन्तोष । तल्लब्ध्वा निर्वृत्तिस्तुष्टि ॥१९॥ इच्छेति । इच्छा धनादिस्पृहा । कामस्तद्भोगाभिलाष ॥ २० ॥ पत्नीशालेति । चितिरिष्टकाचयनम् ॥ २१ ॥ सामस्वरूपीति । सामस्वरूपी रथन्तरादिसामस्वरूप । उद्गीतिरुद्गातृव्यापार । हुताशनो वासुदेव ।

विष्णुचित्तीयम् ।

गता ॥ १७ ॥ तयो सर्वात्मकत्वमनपायित्वं चोपपादयति—अर्थ इति । अर्थ शब्दवाच्य । नीतिन्यायशास्त्रम् । नयो न्याय । बुद्धिरध्यवसायात्मकमन्त करण । तत्कार्यो निश्चयो बोध । सत्क्रिया यागादि । धर्मस्तज्जन्यापूर्वमदृष्टम् ॥ १८ ॥ स्रष्टेति । अलंबुद्धिस्तुष्टि । तदभिव्यक्त सुख सन्तोष । शाश्वतीति लक्ष्म्या विशेषणम् ॥ १९ ॥ इच्छेति । इच्छा अपेक्षा । तज्जन्योऽभिनिवेश काम ॥२०॥ पत्नीशालेति । इध्मा समित् । आर्षत्वाट्टाप् ॥ २१ ॥ सामस्वरूपीति । सामगानो मन्त्र साम ।

दत्तात्रेयीयम् ।

जगन्माता विष्णोरनपायिनी अवाक्षणनित्या । विष्णुर्यथा सर्वगत तथेयं सर्वगता । अत्र नित्यसर्वगतत्वाभ्यां विष्णुसाम्योक्त्या गुणतारतम्याभाव इति दर्शित । तदुक्तं ब्रह्मवैवर्ते । "देशत कालतश्चैव गुणतश्च त्रिधा हरे । यथाऽऽनन्त्यं नचान्यस्य तथैवं देशकालत " इति । तथाच तस्या नित्यत्वेन आविर्भावतिरोभावमात्र । यत्त पूर्वं भृगुसुतात्वेनाविर्भूता । पुनरिन्द्रं प्रति दुर्वासश्शापात्तिरोभूता । समुद्रमथने प्रादुर्भूता । अतो न विरोध इति भाव ॥ १७ ॥ तयो सर्वगतत्वमुपपादयति—अर्थो विष्णुरित्यादिना । अर्थोऽभिधेय । वाणी तदभिधायिका वाक् । नीति नीतिशास्त्र एषा श्री । नय तत्प्रतिपाद्यसामाद्युपाय । बोधोऽध्यवसाय । बुद्धिरन्त करणवृत्ति । धर्म पुण्यरूपादृष्ट । सत्क्रिया तद्धेतुर्यागादि ॥ १८ ॥ भूधरो मर्यादाचलो भूपालकोवा । सन्तोषोऽलंबुद्धि । तज्जन्यसुखतुष्टि । शाश्वतीति लक्ष्म्या विशेषण ॥ १९ ॥ इच्छा धनादिविषयस्पृहा । काम्यतइति कामो विषय ॥२०॥ पत्नीशाला दीक्षितपत्नीनिवासस्थान । प्राग्वंशो हविर्गृहात्पूर्वस्य यज्ञशालाख्यगृह । चितिरिष्टकाचयन । इध्मा काष्ठ ॥ २१ ॥ साम रथन्तरादि । तद्गानविशेष उद्गीति । स्वाहा वह्निपत्नी ॥ २२ ॥

[ पा० ] १ अ भगवान्विष्णु २ [ विशु० पा० ] सोम

शङ्करो भगवाञ्छौरिर्गौरी लक्ष्मीर्द्विजोत्तम ।
मैत्रेय केशवः सूर्यस्तत्प्रभा कमलालया ॥ २३ ॥
विष्णुः पितृगणः पद्मा स्वधा शाश्वतपुष्टिदा ।
द्यौः श्रीः सर्वात्मको विष्णुरवकाशोऽतिविस्तरः ॥
शशाङ्कः श्रीधरः कान्तिः श्रीस्तथैवानपायिनी ।
धृतिर्लक्ष्मीर्जगच्चेष्टा वायुः सर्वत्रगो हरिः ॥ २५ ॥
जलधिर्द्विज गोविन्दस्तद्वेला श्रीर्महामुने ।
लक्ष्मीस्वरूपमिन्द्राणी देवेन्द्रो मधुसूदनः ॥ २६ ॥
यमश्चक्रधरः साक्षाद्धूमोर्णा कमलालया ।
ऋद्धिः श्रीः श्रीधरो देवः स्वयमेव धनेश्वरः २७ ॥
गौरी लक्ष्मीर्महाभागा केशवो वरुणः स्वयम् ।
श्रीर्देवसेना विप्रेन्द्र देवसेनापतिर्हरिः ॥ २८ ॥
अवष्टम्भो गदापाणिः शक्तिर्लक्ष्मीर्द्विजोत्तम ।
काष्ठा लक्ष्मीर्निमेषोऽसौ मुहूर्तोऽसौ कला त्वियम्
ज्योत्स्ना लक्ष्मीः प्रदीपोऽसौ सर्वः सर्वेश्वरो हरिः ।
लताभूता जगन्माता श्रीर्विष्णुर्द्रुमसंस्थितः ३० ॥
विभावरी श्रीर्दिवसो देवश्चक्रगदाधरः ।
वरप्रदो वरो विष्णुर्वधूः पद्मवनालया ॥ ३१ ॥
नदस्वरूपी भगवाञ्छ्रीर्नदीरूपसंस्थिता ।
ध्वजश्च पुण्डरीकाक्षः पताका कमलालया ॥ ३२ ॥

चित्सुखीयम् ।

यागाङ्गसामगानं ॥ २२ ॥ अवष्टम्भ उद्यमः । शक्तिर्बलं ॥ २९ ॥ ज्योत्स्ना प्रभा ॥ ३० ॥ वरो जामाता ॥ ३१ ॥ तृष्णा अनागतार्थप्रार्थना । लोभः प्राप्तस्य अविनियोगः सर्वोऽधिकयात्रा च ।

श्रीधरीयम् ।

स्वाहा तु लक्ष्मीः ॥ २२ ॥ २३ ॥ विष्णुरिति । द्यौः श्रीः । अवकाशो विष्णुः ॥ २४ ॥ शशाङ्क इति । धृतिर्मेधादिधारणं । जगच्चेष्टा च लक्ष्मीः । तत्कर्ता वायुर्हरिः ॥ २५ ॥ २६ ॥ यम इति । धूमोर्णा यमस्य भार्या । धनेश्वरः कुबेरः । ऋद्धिरस्य पत्नी ॥ २७ ॥ गौरीति । वरुणस्य भार्याऽपि गौरीसंज्ञा ॥ २८ ॥ अवष्टम्भ इति । अवष्टम्भः पुरुषकारः । शक्तिस्तत्सामर्थ्यम् ॥ २९ ॥ ज्योत्स्नेति । ज्योत्स्ना प्रभा । प्रदीपो हरिः । हरेरेव विशेषणं सर्वः सर्वेश्वरश्चेति । द्रुमसंस्थितिरिति लताया

विष्णुचित्तीयम् ।

सन्तानविशेष वल्लीति ॥ २२ ॥ २३ ॥ २४ ॥ शशाङ्क इति । वायुर्जगत्प्राणः । धृतिः धारणं जगच्चेष्टा च । प्रनष्टादिप्राणादिरूपवायुकृत्यम् ॥ २५ ॥ २६ ॥ यम इति । यमस्य पत्नी धूमोर्णा । ऋद्धिः कुबेरस्य ॥ २७ ॥ गौरीति । गौरी वरुणस्य पत्नी । देवसेना स्कन्दभार्या ॥ २८ ॥ अवष्टम्भ इति । अवष्टम्भ आधारो बलं वा ॥ २९ ॥ ज्योत्स्नेति । ज्योत्स्ना प्रभा ॥ ३० ॥ ३१ ॥ ३२ ॥

[illegible]यम् ।

॥२३॥ द्यौर्द्युलोकः । अवकाशः अव्याकृताकाशः ॥२४॥ धृतिर्धारणं । जगच्चेष्टा च लक्ष्मीः । तत्कर्ता वायुर्हरिः ॥ २५ ॥ धूमोर्णा यमस्यपत्नी । ऋद्धिः कुबेरस्य ॥ २७ ॥ वरुणस्यभार्याऽपि गौरीसंज्ञा । देवसेनापतिर्गुहः ॥ २८ ॥ अवष्टम्भ आधारः । शक्तिस्तत्सामर्थ्यं । काष्ठा पञ्चदशनिमेषा मिता । निमेषः अक्षिपक्ष्मपतनोपलक्षितःकालः । मुहूर्तो नाडिकाद्वयकालः । कला तत्रिंशभागः ॥ २९ ॥ ज्योत्स्ना प्रभा । प्रदीपोहरिः । सर्वः सर्वेश्वर इतिच हरेर्विशेषणं । सर्वः पूर्णः । "सर्वं समाप्नोषि ततोऽसि सर्वः" इतिवचनात् । द्रुमसंस्थितः लताधारद्रुमरूपेणस्थितः ॥ ३० ॥ वरः पतिः । वधूर्जाया ॥ ३१ ॥ ३२ ॥

[ पा० ] १ ग. ड. छ. विष्णु २ ग. घ भूमिर्गौरी द्विजोत्तम । ज ट. ठ श्च च गौरी द्विजोत्तम ३ ङ. छ भगवान्. ४ ग घ तुष्टिदा ५ ख ग छ. ज झ ट सर्वेश ६ ज ठ कान्तनया ७ ज लक्ष्मी । ८ क. ख. झ ट सावित्री । ग घ तत्कर्ता ८ घ पतिर्गुह . ९ ग घ छ झ ट थ विष्णुर्द्रुमसंस्थितः । ९ ङ. ध. ज. ट ठ. श्रीर्विष्णुर्द्रुमसंस्थित । ख. वृक्षो विष्णुर्द्रुमसंस्थित

तृष्णा लक्ष्मीर्जगन्नाथो लोभो नारायणः परः ।
रती रागश्च मैत्रेय लक्ष्मीर्गोविन्द एव च ॥ ३३ ॥
किं चातिबहुनोक्तेन संक्षेपेणेदमुच्यते ॥ ३४ ॥
देवतिर्यङ्मनुष्यादौ पुंनामा भगवान्हरिः ।
स्त्रीनाम्नी श्रीश्च विज्ञेया नानयोर्विद्यते परम् ३५ ॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे अष्टमोऽध्यायः ॥ ८ ॥

[ श्रीचित्सुखमुनिमतटीकाऽत्रा-ध्यायसमाप्तिर्नास्ति ]

चित्सुखीयम् ।

रागः कामः ॥ ३३ ॥ इति श्रीचित्सुखमुनिमतटीकाऽत्राध्यायसमाप्तिर्नास्ति । [ अन्येषां मतटीका अष्टमोऽध्यायः ॥ ८ ॥ ]

श्रीधरीयम् ।

आश्रयः ॥ ३० ॥ विभावरीति । वधूर्जाया । वरः पतिः ॥ ३१ ॥ ३२ ॥ तृष्णेति । पुनःपुनरुपादित्सा तृष्णा । तथाप्राप्तपर्याप्तधीर्लोभः । रागः कामः । तत्पत्नी रतिः ॥ ३३ ॥ ३४ ॥ देवेति । अनयोराभ्यां परं न विद्यते ॥ ३५ ॥ इति श्रीश्रीधरस्वामिविरचितात्मप्रकाशाख्यविष्णुपुराणव्याख्यायां प्रथमांशेऽष्टमोऽध्यायः ॥ ८ ॥

विष्णुचित्तीयम् ।

तृष्णेति । देयस्यादित्सा निषिद्धलिप्सा च लोभः । लब्धेऽपर्याप्तधीस्तृष्णा । रतिः प्रियसङ्गमजा सुखानुभूतिः । तत्प्रकर्षो रागः ॥ ३३ ॥ ३४ ॥ देवेति । अनयोराभ्यां परमन्यत् । सर्वस्योभयात्मकत्वेऽपि च-मत्कारातिशयविशेषादर्थवाण्यादीनां तदात्मकत्वमुक्तम् ॥ ३५ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशेऽष्टमोऽध्यायः ॥ ८ ॥

रत्नात्रेयीयम् ।

पुनःपुनरुपादित्सा तृष्णा । प्राप्तप्राप्तपर्याप्तधीर्लोभः । रागः कामः । तत्पत्नी रतिः । "अर्थो विष्णु"रित्यादिना विष्णोरर्थादिशब्दवाच्यत्वं लक्ष्म्याः वाण्यादिशब्दवाच्यत्वं च न तत्तदात्मकत्वेन किंतु तत्तदन्तर्यामित्वेनैव द्रष्टव्यं । तदुक्तं महातर्के—"अन्तर्यामी तु यज्ञाद्यैर्विष्णुरित्यादिना रमा । तत्तच्छ-ब्देरितो वाच्यो मतु सर्वस्वरूपवः । अन्तर्यामी श्रियश्चापि विष्णुरेव न संशयः । नान्तर्यामी कश्चिदस्ति विष्णोः क्वापि श्रुतश्रुते"ति ॥ ३३ ॥ अधिकारिणां विशेषात्संक्षेपेण व्याप्तिमभिधाय विस्तरेण तामाह—किञ्चेति ॥ ३४ ॥ अनयोराभ्यां परमुत्तमं न विद्यते । सर्वमेतदधीनमेवेत्यर्थः ॥ ३५ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां गुरुशिष्यव्याख्याश्रीविष्णुपुराणव्याख्यायां प्रथमांशे अष्टमोऽध्यायः ॥ ८ ॥

रत्नगर्भीयम् ।

लिप्सा च लोभः ॥ ३३ ॥ इति श्रीरत्नगर्भभट्टाचार्यकृतश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे अष्टमो-ऽध्यायः ॥ ८ ॥

---

[ पा० ] १ ग. ग. ड. च. ज—ढ जगत्स्वामी. २ ट. छ. स्मृतः. ३ क. ख—ड. रतिरागौ च धर्मज्ञ. ४ क—घ. च. छ. ञ. चाद्य. ५ ग.—ठ. मनुष्येषु. ६ ज—ढ. पुंनाम्नि । ख. पुंनाम्नो. ७ क. ख. ट—ड. स्त्रीनाम्नि लक्ष्मीर्मैत्रेय.

## नवमोऽध्यायः ॥ ९ ॥

भुवि स्वदत्तमालायास्तत्त्वावमानजातक्रोधस्य दुर्वाससः शापात् नाके श्रिया विहीने दितिजैः पराजिते सति इन्द्रादिभिर्देवैः प्रार्थितेन ब्रह्मणा तैस्साकं क्षीराब्धिगमनम् ॥ १ ॥ ब्रह्मणा कृता श्रीनारायणस्तुतिः ॥ २ ॥ ततः प्रसन्नेन भगवता देवेभ्यः अमृतप्राप्त्यर्थं क्षीरोदमथनप्रकारोपदेशः ॥ ३ ॥ विस्तरेण दुग्धाब्धिमथनवर्णनम् ॥ ४ ॥ तथोत्पन्नामृतपानेन पुनः शक्रस्य त्रिदिवप्राप्तिः ॥ ५ ॥ इन्द्रकृता श्रीस्तुतिरूपसूक्तकथनं च ॥ ६ ॥

श्रीपराशर उवाच ॥
इदं च शृणु मैत्रेय यत्पृष्टोऽहमिह त्वया ।
श्रीसम्बन्धं मयाप्येतच्छ्रुतमासीन्मरीचितः ॥१॥
दुर्वासाः शङ्करस्यांशश्चचार पृथिवीमिमाम् ।
स ददर्श स्रजं दिव्यामृषिर्विद्याधरीकरे ॥ २ ॥
सन्तानकानामखिलं यस्या गन्धेन वासितम् ।
अतिसेव्यमभूद्ब्रह्मंस्तद्वनं वनचारिणाम् ॥ ३ ॥
उन्मत्तव्रतधृग्विप्रस्तां दृष्ट्वा शोभनां स्रजम् ।
तां ययाचे वरारोहां विद्याधरवधूं ततः ॥ ४ ॥
याचिता तेन तन्वङ्गी मालां विद्याधराङ्गना ।
ददौ तस्मै विशालाक्षी सादरं प्रणिपत्य तम् ॥५॥
तामादायात्मनो मूर्ध्नि स्रजमुन्मत्तरूपधृक् ।
कृत्वा स विप्रो मैत्रेय परिबभ्राम मेदिनीम् ॥ ६॥

श्रीधरीयम् ।

एवं मैत्रेयकृताक्षेपपरिहारार्थं सर्वात्मकत्वमभ्यधानेन विष्णोरिव लक्ष्म्या अपि नित्यत्वमुक्तम् । इदानीमाविर्भावतिरोभावाभ्यां तदुक्तं विरोधं परिहरन्नाह—इदं चेत्यादिना पूर्वं भृगुसुता सतीत्यन्तेन—इदं चेति । श्रीसम्बन्धं भृगुसुताऽपि श्रीर्यथा क्षीराब्धौ जातेत्युच्यते इदं च शृणु । मयाऽप्येतदेव सन्निधानेन मरीचेः सकाशादेतच्छ्रुतमासीत् ॥ १ ॥ तत्र प्रथमं भृगुसुतायाः समुद्रतिरोधाने कारणं प्रसङ्गमाह—दुर्वासा इति । शङ्करस्यांश इत्यनेन तस्य शापदाने सामर्थ्यम् अपराधासहिष्णुत्वं चोक्तम् ॥ २ ॥ सन्तानकानामिति । सन्तानो देवतरुः । तदीयानां पुष्पाणां स्रजं मालां । यस्या गन्धेन वासितं तद्वनं वनचारिणामतिसेव्यमभूत् ॥ ३ ॥ उन्मत्तव्रतधृगिति । उन्मत्तव्रतधृक् योगिनो हि जडोन्मत्तपिशाचवद्वर्तन्ते । तां स्रजं तां विद्याधरवधूं याचितवानिति द्विकर्मको याचिः ॥ ४ ॥ ५ ॥ तामिति ।

विष्णुचित्तीयम् ।

इदमिति । मरीचितः । मरीचिः काश्यपपिता ॥ १ ॥ दुर्वासा इति । शङ्करस्यांश इति मन्युमात्रत्वादेर्हेतुनिर्देशः ॥ २ ॥ ३ ॥ उन्मत्तेति । उन्मत्तव्रतधृक् योगिनो [illegible] जडोन्मत्तपिशाचवद्वर्तन्ते ।

रत्नगर्भीयम् ।

"नित्यैवैषा जगन्माते"त्यादिना लक्ष्म्याः नित्यत्वोक्त्या देहोत्पत्तिर्नास्ति । किन्त्वाविर्भावतिरोभावमात्रमिति दर्शयितुं तदेवाख्याने स्पष्टमाह—इदं चेत्यादिना । श्रीसंबन्धपूर्वं भृगुसुताऽपि श्रीर्यथा क्षीराब्धौ जातेत्युच्यते इदं च शृणु । मयाऽप्येवमेव सन्निधानेन मरीचेस्सकाशादेतच्छ्रुतमासीदित्यन्वयः ॥ १ ॥ २ ॥ सन्तानकानां देवतरुपुष्पाणां स्रजं मालां यस्याः स्रजः गन्धेन वासितं तद्वनमखिलं वनचारिणामतिसेव्यमभूत् ॥ ३ ॥ उन्मत्तव्रतधृक् ज्ञानिनो हि जडोन्मत्तपिशाचवद्वर्तन्ते । तां स्रजं विद्याधरवधूं ययाचे । याचतेर्द्विकर्मकत्वात्कर्मद्वयं ॥ ४ ॥ ५ ॥ विप्रो दुर्वासाः तां स्रजं मूर्ध्नि कृत्वा मे-

[पा०] १ ख. ङ. ममाप्येतत्. २ ग. अतिसौम्य. ३ ग. चारिणाम्. ४ क. समाश्रित. ५ ग. मादायोन्मूर्ध्नि

स ददर्श तमायान्तमुन्मत्तैरावते स्थितम् ।
त्रैलोक्याधिपतिं देवं सह देवैः शचीपतिम् ॥ ७ ॥

तामात्मनः स शिरसः स्रजमुन्मत्तषट्पदाम् ।
आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ॥ ८ ॥

गृहीत्वाऽमरराजेन स्रगैरावतमूर्धनि ।
न्यस्ता रराज कैलासशिखरे जाह्नवी यथा ॥ ९ ॥

मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः ।
करेणाघ्राय चिक्षेप तां स्रजं धरणीतले ॥ १० ॥

ततश्चुक्रोध भगवान्दुर्वासा मुनिसत्तमः ।
मैत्रेय देवराजानं क्रुद्धश्चैतदुवाच ह ॥ ११ ॥

दुर्वासा उवाच ॥

ऐश्वर्यमददुष्टात्मन्नतिस्तब्धोऽसि वासव ।
श्रियो धाम स्रजं यस्त्वं मद्दत्तां नाभिनन्दसि १२॥

प्रसाद इति नोक्तं ते प्रणिपातपुरःसरम् ।
हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता ॥१३॥

मया दत्तामिमां मालां यस्मान्न बहु मन्यसे ।
त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति ॥१४॥

मां मन्यसे त्वं सदृशं नूनं शक्रेतरैर्द्विजैः ।
अतोऽवमानमस्मासु मानिना भवता कृतम् १५॥

मद्दत्ता भवता यस्मात्क्षिप्ता माला महीतले ।
तस्मात्प्रणष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यति १६॥

---

श्रीधरीयम् ।

तां स्रजं मूर्ध्नि कृत्वा मेदिनीं परिबभ्रामेत्यन्वयः ॥ ६ ॥ ७ ॥ ८ ॥ गृहीत्वेति । ऐरावतमूर्ध्नि विन्यस्ता सा कैलासशिखरे स्थिता जाह्नवीव रराज ॥ ९ ॥ मदान्धकारिताक्ष इति । मदेनान्धकारिते सञ्जातान्धकारे अक्षिणी यस्यासौ । करेणाघ्रायेति करिणां करस्यैव घ्राणत्वात् ॥ १० ॥ ११ ॥ ऐश्वर्येति । अतिस्तब्धोऽतिगर्वितोऽसि । श्रियो धाम लक्ष्म्या निवासभूतम् ॥ १२ ॥ प्रसाद इति । ते त्वया हर्षेणोत्फुल्लौ विकसितौ कपोलौ यस्य तथाभूतेन सता त्वया ॥ १३ ॥ मयेति । त्रैलोक्यश्रीः त्रैलोक्यैश्वर्यम् । अतः मालाबहुमानाकरणदोषात् । विनाशमुपयास्यति शीघ्रमेव गमिष्यति ॥ १४ ॥ १५ ॥ मद्दत्तेति । मद्दत्तमालाया महीप्रक्षेपणदोषात् गजनिक्षिप्ताया उपेक्षितत्वात् भवतैव क्षिप्तेत्युक्तं । तस्मा-

विष्णुचित्तीयम् ।

अथ वा सनत्कुमारशापादुन्मत्तव्रतधृक् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ मदान्धेति । गन्धाकृष्टेनेति पाठान्तरम् । करिणो करस्य गन्धाकृष्टत्वे तस्यैव नासात्वात् ॥ १० ॥ ११ ॥ ऐश्वर्येति । स्तब्धः अविनयोद्धतः । अत्र हेतुः श्रियेति । श्रियो धामेति वा पाठः ॥ १२ ॥ प्रसाद इति । ते त्वया ॥१३॥ ॥ १४ ॥ १५ ॥ मद्दत्तेति । प्रणष्टलक्ष्मीकं तिरोहितलक्ष्मीकम् । अत्र प्रणष्टशब्दस्य तिरोहितत्वमर्थः

रत्नगर्भीयम् ।

विनीं परिबभ्रामेति संबन्धः ॥ ६ ॥ ७ ॥ ८ ॥ ऐरावतमूर्ध्नि विन्यस्ता स्रक् कैलासशिखरे स्थिता जाह्नवीव रराज ॥ ९ ॥ मदान्धकारिताक्षः मदेन अन्धकारिते सञ्जातान्धकारे अक्षिणी यस्य ॥ तथोक्तः । गन्धाकृष्टेन करेणाघ्राय करिणो करस्यैव नासिकात्वात् ॥ १० ॥ ११ ॥ अतिस्तब्धोऽसि अतिगर्वितोऽसि । श्रियो धाम लक्ष्मीनिवासभूतां ॥ १२ ॥ हर्षेणोत्फुल्लौ विकसितौ कपोलौ यस्य स तथाभूतेन सता हे त्वया शिरसि न धृताम ॥ १३ ॥ त्रैलोक्यश्रीः तव त्रैलोक्यैश्वर्यं विनाशमुपयास्याति । अतो मालाबहुमानाकरणापराधात् ॥ १४ ॥ अतो द्विजमात्रसादृश्यज्ञानान्मानिना देवराजोऽहमित्यभिमानिनाऽभिमानवता भवता ममावज्ञानं कृतं ॥ १५ ॥ मालायाः गजाक्षिप्तत्वेऽपि गजानियमना-

---

[ पा० ] १ ख—ङ तमायान्त. २ ङ—ढ. मदान्ध, करियजोऽसौ ३ ■ ङ—ढ च. गन्धोत्कृष्टेन [ वि० पा० ] गन्धाकृष्टेन. ४ ङ—छ. ■ ग, ङ, मत्त, ५ ख, घ, ङ, छ. घपवितोऽसि. ६ ब. श्रियाधमसजं. ७ ङ, च. नाभिवाञ्छसि. ८ घ. यस्मात्वं नाभिनन्दसि. ९ ख—ङ मन्यसेऽस्मैरसदृशं १० ङ—ढ. शक्र भवान्द्विजैः. ११ ङ, च, मस्माकं.

यस्य सञ्जातकोपस्य भयमेति चराचरम् ।
तं त्वं मामतिगर्वेण देवराजावमन्यसे ॥ १७ ॥

श्रीपराशर उवाच ॥

महेन्द्रो वारणस्कन्धादवतीर्य त्वरान्वितः ।
प्रसादयामास मुनिं दुर्वाससमकल्मषम् ॥ १८ ॥
प्रसाद्यमानः स तदा प्रणिपातपुरःसरम् ।
इत्युवाच सहस्राक्षं दुर्वासा मुनिसत्तमः ॥ १९ ॥

दुर्वासा उवाच ॥

नाहं कृपालुहृदयो न च मां भजते क्षमा ।
अन्ये ते मुनयः शक्र दुर्वाससमवेहि माम् ॥ २० ॥
गौतमादिभिरन्यैस्त्वं गर्वमारोपितो मुधा ।
अक्षान्तिसारसर्वस्वं दुर्वाससमवेहि माम् ॥ २१ ॥
वसिष्ठाद्यैर्दयासारैः स्तोत्रं कुर्वद्भिरुच्चकैः ।
गर्वं गतोऽसि येनैवं मामप्यद्यावमन्यसे ॥ २२ ॥
ज्वलज्जटाकलापस्य भृकुटीकुटिलं मुखम् ।
निरीक्ष्य कस्त्रिभुवने मम यो न गतो भयम् २३ ॥
नाहं क्षमिष्ये बहुना किमुक्तेन शतक्रतो ।
विडम्बनामिमां भूयः करोष्यनुनयात्मिकाम् २४

---

चित्सुखीयम् ।

। ·

सन्तानकानां स्रजमित्यन्वयः ॥ ३ ॥ दुरभिमानिनो मम मुखं निरीक्ष्य भयं यो नागतस्स कः ।

श्रीधरीयम् ।

न्मालाया धरणीतले प्रक्षेपदोषात् । त्वदीयं त्रैलोक्यं प्रणष्टलक्ष्मीकं दारिद्र्याभिभूतं भविष्यतीति द्वितीयः शापः ॥ १६ ॥ १७ ॥ महेन्द्र इति । अकल्मषं सापराधशापे दोषाभावात् ॥ १८ ॥ १९ ॥ नाहमिति । अन्ये ते मुनयः ये दयालवः । अहं न तथा ॥ २० ॥ तदेवाह—गौतमादिभिरिति । गौतमादिभिः स्वभार्याधर्षणाद्यपराधिनि त्वयि दाक्षिण्येनानुग्रहपरैः मुधा वृथैव गर्वं प्रापितोऽसि । अक्षान्तिरेव सारस्तपोबलं तदेव सर्वस्वं यस्य तं माम् ॥ २१ ॥ वसिष्ठाद्यैरिति । उच्चकैरभयशिरोभिः उच्चासनोपविष्टस्य तव स्तोत्रं कुर्वद्भिरित्यर्थः ॥ २२ ॥ मामपीत्युक्तं स्पष्टयति—ज्वलज्जटेति । यदं मुखं निरीक्ष्य यो भयं न गतः स कः न कोऽपीत्यर्थः ॥ २३ ॥ नाहमिति । विडम्बनामपहासम् ॥ २४ ॥

विष्णुचित्तीयम् ।

॥ १६ ॥ १७ ॥ महेन्द्र इति । अकल्मषं सापराधे शापदोषाभावात् ॥ १८ ॥ १९ ॥ नाहमिति । अन्ये ते मुनयः ये क्षमावन्तः ॥ २० ॥ गौतमादिभिरिति । गौतमो हि अहल्याधर्षकं त्वां सर्वाङ्गभगो भवेति शप्त्वा पुनस्त्वत्प्रसादितः सर्वाङ्गनेत्रं चक्रे । नैवं कारुणिकोऽहमिति भावः ॥ २० ॥ २१ ॥

रत्नगर्भीयम् ।

कूपता क्षिप्तेत्युक्तं । तस्मान्मालायाः भुवि प्रक्षेपात् ते त्रैलोक्यं प्रणष्टलक्ष्मीकं तिरोहितलक्ष्मीकं भविष्यति ॥ १६ ॥ १७ ॥ सापराधे शापदानादकल्मषं ॥ १८ ॥ १९ ॥ ये कृपालवः क्षमावन्तः तेऽन्ये मुनयः । अहंतु [illegible] तथा ॥ २० ॥ तदेवाह—गौतमादिभिरिति । गौतमादिभिरन्यैश्च स्वभार्याधर्षणाद्यपराधसहिष्णुभिः मुधा वृथैव । गर्वमापादितो दम्भितोऽसि । अक्षान्तिरसहिष्णुता सैव सारो बलं तदेव सर्वस्वं यस्य तं मां ॥ २१ ॥ उच्चकैः उन्नमितशिरोभिः उच्चासनोपविष्टस्य तव स्तोत्रं कुर्वद्भिः । गर्वं गतोऽसि । येन हेतुना मामप्युक्तस्वरूपमद्यावमन्यसे ॥ २२ ॥ किं च ज्वलन् जटाकलापो यस्य ज्वलज्जटाकलापस्य मम मुखं निरीक्ष्य यो भयं न गतः स कः न कोऽपीत्यर्थः ॥ २३ ॥ विडम्बनामपहासं ।

---

[ पा० ] १ ख. ठ. ञ. मापादितो. २ ठ. ज्वलज्जटाकलापस्य. ३ ङ. कलाकस्य. ४ [त्रिभ० प०] भयांगतः.

श्रीपराशर उवाच ॥

इत्युक्त्वा प्रययौ विप्रो देवराजोऽपि तं पुनः ।
आरुह्यैरावतं ब्रह्मन्प्रययावमरावतीम् ॥ २५ ॥
ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम् ।
मैत्रेयासीदपध्वस्तं संक्षीणौषधिवीरुधम् ॥ २६ ॥
न यज्ञाः संप्रवर्तन्ते न तपस्यन्ति तापसाः ।
न च दानादिधर्मेषु मनश्चक्रे तदा जनः ॥ २७ ॥
निःसत्त्वाः सकला लोका लोभाद्युपहतेन्द्रियाः ।
स्वल्पेऽपि हि बभूवुस्ते साभिलाषा द्विजोत्तम ॥ २८ ॥
यतः सत्त्वं ततो लक्ष्मीः सत्त्वं भूत्यनुसारि च ।
निःश्रीकाणां कुतः सत्त्वं विना तेन गुणाः कुतः ॥ २९ ॥
बलशौर्याद्यभावश्च पुरुषाणां गुणैर्विना ।
लङ्घनीयः समस्तस्य बलशौर्यविवर्जितः ॥ ३० ॥
भवत्यपध्वस्तमतिर्लङ्घितः प्रथितः पुमान् ।
एवमत्यन्तनिःश्रीके त्रैलोक्ये सत्त्ववर्जिते ॥ ३१ ॥
देवान्प्रति बलोद्योगं चक्रुर्दैतेयदानवाः ॥ ३२ ॥
लोभाभिभूता निःश्रीका दैत्याः सत्त्वविवर्जिताः ।
श्रिया विहीनैर्निःसत्त्वैर्देवैश्चक्रुस्ततो रणम् ॥ ३३ ॥

चित्सुखीयम् ।

मत्तोऽपीत्याशयः ॥ २३ ॥ अनुनयात्मिकां प्रार्थनारूपां ॥ २४ ॥ भूत्यनुसारि श्रियाऽविनाभूतं ॥ २९ ॥ शौर्यं परकीयागणनं । लङ्घनीयः अभिभवनीयः ॥ ३० ॥ लङ्घितः अवज्ञातः ॥ ३१ ॥

श्रीधरीयम् ।

॥ २५ ॥ ततः प्रभृतीति । अपध्वस्तं नष्टप्रायम् ॥ २६ ॥ २७ ॥ निःसत्त्वा इति । निःसत्त्वाः धैर्यशून्याः । अतो लोभादिभिरुपहतेन्द्रियाः । अतः स्वल्पेऽप्यर्थे साभिलाषाः ॥ २८ ॥ एतदेव स्पष्टयति—यत इति । यतः यत्र सत्त्वं धैर्यं तत्र लक्ष्मीः । सत्त्वं च भूत्यनुसारि लक्ष्म्या एवानुवर्ति । एवं धैर्यलक्ष्म्योः परस्पराविनाभूतत्वाच्छ्रीनिवृत्त्या सत्त्वनिवृत्तिमाह—निःश्रीकाणामिति । तेन सत्त्वेन विना गुणाः औदार्यसन्तोषक्षमाशीलादयः कुतः ॥ २९ ॥ ततोऽनर्थपरम्परामाह—बलेति । लङ्घनीयः अभिभाव्यः ॥ ३० ॥ भवतीति । प्रथितः ख्यातः पुमान् लङ्घितः अवज्ञातः सन् अपध्वस्तमतिर्नष्टप्रज्ञो

विष्णुचित्तीयम् ।

॥ २२ ॥ २३ ॥ नाहमिति । विडम्बना अवमानः ॥ २४ ॥ २५ ॥ तत इति । निःश्रीकत्वं भोग्यवस्त्वभाव एव । एवञ्च औषध्यादिभोग्याभावं तत्साधनयज्ञसत्त्वाद्यभावं चाह—संक्षीणेत्यादिना ॥ २६ ॥ ॥ २७ ॥ २८ ॥ यत इति । सत्त्वं धैर्यम् । सत्त्वगुणो वा । भूतिर्लक्ष्मीः । सत्त्वभूत्योरितरेतरहेतुत्वम् । गुणाः सत्यशौचशीलाद्याः ॥ २९ ॥ ३० ॥ भवतीति । प्रथितः प्रसिद्धः पुमान् । लङ्घितोऽवज्ञातः अपध्वस्तमतिर्भवति । प्रथितः पुमान् लङ्घितश्चेदपध्वस्तमतिर्भवेदिति ॥ ३१ ॥ ३२ ॥ ३३ ॥

दत्तात्रेयीयम् ।

अनुनयात्मिकां सान्त्वनरूपां ॥ २४ ॥ २५ ॥ अपध्वस्तं नष्टप्रायं ॥ २६ ॥ २७ ॥ निस्सत्त्वाः धैर्यहीनाः । अतएव लोभादिभिरुपहतेन्द्रियाः अनिगृहीतेन्द्रियाः । अतएवच स्वल्पेऽप्यर्थे साभिलाषाः सतृष्णाः ॥ २८ ॥ एतदेव विवृणोति—यत इति । यतो यत्र सत्त्वं धैर्यं ततस्तत्र लक्ष्मीः सत्त्वं च भूत्यनुसारि भूतिर्लक्ष्मीस्तदनुवर्ति । एवं श्रीसत्त्वयोः परस्पराविनाभूतयोः । श्रीनिवृत्त्या सत्त्वनिवृत्तिरित्याह—निःश्रीकाणामिति । तेन सत्त्वेन विना गुणाः औदार्यसन्तोषक्षमाशीलादयः कुतः ॥ २९ ॥ ततोऽनर्थपरंपरामाह—बलेति । बलं सामर्थ्यं । शौर्यं परजयंप्रत्युत्साहः । लङ्घनीयः अभिभाव्यः ॥ ३० ॥ प्रथितः प्रख्यातः पुमान् लङ्घितोऽवज्ञातःसन् अपध्वस्तमतिः नष्टप्रज्ञो भवति ॥ ३१ ॥ ततःकिमभूत्तत्राह—देवानिति ॥ ३२ ॥ स्वभावत एव लोभाभिभूतत्वादिकं दैत्यानां । देवानांतु श्रियाविहीनत्वा-

[पा०] १ ग—छ नार्थे. २ स्वल्पेऽर्थेऽपि. ३ ङ. भूति .

विजितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः ।
पितामहं महाभागं हुताशनपुरोगमाः ॥ ३४ ॥
यथावत्कथितो देवैर्ब्रह्मा प्राह ततः सुरान् ।
परावरेशं शरणं व्रजध्वमसुरार्दनम् ॥ ३५ ॥
उत्पत्तिस्थितिनाशानामहेतुं हेतुमीश्वरम् ।
प्रजापतिपतिं विष्णुमनन्तमपराजितम् ॥ ३६ ॥
प्रधानपुंसोरजयोः कारणं कार्यभूतयोः ।
प्रणतार्तिहरं विष्णुं स वः श्रेयो विधास्यति ॥ ३७ ॥

श्रीपराशर उवाच ॥

एवमुक्त्वा सुरान्सर्वान्ब्रह्मा लोकपितामहः ।
क्षीरोदस्योत्तरं तीरं तैरेव सहितो ययौ ॥ ३८ ॥
स गत्वा त्रिदशैः सर्वैः समवेतः पितामहः ।
तुष्टाव वाग्भिरिष्टाभिः परावरपतिं हरिम् ॥ ३९ ॥

ब्रह्मोवाच ॥

नमामि सर्वं सर्वेशमनन्तमजमव्ययम् ।
लोकधामधराधारमप्रकाशमभेदिनम् ॥ ४० ॥

विष्णुचित्तीयम् ।

उत्पत्तिस्थितिनाशानां हेतुमित्यन्वयः । अहेतुं हेतुरहितं ॥ ३६ ॥ कार्यभूतयोरिति । ईश्वरेण प्रवर्त्यत्वादुपचारतः कार्यत्वं ॥ ३७ ॥ परापरपतिं परस्य हिरण्यगर्भस्य अपरेषां चेन्द्रादीनां पतिं । लोकानां धामभूतायाः

श्रीधरीयम् ।

भवति ॥ ३१ ॥ ३२ ॥ लोभाभिभूता इति । रणं युद्धम् ॥ ३३ ॥ इन्द्रापराधेन हि त्रैलोक्यस्य निःश्रीकत्वं प्राप्तम् । अतस्त्रिलोकयन्तर्वर्तितया प्राप्नुवत्स्वपि तद्विपक्षेषु दैत्येषु देवेष्विव नातिप्रभूतमिति दैत्यानां जयः सङ्गच्छते । हुताशपुरोगमा इति । अग्निर्दूतत्वात्पुरोगमः "अग्निर्वै देवानां दूत आसीत्" इति श्रुतेः ॥ ३४ ॥ ३५ ॥ जगदुत्पत्त्यादीनां हेतुं । स्वयं अहेतुं स्वत एव निष्पत्तिं ॥ ३६ ॥ ३७ ॥ एवमिति । उत्तरं तीरम् उत्तरदेशेऽवस्थितं तीरं परं कूलमिति वा ॥ ३८ ॥ स इति । इष्टाभिः पूजिताभिः अपेक्षितार्थद्योतनाभिरिति वा । परावराणामुत्कृष्टनिकृष्टानां पतिं ब्रह्मा तुष्टाव ॥ ३९ ॥ नमामीत्यस्तोत्र-

विष्णुचित्तीयम् ।

विजिता इति । निःश्रीकत्वाविशेषसाम्येऽपि गुणित्वप्रकृतिसम्मुखा देवा निर्गुणत्वप्रकृतिस्थितैर्दैत्यैर्जिताः ॥ ३४ ॥ ३५ ॥ उत्पत्तीति । अहेतुं स्वयं हेतुरहितम् । "न चास्य कश्चिज्जनिता" इत्यादिश्रुतेः । हेतुं सर्वस्योत्पत्त्यादेः ॥ ३६ ॥ प्रधानेति । अजयोरपि कार्यत्वं स्वरूपस्वभावान्यथाभावेन च ॥ ३७ ॥ एवमिति । उत्तरं तीरं उत्तरं कूलं शाकद्वीपाश्रितम् ॥ ३८ ॥ ३९ ॥ नमामीति । अव्ययं अपक्षया-

रत्नगर्भीयम् ।

दिकं शापनिमित्तत्वादागन्तुकं । अतस्तत्काले तुच्छत्वाद्दैत्याः देवैर्युद्धं चक्रुः ॥ ३३ ॥ समयकेऽपि त्रिदशा दैत्यैर्विजिताः । शक्रादिदत्तमग्रसामर्थ्याद्दैत्यादीनां विजय इति भावः । हुताशनपुरोगमाः अग्नेर्दूतत्वात्पुरोगन्तृत्वं । "अग्निर्वै देवानां दूत आसी" दिति श्रुतेः ॥ ३४ ॥ ३५ ॥ अहेतुं स्वस्यान्यहेतुरहितं ॥ ३६ ॥ प्रधानपुंसोः प्रकृतिपुरुषयोः । अजयोः स्वरूपेणोत्पत्तिरहितयोः । कार्यभूतयोः कार्यत्वंच जडप्रकृतेर्विकारलक्षणं । चेतनप्रकृतेः पराधीनता विशेषावाप्तिः । पुरुषस्य देहोत्पत्तिरिति बोध्यं । विष्णुं शरणं व्रजध्वमिति पूर्वेणान्वयः ॥ ३७ ॥ उत्तरं उत्तरदिगवस्थितं । तीरं कूलं । परंकूलवा ॥ ३८ ॥ इष्टाभिः अपेक्षितार्थद्योतिकाभिः । परावराणां उत्कृष्टनिकृष्टानां सर्वजीवानां पतिं स्वामिनं । हरिं आर्तिहरं ॥ ३९ ॥ सर्वं पूर्णं । "विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयत" इत्यभिधानात् । अनन्तं देशतः

[ पा० ] १ ज. झ. ट. ठ. पुंसोरजयो म. पुंसोरजयो. २ ड हरो विष्णु. ३ क. तत श्रेयोऽभिधास्यति. ४ झ. म. कूलं. ५ ठ. परापरपतिं. ६ क. सर्वदेवेश. ७ झ—ड छ. लोकधामधराधारमप्रमेयमभेदिनम्. ८ (इत्या॰ पा॰ ). नमस्कार.

नारायणमणीयांसमशेषाणामणीयसाम् ।
समस्तानां गरिष्ठं च भूरादीनां गरीयसाम् ४१ ॥
यत्र सर्वं यतः सर्वमुत्पन्नं मत्पुरःसरम् ।
सर्वभूतश्च यो देवः पराणामपि यः परः ॥४२॥
परः परस्मात्पुरुषात्परमात्मस्वरूपधृक् ।
योगिभिश्चिन्त्यते योऽसौ मुक्तिहेतोर्मुमुक्षुभिः ४३
सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥४४॥
कला काष्ठा मुहूर्तादिकालसूत्रस्य गोचरे ।
यस्य शक्तिर्न शुद्धस्य स नो विष्णुः प्रसीदतु ४५॥

चित्सुखीयम् ।

स्थानभूतायाः धरायाः पृथिव्या आधारं । अप्रकाशं इन्द्रियैरनभिव्यक्तं ॥ ४० ॥ प्रकृतेः परस्मात्पुरुषादपि परः । अतएव परमात्मस्वरूपधृक् ॥ ४३ ॥ प्राकृताः प्रकृतिसंबन्धिनः सत्त्वादयो गुणाः ॥४४॥ काल एव सूत्रमिव सूत्रं जगच्चेष्टाहेतुत्वात्सुत्पत्तिप्रलयैकसूत्रकम् गोचरे विषये यच्छक्तिः कालमवृत्त्या

श्रीधरीयम् ।

रश्लोकेऽपि सम्बन्धः । सर्वं सर्वरूपं सर्वेधरं च । लोकधामधराधारं लोकानां पृथिव्यादीनां धामामण्डलानां धराणां प्रभावघतामिन्द्रादीनामाधारम् । इन्द्रादीनां प्रभावो यदाश्रय इत्यर्थः । अप्रकाशं प्रकाशरहितमित्यर्थः । अभेदिनमभिभेदं । स्वव्यतिरिक्ते प्रकारशून्यमित्यर्थः ॥ ४० ॥ ४१ ॥ यत्रेति । यत्र सर्वमित्यादि यच्छब्दानां स आद्यः पुमान्प्रसीदत्विति तृतीयेनान्वयः । पराणामक्षरादीनामपि यः परः पुरुषः । तथा च श्रुतिः "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति ॥ ४२ ॥ पर इति । तस्मात्परस्मादव्यक्ताच्छरीरैकाकारणात्मनः पुरुषादपि यः परः । यतः परमात्मैव स्वरूपधृक् मूर्तिधारी । अत एव योगिभिश्चिन्त्यते योऽसौ ॥ ४३ ॥ ४४ ॥ कलेति । कलाकाष्ठानिमेषादिकाल एव सूत्रं सूत्रवच्चेष्टानियाम-

विष्णुचित्तीयम् ।

दिविधकारवर्हितम् । अभेदिनं भेदानर्हम् ॥ ४० ॥ नारायणमिति । अणीयसामात्मनाम् ॥ ४१ ॥ ४२ ॥ पर इति । परस्मात् पुरुषात् ॥ ४३ ॥ सत्त्वादय इति । अतः सर्वभूतेभ्यः शुद्धः ॥ ४४ ॥ कलेति । शक्तिः लक्ष्मीविमहपरिजनपरिच्छदादिर्विभूतिः । "कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणाम-

दत्तात्रेयीयम् ।

कालतो गुणतश्च परिच्छेदरहितं । अप्रकारं प्रकारभेदरहितं । सर्वदैकप्रकारमित्यर्थः । लोके ये धामधराः प्रकाशवन्तः सूर्यादयस्तेषामाधारमाश्रयं । "यदादित्यगतं तेजो जग"दित्यादेः । अभेदिनं स्वावसारगुणादिषु भेदरहितं ॥ ४० ॥ अशेषाणामणीयसामणीयांसं । गरीयसां भूधरादीनां सकाशाद्गरिष्ठं । "अणोरणीयान्महतो महीयानि"तिश्रुतेः । अत्रापि नमामीत्यनुषङ्गः ॥ ४१ ॥ यत्रेत्यादियच्छब्दानां पुमानाद्यः प्रसीदत्वित्युत्तरेणान्वयः । सर्वभूतमयः सर्वभूतेषु प्रचुरः । पराणां ब्रह्मादीनामपि यः परः अवधिभूतः । "सा काष्ठा सा परा गति"रितिश्रुतेः ॥ ४२ ॥ तदेवोपपादयति—पर इति । परस्मात् पुरुषात् चतुर्मुखात् ॥ ४३ ॥ नैर्गुण्यश्रुतिः सत्त्वादिगुणराहित्यपरा न सर्वज्ञत्वादिगुणराहित्यपरेत्याह—सत्त्वादय इति ॥ ४४ ॥ कलाकाष्ठामुहूर्तादिकालसूत्रस्य सूत्रवच्चेष्टायमानस्य कालस्य गोचरे विषये यस्य शक्तिर्न वर्तते । अनादिनित्यत्वात्कालातीतेत्यर्थः । तत्रहेतुः—शुद्धस्येति । सत्त्वादिगुणरहितत्वेन शुद्धस्येत्यर्थः । सत्त्वादिप्रकृतिगुणवत्तायैव सामर्थ्यं कालपरिच्छिन्नं । ईश्वरस्तु शुद्धत्वात्कालापरिच्छिन्नैव

[ पा० ] १ घ. ज. ण. ट. ढ. भूतादीनां. २ घ. ङ. छ. भूतमयो देव॰. ज. ञ. ज. भूतश्च द॰ प्रोक्तः. ङ. भूतस्य यो देव॰. ३ ग. छ. भूतेभ्य . ४ क—ट. निमेषादि. ५ क—ट. प्रसीदतु स नो हरिः.

प्रोच्यते परमेशो हि यः शुद्धोऽप्युपचारतः ।
प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम् ॥४६॥
यः कारणं च कार्यं च कारणस्यापि कारणम् ।
कार्यस्यापि च यः कार्यं प्रसीदतु स नो हरिः ॥४७॥
कार्यकार्यस्य यत्कार्यं तत्कार्यस्यापि यः स्वयम् ।
तत्कार्यकार्यभूतो यस्ततश्च प्रणताः स्म तम् ॥४८॥
कारणं कारणस्यापि तस्य कारणकारणम् ।
तत्कारणानां हेतुं तं प्रणताःस्म परेश्वरम् ॥४९॥

विष्णुचित्तीयम् ।

नभयति । कालस्यापि प्रवर्तकत्वादित्यर्थः ॥ ४५ ॥ कारणस्य महदादेरपि कारणं । कार्यस्य आकाशादेरपि कार्यं कार्यस्यापि च, यः कार्यमपि । यदुक्तं "द्वितीयं कार्यं तस्यापि कार्यकार्यस्य यः कार्यं ।" ततश्चेति तस्मादपि जायमानकार्यभूतो य इत्यर्थः ॥ ४७ ॥ ४८ ॥ एवं कार्यमात्रात्मतामभिधायाधुना परादि-

श्रीधरीयम् ।

कत्वात्तस्य गोचरे विषये । यस्य शक्तिर्लक्ष्मीनं वर्तते । स्वरूपाभिन्नत्वान्नित्यैव सा कालगोचरवर्तिनी न भवतीत्यर्थः । अत एव तस्याः स्वरूपाभेदान्मुकुन्दस्येत्युक्तम् ॥ ४५ ॥ ननु यदि लक्ष्मीः तत्स्वरूपाभिन्ना कथं तर्हि लक्ष्म्याः पतिरित्युच्यते तत्राह—प्रोच्यत इति । परा चासौ मा च लक्ष्मीस्तस्या ईशः परमेशः । यश्शुद्धः केवलः उपचारतो भेदविवक्षया प्रोच्यते । द्वितीयो यच्छब्दः प्रसिद्धौ ॥ ४६ ॥ ४७ ॥ पूर्वश्लोकार्थं प्रपञ्चयति कार्यकार्यस्येत्यादि द्वाभ्याम्—कार्यकार्यस्येति । प्रकृतिकार्यस्य महतो यत्कार्यं-महङ्कारः तस्य कार्यभूतः सूक्ष्मवर्गः । तस्यापि कार्यं महाभूतवर्गः । तत्कार्यभूतं ब्रह्माण्डं । तस्य कार्यभूतो ब्रह्मदक्षादिवर्गः । ततश्च पुत्रपौत्रादिप्रवाहभूतो यस्स्वयमेव । तं प्रणताःस्मेत्यन्वयः ॥ ४८ ॥ तथा—कारणमिति । कारणं पुत्रपौत्रादिप्रवाहस्रष्टेः ब्रह्मादि । तस्य कारणं ब्रह्माण्डं । तस्य कारणं महाभू-

विष्णुचित्तीयम् ।

हेतुः" इत्यादेः ॥ ४५ ॥ प्रोच्यत इति । उपचारतः शुद्धो मुक्तः । पूर्वमविद्यान्तर्गतत्वेन शुद्धयभावात् । यः शुद्धोऽप्युपचारत इत्यन्वयः । अत्र हेतुः । आत्मा यः सर्वदेहिनाम् इति ॥ ४६ ॥ य इति । कारणं प्रकृतिः । महतः कारणत्वात् । कार्यं महान् । कारणस्य प्रकृतेरपि कारणं ब्रह्म । कार्यस्य महतः कार्यमहङ्कारः ॥ ४७ ॥ कार्यकार्यस्येति । कार्यकार्यस्य कार्यभूतमहत्कार्यस्य अहङ्कारस्य । कार्यं तन्मात्रपञ्चकं । तस्यापि कार्यं भूतपञ्चकं । तत्कार्यस्याण्डस्य कार्यं चतुर्मुखः । ततश्च कार्यमित्यनुषङ्गः । तत्कार्यं जगत् । तत्सर्वं यः स्वयमेव । तं प्रणताःस्मेत्यन्वयः ॥ ४८ ॥ कारणमिति । कारणस्य जग-

दध्यात्रेयीयम् ।

तच्छक्तिरिति भावः ॥ ४५ ॥ ननु यदि सत्त्वादिगुणरहितत्वेन परमात्मा शुद्धस्तर्हि "तदपरं ब्रह्मेति प्रकृतेर्गुणार्सपृक्तः परः पुरुष" इत्यादौ सत्त्वादिगुणयुक्तत्वोक्तिः कथमित्यत आह—प्रोच्यत इति । एको यच्छब्दः प्रसिद्धौ यः परमेशः परमाणां ब्रह्मादीनां ईशः अत एव शुद्धोऽपि बाधकत्वेन सत्त्वादिगुणरहितोऽप्युपचारतः जगत्सृष्ट्याद्यर्थं तद्ग्रहणमात्रेण सत्त्वादिमानित्युच्यते । सर्वदेहिनामात्मा अन्तर्यामि ॥ ४६ ॥ तदेवोपपादयति—य इत्यादिना । कारणं प्रकृतिः कार्यं महत्तत्त्वं । कारणस्य प्रकृतेरपि कारणं परिणामहेतुः । कार्यस्य महत्तत्त्वस्य कार्यमहङ्कारः ॥ ४७ ॥ कार्यकार्यस्य प्रकृतिकार्यस्य महत्तत्त्वस्य कार्यमहङ्कारस्तस्य कार्यं तन्मात्रादि । तस्यापि यत्कार्यं पञ्चमहाभूतानि तत्कार्यं ब्रह्माण्डं तस्य ब्रह्माण्डस्य कार्यं ब्रह्मदक्षादि । एतज्जगत्सर्वं यः स्वयमेव । तं प्रणताः स्मेत्यन्वयः ॥ ४८ ॥ उक्तमेव

— [ पा० ] १ घ. च. छ. ड. कार्यं कार्यस्य यः कार्यं. २ छ. ज—ड. कार्यं तस्यापि यत्स्वयं. ३ घ. ष. कार्यं कार्यवतो यश्च तत्सम. ४ छ. हेतुत्वं. ख. च. झ. ठ. ड. हेतुं स्तां. ५ ज. ट. ढ. परमेश्वरं. ६ क. ख. घ. ग. सुरेश्वरं. ल. म. महेश्वरं

भोक्तारं भोग्यभूतं च स्रष्टारं सृज्यमेव च ।
कार्यकर्तृस्वरूपं तं प्रणताःस्म परं पदम् ॥ ५० ॥
विशुद्धबोधवन्नित्यमजमक्षयमव्ययम् ।
अव्यक्तमविकारं यत्तद्विष्णोः परमं पदम् ॥ ५१ ॥
न स्थूलं न च सूक्ष्मं यत्र विशेषणगोचरम् ।
तत्पदं परमं विष्णोः प्रणमाम सदाऽमलम् ॥ ५२ ॥

विष्णुचित्तीयम् ।

कारणसर्वात्मरूपतामाह—कारणंकारणस्यापीति ॥ ४९ ॥ अविकारं अपरिणामं ॥ ५१ ॥ नविशेषणगोचरं

श्रीधरीयम् ।

तानि । तत्कारणं भूतसूक्ष्माणि । तत्कारणानामहङ्कारमहत्सूत्राणां हेतुं प्रधानभूतं प्रणताःस्मेत्यर्थः । प्रकृतेर्गुणक्षोभात् प्रथमं क्रियाशक्तिः सूत्रमुत्पद्यते । ततो ज्ञानशक्तिर्महत्तत्त्वं । ततोऽहङ्कार इति प्रक्रिया । तत्कारणानामित्यनेन बहुवचनान्तेनाहङ्कारमहत्सूत्राणां ग्रहणं । तदुक्तम्—"सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम्" इति । यद्वा प्रकृत्या सह तत्कारणानामिति बहुत्वं सम्पाद्य तद्धेतुं प्रकृतिभेरकमीश्वरं प्रणताःस्मेति योजनीयम् ॥ ४९ ॥ ५० ॥ विशुद्धमिति । विशुद्धं बोधं शुद्धं ज्ञानं । वृत्तिज्ञानं व्यावर्तयन् शुद्धत्वं दर्शयति—अव्यक्तमिति ॥ व्यक्तं विषयस्तद्रहितमविकारं चेति तदुपपादयति—नित्यमित्यादिना । अक्षयमनाधारं । तद्विष्णोः परमं पदं प्रणमामेत्युत्तरेणा-

विष्णुचित्तीयम् ।

त्कारणस्य चतुर्मुखस्य कारणमण्डं । तस्य कारणं भूतपञ्चकं । तत्कारणं तन्मात्रापञ्चकम् । तत्कारणानामहङ्कारप्रभृतीनां हेतुं कारणं । कारणावस्थं कार्यावस्थं च सर्वं त्वमेवेत्यर्थः ॥ ४९ ॥ भोक्तारमिति । भोज्यं भोग्यं शब्दादि । सृज्यं घटादि । कार्यं यागादि गत्यादि च । परं पदं परमं प्राप्यस्थानम् ॥ ५० ॥

दत्तात्रेयीयम् ।

स्पष्टयति—कारणमिति । महाण्डान्तःसृष्टेः कारणस्य ब्रह्मादेः कारणं महाण्डान्तस्य कारणं महाभूततत्त्वं । तस्य कारणं भूतसूक्ष्मं । तस्य कारणमहङ्कारः । तस्य कारणं महत्तत्त्वं । तत्कारणानां सत्त्वरजस्तमसां हेतुं कारणं त्वां प्रणताः स्मेति योजना ॥ ४९ ॥ भोज्यं शब्दादि । सृज्यं घटादि । कार्यं यागादि । कर्तृ यजमानादि । पदं स्वरूपं । अत्र "यः कारण"मित्यारभ्य "परंपद"मित्यन्तेन विष्णोः कारणाद्यभेदो नोच्यते । किन्तु तत्तदन्तर्यामित्वमेव । तेन तत्तच्छब्दप्रयोगोऽपि तस्मिन्नुपपद्यते । तदुक्तं मात्स्ये । "सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः । नतु सर्वस्वरूपत्वात्सर्वभिन्नो यतो विभु"रिति ॥ ५० ॥ विशुद्धबोधवत् विशुद्धज्ञानवत् । ज्ञानस्वरूपत्वेऽपि तद्वत्त्वविशेषणत्वमेवोपपद्यते । विशुद्धबोधनमिति पाठे विशुद्धज्ञानात्मकमित्यर्थः । वृत्तिज्ञानव्यावृत्त्यर्थं शुद्धमिति विशेषणं । तदेवोपपादयति—नित्यमित्यादिना । प्रवाहनित्यव्यावृत्त्यर्थमुक्तं अजमिति । अक्षयं ह्रासरहितं । अव्ययं चतुर्विधनाशरहितं । "अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेस्सदे"ति वचनात् । अव्यक्तं स्वत एवाव्यक्तं । "तदव्यक्तत्वमाहरी"ति वचनात् । अविकारं परिणामरहितं । तद्विष्णोः परमं पदं प्रणताः स्मेति पूर्वेणान्वयः ॥ ५१ ॥ नस्थूलमित्यादिना प्राकृतस्थौल्यादिकमेव निषिध्यते । अन्यथा "अणोरणीयान्महतो महीया"निति श्रुतिविरोधात् । नविशेषेण गोचरं साकल्येन गोचरं नेत्यर्थः । नविशेषणगोचर-

[ पा० ] १ क ख घ—ड भोज्य २ छ. रूप ३ छ. पद्मातर. ४ छ. बोधं यनित्य । ङ. ज. झ ट. ठ. बोधवं नित्यं. ५ क मक्षरमव्ययं ६ [दत्ता० पा०] विशेषेण.

यस्या युतायुतांशांशे विश्वशक्तिरियं स्थिता ।
परब्रह्मस्वरूपं यत्प्रणमामस्तमव्ययम् ॥ ५३ ॥
यद्योगिनः सदोद्युक्ताः पुण्यपापक्षयेऽक्षयम् ।
पश्यन्ति प्रणवेचिन्त्यं तद्विष्णोः परमं पदम् ५४ ॥
यत्र देवा न मुनयो न चाहं न च शङ्करः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥ ५५ ॥
शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिकाः ।
भवन्त्यभूतपूर्वस्य तद्विष्णोः परमं पदम् ॥ ५६ ॥
सर्वेश सर्वभूतात्मन्सर्व सर्वाश्रयाच्युत ।
प्रसीद विष्णो भक्तानां व्रज नो दृष्टिगोचरम् ५७

चित्सुखीयम् ।

विशेषणविरहितमितियावत् ॥ ५२ ॥ अयुतायुतांशांशे अत्यन्तात्यल्पतमांशे । विश्वशक्तिः विश्वसर्जनशक्तिः स्थिता । तावन्मात्रमेव विश्वजगत्सर्जनादौ पर्याप्तं । "पादोऽस्यविश्वाभूतानी"ति श्रुतेरित्यर्थः ॥ ५३ ॥ तर्हि सर्वविद्यत्वात् "तमेवविदित्वातिमृत्युमेती"तिश्रुतेर्वैयर्थ्यमाशङ्क्य योगेन विना अवेद्यत्वं योगेनपुनर्वेद्यत भवेत्याह—यद्योगिन इति । प्रणवे आलम्बने ॥ ५४ ॥ अभूतमविद्यमान पूर्वं कारणं यस्य तस्य अभूतपूर्वस्य । आश्चर्यभूतस्येतिवा ॥ ५६ ॥ सर्वभूतात्मन्निति । येकनात्मत्वामभिधाय तदुपाधिरूपता-

श्रीधरीयम् ।

न्वयः ॥ ५१ ॥ ५२ ॥ यस्यानन्तशक्तेरयुतायुतांशो मायाशक्तिलेशः तस्यांशो रजोगुणः । तस्मिन्नियं विश्वरचनाशक्तिः स्थिता । तं प्रणमामेत्यस्योत्तरश्लोकत्रयेप्यनुषङ्गः ॥ ५३ ॥ यदिति । पुण्यपापक्षये तत्प्रतिबन्धापगमे । प्रणवे पश्यन्ति महावाक्यविषयत्वात्तस्य ॥ ५४ ॥ ५५ ॥ शक्तय इति । अभूतपूर्वस्य न भूतः पूर्वः कश्चिदपि यस्मादनादेरित्यर्थः "यस्मान्न जातः परो अन्यो अस्ति य आविवेश

विष्णुचित्तीयम् ।

॥ ५१ ॥ ५२ ॥ यस्येति । अयुतांशो यः तस्यायुतांशो यः तस्यांशे स्थिता । मेरोरिवाणुः । पादोस्येत्यादिः विश्वशक्तिः जगन्मयी ॥ ५३ ॥ यदिति । अक्षयमिति पदच्छेदः ॥ ५४ ॥ ५५ ॥ शक्तय इति । अभूतपूर्वस्य न भूतं पूर्वं यस्मात् तस्य । स हि सर्वस्मात्पूर्वः । भूतपूर्वस्येति पाठे भूतानां पूर्व

रत्नगर्भीयम् ।

मिति पाठे विशेषणविशेष एव विवक्षितः ॥ ५२ ॥ यस्य परब्रह्मस्वरूपस्यायुतायुतांशस्य अनन्तांशोपलक्षणमेतत् । तेषामध्ये एकस्मिन्नंशे विश्वशक्तिः विश्वरचनशक्तिः स्थिता तं प्रणमाम । अस्योत्तरश्लोकत्रयेऽपि संबन्धः ॥ ५३ ॥ नविशेषणगोचरमित्येतदुपपादयति—यदिति । सदोद्युक्ताः श्रवणादिसाधनसंपादनायुक्ताः । पुण्यपापक्षये तद्रूपप्रतिबन्धापगमे । पुण्यं सकामं । निष्कामस्य मोक्षहेतुत्वेन प्रतिबन्धकत्वाभावात् । प्रणवे चिन्त्यं प्रणवार्थत्वेन विचार्य ॥ ५४ ॥ यस्य देवस्य शक्तयः स्वरूपभूताः शक्तयः । ब्रह्मविष्णुशिवात्मिकाः ब्रह्मविष्णुशिवस्वरूपाः । "ब्रह्मविष्णवीशरूपाणि त्रीणि विष्णोर्महात्मनः ॥ ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी जनार्दन" इति वचनात् । अभूतपूर्वस्य न भूतपूर्वं कारणं यस्य तस्य । अनादेरित्यर्थः । "यस्मान्न जातः परो अन्योऽस्ति य आविवेश भुवनानि विश्वे"तिश्रुतेः ॥ ५६ ॥ तदेवं स्तुत्वा प्रार्थयते—सर्वेशेति । सर्वभूतात्मन

स्वाम्यीयम् ।

इह दुर्वाससःशापात्तिरोधानं वियत्ततः । हरेः स्तुत्याऽब्धिमथनाच्छ्रियो जन्मादि वर्ण्यते ॥ देवादयो न जानन्ति अहं न जानामि शङ्करश्च न जानाति मनःशक्यत्वेन ज्ञानविषयत्वात् ॥ ५५ ॥

[ पा० ] १ ख—ङ ठ ढ सशक्तः २ क ए. छ प्रयतं ३ च स्थित ४ [ वि० वि० पा० ] भूताभूतपूर्वाणि. ५ ङ छ महात्मन.

श्रीपराशर उवाच ॥

इत्युदीरितमाकर्ण्य ब्रह्मणस्त्रिदशास्ततः ।
प्रणम्योचुः प्रसीदेति व्रज नो दृष्टिगोचरम् ॥५८॥
यत्रायं भगवान् ब्रह्मा जानाति परमं पदम् ।
तन्नताः स्म जगद्धाम त्वं सर्वगताच्युत ॥ ५९ ॥
इत्यन्ते वचसस्तेषां देवानां ब्रह्मणस्तथा ।
ऊचुर्देवर्षयस्सर्वे बृहस्पतिपुरोगमाः ॥ ६० ॥
आद्यो यज्ञः पुमानीड्यः पूर्वेषां यश्च पूर्वजः ।
तन्नताः स्म जगत्स्रष्टुः स्रष्टारमविशेषणम् ॥६१॥
भगवन्भूतभव्येश यज्ञमूर्तिधराव्यय ।
प्रसीद प्रणतानां त्वं सर्वेषां देहि दर्शनम् ॥ ६२ ॥
एष ब्रह्मा सहास्माभिः सह रुद्रस्त्रिलोचनः ।
सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः ॥६३
अश्विनौ वसवश्चेमे सर्वे चैते मरुद्गणाः ।
साध्या विश्वे तथा देवा देवेन्द्रश्चायमीश्वरः ६४
प्रणामप्रवणा नाथ दैत्यसैन्यैः पराजिताः ।
शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः ॥६५॥

श्रीपराशर उवाच ॥

एवं संस्तूयमानस्तु भगवाञ्छङ्खचक्रधृक् ।
जगाम दर्शनं तेषां मैत्रेय परमेश्वरः ॥ ६६ ॥
तं दृष्ट्वा ते तदा देवाः शङ्खचक्रगदाधरम् ।
अपूर्वरूपसंस्थानं तेजसां राशिमूर्जितम् ॥ ६७ ॥
प्रणम्य प्रणताः सर्वे संक्षोभस्तिमितेक्षणाः ।
तुष्टुवुः पुण्डरीकाक्षं पितामहपुरोगमाः ॥ ६८ ॥

देवा ऊचुः ॥

नमोनमोऽविशेषस्त्वं त्वं ब्रह्मा त्वं पिनाकधृक् ।
इन्द्रस्त्वमग्निः पवनो वरुणः सविता यमः ॥६९॥

विष्णुचित्तीयम् ।

मपि तस्य दर्शयति—सर्वेति ॥ ५७ ॥ आद्यः पुमानित्यन्वयः । यज्ञो विष्णुः ॥ ६१ ॥ अपूर्वेति । अदृष्टेन रूपेण संस्थानं सन्निवेशो यस्य तं ॥ ६७ ॥ संक्षोभेण संभ्रमेण स्तिमितमीक्षणं येषां ते तथोक्ताः

श्रीधरीयम् ।

भुवनानि विश्वा" इति श्रुतेः ॥ ५६ ॥ तदेवं स्तुत्वा प्रार्थयते—सर्वेशेति ॥ ५७ ॥ ५८ ॥ यत्रेति । जगद्धाम दिगन्तप्रकाशकम् । आश्रयभूतमिति वा ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ प्रणतानां प्रसीदेत्युक्तं । तानेव प्रणतानाहुरेष ब्रह्मेत्यादि त्रिभिः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तमिति । अपूर्वं रूपसंस्थानं दैहिकः सन्निवेशो यस्य तम् ॥ ६७ ॥ प्रणम्येति । पूर्वं प्रणता अपि भक्त्या पुनः प्रणम्य

विष्णुचित्तीयम् ।

इति ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तमिति । अपूर्वरूपसंस्थानं समस्तलोकविलक्षणवर्णाङ्गसन्निवेशम् ॥ ६७ ॥ प्रणम्येति । प्रणम्य पूर्वं प्रणता अपि

रत्नगर्भीयम् ।

सर्वभूतान्तर्यामिन् । सर्वं पूर्णं । गोचरं गोचरत्वं ॥ ५७ ॥ ५८ ॥ जगद्धाम जगदाधारभूत ॥ ५९ ॥ ब्रह्मणो देवानां च वचसोऽन्ते ॥ ६० ॥ यज्ञः पुमान् यज्ञो पूज्यपुरुषः अतएव ईड्यः स्तुत्यः । पूर्वेषां ब्रह्मादीनां पूर्वजः पूर्वं प्रादुर्भूतः जनीप्रादुर्भाव इति धातुः । जगत्स्रष्टुर्ब्रह्मणः । अविशेषणं स्वापेक्षयाऽतिशयरहित ॥ ६१ ॥ ६२ ॥ प्रणतानां प्रसीदेत्युक्तं । तानेव नामभिर्निर्दिशन्ति—एष ब्रह्मेति श्लोकत्रयेण । त्रिलोचनः प्रधानरुद्रः । एव पूषादावपि ॥ ६३ ॥ अपूर्वरूपसंस्थानं सर्वविलक्षणवर्णाङ्गसन्निवेशं ॥ ६७ ॥ पूर्वं प्रणता अपि भक्त्यतिशयात्पुनः प्रणम्य तुष्टुवुरिति सम्बन्धः ॥ ६८ ॥ अविशेष इति ।

[पा०] १ ख न प्रसीदेश २ च भज ३ ट नीच । ख च छ ज ट ङ त्रिज । ग त्रिल ४ न ष ट—ड य सरशो च । ख य परेषां न ५ ज ट ट देहि नो वर ६ ग घ च ज—ड पूर्वं ७ क सन्तोष ८ च, स ज, ग नमोनमस्ते विभवः

वसवो मरुतः साध्या विश्वेदेवगणा भवान् ।
योऽयं तवाग्रतो देव समस्तो देवतागणः ।
स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ॥७०॥
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः प्रजापतिः ।
विद्या वेद्यं च सर्वात्मंस्त्वन्मयं चाखिलं जगत् ॥७१॥
त्वामार्ताः शरणं विष्णो प्रयाता दैत्यनिर्जिताः ।
वयं प्रसीद सर्वात्मंस्तेजसाऽऽप्याययस्व नः ॥७२॥
तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् ।
यावन्न याति शरणं त्वामशेषाघनाशनम् ॥७३॥
त्वं प्रसादं प्रसन्नात्मन्प्रपन्नानां कुरुष्व नः ।
तेजसां नाथ सर्वेषां स्वशक्त्याऽऽप्यायनं कुरु ॥७४॥

श्रीपराशर उवाच ॥

एवं संस्तूयमानस्तु प्रणतैरमरैर्हरिः ।
प्रसन्नदृष्टिर्भगवानिदमाह स विश्वकृत् ॥७५॥

श्रीभगवानुवाच ॥

तेजसो भवतां देवाः करिष्याम्युपबृंहणम् ।
वदाम्यहं यत्क्रियतां भवद्भिस्तदिदं सुराः ॥७६॥
आनीय सहिता दैत्यैः क्षीराब्धौ सकलौषधीः ।
प्रक्षिप्यात्रामृतार्थं ताः सकला दैत्यदानवैः ।
मन्थानं मन्दरं कृत्वा [1] नेत्रं कृत्वा च वासुकिम् ।

चित्सुखीयम् ।

॥ ६८ ॥ आर्तिं दुःखप्रतिसन्धानजं भयम् ॥ ७३ ॥ ततस्मात् सर्वेषामस्माकं यानि तेजांसि वीर्याणि

श्रीधरीयम् ।

तुष्टुवुः ॥ ६८ ॥ नमोनम इति । अविशेषः शुद्धः परमात्मा । ब्रह्मादिरूपस्त्वमेव ॥ ६९ ॥७०॥७१॥ त्वामिति । तेजसा प्रभावादिना नः अस्मान् आप्याययस्व संवर्धयेत्यर्थः ॥ ७२ ॥ तावदिति । आर्तिः शत्रुपीडा । असुखं दुःखम् ॥ ७३ ॥ त्वमिति । स्वशक्त्या लक्ष्म्या ॥ ७४ ॥ भगवानिदमाहेत्यत्र श्रीमद्भागवते शुकमहर्षिणोक्ताभिप्रायं "एवं एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वरः । विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः" इति ॥ ७५ ॥ ७६ ॥ आनीयेति । क्षीराब्धौ क्षिपतेति शेषः । योक्त्रं (नेत्रं)

विष्णुचित्तीयम् ।

भक्त्या पुनः प्रणम्य ॥ ६८ ॥ नमोनम इति । अविशेषः सर्वसमः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ आनीयेति । ओषधीनां विचित्रशक्तित्वात्क्षीरे तत्तद्रसमर्पयामास॰

वृत्तार्थीयम् ।

विशेषो विशिष्ट उत्तमः स न विद्यते यस्मात्सोऽविशेषः । सर्वोत्कृष्टस्त्वमेवेत्यर्थः । स च महेन्द्रादिना ब्रह्मादिषु विष्णोर्विशेषस्यभिधानविवक्षया तत्तदन्तर्यामित्वमेवोच्यते । तत्त्वभेदः । जीवानां ततोऽत्यन्तभिन्नत्वात् । पूर्वोत्तरग्रन्थविरोधात् । एतदेवाभिप्रेत्योक्तम्—सर्वगतो भवानिति । तदुक्तं भविष्यत्पुराणे । "अन्तर्यामिस्वरूपेण ब्रह्मरुद्रादिभिन्नता । ननु जीवस्वरूपेण जीवा भिन्ना यतो हरे"रिति ॥ ६९ ॥७०॥ त्वन्मयं त्वत्प्रधानं ॥ ७१ ॥ वयमार्ता इति सम्बन्धः । तेजसा प्रभावादिना नोऽस्मान् आप्याययस्व संवर्धय ॥ ७२ ॥ आर्तिः शत्रुपीडा । वाञ्छा तृष्णा । मोहः चित्तभ्रमः । असुखं सुखाभावः ॥ ७३ ॥ तेजसां नाथ । नः सर्वेषां स्वशक्त्या आप्यायनं कुर्विति सम्बन्धः ॥ ७४ ॥ क्षीराब्धौ क्षिपतेति सम्बन्धः ।

रत्नगर्भीयम् ।

देवेन्द्रस्य पश्चान्निर्देशोऽपराधित्वात् ॥ ६४ ॥ वेद्यं वर्तमानं अवेद्यमतीतमनागतं च ॥ ७१ ॥

[ पा० ] १ ग ट छ न ट—ङ वतो २ ग ट समाप ३ क—ग तत्समेव नागष्ट ४ ■ षट्कार । ज ट—ङ वेशावेश । क—प च छ ण वेत्तावेश ५ ग ब्रह्म ६ ट छ स्वमित्याप्याशक ७ ङ त्वामस्त ८ ख सत्य प्रसीद ९ ख ट ण भगवानेव १० एतदर्थं ग पुष्मस्यात्र टश्त । ण मधु नास्ति ११ क—ङ यत्र

मथ्यताममृतं देवाः सहाये मय्यवस्थिते ॥७८॥
सामपूर्वं च दैतेयास्तत्र साहाय्यकर्मणि ।
सामान्यफलभोक्तारो यूयं वाच्या भविष्यथ ॥७९॥
मथ्यमाने च तत्राब्धौ यत्समुत्पत्स्यतेऽमृतम् ।
तत्पानाद्बलिनो यूयममराश्च भविष्यथ ॥८०॥
तथा चाहं करिष्यामि ते यथा त्रिदशद्विषः ।
न प्राप्स्यन्त्यमृतं देवाः केवलं क्लेशभागिनः ॥८१॥

श्रीपराशर उवाच ॥

इत्युक्ता देवदेवेन सर्व एव तदा सुराः ।
सन्धानमसुरैः कृत्वा यत्नवन्तोऽमृतेऽभवन् ॥८२॥
नानौषधीः समानीय देवदैतेयदानवाः ।
क्षिप्त्वा क्षीराब्धिपयसि शरदभ्रामलत्विषि ॥८३॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् ।
ततो मथितुमारब्धा मैत्रेय तरसाऽमृतम् ॥८४॥
विबुधाः सहिताः सर्वे यतः पुच्छं ततः कृताः ।
कृष्णेन वासुकेर्दैत्याः पूर्वकाये निवेशिताः ॥८५॥
ते तस्य मुखनिश्वासवह्नितापहतत्विषः ।
निस्तेजसोऽसुराः सर्वे बभूवुरमितौजसः ॥८६॥
तेनैव मुखनिश्वासवायुनास्तबलाहकैः ।
पुच्छप्रदेशे वर्षद्भिस्तदा चाप्यायिताः सुराः ॥८७॥

विष्णुचित्तीयम् ।

तेषामाप्यायनं श्रद्धया दुर्निरीक्षः ॥ ७४ ॥ नेत्रं मन्थानरज्जुं ॥ ७७ ॥ साहाय्यकर्मणि साहाय्यनिमित्तं । सामान्यफलभोक्तारो यूयं भविष्यथेति सामपूर्वं दैतेया भवद्भिर्वाच्या इत्यन्वयः ॥ ७९ ॥ अमराः मरणवर्जिताः ॥ ८० ॥ शरदभ्रस्येव अमला त्विट् दीप्तिर्यस्य पयसस्तस्मिन् ॥ ८३ ॥ एवं

श्रीधरीयम् ।

मन्थानरज्जुं कृत्वा ॥ ७७ ॥ मथ्यतामिति । मथ्यतां मथनेनामृतमुत्पाद्यतामित्यर्थः ॥७८॥ सामपूर्वमिति । सामपूर्वमुपपत्तिपूर्वकं । सामान्यं समानं यत्फलं तस्य भोक्तारो यूयं भविष्यथेति वाच्याः । युष्माभिरिति शेषः ॥ ७९ ॥ ८० ॥ यूयमिति । सामान्यवचनाच्छङ्कमानानप्रत्याह—तथा चेति । भो देवाः त्रिदशद्विषः युष्मद्द्विषः । केवलं क्लेशभागिनो यथा भविष्यन्ति तथाऽहं करिष्यामि ॥८१॥ इतीति । अमृते अमृतार्थम् ॥ ८२ ॥ नानौषधीरिति । शरदभ्रस्येव अमला त्विट् दीप्तिर्यस्मिन् ॥ ८३ ॥ मन्थानमिति । अमृतं मथितुमारब्धाः आरभतेः कर्तरि क्तः आरब्धवन्त इत्यर्थः ॥ ८४ ॥ ८५ ॥ ८६ ॥ तेनैवेति ।

विष्णुचित्तीयम् ।

नम् ॥ ७७ ॥ मथ्यतामिति । अमृतं मथ्यतां मथनेनामृतमुत्पाद्यताम् ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ त इति । अमितौजसस्तस्येत्यन्वयः ॥ ८६ ॥ तेनैवेति । वह्निनाल्पं

दत्तात्रेयीयम् ।

नेत्रं मन्थनरज्जुं ॥ ७७ ॥ अमृतं मथ्यतां अमृतमुद्दिश्य क्षीराब्धिर्मथ्यतामित्यर्थः ॥ ७८ ॥ तन्मथने साहाय्यकर्मणि विषये सामपूर्वमुपायपूर्वं यथाभवति तथा । सामान्यं समानं यत्फलं तस्य भोक्तारो यूयं भविष्यथ इति दैतेया वाच्या इत्यन्वयः । भवद्भिरिति शेषः ॥ ७९ ॥ कोऽतिशयोऽस्माकमितिजिज्ञासायामाह—मथ्यमान इति ॥ ८० ॥ तर्हि तेऽपि तथा भविष्यन्तीति शङ्का माभूदित्याह—तथा चेति । देवेशाः ते त्रिदशद्विषः युष्मद्द्विषः । केवलं क्लेशभागिनः यथा भविष्यन्ति तथा करिष्यामीत्यन्वयः ॥ ८१ ॥ सन्धानं प्रीतिं । अमृते अमृतार्थं ॥ ८२ ॥ शरदभ्रस्येव अमला त्विट् दीप्तिर्यस्य तस्मिन् ॥ ८३ ॥ आरब्धाः आरब्धवन्तः आरभतेः कर्तरि क्तः । अमृतमुद्दिश्य मथितुं । क्षीराब्धिमिति शेषः ॥ ८४ ॥ पूर्वकाये तस्यैव शिरोदेशे । निवेशिताः नियुक्ताः ॥ ८५ ॥ अमितौजसस्तस्येत्यन्वयः ॥ ८६ ॥ येन वासुकेः फणानिश्वासेन असुराणां दुःसहो वह्निरुत्पादितः । तेनैव

[पा० ] १ ङ साहाय्ये २ ग सामान्यकर्मणि. ३ ग ङ ढ. समुत्पाद्यते ४ ग तत्पीत्वा बलिनो ५ ख. घ. ग ङ ड ण्ण. ६ ग फणानिश्वसन्त्विषः । ढ. वह्निनाऽपहतत्विष । ग वह्निनोपहतत्विष ७ क. ख. च. ज—ढ. मितद्युते. ८ [वि० चि० पा०] वह्निनाल्पं बलाहकैः । [श्रीध० पा०] वह्निरल्पं बलाहकैः

क्षीरोदमध्ये भगवान्कूर्मरूपी स्वयं हरिः ।
मन्थनाद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ॥ ८८ ॥
रूपेणान्येन देवानां मध्ये चक्रगदाधरः ।
चकर्ष नागराजानं दैत्यमध्येऽपरेण च ॥ ८९ ॥
उपर्याक्रान्तवाञ्छैलं बृहद्रूपेण केशवः ।
तथाऽपरेण मैत्रेय यन्न दृष्टं सुरासुरैः ॥ ९० ॥
तेजसा नागराजानं तथाऽऽप्यायितवान्हरिः ।
अन्येन तेजसा देवानुपबृंहितवान्प्रभुः ॥ ९१ ॥
मथ्यमाने ततस्तस्मिन्क्षीराब्धौ देवदानवैः ।
हविर्धामाऽभवत्पूर्वं सुरभिः सुरपूजिता ॥ ९२ ॥
जग्मुर्मुदं ततो देवा दानवाश्च महामुने ।
व्याक्षिप्तचेतसश्चैव बभूवुः स्तिमितेक्षणाः ॥ ९३ ॥
किमेतदिति सिद्धानां दिवि चिन्तयतां ततः ।
बभूव वारुणी देवी मदाघूर्णितलोचना ॥ ९४ ॥
कृतावर्तात्ततस्तस्मात्क्षीरोदाद्वासयञ्जगत् ।
गन्धेन पारिजातोऽभूद्देवस्त्रीनन्दनस्तरुः ॥ ९५ ॥
रूपौदार्यगुणोपेतस्तथा चाप्सरसां गणः ।
क्षीरोदधेः समुत्पन्नो मैत्रेय परमाद्भुतः ॥ ९६ ॥
ततः शीतांशुरभवज्जगृहे तं महेश्वरः ।
जगृहुश्च विषं नागाः क्षीरोदाब्धिसमुत्थितम् ॥ ९७ ॥

विष्णुचित्तीयम् ।

निवेशनस्य फलमाह—तेनैवेति । अस्तबलाहकैः क्षिप्तैर्मेघैः ॥ ८७ ॥ हविषां पयोदधिप्रभृतीनां धाम आश्रयभूता ॥ ९२ ॥ व्याक्षिप्तचेतसः तल्लोभाकृष्टचित्ताः ॥ ९३ ॥ महत्त्वस्य लोकोत्कृष्टत्वस्य उपाय-

श्रीधरीयम् ।

येनासुराणां दुस्सहो बलिरुत्पादितः तेनैव वासुकेर्मुखनिःश्वासवायुना अस्तबलाहकैः क्षिप्तैर्मेघैः ॥ ८७ ॥ सहाये मध्ययस्थित इति यदुक्तं तत्साहाय्यमाह क्षीरोदमध्य इत्यादि चतुर्भिः ॥ ८८ ॥ ८९ ॥ ९० ॥ ॥ ९१ ॥ मथ्यमान इति । हविषः क्षीरदध्यादेर्धाम आश्रयभूता ॥ ९२ ॥ जग्मुरिति । व्याक्षिप्तचे-तसः तल्लोभाकृष्टचेतसः ॥ ९३ ॥ किमेतदिति । वारुणी मदिरा । देवी श्रीर्देवी ॥ ९४ ॥ कृतावर्ता-दिति । मन्दरभ्रमणेन कृतः आवर्तः अम्भःसमावर्तो यस्मात् ॥ ९५ ॥ ९६ ॥ तत इति । तं चन्द्रं विषं च महेश्वरो जगृहे । तच्छेषं नागाश्च जगृहुः । तदुक्तं "प्रसन्नं पिबतः पाणेर्यत्किञ्चिज्जगृहुः स्म तत् ।

विष्णुचित्तीयम् ।

बलाहकैरिति पाठे पुच्छे वह्निनालं भक्षीणमित्यर्थः । बलाहकैर्मेघरवा वृष्टैः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ॥ ९० ॥ ९१ ॥ मथ्यमान इति । हविर्धाम हविष आश्रयः ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ तत इति । आदौ भगवन्मनसो जातस्य चन्द्रस्य द्वौ देहौ तत्रैकोऽब्धिजः शिवशिरोभूषणम् । अन्यस्त्व-

रत्नगर्भीयम् ।

वासुकिमुखनिःश्वासवायुना अस्तबलाहकैः पुच्छप्रदेशे क्षिप्तैर्मेघैः वर्षद्भिः सुरा आप्यायिताः ॥ ८७ ॥ सहाये मध्ययस्थित इति यदुक्तं तदेव साहाय्यमाह—क्षीरोदमध्य इत्यादिना । अधिष्ठानमाधारः॥८८॥ देवानुपबृंहितवानित्युपलक्षणं । दैत्यानप्यन्येन रूपेणोपबृंहितवानित्यपि द्रष्टव्यं । "तथाऽसुरानाविश्य-सुरेण रूपेण तेषां बलवीर्यमीरयन्निति विभागवतोक्तेः ॥ ९१ ॥ हविर्धामा हविषः क्षीरादेर्धाम आश्रय-भूता सुरभिः कामधेनुः ॥ ९२ ॥ मन्दरभ्रमणेन कृता आवर्ताः यस्मिंस्तस्मात् । देवस्त्रीनन्दनः देवस्त्री-सन्तोषकरः ॥ ९५ ॥ जगृहुश्चेति चकारात् वासुकेश्वराभ्यामपि विषं गृहीतमिति समुच्चीयते । तथाहि वायुसूक्तं । "केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह" इति । "हरे विमथ्यमानेऽमृतं विषाय हृष्टौ स शि-

[ पा० ] १ ग. जनार्दन. २ ख ग. ड छ. ज म. ऊ. ठ मन्दराद्रे ३ ग. रत्न पुष्ठे ४ प. ठ. ड. भोगिराजानं. ५ छ. सुररम्भसा.

ततो धन्वन्तरिर्देवः श्वेताम्बरधरः स्वयम् ।
बिभ्रत्कमण्डलुं पूर्णममृतस्य समुत्थितः ॥९८॥
ततः स्वस्थमनस्कास्ते सर्वे दैतेयदानवाः ।
बभूवुर्मुदिताः सर्वे मैत्रेय मुनिभिः सह ॥९९॥
ततः स्फुरत्कान्तिमती विकासिकमले स्थिता ।
श्रीर्देवी पयसस्तस्मादुद्भूता धृतपङ्कजा ॥१००॥
तां तुष्टुवुर्मुदा युक्ताः श्रीसूक्तेन महर्षयः॥१०१॥
विश्वावसुमुखास्तस्या गन्धर्वाः पुरतो जगुः ।
घृताचीप्रमुखास्तत्र ननृतुश्चाप्सरोगणाः॥१०२॥
गङ्गाद्याः सरितस्तोयैः स्नानार्थमुपतस्थिरे ।
दिग्गजा हेमपात्रस्थमादाय विमलं जलम् ।
स्नापयांचक्रिरे देवीं सर्वलोकमहेश्वरीम्॥१०३॥
क्षीरोदो रूपधृक्तस्यै मालामम्लानपङ्कजाम् ।
ददौ विभूषणान्यङ्गे विश्वकर्मा चकार ह ॥१०४॥
दिव्यमाल्याम्बरधरा स्नाता भूषणभूषिता ।
पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः॥१०५॥
तया विलोकिता देवा हरिवक्षःस्थलस्थया ।
लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागताः॥१०६
उद्वेगं परमं जग्मुर्दैत्या विष्णुपराङ्मुखाः ।
त्यक्ता लक्ष्म्या महाभाग विप्रचित्तिपुरोगमाः॥

श्रीधरीयम् ।

वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे" इति ॥ ९७ ॥ तत इति । अमृतस्य कमण्डलुं तेनैव पूर्णं बिभ्रत्समुत्थितः ॥ ९८ ॥ तत इति । स्वस्थमनस्काः स्वस्थमनसो बभूवुः ॥ ९९ ॥ १०० ॥ तामिति । श्रीसूक्तेन हिरण्यवर्णामित्यादिपञ्चदशर्चेन ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ दिव्येति । पश्यतां

विष्णुचित्तीयम् ।

त्रिनेत्रजो लोकयात्रानियुक्तः । नागाश्चेति च शब्दान्महेश्वरोपि विषं जग्राह ॥ ९७ ॥ तत इति । अमृतस्य पूर्णमिति तृतीयार्थे षष्ठी ॥ ९८ ॥ ९९ ॥ तत इति । द्रवरूपमेकं द्रव्यमसूत जातम् । अन्यत्

वृत्तात्रेयीयम् ।

श्चिद्गिरिशाय धातुः" । इत्यादिना महाभारततात्पर्यनिर्णयेऽप्युक्तः ॥ ९७ ॥ अमृतस्य अमृतेन । बिभ्रत् धारयन् ॥ ९८ ॥ स्वस्थमनस्का बभूवुरिति सम्बन्धः ॥ ९९ ॥ श्रीसूक्तं । "अहरद्भि"रित्यादिकं । "हिरण्यवर्णा"मित्यादि पञ्चदशर्चं च ॥ १०१ ॥ सरितः तदभिमानिन्यो देवताः ॥ १०३ ॥ क्षीरोदः तदभिमानी वरुणः । अत्र क्षीराब्धिमथनोत्पन्नपदार्थानां विषादिक्रमेणैव भागवतादावुक्तोत्पत्तिक्रमापेक्षया बहुशो व्यत्यासो दृश्यते । स च दैत्यानां मोहार्थः । तदुक्तं स्कान्दे । "व्यत्यासेनापि चोच्यन्ते अविवेकेन कुत्रचित् । दुष्टानां मोहनार्थाय सर्वत्रैव कथा क्वचिदि"ति । अविवेकेनेत्यस्य विविच्य नोच्यन्त इत्यर्थः । न तु कर्तुरविवेकः । "सर्वज्ञस्य कुतोऽज्ञानं व्यासस्योदारकर्मणः" इति स्कान्दपुराणस्थोत्तरवाक्यविरोधात् । यद्वा । नैकेषु मन्वन्तरेषु समुद्रमथनस्य तत्तत्पुराणेषूक्तत्वात् । अयमप्युत्पत्तिक्रमः कश्चिन्मन्वन्तरविशेष इत्यूह्यः । मन्वन्तरभेदेन समुद्रमथनभेदस्तु । "अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम् । अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनो"रिति ब्रह्मपुराणवचनादवगन्तव्यः । अनन्तोढः अनन्ताख्यगरुडशेषारूढ इत्यर्थः । "योऽनन्तनामा गरुडस्तादृशके"इति महाभारततात्पर्यनिर्णयोक्तेरिति ॥ १०४ ॥ निर्वृतिं आनन्दं ॥ १०६ ॥ लक्ष्म्या त्यक्ताः कृपया तदवलोकनरहितत्वात् ॥ १०७ ॥

सत्यधर्मीयम् ।

हरेर्वक्षःस्थलमिति धर्मोद्भवस्थानत्वात्तदेव धर्मलभ्या श्रीर्ययौ अत एव धार्मिका देवास्तयाऽवलोकिता नतु

[पा० ] १ ग ङ च ज न ट ठ रात्र २ स—ञ ण ठ ढ दुस्थिता । छ ट दुष्टिता ३ क—ङ, मजन् ४ म ■ भूतानां ५ क—ग ङ—छ ततोऽवलोकिता ६ य उद्योग

ततस्ते जगृहुर्दैत्या धन्वन्तरिकरस्थितम् ।
कमण्डलुं महावीर्या यत्रास्तेऽमृतमुत्तमम्१०८॥
मायया मोहयित्वा तान्विष्णुः स्त्रीरूपसंस्थितः ।
दानवेभ्यस्तदादाय देवेभ्यः प्रददौ प्रभुः१०९॥
ततः पपुः सुरगणाः शक्राद्यास्तत्तदाऽमृतम् ।
उद्यतायुधनिस्त्रिंशा दैत्यास्तांश्च समभ्ययुः११०
पीतेऽमृते च बलिभिर्देवैर्दैत्यचमूस्तदा ।
वध्यमाना दिशो भेजे पातालं च विवेश वै१११
ततो देवा मुदा युक्ताः शङ्खचक्रगदाभृतम् ।
प्रणिपत्य यथापूर्वमशासंस्तत्त्रिविष्टपम् ॥११२॥
ततः प्रसन्नभाः सूर्यः प्रययौ स्वेन वर्त्मना ।
ज्योतींषि च यथामार्गं प्रययुर्मुनिसत्तम॥११३॥
जज्वाल भगवांश्चोच्चैश्चारुदीप्तिर्विभावसुः ।
धर्मे च सर्वभूतानां तदा मतिरजायत ॥११४॥
त्रैलोक्यं च श्रिया जुष्टं बभूव द्विजसत्तम ।
शक्रश्च त्रिदशश्रेष्ठः पुनः श्रीमानजायत ॥११५॥
सिंहासनगतः शक्रस्संप्राप्य त्रिदिवं पुनः ।
देवराज्ये स्थितो देवीं तुष्टावाब्जकरां ततः११६

इन्द्र उवाच ॥

नमस्ये सर्वलोकानां जननीमब्जसम्भवाम् ।
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम्११७
पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम् ।
वन्दे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ११८॥

श्रीधरीयम् ।

सर्वदैत्यानां तानननादत्तेत्यर्थः ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ॥ ११२ ॥ तत इति । स्वेन वर्त्मना दक्षिणोत्तरायणनियमेन । ज्योतींषि ताराः । महाः भौमादयः । यथामार्गं वक्रातिचारं विना ॥ ११३ ॥ ११४ ॥ ११५ ॥ सिंहासनगतः इति । दुर्वासःशापः शान्तेः पुनर्मा भूदियं तथैवाभिप्रायेण श्रियं मानयन् शक्रस्तुष्टाव ॥ ११६ ॥ स्तुतिप्रकारमाह—नमामीति ।

विष्णुचित्तीयम् ।

सोमात्मकम् ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ तत इति । स्वेन वर्त्मना अयनादिव्यत्यासं विना । यथामार्गं

वृत्ताभ्रेयीयम् ।

अथ धन्वन्तरिरूपस्य विष्णोर्दैत्यनिग्रहशक्तत्वेऽपि तेषां देवैःसममसृतं पास्याम इति कृतसत्यान्यानयनार्थं स्वहस्तात्सुधापात्रमनूसृपत् । ततस्तेजगृहुर्जेतुपत्रान् । यदुक्तं भारते । “तेभ्योऽसत्याहरणार्थं हरिर्धन्वन्तरिःप्रभुः । समर्थोऽप्यसुराणां स्वहस्तादमुचत्सुधां” इति ॥ १०८ ॥ प्रसन्नभाः स्पष्टदीप्तिः सन् स्वेन वर्त्मना दक्षिणोत्तरायणादिनियमेन । ज्योतींषि नक्षत्राणि । यथामार्गं वक्रातिचारं विना प्रययुः । महा इति शेषः ॥ ११३ ॥ जुष्टं युक्तं ॥ ११५ ॥ सिंहासनं राजासनं । देवराज्ये देवानामाधिपत्ये । दुर्वाससश्शापात्तिरोहितां पश्चादमृतमथनरूपात्प्रयत्नेनाविर्भूतां । तां देवीं पुनरेवं मा भूदिति भावेन तुष्टाव स्तुतिं कृतवान् ॥ ११६ ॥ स्तुतिप्रकारमेवाह—नमामीत्यादिना ॥ ११७ ॥ सिद्धिःअणिमादिः ।

रत्नगर्भीयम् ।

दैत्या इति भावः ॥ १०५ ॥ स्त्रीरूपं मोहिन्यवतारं ॥ १०९ ॥ अन्तरंभयां यागनायशारे

[ पा० ] १ ख—ट. तद्विजामृतं. २ क. देवैस्तान ३ ग घ. ञ. सोमविश. ४ ग—ङ. ञ. धम्. ५ ङ. पूर्वं. ६ [ श्रीध० पा० ] नमामि सर्वलोकानां. ७ ज. म. ८ —ङ. भूतानां ९ ग घ च सद्धि १ अयं श्लोक क—ए. ५. ठ. म. पुस्तकेषु दृश्यते । अन्येषु नास्ति. १० ग. दक्षे ११ ठ. त्रिपावराम् । ख. त्रियां दधौ.

त्वं सिद्धिस्त्वं स्वधा स्वाहा
सुधा त्वं लोकपावनी ।
सन्ध्या रात्रिः प्रभा भूति-
र्मेधा श्रद्धा सरस्वती ॥ ११९ ॥
यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ।
सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् १२१॥
का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः१२२

त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥ १२३ ॥
दाराः पुत्रास्तथाऽगारसुहृद्धान्यधनादिकम् ।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम्१२४
शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ।
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम्१२५॥
त्वं माता सर्वलोकानां देवदेवो हरिः पिता ।
त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् १२६
मा नः कोशं तथा गोष्ठं मा गृहं मा परिच्छदम् ।
मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि १२७॥

चित्सुखीयम् ।

ज्ञान महाविद्या । गुह्यविद्या रहस्ययोगादिविज्ञान ॥ १२० ॥ आन्वीक्षिकी तर्कविद्या । त्रयी वेदत्रयविषयज्ञान । वार्ता कृषिगोरक्षवाणिज्यादिपरिज्ञान । दण्डनीतिः दण्डयुक्तानीतिः ॥ १२१ ॥ समे-

श्रीधरीयम् ।

नमामि नमस्ते सर्वभूताना जननी त्वाम ॥ ११७ ॥ ११८ ॥ त्वमिति । सिद्धिरणिमादिः । प्रभा दिवसः ॥ ११९ ॥ यज्ञविद्येति । यज्ञविद्या कर्मविद्या । महाविद्या विश्वरूपाद्युपासना । गुह्यविद्या सद्याचरद्वादशाक्षरादिरहस्यमन्त्रविद्या । आत्मविद्या उपनिषच्छ्रतिपादितपरब्रह्मसाक्षात्कारहेतुभूता । एवं कर्मविद्यादिरूपेण विमुक्तिफलदायिनी त्वमेव ॥ १२० ॥ आन्वीक्षिकी तर्कविद्या त्वमेव । त्रयी वेद-त्रय । वार्ता शिल्पशास्त्रायुर्वेदादिः । दण्डनीतिः सामाद्युपायप्रतिपादिका राजनीतिः । एवमन्यैरपि सौम्यासौम्यैर्जगद्रूपैः त्वयैतद्देवि पूरितम् ॥ १२१ ॥ अतस्तव सौभाग्यमत्याश्चर्यमित्याह—केति । का पुनस्त्वदन्या गदाभृतो वपुरध्यास्ते । तद्वक्षसि वसतीत्यर्थः ॥ १२२ ॥ अतस्तदुपेक्षापरिग्रहयोरीदृश फल दृष्टमित्याह—त्वयेति । समेधित संवर्धितम् ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ मेति ।

विष्णुचित्तीयम् ।

धर्मातिचारवर्जम् ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ यज्ञेति । यज्ञविद्या धर्ममीमांसा । महाविद्या इन्द्रजालादिकुहकज्ञानम् । गुह्यविद्या मन्त्रवादविशेषः ॥ १२० ॥ आन्वीक्षिकीति । आन्वीक्षिकी तर्कशास्त्रम । दण्डनीतिरर्थशास्त्रम् ॥ १२१ ॥ १२२ ॥ १२३ ॥

दत्तात्रेयीयम् ।

प्रभा दिवसः । भूतिरैश्वर्यं ॥ ११९ ॥ यज्ञविद्या कर्मविद्या । महाविद्या ब्रह्मविद्या । गुह्यविद्या द्वादशाक्षरादिरहस्यमन्त्रविद्या । आत्मविद्या जीवस्वरूपविद्या ॥ १२० ॥ आन्वीक्षिकी वेदाङ्गभूता तर्कविद्या । त्रयी वेदत्रय । वार्ता शिल्पशास्त्रायुर्वेदादि । दण्डनीतिः सामाद्युपायप्रतिपादिका राजनीतिः । त्वया सौम्यासौम्यैः रूपैः जगत्पूरित । सौम्येषु सौम्यरूपैः असौम्येषु असौम्यरूपैर्जगद्व्याप्तमित्यर्थः । अनेन त्व सिद्धिरित्याद्युक्तिस्तत्तत्र सन्निधानैकपरा । न त्वभेदपरेति दर्शित ॥ १२१ ॥ अतस्तवसौभाग्यमत्याश्चर्यमित्याह—कात्विति । गदाभृतो देवदेवस्य सर्वयज्ञमय सर्वयज्ञेषु प्रधान । योगिचिन्त्यं ज्ञानिध्येय वपुस्त्वामृते त्वाविना । अन्या नाध्यास्ते तद्वक्षसि न काऽपि तिष्ठति । अतःसर्वोत्कृष्टा त्वमेवेत्यर्थः ॥ १२२ ॥ त्वत्कृपाकटाक्षस्यैश्वर्यहेतुत्वमन्वयव्यतिरेकाभ्यामित्याह—त्वयेत्यादिना । समेधितं संवर्धित ॥ १२३ ॥ अतस्त्व नोऽस्माकं कोशादिकं मा त्यजेथा इत्यन्वयः । परिच्छद परिकर ॥१२७॥

[पा०] १ रा सर्वसिद्धिस्त्व २ घ—छ जय ३ [वि० पा०] कोष्ठ

मा पुत्रान्मा सुहृद्वर्गं मा पशून्मा विभूषणम् ।
त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ॥ १२८ ॥
सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यज्यन्ते ते नराः सद्यः सन्त्यक्ता ये त्वयाऽमले ॥
त्वया विलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ।
कुलैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥ १३० ॥

स श्लाघ्यः स गुणी धन्यः
स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो
यस्त्वया देवि वीक्षितः ॥ १३१ ॥

सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १३२
न ते वर्णयितुं शक्ता गुणाञ्जिह्वाऽपि वेधसः ।
प्रसीद देवि पद्माक्षि मास्मांस्त्याक्षीः कदाचन ॥

श्रीपराशर उवाच ॥

एवं श्रीः संस्तुता सम्यक्प्राह देवी शतक्रतुम् ।
शृण्वतां सर्वदेवानां सर्वभूतस्थिता द्विज ॥ १३४ ॥

श्रीरुवाच ॥

परितुष्टाऽस्मि देवेश स्तोत्रेणानेन ते हरे ।
वरं वृणीष्व यस्त्विष्टो वरदाऽहं तवागता १३५

इन्द्र उवाच ॥

वरदा यदि मे देवि वरार्हो यदि वाऽप्यहम् ।
त्रैलोक्यं न त्वया त्याज्यमेष मेऽस्तु वरः परः ॥
स्तोत्रेण यस्तथैतेन त्वां स्तोष्यत्यब्धिसम्भवे ।
स त्वया न परित्याज्यो द्वितीयोऽस्तु वरो मम ॥

श्रीरुवाच ॥

त्रैलोक्यं त्रिदशश्रेष्ठ न सन्त्यक्ष्यामि वासव ।
दत्तो वरो मयाऽयं ते स्तोत्राराधनतुष्टया ॥ १३८ ॥
यश्च सायं तथा प्रातः स्तोत्रेणानेन मानवः ।
मां स्तोष्यति न तस्याहं भविष्यामि पराङ्मुखी ॥

श्रीपराशर उवाच ॥

एवं ददौ वरौ देवी देवराजाय वै पुरा ।
मैत्रेय श्रीर्महाभागा स्तोत्राराधनतोषिता ॥ १४० ॥
भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः ।
देवदानवयत्नेन प्रसूताऽमृतमन्थने ॥ १४१ ॥

---

श्रीधरीयम् ।

अतो गार्हस्थ्योऽस्माकं कोशादिकं मा त्यजेथाः । परिच्छदं परिकरम् ॥ १२७ ॥ १२८ ॥ सत्त्वेनेति । त्वया त्यक्तानामरिष्टं दृष्टमित्याह—त्वयाऽमलेति ॥ १२९ ॥ त्वदनुकम्पितस्तु समस्तगुणाधिवासो भवतीत्याह—त्वया विलोकिता इत्यादि द्वाभ्याम् ॥ १३० ॥ १३१ ॥ त्वदुपेक्षितस्य गुणा अपि दोषा भवन्तीत्याह—सद्य इति । वैगुण्यं सदोषत्वम् ॥ १३२ ॥ अतस्त्वद्गुणस्तुतौ न कोऽपि शक्त इत्याह—नेति । अतस्त्वद्गुणस्तुतौ न कोऽपि शक्त इति कृपयैव केवलं प्रसीदेति । वेधसोऽपि जिह्वा न शक्तेत्यन्वयः ॥ १३३ ॥ १३४ ॥ परितुष्टेति । हरे इन्द्र ॥ १३५ ॥ १३६ ॥ ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ प्रकृतं श्रियोऽवतारद्वयं निगमयन् प्रसङ्गादन्यानप्यवतारानाह

विष्णुचित्तीयम् ।

॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥ १३३ ॥ ॥ १३४ ॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥ एवमिति । तत्सहा-

दत्तात्रेयीयम् ।

सत्त्वेन बलेन ॥ १२९ ॥ त्वया परित्यक्तानामेतदखिलं भवतीत्याह—सद्य इति । वैगुण्यं विकलत्वं ॥ १३२ ॥ अतस्त्वद्गुणस्तुतौ न कोऽपि शक्तः । केवलं कृपयैव प्रसीदेति प्रार्थयन् स्तुतिमुपसंहरति—नत इति । वेधसोऽपि चतुर्मुखस्य जिह्वा नशक्ता ॥ १३३ ॥ हरे इन्द्र ॥ १३५ ॥ वरोत्तरः उत्तमोत्तरः ॥ १३६ ॥ अस्तु सपत्नता ॥ १३७ ॥ प्रकृतं श्रियोऽवतारद्वयं निगमयन् प्रसङ्गादन्यानपि तद्वता-

---

[ पा० ] १ ज. च ट ठ स्थलाश्रये. २ ग—छ कौलैश्वर्य ३ ड गुणान्ते ४ ग—छ य त्व दृषि निरीक्ष्यसे ५ ग—छ. हा दया । ज—ढ दृष्टा । स दृष्टा ६ ग पश्यता

एवं यदा जगत्स्वामी देवदेवो जनार्दनः ।
अवतारं करोत्येषा तदा श्रीस्तत्सहायिनी १४२
पुनश्च पद्मादुत्पन्ना आदित्योऽभूद्यदा हरिः ।
यदा तु भार्गवो रामस्तदाभूद्धरणी त्वियम् १४३
राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषाऽनपायिनी १४४॥
देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ॥
यश्चैतच्छृणुयाज्जन्म लक्ष्म्या यश्च पठेन्नरः ।
श्रियो न विच्युतिस्तस्य गृहे यावत्कुलत्रयम् १४६
पठ्यते येषु चैवेयं गृहेषु श्रीस्तुतिर्मुने ।
अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन १४७
एतत्ते कथितं ब्रह्मन्यन्मां त्वं परिपृच्छसि ।
क्षीराब्धौ श्रीर्यथा जाता पूर्वं भृगुसुता सती १४८
इति सकलविभूत्यवाप्तिहेतुः
स्तुतिरियमिन्द्रमुखोद्गता हि लक्ष्म्याः ।
अनुदिनमिह पठ्यते नृभिर्यै-
र्वसति न तेषु कदाचिदप्यलक्ष्मीः ॥१४९॥
इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
नवमोऽध्यायः ॥ ९ ॥

विष्णुचित्तीयम् । [cf. heading as printed: चित्सुखीयम्]

धितं वर्धितं ॥ १२३ ॥ कोष्ठ प्रकोष्ठ गृहवेष्टनभूमिः ॥ १२७ ॥ तत्सहायिनी तत्सहगामिनी ॥१४२॥ आदित्यो वामनः ॥ १४३ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे नवमोऽध्यायः ॥ ९ ॥

श्रीधरीयम् ।

—भृगोरित्यादिना यावदध्यायपरिसमाप्ति ॥ १४१ ॥ एवमिति । तत्सहायिनी तदनुवर्तनशीला ॥ १४२ ॥ पुनरिति । यदा हरिरादित्यो वामनोऽभूत् । भार्गवो जामदग्न्यः ॥ १४३ ॥ राघवत्व इति । सीता रावणादिदुष्टनिग्रहसाधनभूता ॥ १४४ ॥ १४५ ॥ १४६ ॥ पठ्यत इति । कलहाधारा कलह आधारो यस्याः सा अलक्ष्मीः अश्रीः । कलहोऽपि तेषु न भवतीत्यर्थः ॥१४७॥१४८॥१४९॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे नवमोऽध्यायः ॥९॥

विष्णुचित्तीयम् ।

यिनी तेनसह अयते गच्छतीति तत्सहायिनी तत्सहचारिणीत्यर्थः ॥ १४२ ॥ १४३ ॥ १४४ ॥ ॥ १४५ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे नवमोऽध्यायः ॥ ९ ॥

दत्तात्रेयीयम् ।

दानाह—भृगोरित्यादिना ॥ १४१ ॥ भर्गरक्षोः तत्सहायिनी तेनसह अयितु गन्तु शीलमस्या अस्तीति तत्सहायिनी । तदविनाभाविनीत्यर्थः ॥ १४२ ॥ तदेव दर्शयति । यदा हरिरादित्योऽदितिपुत्रो वामनोऽभूत्तदा पद्मात्सम्भूता । भार्गवो रामः परशुरामः ॥ १४३ ॥ रुक्मिणीत्युपलक्षणं सत्यभामाऽपि । अन्येषु नृपमावावतारेषु एषा जयन्तीत्यादिरूपेण सहायिनी ॥ १४४ ॥ एतदेवाह—देवत्वइति । विष्णोर्देहानुरूपा । वाराहाद्यवतारेषु वाराह्यादिरूपा ॥ १४५ ॥ कुलत्रय पुरुषत्रय ॥ १४६ ॥ कलहाधारा कलह आधारो यस्याः सा । कलहोऽपि तेषु न भवतीति भावः ॥ १४७ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्य श्रीविष्णुपुराणव्याख्यायां प्रथमांशे नवमोऽध्यायः ॥ ९ ॥

रत्नगर्भीयम् ।

॥ ११७ ॥ इति श्रीरत्नगर्भभट्टाचार्यविरचितश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे नवमोऽध्यायः ॥ ९ ॥

[ पा० ] १ [ दत्ता० पा० ] स्वभूता २ ख ट च ज—ड सहायिनी ३ ज—ड श्रीस्तवोमुने । ख श्रीस्थिति यदा । ग च श्रीस्तवामुने. ४ ग. घ. च. सर्व. ५ अयश्लोक क पुस्तके नास्ति. ६ ज. देवो .

## दशमोऽध्यायः ॥ १० ॥

भृगुमरीच्यादीनां सर्गकथनम् ॥ १ ॥ एकोनपञ्चाशदग्नीनामुत्पत्तिः ॥ २ ॥ अग्निष्वात्तादीनां सृष्टिः ॥ ३ ॥ दक्षकन्यासन्ततिश्रवणफलकथनं ॥ ४ ॥

श्रीमैत्रेय उवाच ॥

कथितं मे त्वया सर्वं यत्पृष्टोऽसि मया मुने ।
भृगुसर्गात्प्रभृत्येष सर्गो मे कथ्यतां पुनः ॥१॥

श्रीपराशर उवाच ॥

भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्विष्णुपरिग्रहः ।
तथा धातृविधातारौ ख्यात्यां जातौ सुतौ भृगोः ॥२॥
आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ।
भार्ये धातृविधात्रोस्ते तयोर्जातौ सुतावुभौ ॥३॥
प्राणश्चैवं मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ।
ततो वेदशिरा जज्ञे प्राणस्यापि सुतं शृणु ॥४॥
प्राणस्य द्युतिमान्पुत्रो राजवांश्च ततोऽभवत् ।
ततो वंशो महाभाग विस्तरं भार्गवो गतः ॥५॥
पत्नी मरीचेः संभूतिः पौर्णमासमसूयत ।
विरजाः पर्वतश्चैव तस्य पुत्रौ महात्मनः ।
वंशसङ्कीर्तने पुत्रान्वदिष्येऽहं ततो द्विज ! ॥६॥

विष्णुचित्तीयम् ।

ख्यातिस्सत्यथसंभूतिरित्यादिनिर्दिष्टानां पत्नीनां भृगुप्रभवो मरीचिश्चेत्यादिना अपत्याः कथिताः । तत्र भृगोर्वंशकथनानन्तरं भवस्य सताश्च वंशकथनं प्राप्तं । तथाऽपि दक्षकोपात्परित्यक्तदेहत्वात्तत्स्था-

श्रीधरीयम् ।

कथितमिति । पुनः भृगुसर्गात्प्रभृति भृगुसुतानुवादपूर्वकं भृगोर्वंशः कथ्यताम् । अन्यथा पूर्वापरस-म्बन्धाप्रतीतेरित्यर्थः ॥ १ ॥ अतो भृगोः सुताननुवदति—भृगोरिति । विष्णोः परिग्रहः पत्नी ॥ २ ॥ आयतिरिति । ताभ्यां तयोरायतिनियत्योः प्रत्येकम् ॥ ३ ॥ प्राणश्चेति । प्राणश्च मृकण्डुश्चेत्येवमुभौ जातावित्यन्वयः ॥ ४ ॥ ५ ॥ तदेवं चतुर्विंशतिदक्षकन्यानां मध्ये श्रद्धादीनां त्रयोदशानां धर्मभार्याणां

विष्णुचित्तीयम् ।

अथ संक्षेपेण श्रुतं भृगुसर्गं विस्तरतः श्रोतुं पृच्छति—कथितमिति ॥१॥ भृगोरिति । परिग्रहः कल-त्रम् ॥ २ ॥ आयतिरिति । तयोरायतिनियत्योः सुतावुभौ जातौ ॥३॥ तावेवाह—प्राणश्चेति । प्राणो मृकण्डुश्च । तत्र मृकण्डुतो मार्कण्डेयो जज्ञ इत्यन्वयः ॥ ४ ॥ ५ ॥ अथ क्रमप्राप्तं मरीचेः सम्भूत्यां

रत्नगर्भीयम् ।

पुनः भृगुसर्गात्प्रभृति । पूर्वापरसंबन्धकथाज्ञापनार्थं भृगुसुतानुवादपूर्वकमुक्तं । भृगुवंशः कथ्यता-मित्यर्थः ॥ १ ॥ विष्णुपरिग्रहः विष्णुपत्नी ॥ २ ॥ आयतिः नियतिश्च धातृविधात्रोः यथासङ्ख्यं भार्ये । ततो वेदशिरा जज्ञे । तस्यैव पुत्रान्तरमाह—प्राणस्येति । तयोरायतिनियत्योः प्रत्येकं प्राणश्च मृकण्डुश्चे-त्युभौ सुतौ जाताविति संबन्धः ॥ ३ ॥ ४ ॥ ततः पुत्रपौत्रादेः ॥ ५ ॥ एवं चतुर्विंशतिदक्षकन्यानां मध्ये श्रद्धादीनां त्रयोदशानां धर्मपत्नीनां मध्ये भृगोः ख्यात्यां जातो वंशो निरूपितः । सत्याश्च भव-भार्यायाः दक्षकोपादप्रसूतायाः एव देहत्यागोऽभवत् ततो वंशो नाभूदित्यतः क्रमप्राप्तान्मरीच्यादिभ्यः संभूत्यादिषु जातान्वंशानाह—पत्नी मरीचेरित्यादिना । मरीचेर्वंशान्तरमप्यस्तीत्याह—वंशसङ्कीर्तन इति ।

रत्नगर्भीयम् ।

प्रसङ्गानुप्रसङ्गात्तं निरूप्य श्रीसमुद्भवं । दशमे दक्षकन्यानां सृष्टिः शिष्टाऽनुवर्ण्यते । पौर्णमासं मह-

[पा०] १—ग. ट. घ. ब. ट. अत्रोत्तरार्ध । घ. अजपाप । ट. अज्ञातो क. २ ज सुतौ. ३ ठ. ग भृति. ४ घ. ग. भार्गो. ५ क. ख. घ. छ. ग. विरजः. ६ ग. ट—ठ. सर्वगश्चैव. ७ घ. न्वक्ष्येऽहं.

स्मृतिश्चाङ्गिरसः पत्नी प्रसूता कन्यकास्तथा ।
सिनीवाली कुहूश्चैव राका चानुमती तथा ॥७॥
अनसूया तथैवात्रेर्जज्ञे निष्कल्मषान्सुतान् ।
सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् ॥८॥
प्रीत्या पुलस्त्यभार्यायां दत्तोलिस्तत्सुतोऽभवत् ।
पूर्वजन्मनि योऽगस्त्यः स्मृतः स्वायंभुवेऽन्तरे ॥९॥
कर्दमश्चार्वरीवांश्च सहिष्णुश्च सुतास्त्रयः ।
क्षमा तु सुषुवे भार्या पुलहस्य प्रजापतेः ॥१०॥
क्रतोश्च सन्नतिर्भार्या वालखिल्यानसूयत ।
षष्टिः पुत्रसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
अङ्गुष्ठपर्वमात्राणां ज्वलद्भास्करतेजसाम् ॥११॥
ऊर्जायां तु वसिष्ठस्य सप्ताजायन्त वै सुताः ॥१२॥

चित्सुखीयम् ।

प्रशमवितस्य मरीचेर्वंशमाह—पत्नी मरीचेरिति ॥ ६ ॥ दृष्टचन्द्रा सिनीवाली । नष्टचन्द्रकला कुहूः ।

श्रीधरीयम् ।

यथा कथिता । अनन्तरं ख्यातिसत्याथ सम्भूतिरित्युद्दिष्टनामैकादशानां भृगुमहादेवमरीच्यादिभार्याणां मध्ये ख्यात्या भृगोर्वंशो निरूपितः । सत्याश्च भवभार्यायाः दक्षकोपात्प्रौढाया एव देहत्यागोचयात् तस्या वंशो नाभूदित्यर्थः । अतः क्रमप्राप्तं मरीचेः सम्भूत्यां जातं वंशमाह—पत्नी मरीचेरिति । यशःसङ्कीर्तनं इति मरीचेरेव कश्यपोऽन्यः पुत्रः । तत्पुत्रा विवस्वदादयः इत्यग्निमेंऽशे अदितिवंशसङ्कीर्तने वक्ष्यति । विवस्वतः श्राद्धदेवादयः । श्राद्धदेवस्येक्ष्वाकुप्रमुखा इत्यादि तत्सुतानां विस्तरतो वंशसङ्कीर्तने चतुर्थांशे वक्ष्यति । अत्र स्वल्पत्वात्पौर्णमासान्वयमात्रमुक्तमित्यर्थः ॥ ६ ॥ स्मृतिश्चेति । ता कन्या निर्दिशति सिनीवालीति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ क्रतोश्चेति । अङ्गुष्ठपर्वमात्राणाम् अङ्गुष्ठपर्वप्रमाणानाम् 'प्रमाणे मात्रच्' प्रत्ययः । अष्टाशीतिसहस्राणि नृपीणामिति पाठान्तरम् ॥ ११ ॥ १२ ॥

विष्णुचित्तीयम् ।

जातं वंशमाह—पत्नी मरीचेरिति । अत्राल्पसन्तानो मरीचेः पुत्रः पौर्णमास उक्तः । बहुसन्तानान् काश्यपविवस्वदादीन्पुत्रपौत्रादीनग्निमेंऽशे वंशसङ्कीर्तने आदित्योत्पत्तिप्रस्तावे तुरीयांशे सूर्यवंशप्रस्तावे च वक्ष्ये ॥ ६ ॥ ७ ॥ ८ ॥ प्रीत्यामिति । तत्सुतः तस्य पुलस्त्यस्यौरसः सुतः ॥ ९ ॥ १० ॥ ११ ॥

वृत्तात्रेयीयम् ।

मरीचेरेव कश्यपोऽन्यः पुत्रोऽस्ति । तत्पुत्रा द्वादशादित्या इत्यग्निमेंऽशे अदितिवंशसङ्कीर्तने वक्ष्ये । तथा चतुर्थांशे सूर्यवंशसङ्कीर्तने मरीचेः कश्यपस्तस्माद्विवस्वदादयः । विवस्वतः श्राद्धदेवादयः । श्राद्धदेवस्येक्ष्वाकुप्रमुखाः पुत्रा इत्यादि तत्पुत्राणां विस्तरतो वंशकीर्तने वंशान्वक्ष्य इत्यर्थः । अत्र तु स्वल्पत्वात्पौर्णमासान्वय एवोक्त इति भावः ॥ ६ ॥ प्रसूता प्रसूतवती । ता कन्या निर्दिशति—सिनीवालीति । चतुर्दशीयुक्ताऽमावास्या सिनीवाली । प्रतिपद्युक्ता सैव कुहूः । चतुर्दशीयुक्ता पूर्णिमा राका । प्रतिपद्युक्ता सैव अनुमतिः । पुत्राणामाकथनमप्रसिद्धेः । प्रतिपादनमात्रस्य विवक्षितत्वात् ॥ ७ ॥ जज्ञे जनयामास । "अनसूया तथैवात्रेर्जज्ञे सुयशसः सुतान् । दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवानि"ति भागवते । ब्रह्मपदेन ब्रह्मसन्निधानवान्सोम एवोच्यते । ननु साक्षाद्ब्रह्मा तस्यावताररहितत्वात् । तदुक्तं ब्रह्मवैवर्ते । "ब्रह्मणो नावतारोऽस्ति सन्निधानन्तु केवलमि"ति । अतो न तेनास्य विरोध इति भावः ॥ ८ ॥ तत्सुतः तस्य पुलस्त्यस्य सुतः । पूर्वजन्मनि स्वायंभुवमन्वन्तरे । दत्तोलिः स इदानीमगस्त्यः स्मृत इति सम्बन्धः ॥ ९ ॥ क्षमानाम्नी पुलहभार्या ॥ १० ॥ ऋषीणां वालखिल्यानां तेषां सङ्ख्यामाह । षष्टिरिति

[पा०] १ न ग ज पुत्रान् । २ क ख घ ङ छ दत्तालिः । ग च दत्तोलिः । ज ट ठ दम्भोलि । ३ न ख ढ धर्मेश । ४ [श्रीध० पा०] अष्टाशीतिसहस्राणि ऋषीणां ।

रजो गोत्रोर्ध्वबाहुश्च सवनश्चानघस्तथा ।
सुतपाः शुक्र इत्येते सर्वे सप्तर्षयोऽमलाः ॥१३॥
योऽसावग्न्यभिमानी स्याद्ब्रह्मणस्तनयोऽग्रजः ।
तस्मात्स्वाहा सुतांल्लेभे त्रीनुदारौजसो द्विज १४
पावकं पवमानं तु शुचिं चापि जलाशिनम् १५
तेषां तु सन्ततावन्ये चत्वारिंशच्च पञ्च च ।
कथ्यन्ते वह्नयश्चैते पितापुत्रत्रयं च यत् ॥ १६ ॥
एवमेकोनपञ्चाशद्वह्नयः परिकीर्तिताः ॥ १७ ॥
पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया द्विज ।
अग्निष्वात्ता बर्हिषदोऽनग्नयः साग्नयश्च ये ॥१८॥
तेभ्यः स्वधा सुते जज्ञे मेना वै धारिणीं तथा ।
ते उभे ब्रह्मवादिन्यौ योगिन्यावप्युभे द्विज१९॥
उत्तमज्ञानसंपन्ने सर्वैः समुदितैर्गुणैः ॥ २० ॥

श्रीधरीयम् ।

रज इति । सप्तर्षयस्तृतीये मन्वन्तरे ॥ १३ ॥ योऽसाविति । अग्न्यभिमानी अग्न्यभिमानी देवः स तु ज्वलनमानदेहः ब्रह्मणस्तनयोऽग्रजः "मुखादग्निरजायत" इति श्रुतेः । उदारौजसः अतितेजस्विनः ॥ १४ ॥ पावकमिति । जलाशिन सूर्यस्थत्वात् । तथा च कौर्मे "निर्मन्थ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्ये शुचिरग्निरसौ स्मृतः" इति । पावकादीन्त्रीन् सुतान् लेभे इति पूर्वेणान्वयः ॥ १५ ॥ तेषामिति । तेषां त्रयाणां पञ्चदश पञ्चदश पञ्चदशेति पञ्चचत्वारिंशद्वह्नयः । पिता ब्रह्मपुत्र एकः । तत्पुत्रत्रयं पावकादि ॥ १६ ॥ एवमिति । एवमेकोनपञ्चाशद्वह्नयः ॥ १७ ॥ पितर इति । अग्निष्वात्ता अनग्नय अयज्वानः । बर्हिषदः साग्नयो यज्वानः । "ये वा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ता ये वै यज्वानस्ते पितरो बर्हिषदः" इति श्रुतेः ॥ १८ ॥ तयोर्मियाहादिक

विष्णुचित्तीयम् ।

॥ १२ ॥ रज इति । सप्तर्षय इत्येते तृतीये मन्वन्तरे सप्तर्षयो वक्ष्यन्ते ॥ १३ ॥ सर्गप्रसङ्गादग्निसर्गमाह—योऽसाविति ॥ १४ ॥ पावकमिति । यथा कौर्मे "निर्मन्थ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्ये शुचिरग्निरसौ स्मृतः" इति । जलाशिनमिति शुचिविशेषणम् ॥ १५ ॥ तेषामिति । पितृपुत्रत्रय पिता पुत्रत्रयं च । त्रयः पुत्राः प्रत्येक पञ्चदश पुत्रकाः ॥ १६ ॥ १७ ॥ पितर इति । अग्निष्वात्ता अयज्वानोऽमूर्तास्त्रयो गणाः । बर्हिषदो यज्वानो मूर्तिमन्तश्चत्वारः । अग्निष्वात्तसुता मेना

दयात्रेयीयम् ।

॥ ११ ॥ १२ ॥ रजो गोत्रोर्ध्वबाहुरितिनामत्रयं । मन्धिश्छान्दसः । सप्तर्षय इत्येते तृतीये मन्वन्तरे सप्तर्षयोवक्ष्यन्ते ॥ १३ ॥ अग्न्यभिमानी मूतान्यभिमानी । अग्निशब्दवाच्यो देवः । "मुखादिन्द्रश्चाग्निश्च"तिश्रुतेः मुखाज्जातत्वाद्ब्रह्मणस्तनयोऽग्रजः । उदारौजसः अतितेजस्विनः ॥ १४ ॥ जलाशिनमिति शुचिविशेषण । तस्य सूर्यस्थत्वात् । तदुक्तं कौर्मे । "निर्मन्थ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्ये शुचिरग्निरसौस्मृतः"इति ॥ १५ ॥ तेषां पावकादीनां त्रयाणां प्रत्येकं पञ्चदश पञ्चदश पञ्चदशेति पञ्चचत्वारिंशद्वह्नयः । पिता ब्रह्मपुत्रो मूलाग्निरेकः । तत्पुत्राः पावकादयस्त्रयः ॥ १६ ॥ एवमेकोनपञ्चाशद्वह्नयः ॥ १७ ॥ अग्निष्वात्ता अनग्नयोऽयज्वान अमूर्तास्त्रयो गणाः । बर्हिषदः साग्नयो यज्वानो मूर्ताश्चत्वारो गणाः । "येवा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ताः । ये वै यज्वानस्ते

[ पा० ] १ क—च. घ. ट—ड. गात्रोर्ध्व २ घ शाकाग्निरेषं ३ ख भ—ण नली ४ घ ङ ठ ग. ग ङ ठ समुदिते.

इत्येषा दक्षकन्यानां कथितापत्यसन्ततिः ।
श्रद्धावान्संस्मरन्नेतामनपत्यो न जायते ॥ २१ ॥

इति श्रीविष्णुपुराणे पूर्वभागे प्रथमांशे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

स्वायंभुवमनोः पुत्रद्वयानुवादपूर्वकं उत्तानपादवंशकथनम् ॥ १ ॥ तत्र ध्रुवोपाख्यानकथनम् ॥ २ ॥ तपसी मातुः सुरुच्याः दुरुक्तिभिर्लंघितस्य पञ्चवर्षस्य ध्रुवस्य तपसे वनगमनम् ॥ ३ ॥ मध्येमार्गं ध्रुवेण सह मरीच्यादिसप्तर्षीणां संवादः ॥ ४ ॥ ध्रुवं प्रति सप्तर्षिभिः विष्ण्वाराधनविधिकथनं वासुदेवद्वादशाक्षरमन्त्रोपदेशश्च ॥ ५ ॥

श्रीपराशर उवाच ॥

प्रियव्रतोत्तानपादौ मनोः स्वायंभुवस्य तु ।
द्वौ पुत्रौ तु महावीर्यौ धर्मज्ञौ कथितौ तव ॥ १ ॥
तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः ।
अभीष्टायामभूद्ब्रह्मन् पितुरत्यन्तवल्लभः ॥ २ ॥
सुनीतिर्नाम या राज्ञस्तस्यासीन्महिषी द्विज ।
स नाति प्रीतिमांस्तस्यामभूद्यस्या ध्रुवः सुतः ॥ ३ ॥

चित्सुखीयम् ।

पूर्णचन्द्रा पौर्णमासी राका । सैवैककला हीनचन्द्रा अनुमतिः ॥ ७ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे दशमोऽध्यायः ॥ १० ॥

श्रीधरीयम् ।

नाभूदिलाह—ते उभे इति ॥ १९ ॥ २० ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे दशमोऽध्यायः ॥ १० ॥

मनोः कन्यान्वयः प्रोक्तः पुत्रवंशोऽधुनोच्यते । अत्राध्यायत्रयेणाह ध्रुवस्य चरितं महत् । श्रीधरीयोऽयं श्लोकः । मनोः द्वौ पुत्रौ द्वे कन्ये च । तत्र कन्ययोर्वंश उक्तः । इदानीं पुत्रद्वयानुवादपूर्वकम् उत्तानपादवंशमाह—प्रियव्रतेत्यादिना ॥ १ ॥ तयोरिति । तयोर्मध्ये उत्तानपादस्य सुरुच्यां सुनीति-

विष्णुचित्तीयम् ।

॥ १८ ॥ १९ ॥ २० ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे दशमोऽध्यायः ॥ १० ॥

मनोर्दौहित्रो वंश उक्तः । अथ तत्पुत्रान्वयं वक्तुमनुवदति—प्रियव्रतेति ॥ १ ॥ २ ॥ ३ ॥

दत्तात्रेयीयम् ।

पितरो बर्हिषदः" इति श्रुतेः ॥ १८ ॥ जज्ञे जनयामास ॥ १९ ॥ संस्मरन् अवधारयन् ॥ २१ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्य श्रीविष्णुपुराणव्याख्यायां सुबोधिन्यां प्रथमांशे दशमोऽध्यायः ॥ १० ॥

स्वायंभुवमनोर्दौहित्रो वंश उक्तः । इदानीं तत्पुत्रान्वयं वक्तुं पुत्रद्वयमनुवदति—प्रियव्रतेति ॥ १ ॥ प्रियव्रतवंशस्यातिविस्तृतत्वाचमुत्तरत्र वक्ष्यामः । प्रथमत उत्तानपादवंशमाह—तयोरिति । तयोर्मध्ये उत्तानपादस्य सुरुच्यां कनिष्ठपत्न्यां उत्तमो नाम सुतोऽभूत् ॥ २ ॥ तस्योत्तानपादस्य सुनीतिर्नाम ज्येष्ठ-

रत्नगर्भीयम् ।

पिष्टलब्देवं ॥ ६ ॥ इति श्रीरत्नगर्भभट्टाचार्यविरचितश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे दशमोऽध्यायः ॥ १० ॥

परार्द्धेऽतिबालोऽपि वाङ्मुग्नः सुरुच्योक्तैः । निर्गतो मुनिभिः सम्यगुपदिष्टोऽनुवर्ण्यते ॥ अविवे-

[ पा० ] १ म. धार्मिकौ २ छ. तस्यां यस्यां जज्ञे ध्रुव सुत .

राजासनस्थितस्याङ्कं पितुर्भ्रातरमाश्रितम् ।
दृष्ट्वोत्तमं ध्रुवश्चक्रे तमारोढुं मनोरथम् ॥ ४ ॥
प्रत्यक्षं भूपतिस्तस्याः सुरुच्या नाभ्यनन्दत ।
प्रणयेनागतं पुत्रमुत्सङ्गारोहणोत्सुकम् ॥ ५ ॥
सपत्नीतनयं दृष्ट्वा तमङ्कारोहणोत्सुकम् ।
स्वपुत्रं च तथाऽऽरूढं सुरुचिर्वाक्यमब्रवीत् ॥ ६ ॥
क्रियते किं वृथा वत्स महानेष मनोरथः ।
अन्यस्त्रीगर्भजातेन ह्यसंभूय ममोदरे ॥ ७ ॥
उत्तमोत्तममप्राप्यमविवेको हि वाञ्छसि ।
सत्यं सुतस्त्वमप्यस्य किं तु न त्वं मया धृतः ॥ ८ ॥
एतद्राजासनं सर्वभूभृत्संश्रयकेतनम् ।
योग्यं ममैव पुत्रस्य किमात्मा क्लिश्यते त्वया ॥ ९ ॥
उच्चैर्मनोरथस्तेऽयं मत्पुत्रस्येव किं वृथा ।
सुनीत्यामात्मनो जन्म किं त्वया नावगम्यते ॥ १० ॥

विष्णुचित्तीयम् ।

राजासनस्थितस्य पितुरुत्सङ्गमाश्रितं दृष्ट्वेत्यन्वयः ॥ ४ ॥ स सापत्नीतनयं ध्रुवमङ्कारोहणोत्सुकं तथा स्वपुत्रमुत्तमञ्च अङ्कारूढं दृष्ट्वा सुरुचिरवददित्यन्वयः ॥ ६ ॥ सर्वेषां भूभृतां राज्ञां संश्रयः संश्रयणं तस्य केतनं स्थानं । अथवा संश्रयकेतनं चिह्नं यस्येति समासः । उभयथाऽपि सर्वराजसेवितमिति यावत्

श्रीधरीयम् ।

रिति द्वे भार्ये । तस्य सुरुच्याम् अभीष्टाया प्रेयस्यामुत्तमो नाम पुत्रोऽभूत् ॥ २ ॥ ३ ॥ राजास नेति । राजासनस्थितस्य पितुरङ्कम् उत्सङ्गमाश्रितं भ्रातरमुत्तमं दृष्ट्वा तमङ्कमारोढुं ध्रुवो मनोरथं चक्र इत्यन्वयः ॥ ४ ॥ प्रत्यक्षमिति । सुरुच्या प्रेयस्या प्रत्यक्षं समक्षं । तत्प्रणयभङ्गभयात् ध्रुवं नाभ्य नन्दत ॥ ५ ॥ सपत्नीतनयमिति । स ध्रुवं पितुरङ्कारोहणोत्सुकं दृष्ट्वा, तथा स्वपुत्रं च तदङ्कारूढं दृष्ट्वा, सुरुचिरब्रवीदित्यन्वयः ॥ ६ ॥ सुरुच्या दुरुक्तिमसहमानो ध्रुवः, क्रोशितं पितरं विहाय, मातुस्समीपं गत्वा, दुःखितायास्तस्या अनुमत्या पुरान्निर्गत्य, सप्तर्षीणामुपदेशेन मधुवने भगवन्तमाराध्य, सर्वोत्तमं पदं प्रापेति क्रमेण कथयिष्यन्, सुरुच्या गर्वोक्तिमाह—क्रियते किमित्यादिचतुर्भिः ॥ ७ ॥ उत्तमोत्तममिति । अविवेकः अमतिः ॥ ८ ॥ एतदिति ॥ एतद्राजासनं सर्वभूभृतां सार्वभौमस्य चक्रवर्तिनः केतनं स्थानं, मत्पुत्रस्यैव योग्यम् ॥ ९ ॥ उच्चैरिति ॥ न हि राजपुत्रमात्रलभ्यमे-

विष्णुचित्तीयम् ।

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ एतदिति । पूर्वोक्तम् उत्तमत्वमाह—सर्वेति । सर्वभूभृदाश्रयकेतनमिति च पाठः । सर्वभूभृतामाश्रयस्य सार्वभौमस्य केतनं स्थानम् ॥ ९ ॥ उच्चैरिति । उच्चैर्मनोरथः उच्चासना

वतात्रयीयम् ।

पत्नी । अत एव महिषी पट्टाभिषिक्ता । तस्यां ध्रुवस्सुतोऽभूत् ॥ ३ ॥ राजासनस्थितस्य पितुरङ्कमुत्स ङ्गमाश्रितं भ्रातरमुत्तमं दृष्ट्वा स्वयमपि तमङ्कमारोढुं ध्रुवो मनोरथं चक्रे ॥ ४ ॥ सुरुच्या प्रेयस्या प्रत्यक्षं समक्षं तत्स्नेहभङ्गभयात् प्रणयेनागतमङ्कारोहणोत्सुकं पुत्रं ध्रुवं नाभ्यनन्दत ॥ ५ ॥ सपत्नीतनयं पितु रङ्कारोहणोत्सुकं तं ध्रुवं दृष्ट्वा तथा स्वपुत्रमङ्कारूढं दृष्ट्वा सुरुचिर्वाक्यमब्रवीदित्यन्वयः ॥ ६ ॥ तद्वाक्य- मेवाह—क्रियत इत्यादिना । असंभूय अभूत्वा ॥ ७ ॥ उत्तमोत्तममुत्तमाद् यद्राजासनादुत्तमं चक्रव र्तिस्थानं मत्पुत्रादन्येनाप्राप्यं । अविवेको मन्दमतिः ॥ ८ ॥ सर्वभूभृत्संश्रयकेतनं सर्वेषां भूभृतां संश्र यस्य चक्रवर्तिनः सार्वभौमस्य केतनस्थानमेतत् राजासनं मत्पुत्रस्यैव योग्यं ॥ ९ ॥ आत्मा अन्तःकरण

रत्नगर्भीयम् ।

कादीत्यपि पाठः । अहमपि चक्रवर्तिसुत इति चेदत आह—सत्यमिति । सत्यमपि तथात्वे मद्गर्भाधृतत्वात्तेप ते मनोरथो वृथेति पूर्वेणान्वयः ॥ ८ ॥ राजानं तूष्णीभूतमालोक्याधिगर्वादुत्तमेवार्थं पुनराह ।

[ पा० ] १ ठ स्वस २ ठ विवेकादि ३ [वि० चि० पा] भूभृदाश्रयकेतन

श्रीपराशर उवाच ॥

उत्सृज्य पितरं बालस्तच्छ्रुत्वा मातृभाषितम् ।
जगाम कुपितो मातुर्निजाया द्विज मन्दिरम् ११॥
तं दृष्ट्वा कुपितं पुत्रमीषत्प्रस्फुरिताधरम् ।
सुनीतिरङ्कमारोप्य मैत्रेयेदमभाषत ॥ १२ ॥
वत्स कः कोपहेतुस्ते कश्च त्वां नाभिनन्दति ।
कोऽवजानाति पितरं वत्स यस्तेऽपराध्यति १३॥

श्रीपराशर उवाच ॥

इत्युक्तः सकलं मात्रे कथयामास तद्यथा ।
सुरुचिः प्राह भूपालप्रत्यक्षमतिगर्विता ॥ १४ ॥
विनिःश्वस्येति कथिते तस्मिन्पुत्रेण दुर्मनाः ।
श्वासक्षामेक्षणा दीना सुनीतिर्वाक्यमब्रवीत् १५

सुनीतिरुवाच ॥

सुरुचिः सत्यमाहेदं मन्दभाग्योऽसि पुत्रक ।
न हि पुण्यवतां वत्स सपत्नैरेवमुच्यते ॥ १६ ॥
नोद्वेगस्तात कर्तव्यः कृतं यद्भवता पुरा ।
तत्कोऽपहर्तुं शक्नोति दातुं कश्चाकृतं त्वया १७॥
[तत्त्वया नात्र कर्तव्यं दुःखं तद्वाक्यसम्भवम् १८]
राजासनं राजच्छत्रं वराश्वा वरवारणाः ।
यस्य पुण्यानि तस्यैते मत्वैतच्छाम्य पुत्रक ॥१९॥
अन्यजन्मकृतैः पुण्यैः सुरुच्यां सुरुचिर्नृपः ।
भार्येति प्रोच्यते चान्या मद्विधा पुण्यवर्जिता २०

चित्सुखीयम् ।

॥ ९ ॥ श्वासेन क्षामे रिक्ते निरानन्दे ईक्षणे यस्यास्सा तथोक्ता ॥ १९ ॥ मैत्रः मैत्रीरतः । पार्नं

श्रीधरीयम् ।

तत् किन्तु मद्गर्भसम्भवसौभाग्यलभ्यम् । अतस्त्वमायमुरुक्रमर्द्धिमनोरथः पृथैनेलतिगर्वितोक्तिः ॥ १० ॥ ॥ ११ ॥ १२ ॥ वत्सेति । यस्ते अपराध्यति अपराधं करोति । तव पितरमवजानाति स चैवंभूतः क इत्यर्थः ॥ १३ ॥ १४ ॥ निःश्वस्येति । तस्मिन् सुरुच्या वचसि कथिते सति श्वासेनात्युष्णेन क्षामे म्लाने ईक्षणे नेत्रे यस्याः सा ॥ १५ ॥ १६ ॥ नेति । उद्वेगः क्लेशः ॥ १७ ॥ १८ ॥ राजासनमिति । एतन्मत्वाऽनुमुक्ष । शाम्य उपशमं भज ॥ १९ ॥ अन्यजन्मकृतैरिति । सुरुच्यां

विष्णुचित्तीयम् ।

भिलाषः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ निःश्वस्येति । तस्मिन् वृत्तान्ते कथिते सति श्वासक्षामेक्षणा श्वासेन दुःखजनितेन क्षामदृष्टिः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

दत्तात्रेयीयम् ।

किं क्लिश्यते । नहि राजपुत्रनाममात्रलभ्यं । किन्तु मद्गर्भसंभवसौभाग्यलभ्यं । अतस्त्वमायमुर्वैरुत्कृष्टैश्वर्यमनोरथौ पृथैनेलातिगर्वोक्तिः ॥ १० ॥ मातृभाषितं सपत्नीमातुर्भाषितं । निजायाः मातुः स्वमातुः ॥ ११ ॥ १२ ॥ यस्त्वापराध्यति अपराधं करोति स ते तव पितरमेवावजानाति । स चैवंभूतः कः ॥ १३ ॥ भूपालप्रत्यक्षं राज्ञः समक्षं । यथा प्राह । तत्तथा कथयामास ॥ १४ ॥ तस्मिन्सुरुच्या वचसि पुत्रेण विनिःश्वस्य कथिते सति सा सुनीतिः श्वासक्षामेक्षणा श्वासेन दुःखजनितेन ॥ १५ ॥ ॥ १६ ॥ उद्वेगः परितापः ॥ १७ ॥ १८ ॥ एतन्मत्वा अनुमुक्ष । शाम्य उपशमं भज ॥ १९ ॥ सुरुच्यां नृपः सुरुचिः अतिप्रीतिमान् । मद्विधा पुण्यवर्जिता अन्या केवलं भार्येति प्रोच्यते ॥ २० ॥

रत्नगर्भीयम् ।

उच्चैरिति । ध्रुवमातुर्दौर्भाग्यमपि सूचयति—सुनीत्यामिति ॥ १० ॥ उत्तमो नामतोऽर्थतोऽप्यभिप्रेतः ।

[ पा० ] १ क. ग. घ. च—ट ढ. तत. २ ज क्लिश्य तापि । ग. नि श्वस्य सेति. ३ ख—घ. च. ज—ढ. स्व ग. ४ ज. सपर्भ. ५ इदमर्धं ग. पुस्तके मात्रं दृश्यते. ६ ट—ढ. तथा छ्र्वं.

पुण्योपचयसंपन्नस्तस्याः पुत्रस्तथोत्तमः ।
मम पुत्रस्तथा जातः स्वल्पपुण्यो ध्रुवो भवान्॥२१॥
तथाऽपि दुःखं न भवान्कर्तुमर्हसि पुत्रक ।
यस्य यावत्स तेनैव स्वेन तुष्यति मानवः ॥२२॥
यदि ते दुःखमत्यर्थं सुरुच्या वचसाऽभवत् ।
तत्पुण्योपचये यत्नं कुरु सर्वफलप्रदे ॥ २३ ॥
सुशीलो भव धर्मात्मा मैत्रः प्राणिहिते रतः ।
निम्नं यथाऽऽपः प्रवणाः पात्रमायान्ति सम्पदः॥२४॥

ध्रुव उवाच ॥

अम्ब यत्त्वमिदं प्रात्थ प्रशमाय वचो मम ।
नैतद्दुर्वचसा भिन्ने हृदये मम तिष्ठति ॥ २५ ॥
सोऽहं तथा यतिष्यामि यथा सर्वोत्तमोत्तमम् ।
स्थानं प्राप्स्याम्यशेषाणां जगतामभिपूजितम् ॥२६॥
सुरुचिर्दयिता राज्ञस्तस्या जातोऽस्मि नोदरात् ।
प्रभावं पश्य मेऽम्ब त्वं वृद्धस्यापि तवोदरे ॥२७॥
उत्तमः स मम भ्राता यो गर्भेण धृतस्तया ।
स राजासनमाप्नोतु पित्रा दत्तं तथाऽस्तु तत्॥२८॥
नान्यदत्तमभीप्सामि स्थानमम्ब स्वकर्मणा ।
इच्छामि तदहं स्थानं यन्न प्राप पिता मम ॥२९॥

श्रीपराशर उवाच ॥

निर्जगाम गृहान्मातुरित्युक्त्वा मातरं ध्रुवः ।
पुराच्च निर्गम्य ततस्तद्बाह्योपवनं ययौ ॥ ३० ॥
स ददर्श मुनींस्तत्र सप्त पूर्वागतान्ध्रुवः ।
कृष्णाजिनोत्तरीयेषु विष्टरेषु समास्थितान् ॥३१॥

चित्सुखीयम् ।

भाश्रयणयोग्यं ॥ २४ ॥ वृद्धस्य पितुर्वृद्धस्य ॥ २७ ॥ कृष्णाजिनोत्तरीयेषु कृष्णाजिनमुत्तरीयं उपर्या-भोपरीगम् ।

नृपतिः सुरुचिरतिप्रीतिमान् । मद्विधा मादृशी तु केवलं भार्येति प्रोच्यते ॥ २० ॥ २१ ॥ तथा-ऽपीति । यस्य यावदैवप्राप्तं स तेन स्वेनैव दैवेन प्राप्तेन तुष्यति ॥ २२ ॥ २३ ॥ सुशील इति । मैत्रः मित्रधर्मः । प्रवणाः निम्नदेशाभिमुख्यः सत्य आपः । पात्रं सद्गुणं नरम् ॥ २४ ॥ अम्बेति ॥ अम्ब हे मातः मम प्रशमाय, नोद्वेगस्तात कर्तव्य इत्यादि सप्तश्लोकरूपं यद्वचः प्रात्थ प्रब्रवीषि तदेतत्, छिद्रितभाण्डे पय इव मम हृदये न तिष्ठति ॥ २५ ॥ २६ ॥ सुरुचिरिति ॥ वृद्धस्य वृद्धिं मास-स्यापि ॥ २७ ॥ २८ ॥ नेति । अन्यदत्तं नेच्छामि । किन्तु स्वकर्मणा स्वकर्मसामर्थ्येनैव इच्छामि ॥ २९ ॥ ३० ॥ स इति ॥ पूर्वागतान् स्वानुग्रहाय यतः पूर्वमेव तत्रागतान् । कृष्णाजिनमुत्तरीय-

विष्णुचित्तीयम् ।

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ स इति । पूर्वा-

दत्तात्रेयीयम् ।

॥ २१ ॥ यस्य यावदैवप्राप्तं स बुद्धिमान् विवेकी तावन्मात्रेणैव स्वेन स्वकीयेन तुष्यति ॥ २२ ॥ वित्त्यर्थो माशब्दः । सर्वफलं आभ्युदयं निःश्रेयसं प्रददातीति तस्मिन् ॥ २३ ॥ पुण्योपचयकार-णान्याह—सुशील इति । मैत्रः सर्वप्राणिषु मित्रधर्मः । प्रवणाः निम्नदेशाभिमुख्यः सत्य आपो निम्नं यथाऽऽयान्ति तथा पात्रं सगुणं पुरुषं संपद आयान्ति ॥ २४ ॥ अम्ब हे मातः मम प्रशमाय नोद्वेगस्तातकर्तव्य इत्यादि सप्तश्लोकीरूपं यद्वचः प्रात्थ ब्रवीषि । तच्छिद्रे भाण्डे पय इव दुर्वचसा सप-त्न्याः दुर्वचसा भिन्ने मम हृदये मनसि न तिष्ठति ॥ २५ ॥ २६ ॥ वृद्धस्य वृद्धिं प्राप्तस्यापि ॥ २७ ॥ तया सुरुच्या । तथाऽस्तु तथैव भवतु ॥ २८ ॥ अन्यदत्तं अन्येन दत्तं नेच्छामि किन्तु स्वकर्मणा स्वकर्म-सामर्थ्येन प्राप्यमेवेच्छामि ॥ २९ ॥ पूर्वमेव स्वानुग्रहार्थमागतान् । कृष्णाजिनमुत्तरीयमुपर्यास्तरणं

रत्नगर्भीयम् ।

यथा माता तथा पुत्र इत्युभयत्र दृष्टान्तः ॥ २१ ॥ स्वकर्मणा स्वतपोबलेनैवेच्छामि । सततं चिरस्थायि

[ पा० ] १ ख—घ. च छ. ध्रुव. २ क—ड. बुद्धिमान्. ३ ग ट. यदि चेद्दुग [दत्ता० पा०] यदि वा दु १ ४ क—छ ठ. प्रपन्नात्मा. ५ ख—घ. च छ. तत्पुण्यप्रचये. ६ ज. सपि. ७ ग—ङ वृद्धस्यापि. ख जातस्यापि ८ क. पितामह. ९ क. ख. विष्टरेषु. १० ठ. समाश्रितान्.

स राजपुत्रस्तान्सर्वान्प्रणिपत्याभ्यभाषत ।
प्रश्रयावनतः सम्यगभिवादनपूर्वकम् ॥ ३२ ॥

ध्रुव उवाच ॥

उत्तानपादतनयं मां निबोधत सत्तमाः ।
जातं सुनीत्यां निर्वेदाद्युष्माकं प्राप्तमन्तिकम् ३३

ऋषय ऊचुः ॥

चतुःपञ्चाब्दसंभूतो बालस्त्वं नृपनन्दन ।
निर्वेदकारणं किंचित्तव नाद्यापि वर्तते ॥ ३४ ॥
न चिन्त्यं भवतः किंचिद्ध्रियते भूपतिः पिता ।
न चैवेष्टवियोगादि तव पश्याम बालक ॥३५॥
शरीरे न च ते व्याधिरस्माभिरुपलक्ष्यते ।
निर्वेदः किंनिमित्तस्ते कथ्यतां यदि विद्यते ३६॥

श्रीपराशर उवाच ॥

ततः स कथयामास सुरुच्या यदुदाहृतम् ।
तन्निशम्य ततः प्रोचुर्मुनयस्ते परस्परम् ॥ ३७ ॥
अहो क्षात्रं परं तेजो बालस्यापि यदक्षमा ।
सपत्न्या मातुरुक्तं यद्धृदयान्नापसर्पति ॥ ३८ ॥
भोभोः क्षत्रियदायाद निर्वेदाद्यस्त्वयाधुना ।
कर्तुं व्यवसितं वत्स कथ्यतां यदि रोचते ३९॥
यच्च कार्यं तवास्माभिः साहाय्यममितद्युते ।
तदुच्यतां विवक्षुस्त्वमस्माभिरुपलक्ष्यसे ॥ ४० ॥

विष्णुचित्तीयम् ।

स्तरणं येषां विष्टराणामासनानां तेषु ॥ ३१ ॥ ध्रियते जीवति । तवतस्य न किंचिच्चिन्त्यमस्ति ॥ ३५ ॥ मातुरसपत्न्या यदुक्तं तत् बालस्य हृदयान्नापसर्पतीत्यर्थः ॥ ३८ ॥ क्षत्रियदायाद क्षत्रियनन्दन ॥ ३९ ॥

श्रीधरीयम् ।

कुशपर्णोस्तरणमेषां तेषु विष्टरेषु कुशासनेषूपविष्टान् ॥ ३१ ॥ ३२ ॥ उत्तानपादतनयमिति । निर्वेदाद्दुःखात्प्राप्तं जानीध्वम् ॥ ३३ ॥ चतुःपञ्चाब्देति । चत्वारः पञ्च वा अब्दा यस्य स चासौ सम्भूतः सम्यग्भूतः सौकुमार्येण जातः । अल्पवयाः कोमलतनुश्चेत्यर्थः ॥ ३४ ॥ नेति । चिन्त्यं कुटुम्बादिविषयं भवतः किंचिन्नास्ति । यतः पिता ध्रियते जीवति सच भूपतिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ अहो इति । अक्षमा मानभङ्गासहनम् ॥ ३८ ॥ भोभोः क्षत्रियदायादेति । क्षत्रियदायाद क्षत्रियपुत्र ॥ ३९ ॥

विष्णुचित्तीयम् ।

गतान्पूर्वमेवात्मनोऽनुग्रहार्थमागतान् । कृष्णाजिनोत्तरीयाण्येव विष्टरास्तेषु ॥ ३१ ॥ ३२ ॥ ३३ ॥ चतुःपञ्चेति । इतः प्राक् चतुर्थे पञ्चमे वाऽब्दे सम्भूतः ॥ ३४ ॥ नेति । चिन्त्यं कुटुम्बपोषणादि ।

दत्तात्रेयीयम् ।

येषां तेषु विष्टरेषु कुशासनेषु समाश्रितान् उपविष्टान् ॥ ३१ ॥ ३२ ॥ निर्वेदाद्दुःखात्प्राप्तं मां जानीध्वं ॥ ३३ ॥ चतुर्भिः पञ्चभिर्वाऽब्दैः संभूतः पुष्टः । चत्वारः पञ्च वा अब्दाः यस्य स चासौ संभूतश्चेति वा ॥ ३४ ॥ पश्यामेति विसर्गाभाव आर्षः । चिन्त्यं कुटुम्बपोषणादि भवतः किंचिन्नास्ति । यतः पिता ध्रियते जीवति । सच भूपतिः । इष्टवियोगादीत्यादिशब्देनानिष्टयोगादिकं गृह्यते ॥ ३५ ॥ ३६ ॥ ३७ ॥ तेजः पराभिभवसामर्थ्यं । अक्षमा मानभङ्गासहनं ॥ ३८ ॥ क्षत्रियदायाद क्षत्रियपुत्र ॥ ३९ ॥ विवक्षुः

रत्नगर्भीयम् ।

॥ २९ ॥ प्रणिपत्य सम्यगभिवादनं वन्दनं तदनु प्रश्रयेणावनतोऽभ्यभाषत ॥ ३२ ॥ बालो दिगम्बरभिन्नः । नृपनन्दनः सुकुमारः । अत संप्रति ॥ ३४ ॥ ध्रुवस्य दृढप्रत्ययार्थं कारुण्यात्स्वयमेव प्रश्ना-

[पा०] १ ट. चतुः पञ्चाब्दसंभूतो. २ ट. ठ. दृश्यते ।

ध्रुव उवाच ॥

नाहमर्थमभीप्सामि न राज्यं द्विजसत्तमाः ।
तत्स्थानमेकमिच्छामि भुक्तं नान्येन यत्पुरा ४१ ॥
एतन्मे क्रियतां सम्यक्कथ्यतां प्राप्यते यथा ।
स्थानमग्र्यं समस्तेभ्यः स्थानेभ्यो मुनिसत्तमाः ४२

मरीचिरुवाच ॥

अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज ।
न हि संप्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ४३ ॥

अत्रिरुवाच ॥

परः पराणां पुरुषो यस्य तुष्टो जनार्दनः ।
संप्राप्नोत्यक्षयं स्थानमेतत्सत्यं मयोदितम् ४४ ॥

अङ्गिरा उवाच ॥

यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ।
तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ४५ ॥

पुलस्त्य उवाच ॥

परं ब्रह्म परं धाम योऽसौ ब्रह्म तथा परम् ।
तमाराध्य हरिं याति मुक्तिमप्यतिदुर्लभाम् ४६ ॥

पुलह उवाच ॥

ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ।
प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥ ४७ ॥

---

विष्णुचित्तीयम् ।

यज्ञपुरुषः यज्ञाभिमानिनी देवता । यज्ञः यज्ञक्रिया तज्ज्ञानिष्ठापूर्वरूपः । यज्ञेशः यज्ञाना भोक्ता तदधि-

श्रीधरीयम् ।

यदिति । यियक्षुः किञ्चिद्यष्टुमिच्छुः तत्साहाय्यम् ॥ ४० ॥ ४१ ॥ एतदिति । एतत्साहाय्यं क्रियताम् । साहाय्यप्रकारमाह—सम्यक्कथ्यतामिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

विष्णुचित्तीयम् ।

म्रियते जीवति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ एतदिति । यथा प्राप्यते तथा कथ्यताम् । एतत्कथनमेव साहाय्य तत्क्रियताम् ॥ ४२ ॥ भगवति भक्त्यतिशयात् मुने कारुण्याच्च सर्वेऽपि प्रतिवदन्ति प्रणन्दन्ति च अनाराधितेति सप्तभिः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

दत्तात्रेयीयम् ।

किञ्चिद्यष्टुमिच्छुः । स्वच्छन्दधवत्यादिर्विभावः ॥ ४० ॥ ४१ ॥ एतत्साहाय्य क्रियता । साहाय्यप्रकारमाह—सम्यक्कथ्यतामिति । मे मया ॥ ४२ ॥ ४३ ॥ यद्यपि ध्रुवप्राप्य स्थानमनित्य तथाप्युत्तरावितामार्गेण तत्स्थाना पुनरावृत्तिराहित्यात्तस्याक्षयत्वोक्तिः । तदुक्त भविष्यत्पर्वणि । "आधिगत्यममिल ध्रुवलोकस्य यद्ध्रुवे । नतु तत्स्थानगन्तृणा यतीना क्षितिरुत्तमा" इति ॥ ४४ ॥ ४५ ॥ योऽसौ पर ब्रह्म पर धाम तत्पर ब्रह्म हरिमाराध्य मुक्तिमपि यातीत्यन्वय. । किमुतान्यच्छ्रेष्ठ स्थानमिति भाव. ॥ ४६ ॥

रत्नगर्भीयम् ।

रभेदेन विष्णुभक्तिमेवोपदिशन्ति—अनाराधितेत्यादि सप्तभिः श्लोकैः ॥ ४३ ॥ प्रकृतेः पराणा जीवाना पर उत्कृष्टः ॥ ४३ ॥ पर ब्रह्म परमात्मा । धाम प्रकाशक । अधिष्ठान वा । अपर ब्रह्म शब्दात्मक ॥ ४५ ॥ यज्ञे यज्ञप्रतिपादके शास्त्रे । योगे योगशास्त्रे । यद्वा गेयः यः गीयते सर्वेरित्यर्थः । अप्राप्य

---

[ पा० ] १ प झ च ञ ट—ड द्विजसत्तमा २ क ग च ञ—ड सप्राप्नो ३ क ग घ मच्युतस्य महात्मनः । प—च. मच्युतस्याव्ययात्मन . ४ ख ग च झ ट ठ देव ५ क मेष्यति.

एवमेकाग्रचित्तेन तन्मयेन धृतात्मना ।
जप्तव्यं यन्निबोधैतत्तत्त्वः पार्थिवनन्दन ॥ ५४ ॥
हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे ।
ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ ५५ ॥
एतज्जजाप भगवाञ्जप्यं स्वायंभुवो मनुः ।
पितामहस्तव पुरा तस्य तुष्टो जनार्दनः ॥ ५६ ॥

चित्सुखीयम् ।

राहित्यं दर्शितमिति द्रष्टव्यं ॥ ५३ ॥ ५४ ॥ हिरण्यगर्भो ब्रह्मा । पुरुषो जीवः । प्रधानं मूलप्रकृतिः । अव्यक्तं कारणं ब्रह्म । एतानि रूपाणि यस्य विद्यन्ते स तथोक्तः । शुद्धं सर्वकारणविरहितं

श्रीधरीयम् ।

प्रत्याहार उक्तः । तस्मिन्नेव निश्चलं धारणोक्ता कुर्वीतेति ॥ ५३ ॥ एवमिति । एवमनेन प्रकारेण । एकाग्रचित्तेनेति पूर्वोक्तषडङ्गसाध्यं ध्यानमुक्तं । तथा च वक्ष्यति "तद्रूपप्रत्ययैकाग्रा सन्ततिश्चान्यनिःस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप" इति । तन्मयेनेति समाधिरुक्तः । धृतात्मनेति पुनर्मनोविक्षेपप्राप्तौ तत्परिहाराय चित्तस्थैर्ये प्रयत्न उक्तः । तदुक्तं श्रीमद्गीतासु "यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्" इति ॥ ५४ ॥ हिरण्यगर्भेति । हिरण्यगर्भो ब्रह्मा । पुरुषो विष्णुः । प्रधीयते प्रक्षिप्यते प्रकृतौ विश्वमनेनेति प्रलयहेतुः प्रधानसंज्ञः कालः । अव्यक्तस्तेषां त्रयाणां नियन्ता । त्रिगुणा माया शक्तिः कारणमात्मा । ॐ नमोऽव्यक्तरूपायेति पाठान्तरेऽव्यक्तं विश्वमेतानि रूपाणि सन्ति यस्य तस्मै । एवमादिकेषु सत्स्वपि शुद्धज्ञानात्मकं स्वभावमच्युतं यथास्ति यस्य तस्मै । ओंकारप्रतिपाद्याय नम इति मन्त्रार्थः । मन्त्रस्तु "ॐ नमो भगवते

विष्णुचित्तीयम् ।

तस्मिन्नेवेति शुभाश्रये धारणा ॥ ५३ ॥ एवमिति । धृतात्मनेति । यथार्हं शौचादिषु कृतयत्नेनेति नियमः । एकाग्रचित्तेनेति ध्यानम् । तन्मयेनेति समाधिः । इत्यष्टाङ्गयोग उक्तः । तस्य मैत्रेय योगिन इति हि योगित्वं वक्ष्यति ॥ ५४ ॥ हिरण्येति । "हिरण्मयस्य गर्भोऽभूद्धिरण्यस्यापि गर्भजः । तस्माद्धिरण्यगर्भं तं पुराणज्ञाः प्रचक्षते ।" इति भारतोक्त्या हिरण्यगर्भशब्दनिरुक्त्या हिरण्मयं महदण्डं गर्भे यस्य स हिरण्यगर्भः । स चात्र पुरुषादिसमभिव्याहारात्कार्यात्मा ज्ञेयः । हिरण्यगर्भः प्रथमव्यष्टिपुरुषः । समष्टिरिति केचित् । अत्र द्वादशाक्षरमन्त्रो विवक्षितः ध्रुवादिषु ध्रुवस्य

वृत्तात्रेयीयम् ।

तस्मिन्नेव निश्चलं कुर्वीतेति धारणोक्ता ॥ ५३ ॥ एवमनेन प्रकारेण । एकाग्रचित्तेनेति पूर्वोक्तषडङ्गसाध्यं ध्यानमुक्तं । तन्मयेनेति समाधिरुक्तः । धृतात्मनेति चित्तविक्षेपे प्राप्ते तत्परिहाराय चित्तस्थैर्यप्रयत्न उक्तः ॥ ५४ ॥ हिरण्यगर्भो ब्रह्मा । पुरुषः तदन्यजीवसङ्घः । प्रधानं प्रकृतिः । व्यक्तं महदादिकार्यजातरूपं । निरूप्यत्वाद्रूपशब्दवाच्यं प्रतिमास्थानमधिष्ठानं यस्य तस्मै । ओमित्यादिना वासुदेवद्वादशाक्षरमन्त्र उच्यते । वासुदेवायेत्यतः पूर्वं भगवत इति पदेन मन्त्रस्य द्वादशाक्षरत्वं । तत्र भगवच्छब्दार्थभूतशुद्धज्ञानस्वरूपत्वकथनेन सूचितं । मन्त्रस्यातिरहस्यत्वात्तदुक्तिः । एतज्जप्यं तत्र शुद्धरूपतामप्राप्तान् स-

[ पा० ] १ ठ. प्रधानाव्यक्तरूपिणे. २ घ. ॐनमो भगवते वासुदेवाय । (अधि० पा०) ॐनमोऽव्यक्तरूपाय. ३ ग. ज. ट—ड. समाधिने.

ददौ यथाभिलषितां सिद्धिं त्रैलोक्यदुर्लभाम् ।
तथा त्वमपि गोविन्दं तोषयंस्तत्सदा जपन् ॥५७॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

ततस्तपोवनान्निर्गत्य यमुनातटस्थं नित्यदा हरिसान्निध्ययुक्तं सर्वपापहरं मधुवनं प्राप्य ध्रुवस्य तपश्चरणं ॥१॥ ध्रुवस्यातिघोरतपश्चर्यया क्षुब्धैः देवैः सम्भ्रमाधिगतैश्च पश्चात्सु सर्वोपायेषु विफलेषु देवानां श्रीहरिशरणप्राप्तिवर्णनं ॥ २ ॥ ततो ध्रुवतपसा तुष्टस्य श्रीभगवतो मधुवनगमनं ॥ ३ ॥ ध्रुवेण कृता श्रीभगवत्स्तुतिः ॥ ४ ॥ भगवता श्रीनारायणेन ध्रुवाय ध्रुवपदप्रदानम् ॥ ५ ॥ ध्रुवोपाख्यानश्रवणफलकथनम् ॥ ६ ॥

श्रीपराशर उवाच ॥

निशम्यैतदशेषेण मैत्रेय नृपतेः सुतः ।
निर्जगाम वनात्तस्मात्प्रणिपत्य स तानृषीन् ॥१॥
कृतकृत्यमिवात्मानं मन्यमानस्ततो द्विज ।
मधुसंज्ञं महापुण्यं जगाम यमुनातटम् ॥ २ ॥
पुनश्च मधुसंज्ञेन दैत्येनाधिष्ठितं यतः ।
ततो मधुवनं नाम्ना ख्यातमत्र महीतले ॥ ३ ॥
हत्वा च लवणं रक्षो मधुपुत्रं महाबलम् ।
शत्रुघ्नो मधुरां नाम पुरीं यत्र चकार वै ॥ ४ ॥
यत्र वै देवदेवस्य सान्निध्यं हरिमेधसः ।
सर्वपापहरे तस्मिंस्तपस्तीर्थे चकार सः ॥ ५ ॥

विष्णुचित्तीयम् ।

ज्ञानं स्वभागो विशते सर्वे ॥ ५५ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे एकादशोऽध्यायः ॥ ११ ॥

पुनश्चमधुसंज्ञेनेति । कैटभसहायव्यतिरिक्तेन मधुनाम्ना दैत्येनेति यावत् ॥ ३ ॥ हरिमेधसः हरिरं-

श्रीधरीयम् ।

वासुदेवाय" इति ॥ ५५ ॥ ५६ ॥ ५७ ॥ इति श्रीधरस्वामिविरचितायामात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकादशोऽध्यायः ॥ ११ ॥

निशम्येति । तस्मात्तपोवनान्निर्जगाम ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ यत्रेति । हरतीति हरिः सर्वदुः-

विष्णुचित्तीयम् ।

खमयोपदेशप्रसिद्धेः । स तु रहस्युपदेष्टव्यत्वादत्र यथापाठं न पठितः ॥ ५५ ॥ ५६ ॥ ददाविति । तथात्वमिति गुरुदैवतामन्त्रो हि शीघ्रं सिद्ध्यति ॥ ५७ ॥ इति श्रीविष्णुचित्ताचार्यविरचितायां विष्णुपुराणव्याख्यायां प्रथमांशे एकादशोऽध्यायः ॥ ११ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ यत्रेति । हरिमेधसः हरिः पापहारिणी मेधा शुद्धा मेधा यस्य स

दत्तात्रेयीयम् ।

इति फलतीति भावेनाह—एतदिति ॥ ५६ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकादशोऽध्यायः ॥ ११ ॥

तस्मात्पुरनारदोपवनात् ॥ १ ॥ यमुनातटं यमुनातटस्थवनं ॥ २ ॥ ३ ॥ ४ ॥ हरतीति हरिः ।

रत्नगर्भीयम् ।

रिमस्ति सान्निध्यं ॥ ५६ ॥ इति श्रीरत्नगर्भभट्टाचार्यविरचितश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे एकादशोऽध्यायः ॥ ११ ॥

ध्रुवोऽत्र मधुवनं प्राप्य हरिमीत्र स्तौति । यथापदवैदिकविप्रानमुक्त्वा स्वपदमानसाय ॥ पुनश्च मधुसंज्ञेनेति । पूर्वं कैटभेन सह मधुनामोत्पन्नः । पुनश्च मधुसंज्ञेन मनोऽन्येनेन्यः ॥ ३ ॥ सर्वपिनिधैः

[ पा० ] १ क—ए. ज—ट. शद । ए. श्रद. २ प. मानो महात्मा . ३ प. ए. पुण्य । ४. पुत्र

कूष्माण्डा विविधै रूपैर्महेन्द्रेण महामुने ।
समाधिभङ्गमत्यन्तमारब्धाः कर्तुमातुराः ॥१३॥
सुनीतिर्नाम तन्माता सास्रा तत्पुरतः स्थिता ।
पुत्रेति करुणां वाचमाह मायामयी तदा ॥१४॥
पुत्रकास्मान्निवर्तस्व शरीरात्ययदारुणात् ।
निर्बन्धतो मया लब्धो बहुभिस्त्वं मनोरथैः ॥१५॥
दीनामेकां परित्यक्तुमनाथां न त्वमर्हसि ।
सपत्नीवचनाद्वत्स हगतेस्त्वं गतिर्मम ॥ १६ ॥
क्व च त्वं पञ्चवर्षीयः क्वचैतद्दारुणं तपः ।
निवर्त्यतां मनः कष्टान्निर्बन्धात्फलवर्जितात् १७॥
कालः क्रीडनकानां ते तदन्तेऽध्ययनस्य ते ।
ततः समस्तभोगानां तदन्ते चेष्यते तपः ॥ १८ ॥
कालः क्रीडनकानां यस्तव बालस्य पुत्रक ।
तस्मिंस्त्वमिच्छसि तपः किं नाशायात्मनो रतः
मत्प्रीतिः परमो धर्मो वयोरवस्थाक्रियाक्रमम् ।
अनुवर्तस्व मा मोहान्निवर्तास्मादधर्मतः ॥ २० ॥

विष्णुचित्तीयम्।

गतः ॥ ७ ॥ कूष्माण्डाः भूतगणविशेषाः ॥ १३ ॥ क्रीडनकानां क्रीडानां कालोऽवसरः । तस्मिन्काले तपसे आत्मनाशाय इत्थं किमिति रत इत्यन्वयः ॥ १९ ॥ वयोवस्थानुगुणाक्रिया वयोवस्था-

श्रीधरीयम्।

स्थित्येतत्प्रास्तनेन ग्रन्थेन ॥ १२ ॥ कूष्माण्डा इति । कूष्माण्डाः केचिदुपदेवाः ॥ १३ ॥ सुनीतिरिति । सास्रा अश्रुमती सती ॥ १४ ॥ पुत्रकेति । शरीरस्यात्ययेन दारुणात्तीव्रात् निर्बन्धतः अस्मात्तपोनिर्बन्धान्निवर्तस्व ॥ १५ ॥ दीनामिति । सपत्नी वचनात्क्रुद्धस्सन् मां त्यक्तुं नार्हसीत्यर्थः ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥ मत्प्रीतिरिति । वतो मत्प्रीतिर्मत्तोषणं तव परमो धर्मः, अतः 'काल

विष्णुचित्तीयम्।

स्वायंभुवमन्वन्तरे देवाः ॥ १२ ॥ कूष्माण्डा इति । कूष्माण्डा उपदेवभेदाः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ केति । निर्बन्धोऽभिनिवेशः ॥ १७ ॥ १८ ॥ १९ ॥ मत्प्रीतिरिति । वयोवस्था

दत्तात्रेयीयम्।

चित्तव्याकुलतां ॥ ११ ॥ परमाकुलाः क्रुद्धाः । प्रचक्रमुः कर्तुमुद्यताः ॥ १२ ॥ महेन्द्रेण नियुक्ता इति शेषः । कूष्माण्डाः केचिदुपदेवाः । अन्यैश्च विविधैरूपैः समाधिभङ्गं कर्तुमारब्धा आरब्धवन्तः । आतुराः लोकक्षोभणव्यग्रचित्ताः ॥ १३ ॥ सास्रा अश्रुमुखी सती । मायामयी देवैर्मायया निर्मिता ॥ १४ ॥ शरीरस्य व्यथा यस्मात्स शरीरव्यथः सचासौदारुणश्चेति विग्रहः । तस्माद्दारुणात्तीव्रादस्मात्तपोनिर्बन्धान्निवर्तस्व । शरीरव्ययेति पाठे शरीरव्ययेन दारुणात् । बहुभिर्मनोरथैरनेकैर्मनोरथैर्मया लब्धः ॥ १५ ॥ सपत्नीवचनान्मा त्यक्तुं नार्हसि ॥ १६ ॥ कष्टात् दुःखकरात् । तपोनिर्बन्धान्मनो-निवर्त्यतां ॥ १७ ॥ क्रीडनकाना क्रीडानां । आत्मनो देहस्य ॥ १९ ॥ वयो वयोवस्थाक्रियाक्रममनु वयोऽवस्थोचितक्रियाक्रमानुसारेण 'कालः क्रीडनकाना'इत्यादिमदुक्तेन मत्प्रीतिः मत्प्रीतिसंपादनमेव तव परमो धर्मः । अतो मामनुवर्तस्वेत्यस्मादकालतपोनिर्बन्धरूपादधर्मान्निवर्त मोहं दुराग्रहं निवर्त निवर्तय

[पा०] १ क—ग ट न ज झ ड रूपै र्महेन्द्रेण २ ठ मातुरा ३ क ग च छ ज—ढ शरीरव्यय। [दत्ता० पा०] शरीरव्यय ४ रा कारणात् ५ क बालक्रीडनकाल ते ६ ज ट ठ तथैवाध्ययनस्य च, ७ ब ज—ड, तस्मिंस्त्वमित्थतपसि किं । [illegible] ग ड च तस्मिंस्त्वमिच्छसि तपसि किं । च तस्मिंस्त्वं तपसे यत्न ८ [वि० चि० पा०] मत्प्रीत्या परम धर्म ९ क—छ [illegible] ङ निवर्त्यां

परित्यजति वत्साद्य यथेतच्च भवांस्तपः ।
त्यक्ष्याम्यहमिह प्राणांस्ततो वै पश्यतस्तव ॥२१॥

श्रीपराशर उवाच ॥

तां प्रलपन्तीमेवं बाष्पाकुलविलोचनाम् ।
समाहितमना विष्णौ पश्यन्नपि न दृष्टवान् २२॥
वत्स वत्स सुघोराणि रक्षांस्येतानि भीषणे ।
वनेऽभ्युद्यतशस्त्राणि समायान्त्यपगम्यताम् २३
इत्युक्त्वा प्रययौ साऽथ रक्षांस्याविर्बभुस्ततः ।
अभ्युद्यतोग्रशस्त्राणि ज्वालामालाकुलैर्मुखैः २४॥
ततो नादानतीवोग्रान्राजपुत्रस्य ते पुरः ।
मुमुचुर्दीप्तशस्त्राणि भ्रामयन्तो निशाचराः ॥२५॥
शिवाश्च शतशो नेदुः सज्वालाकवलैर्मुखैः ।
त्रासाय तस्य बालस्य योगयुक्तस्य सर्वदा ॥ २६ ॥
हन्यतां हन्यतामेष छिद्यतां छिद्यतामयम् ।
भक्ष्यतां भक्ष्यतां चायमित्यूचुस्ते निशाचराः
ततो नानाविधान्नादान् सिंहोष्ट्रमकराननाः ।
त्रासाय राजपुत्रस्य नेदुस्ते रजनीचराः ॥ २८ ॥
रक्षांसि तानि ते नादाः शिवास्तान्यायुधानि च ।
गोविन्दासक्तचित्तस्य ययुर्नेन्द्रियगोचरम् ॥२९॥
एकाग्रचेताः सततं विष्णुमेवात्मसंश्रयम् ।
दृष्टवान्पृथिवीनाथपुत्रो नान्यं कथञ्चन ॥ ३० ॥
ततः सर्वासु मायासु विलीनासु पुनः सुराः ।
संक्षोभं परमं जग्मुस्तत्पराभवशङ्किताः ॥ ३१ ॥

वि सुधीयम् ।

क्रिया । तत्क्रमात्तदनुसारेण ॥ २० ॥ ज्वालाएव कवलं तत्सहितानि सज्वालकवलानि । तै मुखैः

श्रीधरीयम् ।

रोदनकामा से इत्यादिना भवुक्त वयोवस्थानुरूपं क्रियाणां क्रममनुवर्तस्वेत्यर्थः ॥ २० ॥ २१ ॥ तामिति । बाष्पैरश्रुभिराविले छिन्ने विलोचने यस्यास्ताम् । पश्यन्नपि उन्मीलितनेत्रोऽपि न दृष्टवान् । विष्णौ समाहितमनस्त्वादिति भावः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ शिवा इति । शिवाः भैरवाश्च ज्वालाएव कवलं ग्रासः तत्सहितैर्मुखैर्नेदुः नादं चक्रुः ॥ २६ ॥ २७ ॥ तत इति । सिंहोष्ट्रमकराणामिव आननानि येषां ते ॥ २८ ॥ २९ ॥ ३० ॥ तत इति । तस्माद्य पराभवं स्वपदा-

विष्णुचित्तीयम् ।

क्रियाक्रमम् वयोवस्थासु चोदितं नियतक्रमं । निवर्तस्वात्स्वधर्मेव इति । "वृथा तीर्थं वृथा ज्ञानं वृथा जप्यं वृथा हुतम् । स जीवति वृथा यस्य माता दुःखं रिता ।' इति पुराणवचनात् । मद्विरहाग्-काकृतपश्चरणरूपादधर्मान्निवर्तस्वेति भावः । मर्यादा परमं धर्ममिति पाठे वयोवस्थानियतक्रमरूपं परमं धर्मं मर्यादामनुवर्तस्व । स्वधर्मो हि मातापितृगुरुधर्मान्नोत्क्रम्यते अपितु तत्सम्मत्यैवोत्क्रम्यते "यदेते ह्यनुजानीयु धर्मं लोकविगर्हितम् । स धर्म इति मन्तव्यो नात्र कार्या विचारणा" इति भारतोक्तेः ॥ २० ॥ २१ ॥ तामिति । पश्यन्नपि व्यापारितचक्षुरिन्द्रियोऽपि प्रयुक्तबाह्येन्द्रियोऽपि वा

दत्तात्रेयीयम् ।

स्तजेत्यर्थः । अन्वियुभयत्र सम्बध्यते ॥ २० ॥ बाष्पैरश्रुभिराविले क्लिन्ने विलोचने यस्यास्ताम् । पश्यन्नपि उन्मीलितलोचनोऽपि । विष्णौ समाहितमना यतः ॥ २२ ॥ सज्वालाकवलैः ज्वालाएव कवलं ग्रासः तत्सहितैर्मुखैरुपलक्षिताः शिवा नेदुः ॥ २६ ॥ सिंहोष्ट्रमकराणामिवाननानि येषां ते ॥ २८ ॥ ॥ २९ ॥ पृथिवीनाथपुत्रो ध्रुवः ॥ ३० ॥ सर्वासु मायासु विलीनासु नष्टासु सतीषु । पुनस्तत्पराभ-

स्वगर्भीयम् ।

तामित्यर्थः ॥ १७ ॥ योगयुक्तस्य समाधियुक्तस्य ॥ २६ ॥ आत्मसंश्रयं स्वहृदि स्थितम् ॥ ३० ॥

[ पा० ] १ ग घ च ग ठ—ढ बाष्पाविलविलोचनाम् २ ब पुनः ३ क—ठ सततं । ड सर्वा ४ म तथा नानाविधा माया ५ क ख चक्रुश्च

बाह्यार्थनिरपेक्षं ते मयि चित्तं यदाहितम् ।
तुष्टोऽहं भवतस्तेन तद्वृणीष्व वरं परम् ॥ ४३ ॥

पराशर उवाच ॥

श्रुत्वेत्थं गदितं तस्य देवदेवस्य बालकः ।
उन्मीलिताक्षो ददृशे ध्यानदृष्टं हरिं पुरः ॥४४॥
शङ्खचक्रगदाशार्ङ्गवरासिधरमच्युतम् ।
किरीटिनं समालोक्य जगाम शिरसा महीम् ४५
रोमाञ्चिताङ्गः सहसा साध्वसं परमं गतः ।
स्तवाय देवदेवस्य स चक्रे मानसं ध्रुवः ॥४६॥
किं वदामि स्तुतावस्य केनोक्तेनास्य संस्तुतिः ।
इत्याकुलमतिर्देवं तमेव शरणं ययौ ॥ ४७ ॥

ध्रुव उवाच ॥

भगवन्यदि मे तोषं तपसा परमं गतः ।
स्तोतुं तदहमिच्छामि वरमेनं प्रयच्छ मे ॥ ४८ ॥
ब्रह्माद्यैर्वेदतत्त्वज्ञैर्ज्ञायते यस्य नो गतिः ।
तं त्वां कथमहं देव स्तोतुं शक्नोमि बालकः ४९
त्वद्भक्तिप्रवणं ह्येतत्परमेश्वर मे मनः ।
स्तोतुं प्रवृत्तं त्वत्पादौ तत्र प्रज्ञां प्रयच्छ मे ५०

श्रीपराशर उवाच ॥

शङ्खप्रान्तेन गोविन्दस्तं पस्पर्श कृताञ्जलिम् ।
उत्तानपादतनयं द्विजवर्य जगत्पतिः ॥ ५१ ॥
अथ प्रसन्नवदनः स क्षणान्नृपनन्दनः ।
तुष्टाव प्रणतो भूत्वा भूतधातारमच्युतम् ॥५२॥

श्रीधरीयम् ।

पदानि ॥ ४० ॥ ४१ ॥ ४२ ॥ बाह्यार्थेति । यदस्मादाहितं समाहितम् ॥ ४३ ॥ ४४ ॥ शङ्खच-क्रेति । चतुर्भुजेषु शङ्खादिधरे । कश्चादौ वरासिधरे शेषुगदाधरे । शिरसा महीं जगाम दण्डवत्प्रणतो बभूव ॥ ४५ ॥ रोमाञ्चिताङ्ग इति । स्तवाय स्तोत्राय मानसं चक्रे ॥ ४६ ॥ किं वदामीति । ततश्च ब्रह्मादिभिरविज्ञातगतेरस्य स्तुतौ विषये बालोऽहं किं वदामि । केन सर्वात्मकत्वेनोक्तेनास्य वा स्तुतिर्भवेदिति व्याकुलमतिस्तमेव शरणं ययौ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ शङ्खप्रान्तेनेति । सर्ववेदमयस्य शङ्खस्य प्रान्तेन वेदान्तभागेन परमेश्वरतत्त्वप्रतिपादकेन "ब्रह्ममयेन वस्तुना पस्पर्श" इति श्रीशुकोक्तेः ॥ ५१ ॥ तत इति । प्रसन्नवदनः प्राप्तज्ञानत्वाच्छोभितोऽस्य सुगमम् । "य एवं वेदेति ब्रह्मविद इव

विष्णुचित्तीयम् ।

स्थानानि ॥ ४० ॥ भगवानिति । तन्मयत्वेन ध्रुवस्य तदेकविषयचित्तत्वेन ॥ ४१ ॥ ४२ ॥ ४३ ॥ श्रुत्वेति । ध्यानदृष्टं हरिं पुरः यथाध्यानं बहिर्दृष्टवान् ॥ ४४ ॥ ४५ ॥ ४६ ॥ किं वदामीति । किं वदामि किं वाक्यं वदामि । केनोक्तेनार्थेन ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ शङ्खेति । "विद्यामयोऽसः

वृत्ताजेवीयम् ।

॥ ४२ ॥ यदाहितं स्थापितं ॥ ४३ ॥ ध्यानदृष्टं अन्तर्ध्यानदृष्टं । बहिः पुरः पुरतो ददृशे ॥४४॥ शिरसा महीं जगाम साष्टाङ्गप्रणामं कृतवान् ॥ ४५ ॥ रोमाञ्चिताङ्गः पुलकितशरीरः ॥ ४६ ॥ अस्य स्तुतौ विषये किं वदामि किंवाक्यं वदामि । केनोक्तेनार्थेन अस्य संस्तुतिर्भवेदित्याकुलमतिः तमेव देवं शरणं ययौ ॥ ४७ ॥ ४८ ॥ वेदैव जानातीति ज्ञाः सर्वज्ञानैः ज्ञैः । गम्यतइति गतिः । तत्स्वरूपं साकल्येन नोपलभ्यते ॥ ४९ ॥ त्वत्पादौ स्तोतुं प्रवृत्तं ॥ ५० ॥ स सर्ववेदाधिष्ठानभूतशङ्खप्रा-न्तेन शङ्खस्य प्रान्तेन पस्पर्श । कपोल इति शेषः । "कृताञ्जलिं ब्रह्ममयेन वस्तुना पस्पर्श बालं कृपया

स्वप्नभीयम् ।

देलादिविशेषणाभ्यां सात्त्विकभावाः सूचिताः । वैश्रवाय मानसं चक्रे ॥ ४६ ॥ परमार्थतः स्तुतः ।

[ पा० ] १ (वि० चि० पा०) ध्यानदृष्टि . २ म. बहि . ३ ग. च—च. तन्मयविष्णुनि. ४ ग—ङ. स तत्र प्रज्ञां. ५ ग. म ब्रह्माद्यैर्वेदतत्त्वज्ञैः । ङ. ब्रह्माद्यैर्वेदवेद्यैः । * एतच्छ्लोकद्वयं दत्तवंशाचार्यैर्न व्याख्यातमपि विद्यमानमिति भाति ।

ध्रुव उवाच ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
भूतादिरादिप्रकृतिर्यस्य रूपं नतोऽस्मि तम् ॥ ५३ ॥
शुद्धः सूक्ष्मोऽखिलव्यापी प्रधानात्परतः पुमान् ।
यस्य रूपं नमस्तस्मै पुरुषाय गुणात्मने ॥ ५४ ॥
भूतादीनां समस्तानां गन्धादीनां च शाश्वतः ।
बुद्ध्यादीनां प्रधानस्य पुरुषस्य च यः परः ॥ ५५ ॥
तं ब्रह्मभूतमात्मानमशेषजगतः पतिम् ।
प्रपद्ये शरणं शुद्धं त्वद्रूपं परमेश्वर ॥ ५६ ॥
बृहत्त्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् ।
तस्मै नमस्ते सर्वात्मन्योगिचिन्त्याविकारिणे ॥ ५७ ॥

विष्णुचित्तीयम् ।

॥३४॥ भूतादिः अहङ्कारः । आदिप्रकृतिः मूलप्रकृतिः ॥५३॥ बृहत्त्वात्सर्वगतत्वात् बृंहणत्वात् सर्ववृद्धि-

श्रीधरीयम् ।

सौम्य से मुखं भाति" इति श्रुतेः । भूतानां धातारमच्युतं तुष्टाव । सर्वाश्रयत्वेऽप्यस्थानार्थित्वात् ॥ ५२ ॥ भूमिरिति । भूम्यादीनि स्थूलरूपाणि दश । मन इत्येकादशेन्द्रियोपलक्षण । बुद्धिर्महत्तत्त्वं । भूतादि-रहङ्कारः । आदिप्रकृतिर्मूलप्रकृतिः । इत्येवं चतुर्विंशतितत्त्वानि यस्य रूपं तं नतोऽस्मि ॥ ५३ ॥ शुद्ध इति । प्रधानात्परस्तन्नियन्ता । गुणात्मने गुणसाक्षिणे ॥ ५४ ॥ ५५ ॥ ५६ ॥ बृहत्त्वादिति । बृह-

विष्णुचित्तीयम् ।

शब्दः" इति भगवच्छास्त्रे अस्त्रभूषणाध्याये च दर्शनात् ॥ ५१ ॥ ५२ ॥ भूमिरिति । भूम्यादिग्रहणं तन्मात्राणामप्युपलक्षणम् । मनोग्रहणं दशेन्द्रियाणां । बुद्धिः महान् । भूतादिरहङ्कारः । आदिप्रकृतिः प्रधानम् ॥ ५३ ॥ शुद्ध इति । शुद्धः स्वतः । अखिलव्यापी प्रतिक्षेत्र व्यापी ज्ञानेन वा व्यापी । गुणाशिन इति पाठान्तरम् । गुणाशी गुणभोक्ता ॥ ५४ ॥ मुक्तरूपमाह—भूतादीनामिति । पुरुषो बद्धः ॥ ५५ ॥ तमिति । ब्रह्मभूतमपहतपाप्मत्वादिब्राह्मधर्मयुक्तम् । अशेषजगतः परमिति पाठान्त-रम् । अशेषजगतः पर "स सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यम् स्वाराज्यमाधिपत्यं च पर्येति, पश्यवेद स स्वराड्भवति आप्नोति स्वाराज्यम्" इति श्रुतेः ॥ ५६ ॥ दिव्यरूपमाह—बृह-

दत्तात्रेयीयम् ।

कपोले" इति भागवतोक्तेः ॥ ५१ ॥ प्रसन्नवदनः आविर्भूतज्ञानयाम् ॥ ५२ ॥ भूम्यादिग्रहणेन तन्मा-त्राणामप्युपलक्षणं । मनोग्रहणेन इतरदशेन्द्रियाणां । बुद्धिः महत्तत्त्व भूतादिरहङ्कारः आदिप्रकृतिः मूलप्रकृतिरित्यन्तानि चतुर्विंशतितत्त्वानि यस्य रूपं प्रतिमा । त नतोऽस्मि ॥ ५३ ॥ शुद्धः स्वतएव प्रकृतिलेपरहितः । प्रधानात्प्रकृतेः परमः उत्तमः । तन्नियन्तृत्वात्पुमान् परमपुरुषः परमात्मा यस्य रूपं स्वरूपं तस्मै । गुणाशिने शुभभोक्त्रे पुरुषाय नमइत्यन्वयः ॥५४॥ शाश्वतः शश्वदेकप्रकारः । बुद्ध्यादीनां बुद्धिर्महत्तत्त्व आदिपदादहङ्कारस्येन्द्रियाणांच ग्रहणं । पुरुषस्य चतुर्मुखस्य ॥ ५५ ॥ ब्रह्मभूतं परब्रह्म भूत । आत्मानं परमात्मानं । त्वद्रूपं त्वत्स्वरूपं ॥ ५६ ॥ ब्रह्मभूतमित्युक्तं तत्र ब्रह्मशब्दप्रवृत्तिनिमित्त-

सत्यधर्मीयम् ।

अखिलव्यापी विभुः । परतः पुमान् जीवो यस्य रूपं । गुणाशिने गुणसाक्षिणे । अगुणात्मन इति पाठः ॥ ५४ ॥ अशेषजगतः परमित्यस्य विवरणम् भूतादीनां भूतादीनां गन्धादीनां विषयाणामित्यादि ॥ ५५ ॥ ५६ ॥ यथा अङ्कुररूपेण संभूतो बीजादेव समुच्छ्रितिं विस्तार च याति त्वत्तो जगदपि

[पा० ] १ ■ घ—छ ठ ड पुरुषाय गुणाशिने । क ख पुरुषायामिनाशिने । [सत्य० पा०] पुरुषायागुणात्मने. २ क घ ढ. ज ठ—ड. भूतादीना ३ क मत्सर ४ छ ज. झ ट—ड. परम् ५ ग विष्णो. ६ क—ड. कारवत्

यद्भूतं यच्च वै भव्यं पुरुषोत्तम तद्भवान् ।
त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः ॥ ५९ ॥
अत्यरिच्यत सोऽश्वश्च तिर्यगूर्ध्वं च वै भुवः ।
त्वत्तो विश्वमिदं जातं त्वत्तो भूतं भविष्यति ६० ॥

चित्सुखीयम् ।

भावस्ययोर्विकारास्पदरूपेणावस्थानमभिप्रेत ॥ ५८ ॥ विराट् स्वायंभुवो मनु । स्वराट् ब्रह्मा । सम्राडिन्द्र । अधिपूरुष अधिष्ठाता । पुरुषो जीव । सोऽपि त्वत्ताविर्भवति ॥ ५९ ॥ अत्यरिच्यत अवर्धत

श्रीधरीयम् ।

धिर्भवाल्लिप्त इति । स्पर्शश्चात्र न संयोगमात्रं किन्तु कारणत्वेन तद्व्याप्ति ॥ ५८ ॥ कार्याकारणत्वाधिक्य युक्तमिति पूर्वोक्तं समर्थयति—यद्भूतमित्यादिना । यद्भूतमिति । विराट् ब्रह्माण्ड । स्वराट् ब्रह्मा । सम्राट् मनु । अधिपूरुष एषामधिष्ठाता महापुरुष ॥ ५९ ॥ अत्यरिच्यतेति । यस्मात्ते

विष्णुचित्तीयम् ।

चक्षुषोऽपर्यन्तावमवाश्च सर्वं द्रष्टुं कर्तुं च शक्नुवन्ति तथाऽयमपि" इति । पुरुषशब्दस्य "पूर्वमेवाहमिहास" इति "तत् पुरुषस्य पुरुषत्व "पूरणात्सदनाच्चापि ततोऽसि पुरुष स्मृत " इत्यादिषु श्रुतिस्मृतिषु बहुप्रकार निर्वचन द्रष्टव्यम् । भुव भवतीति भू अनेनासङ्ख्यरूपाणि चिदचिदात्मकानि सर्वाणि भूतानि लक्ष्यन्ते । स्पर्शादिति । दशाङ्गुल दशगुण महाप्रमाणमिति भाव । अत्यतिष्ठत् अतीत्यातिष्ठत् सर्वव्यापित्वाद्बहिरपि चिदात्मकस्य जगत स्पर्शात् । स्पर्शं कृत्वा दशाङ्गुलमत्यतिष्ठदित्यन्वय । स्पर्शादिति ल्यब्लोपे पञ्चमी "येनावृत ख च दिव महीं च—यश्च किञ्चिज्जगत्" इत्यादिश्रुतिषु व्याप्याज्जगतो व्यापकस्य पुरुषस्य महत्त्व प्रतिपादितम् ॥ ५८ ॥ न केवल व्योमवद्व्यापकत्व सर्वशरीरित्व चेत्याह—यद्भूतमिति । त्वत्त इत्यादि विराट् अव्यक्तशरीरोऽनिरुद्ध । तथा च मोक्षधर्मे "ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् । ततो महश्च स्रष्टा च पुराण पुरुषो विराट् । अनिरुद्ध इति प्रोक्तो लोकाना प्रभवाप्यय " इति च । सम्राट् परम पद प्राप्त । "सोऽक्षर परमस्स्वराट्" इति विशेषणात् स्वराट् केवलात्मप्राप्त । यद्वा "अय लोकस्तु वै सम्राडन्तरिक्ष विराट् स्मृतम् । स्वराडसौ स्मृतो लोक " इति वायूक्तलोका विराडादय । अधिपूरुष अधिकारिपुरुषो ब्रह्मा । अथ वा त्वामधिकरणीकृत्य पुरुष आत्मसमष्टिरूपो हिरण्यगर्भोऽजायत ॥ ५९ ॥ अत्यरिच्यतेति । ■

दत्तात्रेयीयम् ।

यमास्थाय व्याप्नुते जगत् इतिगारुडवचनाय एवमेव व्याख्यान युक्त ॥ ५८ ॥ पुरुष एवेद सर्वमितिमन्त्रार्थमाह—यदिति । यद्यदाद्रनुक्त भवत्समुच्चीयते । "सर्व पुरुष एवेद भूत भव्य भवच्च यत्"-इतिभागवतोक्ते तत्सर्वमुक्त । विश्व भवान् भवदधीनमित्यर्थ । अभेदार्थप्रतीतिनिराकरणार्थं पुरुषोत्तमेत्युक्त । अभेदार्थत्वे "सर्वं पुरुष एवेति मण्यते भेदवज्जगत् । तदधीन तु सत्तादि यतोऽस्य सदा भवेत्" इतिमहातर्कविरोधात् । पुरुषोत्तमेत्युक्त्यैव "उतामृतत्वस्येशान "इत्यादि सार्धऋग्वेदप्रतिपाद्यमुक्त्वा सुखेशत्वमुक्तमिति भावेन तद्विहाय "तस्माद्विराडजायत"इत्यादिकमर्थत उपादत्ते—त्वत्त इत्यादिना । विराट् ब्रह्माण्ड । स्वराट् ब्रह्मा । सम्राट् स्वायंभुवो मनु । द्वितीयस्य त्वत्त इत्यस्यापि सम्राडित्यनेनान्वय । चशब्दोऽनुक्तसमुच्चयार्थ । अतोऽधिपूरुषो भवानिति शेष । यद्वा "अयलोकस्तु वै सम्राडन्तरिक्ष विराट् स्मृत । स्वराडसौ स्मृतो लोक "इति वायूक्ते लोका विराडादय । अधिपूरुषस्तत्राधिकारिपुरुषो ब्रह्मा । श्रुतिस्थ विराट्पद स्वराडादीनामुपलक्षण ॥ ५९ ॥ स ब्रह्मा भुव भूशब्दोपल-

[पा०] १ ख विष्णु २ क ख ग—घ ट ठ यात

गावस्त्वत्तः समुद्भूतास्त्वत्तोऽजा अवयो मृगाः ।
त्वन्मुखाद्ब्राह्मणास्त्वत्तो बाह्वोः[1] क्षत्रमजायत ६३
वैश्यास्तवोरुजाः शूद्रास्तव पद्भ्यां समुद्भवाः ।
अक्ष्णोः सूर्योऽनिलः प्राणाच्चन्द्रमा मनसस्तव ६४
प्राणोऽन्तः[2] सुषिराज्जातो मुखादग्निरजायत ६५॥
नाभितो गगनं द्यौश्च शिरसः समवर्तत ।
दिशः श्रोत्रात्क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम्

न्यग्रोधः सुमहानल्पे यथा वीजे व्यवस्थितः ।
संयमे विश्वमखिलं वीजभूते तथा त्वयि ॥ ६७॥
वीजादङ्कुरसम्भूतो न्यग्रोधस्तु समुत्थितः ।
विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगत् ६८
यथा हि कदली नान्या त्वक्पत्रादपि दृश्यते ।
एवं विश्वस्य नान्यस्त्वं त्वत्स्थायीश्वर दृश्यते ६९॥

चित्सुखीयम् ।

एकतोदतो गाव इत्यन्वयः । अवयो लोमशाः छागाः ॥ ६२ ॥ ६३ ॥ संयमे प्रलये ॥ ६७ ॥ ह्लादिनी संवित्पालनेन । सर्वेषां सुखजनकं संवेदनं । सन्धिनी सन्धानमुत्पादनं । सत्कारिणी संवित्स-

श्रीधरीयम् ।

त्तामाह—गाव इति ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ त्वत्तो जातं विश्वं भिन्नं न

विष्णुचित्तीयम् ।

इति । एकतोदतः महिषाद्यः ॥ ६२ ॥ गाव इति । तेषु महिषादिषु गवादेः पृथगुक्तिः माहात्म्यात् । ॥ ६३ ॥ ६४ ॥ प्राण इति । प्राणात् मुख्यप्राणात् । प्राणो नस्सुषिराज्जात इति च पाठः । प्राणः नस्सुषिरान्नासारन्ध्रात् । प्राणोन्तः सुषिरादिति वा पाठः । तदा तत्र वर्तमानाद्वायोरित्यर्थः । प्राणः प्राणाख्यो वृत्तिविशेषः ॥ ६५ ॥ ६६ ॥ न्यग्रोध इति । संयमे संहारे ॥ ६७ ॥ ६८ ॥ यथेति । यथा

दत्तात्रेयीयम् ।

कथनं तत्त्वत्रयपेक्षया तदवान्तराभिमानिदेवतोत्पत्त्यपेक्षया वा बोद्धव्यं । तेषामपौरुषेयत्वात् । एकतोदतो महिष्याद्याः ॥ ६२ ॥ गवामग्राम्यत्वाभूतत्वेऽपि यज्ञाङ्गत्वेन प्राशस्त्यात्पृथगुक्तिः । त्वत्तो बाह्वोः तव बाह्वोः । अनिलः मुख्यवायुः ॥ ६३ ॥ ६४ ॥ नस्सुषिरात् नासारन्ध्रात् । प्राणो नासिकाभिमानी वायुः । प्राणोन्तस्सुषिरादिति पाठे प्राणाविपक्षके पठितः प्राणः । द्यौः स्वर्गादिः उपरितनो लोकः । त्वन्मुखाद्ब्राह्मणा इत्यादिनाभ्यमानानां मुखाद्यवयवानां न भेदः । विशेषणतया भेदव्यवहारमात्रं । उक्तञ्च गारुडे । "देहेन्द्रियादिभेदेन निर्भेदोऽपि हरिः स्वयं । भण्यते केवलैश्वर्यादानन्दचिद्घनः" इति ॥ ६५ ॥ ६६ ॥ पूर्वं त्वयि स्थितमेव जगत् । सृष्टिकाले त्वत्तो जायत इत्यभिहितं तत्र दृष्टान्तमाह— न्यग्रोधइति ॥ यथा सुमहान् न्यग्रोधो वटोऽल्पकणिकारूपे जीवसंयमे नाशकाले व्यवस्थितः कारणात्मना व्यवस्थितः । तथा संयमे महाप्रलये वीजभूते त्वयि अखिलं विश्वं व्यवस्थितं । प्रकृत्यात्मना व्यवस्थितं । अत्र दृष्टान्ते वीजशब्देन वृक्षवीजाभिमानिनी कणिकाख्या देवतोच्यते । न वटोपादानभूतं वीजं तस्य नष्टत्वेन तस्मिन्वृक्षस्य व्यवस्थितत्वोक्त्ययोगात् । तदुक्तं महावर्के । "स्थावराणां च सर्वेषां देवता याभिमानिनी । विशेषाद्वटवीजेचसाऽप्यत्येचव्यवस्थिता । एवं हरिः कारणेषु स्थितः कार्यजनेरनु । कार्याण्यनुप्रविष्टस्सन्प्रथमं तत्र दृश्यते" इति ॥ ६७ ॥ ६८ ॥ हेनाथ यथा कदली-

रत्नगर्भीयम् ।

तथा ॥ ६८ ॥ विभान्यस इति पाठे त्वं पदाध्याहारः । यद्वा विराडादयो विश्वतैजसप्राज्ञास्तद्रूपतया

[पा०] १ क ख. घ. ङ. च जाता. २ क—ङ. बाहो ३ ङ. प्राणो नस्सुषिराज्जातः, ४ घ. छअङे. ५ ग. ङ. च. स्सुखमुच्छ्रित॰. ६ ख. ग—ङ. च. शाश्राय. ७ [श्रीध॰ पा॰] नान्यत्वं. ८ क. तस्मादीश्वर.

ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंस्थितौ । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥७०॥

चित्सुखीयम् ।

य्येका असाधारणा । अन्यत्र विश्वस्यावनपालनहेतुभूतसंविदोऽभावात् । मिश्रा रागद्वेषसंपन्ना । मित्रेष्वाह्लादकारिणी । शत्रुषु तापकारिणी । एवंविधा संवित्त्वयि न विद्यते । तत्र हेतुमाह—गुणवर्जित इति

श्रीधरीयम् ।

भवतीति दृष्टान्तेनाह—यथाहीति । यथा हि त्वचः पत्रादेश्चान्या पृथग्भूता कदली न दृश्यते । एवं त्वक्पत्रस्थानीयात् त्वत्तो विश्वस्य नान्यत्वं । भवस्तम्भस्यापि त्वय्येव सद्रूपे स्थातुं शीलमस्येति तथाऽपि । तथाभूतमेव सत्येव घटः सन् घट इत्येवं दृश्यते । न तु पृथक् । भो ईश्वर, सर्वजननियामक । एवं विश्वस्य नान्यत्वमिति पाठान्तरेऽप्ययमेवार्थः ॥ ६९ ॥ ईश्वरत्वमेव जीवेश्वरवैलक्षण्येन दर्शयन्नाह—ह्लादिनीति । ह्लादिनी आह्लादकारिणी । सन्धिनी सन्तता । संवित् विद्याशक्तिः । एका मुख्या । अव्यभिचारिणी स्वरूपभूतेति यावत् । सर्वसंस्थितौ सर्वस्य सम्यक् स्थितिर्यस्मिन् सर्वाधिष्ठानभूते त्वय्येव । न तु जीवेषु । या तु गुणमयी त्रिविधा संवित्सा त्वयि नास्ति । तामेवाह—ह्लादतापकरी मिश्रेति । ह्लादकरी मनःप्रसादोत्था सात्त्विकी । तापकरी विषयभोगादिषु दुःखकरी तामसी । उभयमिश्रा च विषयजन्या राजसी । तत्र हेतुः सर्वगुणैर्वर्जिते । तदुक्तं सर्वज्ञसूक्तौ "ह्लादिन्या संविदा श्लिष्टः सच्चि-

विष्णुचित्तीयम् ।

च कारणभूता वाल्कलकल्पत्रास्था कदली स्वकार्यभूतस्थूलत्वक्पत्राद्यान्या सैवेयमिति प्रत्यभिज्ञानात् । एवं कारणभूतस्त्वं कार्यभूताद्विश्वस्मादनान्यः । "बहुस्यां तदात्मानं स्वयमकुरुत ज्योतींषि विष्णुः" इत्यादेः । अपि च विश्वस्मादपृथग्भूतत्रिपाद्रूपेण त्वं दृश्यसे "व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः । त्रिपादस्यामृतं दिवि" इत्यादि ॥ ६९ ॥ ह्लादिनीति । सर्वसंस्थितौ सर्वाधारे त्वयि । संवित् ह्लादिनी निरवधिकानन्दरूपा । सन्धिनी अविच्छेदवती । एका एकरूपा । ह्लादतापोभयमिश्रा विच्छिन्नपरिमिताह्लादकरी केवलतापकरी च संवित्त्वयि नास्ति । अत्र हेतुः गुणवर्जित इति । इयं च संवित्साक्षात्कारूपा वा । तत्कर्मिका वा । "विज्ञानमानन्दं ब्रह्म, तमेवं विद्वानमृत इह भवति, रसो वै सः रसं

श्रुतप्रकाशीयम् ।

त्वक्पत्राद्यन्तर्गर्भरूपा त्वक्पत्रादन्या पृथक् नदृश्यते । त्वक्पत्राद्यावृतत्वात् । एवं विश्वस्य सकाशात् त्वमन्यः पृथक् न दृश्यसे । तत्र हेतुः—स्वस्थायीति । सर्वान्तर्यामित्वेन त्वयि स्थापि स्थितमेतद्विश्वमत इत्यर्थः । अत्रान्यो न दृश्यत इति । अन्यत्र दर्शनस्यैव निषेधादन्यत्वनिषेधपरतया केषांचिद्व्याख्यानमज्ञानविजृम्भितं भेदस्य श्रुत्यादिप्रमाणसिद्धत्वात् ॥ ६९ ॥ इंश्वरेत्यनेन सर्वजीवनियामकत्वमुक्तं । तदेव जीववैलक्षण्यं दर्शयन्नाह—ह्लादिनीति । ह्लादिनी आह्लादकारिणी । सन्धिनी सन्तता । संवित् विद्या । एका अभिन्ना । स्वरूपभूतेति यावत् । सर्वसंस्थितौ सर्वस्य सम्यक्स्थितिर्यस्मिन्सर्वाधारे त्वय्येव वर्तते । न तु जीवेषु । या गुणमयी त्रिविधा संवित्सा जीवनिष्ठा सा त्वयि नास्तीत्याह् । ह्लादकरी मनःप्रसादोत्था सात्त्विकी । तापकरी इष्टविषयवियोगादिषु दुःखकरी तामसी । उभयमिश्रा विषय-

स्वप्नभीमम् ।

पुरुषेषु विभाव्यते प्रत्यक्षतां याति । ब्रह्मादिपदेषु इन्द्रैक्यं सर्वेष्विन्द्रियादिशरीरे सर्वभूतः क्षेत्रज्ञरूपस्त्वं सर्वश्च त्वं क्षेत्ररूपश्च त्वमेव । एकस्य क्षेत्रज्ञक्षेत्ररूपत्वं विरुद्धं इति चेत्तत्राह—सर्वस्वरूपधृक् चेतना-

पृथग्भूतैकभूताय भूतभूताय ते नमः ।
प्रभूतभूतभूताय तुभ्यं भूतात्मने नमः ॥ ७१ ॥
व्यक्तं प्रधानपुरुषौ विराट् सम्राट् स्वराट् तथा ।
विभाव्यतेऽन्तःकरणे पुरुषेष्वक्षयो भवान् ॥७२॥
सर्वस्मिन्सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक् ।
सर्वं त्वत्तस्ततश्च त्वं नमः सर्वात्मनेऽस्तु ते ॥७३॥

विष्णुचित्तीयम् ।

॥ ७० ॥ पृथग्भूतेषु वस्तुष्वेकभूताय एकस्वरूपाय । भूतभूताय महाभूतात्मना परिणताय । प्रभूतानि भूतानि प्रभूतानि नानाविधानि जरायुजाण्डजस्वेदजोद्भिज्जानि । तद्भूताय तद्रूपाय । भूतात्मने परमात्मस्वरूपाय । व्यक्तादिरूपैः पूर्वोक्तैर्भगवान्योगिभिरन्तःकरणेषु विभाव्यते । पुरुषेषु अक्षयश्च भवानेवेत्यन्वयः ॥ ७२ ॥ सर्वस्मिन् त्वं वर्तसे विशेषेषु सामान्यस्य च वर्तमानत्वाभावाद्—सर्वभूतस्त्वमिति ॥

श्रीधरीयम् ।

ज्ञानन्द ईश्वरः । स्वाविद्यासंवृतो जीवस्सङ्क्लेशनिकराकरः" इति ॥ ७० ॥ ऐश्वर्यमेव विभूतिभिः प्रपञ्चयति—पृथग्भूतेति । पृथग्भूतैकभूताय कार्यात्मना पृथग्भूताय कारणात्मना चैकरूपाय । भूतभूताय भूतसूक्ष्माय । प्रभूतभूतरूपाय प्रभूतभूतानि महाभूतानि तद्रूपाय । भूतात्मने चराचरप्राणिरूपाय । तुभ्यं नमः ॥ ७१ ॥ किञ्च व्यक्तमिति । पूर्वोक्तप्रधानरूपतयाऽन्तःकरणे योगिभिः भवान्विभाव्यते चिन्त्यते । तथा पुरुषेषु क्षेत्रज्ञेषु उपाध्यभिमानेषु क्षीयमाणेष्वपि भवान् परमात्मा अक्षयो विभाव्यते ॥ ७२ ॥ किञ्च सर्वस्मिन्निति । सर्वस्मिन् देवादिशरीरे । सर्वभूतस्तत्तत्क्षेत्रज्ञरूपस्त्वं ।

विष्णुचित्तीयम् ।

ज्ञेयाय लब्ध्वाऽऽनन्दी भवति" इत्यादिश्रुतेः ॥ ७० ॥ पृथग्भूतेति । पृथग्भूतैकभूताय कार्यकारणावस्थयोः भूतभूताय पञ्चभूतशरीराय । प्रभूतभूतभूतायेति च पाठः । प्रभूतभूतभूताय प्रभूतानि भूतानि महदादयः प्राणिनस्तद्भूताय भूतात्मने व्याप्यात्मने । अथवा भूतभूताय भूतसूक्ष्मत्वेनाविर्भूताय । प्रभूतभूतभूताय महाभूतत्व प्राप्ताय । भूतात्मने सर्वप्राणिरूपाय नम इति ॥ ७१ ॥ व्यक्तमिति । व्यक्तादयः प्रसिद्धाः । विराडादयः पूर्वमेवोक्ताः । व्यक्तादीनां भवानित्यनेनान्वयः । किञ्च पुरुषेष्वन्तःकरणे विभाव्यते भवान् ॥ ७२ ॥ सर्वस्मिन्निति । सर्वस्मिन् गगनादौ । सर्वभूतः शब्दादिस्त्वं "शब्दः

दत्तात्रेयीयम् ।

जन्या राजसी । सर्वहेतुः गुणवर्जित इति । सत्त्वादिगुणैर्वर्जिते ॥ ७० ॥ पृथग्भूतैकभूताय अवतारूपेण पृथग्भूतो मूलरूपेणैकीभूतस्तस्मै । भूतभूताय पृथिव्यादितदुपलक्षितसर्वतत्त्वेषु भूताय विद्यमानाय । प्रभूतभूतभूताय । "एको विष्णुर्महद्भूत" इतिवचनात् । भूतात्मने सर्वजीवान्तर्यामिणे ॥ ७१ ॥ व्यक्तेत्यादिश्लोकद्वयस्य । व्यक्तादिनियामकत्वमेवेत्यर्थः । तदुक्तं मात्स्ये । "सर्वशब्दाभिधेयत्वं सर्वान्तर्यामितः स्वतः । ननु सर्वस्वरूपत्वात्सर्वभिन्नो यतो विभुः" इति । यादृशोगिभिरन्तःकरणैः व्यक्तेत्यादिरूपेण विभाव्यते चिन्त्यते । पुरुषेषु क्षराक्षरेषु भवानक्षयः गुणैरिति शेषः ॥ ७२ ॥ सर्वस्मिन् सर्वपदार्थे सर्वभूतः व्याप्तत्वेन विद्यमानः "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्युक्तेः । सर्वज्ञानादिगुणपूर्णः ।

रत्नगर्भीयम् ।

चेतनरूपं त्वमेव पत्से । "सर्वं खल्विदं ब्रह्म" इतिश्रुतेः । तदुपपादयति—सर्वं त्वत्तः सर्वस्य यत्कारणं तत्त्वमेव । ततः सर्वस्मात्प्रजायते तदपि त्वमेव । अतः सर्वस्वरूपधृगित्यर्थः । स्तुतिमुपसंहरति—

[ पा० ] १ ट. व्यक्त प्रधानपुरुष विराट् २ [ रत्न० पा० ] विभाव्यते. ३ अ सर्वत्र सर्वभूतस्त्वं ४ य. सर्वत्र स्व स्वरूप

वरं वरय तस्मात्त्वं यथाभिमतमात्मनः ।
सर्वं संपद्यते पुंसां मयि दृष्टिपथं गते ॥ ७८ ॥

ध्रुव उवाच ॥

भगवन्भूतभव्येश सर्वस्यास्ते भवान्हृदि ।
किमज्ञातं तव ब्रह्मन्मनसा यन्मयेप्सितम् ॥७९॥
तथाऽपि तुभ्यं देवेश कथयिष्यामि यन्मया ।
प्रार्थ्यते दुर्विनीतेन हृदयेनातिदुर्लभम् ॥ ८० ॥
किं वा सर्वजगत्स्रष्टः प्रसन्ने त्वयि दुर्लभम् ।
त्वत्प्रसादफलं भुङ्क्ते त्रैलोक्यं मघवानपि ॥८१॥
नैतद्राजासनं योग्यमजातस्य ममोदरात् ।
इति गर्वादवोचन्मां सपत्नी मातुरुच्चकैः ॥८२॥
आधारभूतं जगतः सर्वेषामुत्तमोत्तमम् ।
प्रार्थयामि प्रभो स्थानं त्वत्प्रसादादतोऽव्ययम् ॥८३

श्रीभगवानुवाच ॥

यत्त्वया प्रार्थ्यते स्थानमेतत्प्राप्स्यति वै भवान् ।
त्वयाऽहं तोषितः पूर्वमन्यजन्मनि बालक ॥८४॥
त्वमासीर्ब्राह्मणः पूर्वं मय्येकाग्रमतिः सदा ।
मातापित्रोश्च शुश्रूषुर्निजधर्मानुपालकः ॥८५॥
कालेन गच्छता मित्रं राजपुत्रस्तवाभवत् ।
यौवनेऽखिलभोगाढ्यो दर्शनीयोज्ज्वलाकृतिः

श्रीधरीयम् ।

जायते ॥ ७७ ॥ अपि च—वरमिति । तस्मात्प्रासादन्यत्किमपि परं मत्सालोक्यादिकं यथेप्सितं वृणी-ष्वेत्यर्थः ॥ ७८ ॥ ७९ ॥ तथापीति । भगवन् ममाशापि त्वत्सालोक्यापेक्षा नास्ति । तच ते विदित-मस्ति । तच भवानन्तर्यामी जानात्येव । तथाऽपि दुर्विनीतेन मया हृदयेन यत्प्रार्थ्यते तत्कथयिष्यामि ॥ ८० ॥ भक्तिरहितस्यातिदुर्लभमपि कथं भक्तेन वृतम् अतिदुर्लभं स्यादनतिदुर्लभमेव प्रसादहीनस्य दुर्लभमपि प्रसादवतः सुलभमेवेत्याह—किं वा इति ॥ ८१ ॥ ब्रह्मादिदुर्लभं स्वसालोक्यं विहाय त्रैलो-क्यान्तर्वर्तिस्थानं स्वप्रार्थ्यं सहेतुकमाह—नैतदित्यादिद्वाभ्याम् ॥ ८२ ॥ ८३ ॥ यदिति । भगवद्वा-क्यं तु तत्रैवंविधं स्थानं भवान्प्राप्स्यति । पूर्वजन्मनि यत्कृतं तदेव त्वया प्राप्तुं शक्यम् । अन्तरायेण तु केनचिदयं राजपुत्रोऽसि । तत्राप्ययं तवापरितोषो शापोपगप्रभावादेवाभूत् । ततः किंचित्कालं राज्य-

तत्त्वाभेयीयम् ।

स्थोऽसि ॥ ७६ ॥ अतिदुर्लभार्थे मनोरथकरणात् दुर्विनीतेनेत्युक्तं ॥ ८० ॥ दुर्लभत्वे कथं तत्प्राप्तिर्भवि-ष्यतीत्याशङ्क्य तत्राह—किमिति ॥ यद्यपि तव ज्ञातं तथाऽपि दुर्विनीतेन मया हृदये मनसि यत्प्रा-र्थ्यते अपेक्ष्यते तत्तवाज्ञया कथयिष्यामि । सदृशं तत् नातिदुर्लभं अनतिदुर्लभं सुलभमपि त्वत्प्रसा-दाभावे दुर्लभमिति भावः । दुर्लभमपि त्वत्प्रसादलभ्यमित्येतद्दृष्टान्तेनाह—त्वत्प्रसादफलमिति ॥ ८१ ॥ सहेतुकं स्वप्रार्थ्यमाह—नैतदितिद्वाभ्यां । ध्रुवप्राप्यस्थानस्य भगवदवताररूपतया जगदाधारत्वादिकं युक्तं । ध्रुवस्थानस्य शैशुमाररूपत्वं भागवते पञ्चमस्कन्धे स्पष्टमुक्तं । तस्य सर्वजगदाधारत्वादिकन्तु । "अशेषजगदाधारः शैशुमारो हरिः परः । सर्वे ब्रह्मविदो नत्वा तं यान्ति परमं पदं"इति ब्रह्माण्डवच-नादवगन्तव्यं ॥ ८२ ॥ ८३ ॥ अनन्यलभ्योत्तमस्थानप्राप्तौ नैतज्जन्मानुसतपोमात्रं कारणं जन्मान्तरकृ-तमपि तपोऽस्तीत्याह—यत्त्वयेत्यादिना ॥ ८४ ॥ ८५ ॥ जन्मान्तरतपसोऽप्येतत्पदप्राप्तिकारणत्वे

रत्नगर्भीयम् ।

वरय । एकस्य तपसः फलद्वयं कथमिति तत्राह—सर्वं प्रार्थितमप्रार्थितं च । तत्रहेतुर्मयीति ॥ ७८ ॥ सर्वान्तर्यामितया हृदि वर्तमानस्य तव यन्मनसेप्सितं मया तत्किमज्ञातं ज्ञातमेवेत्यर्थः ॥ ७९ ॥ तथा-ऽपि प्रभोस्तवाज्ञया हृदयेन दुर्विनीतेनासहिष्णुना ॥ ८० ॥ तस्यैव प्रार्थनं सहेतुकमाह—नैतदिति द्वाभ्यां । मातुः सपत्नी उच्चकैर्गर्वान्मामिदमवोचत् ॥ ८२ ॥ अव्ययं चिरस्थायि ॥ ८३ ॥ त्रैलोक्या-

[ पा० ] १ फ—ढ. सर्वभूतेश. २ फ—ढ. प्सित. ३ ञ. ट. जगच्छ्रेष्ठ. ४ ख—छ. त्च्युत.

[इत्युक्त्वा भगवानीशः तत्रैवान्तरधीयत ।]
श्रीपराशर उवाच ॥
एवं पूर्वं जगन्नाथाद्देवदेवाज्जनार्दनात् ।
वरं प्राप्य ध्रुवः स्थानमध्यास्ते सुमहामते ॥९८॥
स्वयं शुश्रूषणाद्धर्म्यान्मातापित्रोश्च वै तथा ।
द्वादशाक्षरमाहात्म्यात्तपसश्च प्रभावतः ॥ ९९ ॥
तस्याभिमानमृद्धिं च महिमानं निरीक्ष्य हि ।
देवासुराणामाचार्यः श्लोकमत्रोशना जगौ १००॥
अहोऽस्य तपसो वीर्यमहोऽस्य तपसः फलम् ।
यदेनं पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः १०१ ॥
ध्रुवस्य जननी चेयं सुनीतिर्नाम सूनृता ।
अस्याश्च महिमानं कः शक्तो वर्णयितुं भुवि १०२
त्रैलोक्याश्रयतां प्राप्तं परं स्थानं स्थिरायति ।
स्थानं प्राप्ता परं धृत्वा या कुक्षिविवरे ध्रुवम् १०३
यश्चैतत्कीर्तयेन्नित्यं ध्रुवस्यारोहणं दिवि ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥१०४॥
स्थानभ्रंशं न चाप्नोति दिवि वा यदि वा भुवि ।
सर्वकल्याणसंयुक्तो दीर्घकालं स जीवति १०५॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
द्वादशोऽध्यायः ॥ १२ ॥

चित्सुखीयम् ।

निया विमानसञ्चरणशीला ॥ ९४ ॥ ऋद्धिरैश्वर्यं । महिमा सर्वपूज्यता ॥ १०० ॥ आयति उत्तरकालफलं स्थिरा आयतिर्यस्मिन्स्थाने तत्स्थिरायति ॥ १०३ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे द्वादशोऽध्यायः ॥ १२ ॥

श्रीधरीयम् ।

यत्र विमाने निवत्स्यतीत्यर्थः ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ ध्रुवस्येति । सूनृता पुण्योपचये यत्र कुर्ब्वित्यादि हितसत्यवादिनी ॥ १०२ ॥ त्रैलोक्येति । त्रैलोक्याश्रयतां प्राप्तं परस्परं विष्णुपदाख्यं स्थानं । स्थिरायति स्थिरा नित्या मुक्तिरूपा आयतिरुत्तरकालफलं यस्मिन् तथाभूतं स्थानं निवासं प्राप्ता । प्राप्येति वा पाठः । यथ प्राप्ता[1] परं श्रेष्ठं श्रीविष्णुभक्तं कुक्षिविवरे स्वल्पे धृत्वा या सुनीतिः परं स्थानं प्राप्ता । तस्या महिमानं वर्णयितुं कः शक्त इत्यर्थः ॥ १०३ ॥ १०४ ॥ १०५ ॥ इति श्रीश्रीधरस्वामिविरचितायामात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वादशोऽध्यायः ॥१२॥

विष्णुचित्तीयम् ।

॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ ध्रुवस्येति । सूनृता सुनीतिः भद्रेत्याद्यभिहितसत्यवाक्या ॥ १०२ ॥ त्रैलोक्येति । स्थिरायति स्थिरोत्तरकालं स्थिरैश्वर्यं । या परं केवलं कुक्षिविवरे स्थितं ध्रुवं धृत्वा ध्रुवधारणद्वारा त्रैलोक्याश्रयतां प्राप्तं विष्णुपदाख्यं परं स्थानं प्राप ॥ १०३ ॥ १०४ ॥ ॥ १०५ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वादशोऽध्यायः ॥१२॥

दत्तात्रेयीयम् ।

पक्षा ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ गुरुत्वस्य कथनद्वारा दैत्याचार्यत्वं ॥ १०० ॥ १०१ ॥ सूनृता पुण्योपचये यत्र कुर्ब्वित्यादि हितसत्यवादिनी । "धर्मस्य कन्या सुश्रोणी सूनृतानाम विश्रुता । उत्पन्ना वाजिमेधेन ध्रुवस्य जननी शुभा" इति हरिवंशवचनात् । पितृकृतं नाम वा ॥ १०२ ॥ त्रैलोक्याश्रयता प्राप्त स्थिरायति स्थिरा आयतिः यस्मिन् । "आयतिस्तु स्त्रिया दैर्घ्ये प्रभावागामिकालयोः" इत्यभिधानात् । परं यत् स्थानं तत्स्थानं । या परं केवलं कुक्षिविवरे गर्भे ध्रुवं कृत्वा धृत्वा प्राप प्राप्ता । ध्रुवधारणमात्रेण उत्तमं स्थानं प्राप्ता । अतस्तन्महिमानं को वर्णयितुं शक्त इति पूर्वेणान्वयः ॥ १०३ ॥ १०४ ॥ १०५ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां द्वादशोऽध्यायः ॥ १२ ॥

रत्नगर्भीयम् ।

यत्वं पक्षद्वारा ॥ १०० ॥ वीर्यमिन्द्रादिक्षोभणम् । फलमाकल्पस्थायि ॥ १०१ ॥ इति श्रीरत्नग० विरचितश्रीविष्णुपुराणव्याख्यासारे प्रथमांशे द्वादशोऽध्यायः ॥ १२ ॥

[पा०] १ इदमर्धं (घ) पुस्तके नास्ति निकं नवतत २ घ न ट सुमनाहित ३ अयमर्धः (घ) पुस्तके नास्ति इदयत ४ ख घ छ ग तस्यापि मानर्द्धिं च ५ छ सुस्थिता ६ ग मतान्तरायति ७ [श्रीध० पा०] प्राप ८ क माता न ङ ट कृत्वा

# त्रयोदशोऽध्यायः ॥ १३ ॥

ध्रुववंशकथनप्रस्तावे वेनराजस्योत्पत्तिवर्णनम् ॥ १ ॥ निसर्गात्पापीयस उत्पथगतस्य वेनस्य अधर्माचारप्रवृत्तत्वकथनम् ॥ २ ॥ यज्ञपुरुषनिन्दनादिना पूर्वमेव निहतस्य वेनस्य मुनिभिर्मृतस्य ऊरुमथनम् ॥ ३ ॥ पुत्रार्थं कृतवेनोरुमथनान्निषादोत्पत्तिकथनम् ॥ ४ ॥ तस्य दक्षिणहस्तमथनात् विष्णवंशभूतस्य पृथुमहाराजस्योत्पत्तिकथनम् ॥ ५ ॥ वेनस्य त्रिदिवप्राप्तिः ॥ ६ ॥ ब्रह्मादिभिः कृत पृथुमहाराजाभिषेचनम् ॥ ७ ॥ पृथोः सर्वसिद्धिलाभकथनम् ॥ ८ ॥ सूतमागधोत्पत्तिकथनम् । तत्कृता पृथुस्तुतिश्च ॥ ९ ॥ पृथ्वीकृतधान्यबीजग्रसनात्कुपितस्य पृथोः पृथ्वीनाशाय समुद्योगः । गोरूपं धृत्वा पृथ्व्या पलायनं च ॥ १० ॥ पृथ्वीप्रार्थनया पृथुकर्तृकसर्वबीजदोहनम् ॥ ११ ॥ पृथुमहाराजचरित्रश्रवणफलकथनम् ॥ १२ ॥

श्रीपराशर उवाच ॥

ध्रुवाच्छिष्टिं च भव्यं च भव्याच्छम्भुर्व्यजायत ।
शिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान् ॥१॥
रिपुं रिपुञ्जयं विप्रं वृकलं वृकतेजसम् ।
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥ २ ॥
अजीजनत्पुष्करिण्यां वारुण्यां चाक्षुषो मनुम् ।
प्रजापतेरात्मजायां वीरणस्य महात्मनः ॥ ३ ॥
मनोरजायन्त दश नड्वलायां महौजसः ।
कन्यायां तपतां श्रेष्ठ वैराजस्य प्रजापतेः ॥४॥

---

चित्सुखीयम् ।

ध्रुवस्य भार्या शंभुः ॥ १ ॥ प्रजापतेरनरण्यस्यात्मजायां नड्वलाया दशपुत्रा अजायन्तेत्यन्वयः । तानेव नामतो निर्दिष्टु पूर्वोक्तमेव प्रपञ्चयति—कन्यायामिति ॥ वैराजस्येत्यनरण्यस्यैव विशेषणं ॥ ३ ॥

श्रीधरीयम् ।

ध्रुवादिति । भव्यात्कुमारात् । ध्रुवाच्छम्भुर्नाम भार्या शिष्टिं च व्यजायत । शिष्टेः ध्रुवपुत्रात् सुच्छाया नाम योषित्पञ्चपुत्रान् आधत्त जनयामासेत्यर्थः । भार्याशम्भुर्व्यजायतेति केचित्पठन्ति ॥ १ ॥ ॥ २ ॥ अजीजनदिति । वारुण्यां वरुणसन्तानजाया वीरणस्य प्रजापतेरात्मजाया पुष्करिण्या चाक्षुषः रिपुपुत्रः मनुं षष्ठमन्वन्तराधिपं जनयामासेत्यन्वयः ॥ ३ ॥ मनोरिति । वैराजस्य प्रजापतेः कन्यायां

विष्णुचित्तीयम् ।

॥ १ ॥ २ ॥ अजीजनदिति । चाक्षुषस्य पुनः षष्ठो मनुः । प्रजापतेरित्यर्थं पूर्वेण संबध्यते ॥ ३ ॥

रत्नगर्भीयम् ।

शंभुर्नाम भार्या । भव्यादुत्कुमारात् कल्याणवत इति वा । ध्रुवाच्छिष्टिं च भव्यं च व्यजायत जनयामासेत्यन्वयः । भार्याशम्भुरित्यपि पाठः । शिष्टिं च धन्यां चेति कश्चित्पाठः । सुच्छाया नाम भार्या अन्वयं समादाय कथा प्रवर्तते स एव धर्महेतुः । अन्येत्वकृतोद्वाहा योगिनोऽप्रजाश्चेति तात्पर्यमवगन्तव्यम् ॥ १ ॥ २ ॥ वीरणस्य प्रजापतेरात्मजायां वारुण्या वरुणसन्तानजायां पुष्करिण्यां चाक्षुषः रिपुपुत्रः मनुं षष्ठमन्वन्तरपतिं अजीजनदित्यन्वयः ॥ ३ ॥ वैराजस्य प्रजापतेः कन्यायां नड्वलायां मनोर्महौ-

रत्नगर्भीयम् ।

त्रयोदशे ध्रुवस्योक्तो वंशो वेनोऽप्रकोपतः । द्विजैर्दग्धोऽस्य मथनात्पृथुर्जातोऽनुवर्ण्यते ॥ वीरिण्यामिति पठित्वा नाम्ना वीरिण्यां पुष्करिण्या पद्मिन्यामिति केचिद्व्याचक्षते ॥ ३ ॥ प्रथमजा व्याख्यादी-

---

[ पा० ] १ ज झ ट शिष्टिं २ ग भाव्य च । क. ख घ—च भव्यां च ३ क ख घ—ङ. झ य भार्या-शंभु ४ च पृथक ५ क पृथिवी. ६ क वायव्यां [रत्न० पा०] वीरिण्यां ७ ज, झ ट. ठ अनरण्यस्य धीमत । ङ. वारुणस्य महात्मन । ग. ड अरण्यस्य महात्मन

कुरुः पुरुः शतद्युम्नस्तपस्वी सत्यवाञ्छुचिः ।
अग्निष्टोमोऽतिरात्रश्च सुद्युम्नश्चेति ते नव ।
अभिमन्युश्च दशमो नड्वलायां महौजसः ॥५॥
कुरोरजनयत्पुत्रान्षडाग्नेयी महाप्रभान् ।
अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं शिबिम् ॥६॥
अङ्गात्सुनीथाऽपत्यं वै वेनमेकमजायत ।
प्रजार्थमृषयस्तस्य ममन्थुर्दक्षिणं करम् ॥ ७ ॥
वेनस्य पाणौ मथिते सम्बभूव महामुने ।
वैन्यो नाम महीपालो यः पृथुः परिकीर्तितः ॥८॥
येन दुग्धा मही पूर्वं प्रजानां हितकारणात् ॥९॥
मैत्रेय उवाच ॥
किमर्थं मथितः पाणिर्वेनस्य परमर्षिभिः ॥
यत्र जज्ञे महावीर्यः स पृथुर्मुनिसत्तम ॥ १० ॥
श्रीपराशर उवाच ॥
सुनीथा नाम या कन्या मृत्योः प्रथमतोऽभवत् ।
अङ्गस्य भार्या सा दत्ता तस्यां वेनो व्यजायत ११
स मातामहदोषेण तेन मृत्योः सुतात्मजः ।
निसर्गादेव मैत्रेय दुष्ट एव व्यजायत ॥ १२ ॥
अभिषिक्तो यदा राज्ये [illegible] वेनः परमर्षिभिः ।
घोषयामास स तदा पृथिव्यां पृथिवीपतिः १३
न यष्टव्यं न दातव्यं न होतव्यं कथञ्चन ।
भोक्ता यज्ञस्य कस्त्वन्यो ह्यहं यज्ञपतिः प्रभुः १४
ततस्तमृषयः पूर्वं संपूज्य पृथिवीपतिम् ।
ऊचुः सामकलं वाक्यं मैत्रेय समुपस्थिताः १५

चित्सुखीयम् ।

॥ ४ ॥ सामकलं साम्ना सान्त्वनेन कलं मधुरं यथाभवतितथा ऊचुरिति क्रियाविशेषणं ॥ १५ ॥

श्रीधरीयम् ।

नड्वलायां मनोर्महौजसो दशपुत्रा अजायन्तेत्यन्वयः ॥ ४ ॥ ऊरुरिति । नड्वलायां महौजस इति पुनरुक्तिस्तु नड्वलायां महौजसो ये दशोक्ता(?)नुवादेन त इति विधानार्था ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ तत इति । सामकलं साम्ना कलं मधुरं वाक्यमूचुः ॥ १५ ॥

विष्णुचित्तीयम् ।

॥ ४ ॥ ५ ॥ ६ ॥ अङ्गादिति । सुनीथा मृत्युदुहिता ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

वृत्तात्रेयीयम् ।

जसो दशपुत्रा अजायन्तेत्यन्वयः ॥ ४ ॥ नड्वलायां महौजस इति पुनरुक्तिस्तु नड्वलायां महौजसो ये दशोक्तानुवादेन त इति विधानार्था ॥ ५ ॥ अङ्गिरसं शिबिमिति क्वचित्पाठः । अङ्गिरसौ शिबिजावित्यपि पाठः । तदा मदन्तनामनी । अत्र ध्रुवसन्ताने च वेनोत्पत्तिपर्यन्तं भार्यापुत्रभेदेन भागवतोक्तविलक्षण्यकथनं कल्पभेदाभिप्रायेण द्रष्टव्य ॥ ६ ॥ यतो मृत्योः सुतात्मजः । तेन कारणेन मातामहदोषेण निसर्गात्स्वभावादेव दुष्टभावो दुष्टान्तःकरणो व्यजायत । मातामहस्य मृत्योरसुरत्वेन तत्सदृशो दुष्टो जात इत्यर्थः । मातामहस्य मृत्योरसुरत्वञ्च "मृत्युर्देवो यमभ्राता वेनमातामहोऽसुरः । पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादभूत्" इति वामनपुराणवचनादवगन्तव्य ॥ १२ ॥ सामकलं साम्ना कलं मधुरं

[पा० ] १ क ङ ज. ट—ड. ऊरु २ ख. ग घ. च छ पूरु. ३ ख घ छ—ठ सत्यवाञ्छुचि ४ क ख, घ ङ. ज झ ट ठ अग्निष्टुदतिरात्र च ५ घ च छ अभिद्युम्नश्च । ज अग्निमन्युश्च ६ क. ग—झ ट—ड. ऊरो । ख पूरो ७ क—च ङ ख्याति ८ घ छ. झ. ड. मङ्गिरसशिव । ज ग. ट ठ मङ्गिरसौ पिजौ । क. मङ्गिरसङ्कुभ ९ ज. ट ठ महागति . १० क—च ज. [illegible] ठ परिकीर्त्यते ११ घ. यज्ञे यतो महावीर्य . १२ ज. ट. ठ पृथुरत्पृथिवीपति १३ क—घ च ज—ठ प्रथमतोऽभवत् १४ क—च च—ठ निसर्गादेव. १५ घ—च. दुष्टभावो व्यजायत १६ ख. नास्त्यन्यो १७ घ च ज—ड सम्यक्

ऋषय ऊचुः ॥

भोभो राजन् शृणुष्व त्वं यद्वदाम महीपते ।
राज्यं देहोपकाराय प्रजानां च हितं परम् १६ ॥
दीर्घसत्रेण देवेशं सर्वयज्ञेश्वरं हरिम् ।
पूजयिष्याम भद्रं ते तत्रांशस्ते भविष्यति १७ ॥
यज्ञेन यज्ञपुरुषो विष्णुः संप्रीणितो नृप ।
अस्माभिर्भवतः कामान्सर्वानेव प्रदास्यति १८ ॥
यज्ञैर्यज्ञेश्वरो येषां राष्ट्रे संपूज्यते हरिः ।
तेषां सर्वेप्सितावाप्तिं ददाति नृप भूभृताम् १९ ॥

वेन उवाच ॥

मत्तः कोऽभ्यधिकोऽन्योऽस्ति कश्चाराध्यो ममापरः
कोऽयं हरिरिति ख्यातो यो वो यज्ञेश्वरो मतः २०
ब्रह्मा जनार्दनः शम्भुरिन्द्रो वायुर्यमो रविः ।
हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः २१ ॥
एते चान्ये च ये देवाः शापानुग्रहकारिणः ।
नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः ॥ २२ ॥
एवं ज्ञात्वा मयाऽऽज्ञप्तं यद्यथा क्रियतां तथा ।
न दातव्यं न यष्टव्यं न होतव्यं च भो द्विजाः २३
भर्तृशुश्रूषणं धर्मो यथा स्त्रीणां परो मतः ।
ममाज्ञापालनं धर्मो भवतां च तथा द्विजाः २४ ॥

ऋषय ऊचुः ॥

देह्यनुज्ञां महाराज मा धर्मो यातु संक्षयम् ।
हविषां परिणामोऽयं यदेतदखिलं जगत् २५ ॥
[धर्मे च संक्षयं याते क्षीयते चाखिलं जगत्]

श्रीपराशर उवाच ॥

इति विज्ञाप्यमानोऽपि स वेनः परमर्षिभिः
यदा ददाति नानुज्ञां प्रोक्तः प्रोक्तः पुनः पुनः २६
ततस्ते मुनयः सर्वे कोपामर्षसमन्विताः ।
हन्यतां हन्यतां पाप इत्यूचुस्ते परस्परम् २७ ॥

श्रीधरीयम् ।

भो भो राजन्निति । राज्यदेहयोरुपभोगाय क्षेमाय ॥ १६ ॥ दीर्घसत्रेणेति । दीर्घसत्रेण सहस्रसंवत्सरेण । अंशः षष्ठो भागः "पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्" इति स्मृतेः ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ एवमिति । मया यथा यदाज्ञप्तं तदेव क्रियताम् । तदेवाह—न दातव्यमिति ॥ २३ ॥ २४ ॥ देहीति । हविषां परिणामो वृष्टिद्वारा ॥ २५ ॥ २६ ॥ तत इति ।

विष्णुचित्तीयम् ।

॥ १३ ॥ १४ ॥ तत इति । साम सान्त्वनं । श्लक्ष्णम् अत्यन्तमधुरम् ॥ १५ ॥ १६ ॥ दीर्घसत्रेणेति । तस्यांशस्ते भविष्यतीति च पाठः । तस्य यज्ञस्य अंशः षष्ठांशः ॥ १७ ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ देहीति । हविषां परिणामः वृष्ट्यादिद्वारेण 'अग्नौ प्रास्ताहुतिः' इत्युक्तप्रकारेण ॥ २५ ॥ २६ ॥ तत इति । अमर्षोऽतितितिक्षा ॥ २७ ॥

[illegible]

धात्रथभूपुः ॥ १५ ॥ राज्यदेहयोरुपकारार्थं क्षेमाय ॥ १६ ॥ दीर्घसत्रेण दीर्घकालसाध्यसत्रयज्ञेन । अंशः षष्ठोभागः "पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्निति" स्मृतेः ॥ १७ ॥ मत्त मत्तोऽपरः अन्यः क आराध्यः नकोऽपि किन्त्वहमेव सर्वैराराध्य इत्यर्थः ॥ २० ॥ देवानां मत्तोऽतिरिक्तानामाराध्यानां सत्त्वात्कथमाराध्याभाव इत्यत आह—ब्रह्मेत्यादिना ॥ २१ ॥ सर्वदेवमयः सर्वदेवरूपः स्वातिरिक्तदेवाभावात्स्वयमेवाराध्य इति भावः ॥ २२ ॥ एतज्ज्ञात्वा मया यथा यदाज्ञप्तं तथा क्रियताम् । तदेवाह—न दातव्यमित्यादिना ॥ २३ ॥ देह्यनुज्ञां विष्णूद्देशेन यज्ञानुष्ठानाय इति शेषः । यदेतदखिलं जगदयं हविषां परिणामः वृष्ट्यादिद्वारकः "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति वचनात् ॥ २५ ॥ कोपः क्रोधः । अमर्षः भगवन्निन्दासहनं ताभ्यां समन्विताः ॥ २७ ॥

[ पा० ] १ ■ यद्वदामस्तदन्विक २ ग. राज्यदेहोपभोगाय ३ ग राज्यदेहोपकाराय ४ ङ राज्यदेहोपकाराय । ५ घ. राज्यदेहोपकाराय ३ क—ङ ज, ग ट—ड, तत्रांशस्ते. ४ ग. योऽर्चयज्ञेश्वरोमम ५ {र्षेय० द्व० श०} [illegible] । ६ अमर्षं घ ग. झ ट ठ पुस्तकेषु वर्तते. ७ क प्रजाः.

यो यज्ञपुरुषं विष्णुमनादिनिधनं प्रभुम् ।
विनिन्दत्यधमाचारो न स योग्यो भुवः पतिः॥२८
इत्युक्त्वा मन्त्रपूतैस्तैः कुशैर्मुनिगणा नृपम् ।
निजघ्नुर्निहतं पूर्वं भगवन्निन्दनादिना ॥ २९ ॥
ततश्च मुनयो रेणुं ददृशुः सर्वतो द्विज ।
किमेतदिति चासन्नान्पप्रच्छुस्ते जनांस्तदा ३० ॥
आख्यातं च जनैस्तेषां चोरीभूतैरराजके ।
राष्ट्रे तु लोकैरारब्धं परस्वादानमातुरैः ॥ ३१ ॥
तेषामुदीर्णवेगानां चोराणां मुनिसत्तमाः ।
सुमहान्दृश्यते रेणुः परवित्तापहारिणाम् ॥ ३२ ॥
ततः संमन्त्र्य ते सर्वे मुनयस्तस्य भूभृतः ।
ममन्थुरूरुं पुत्रार्थमनपत्यस्य यत्नतः ॥ ३३ ॥
मथ्यमानात्समुत्तस्थौ तस्योरोः पुरुषः किल ।
दग्धस्थूणाप्रतीकाशः खर्वटास्योऽतिह्रस्वकः
किं करोमीति तान्सर्वान्स विप्रानाह चातुरः ।
निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् ॥ ३५ ॥
ततस्तत्संभवा जाता विन्ध्यशैलनिवासिनः ।
निषादा मुनिशार्दूल पापकर्मोपलक्षणाः ॥ ३६ ॥

चित्सुखीयम् ।

राज्यदेहयोरुपकाराय ॥ १६ ॥ खर्वनामकः ॥ ३४ ॥ सौम्यां सोमाभिषवस्थानभूतायां भुवि । सौले-

श्रीधरीयम् ।

पोपश्च अमर्षश्च भगवन्निन्दाजनितौ ताभ्यां समन्विताः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥ मथ्यमानादिति । मथ्यतश्चेति पाठेऽपि मथ्यमानादित्येवार्थः । दग्धस्थूणाप्रतीकाशः दग्धस्तम्भतुल्यः कृष्णवर्ण इति यावत् । खर्वटास्यः ह्रस्वमुखः निबिडनासिकपक्षा इत्यर्थः । खर्वटाग्य इति च पाठः । केचित्तु खर्वटाक्ष इति पठित्वा गोः अक्षिणी इव अक्षिणी यस्येति व्याचक्षते ॥ ३४ ॥ किं करोमीति । अत्यन्तासम्भवे तथाभूतमभिषेक्तुं निषीदेति तमूचुः ॥ ३५ ॥ तत इति । पापरूपं कर्म-

विष्णुचित्तीयम् ।

॥ २८ ॥ इतीति । वेदतद्विषयाननिन्दया धर्माननुज्ञया आत्मप्रशंसया च स्वयमेव हतस्वात्तद्धन्तुर्न दोष इति भावः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ मथ्यमानादिति । मथ्यतः मथ्यमानात् । ख-स्वाटः खलतिः । खर्वटश्चाति ह्रस्वक इति च पाठः । खर्वटास्य इति पाठे ह्रस्ववक्त्रः ॥ ३४ ॥ ३५ ॥

सत्यव्रतीयम् ।

निहतं क्षीणायुषं ॥ २९ ॥ ततो वेनहननानन्तरं ॥ ३० ॥ तेषां तेभ्यः अचोरा एव चोरा अभवन् । चोरीभूताः तैः आतुरैराकुलैः ॥ ३१ ॥ मथ्यतो मथ्यमानात् । दग्धस्थूणाप्रतीकाशः दग्धस्तम्भतुल्यः कृष्णवर्ण इति यावत् । खर्वटास्यः ह्रस्ववक्त्रः ॥ निबिडनासिकमुख इत्यर्थः ॥ ३४ ॥ आतुरः आर्तः । निषीदेति तमूचुः । तेन सनिषादोऽभवत् ॥ ३५ ॥ तादृश्या वृत्त्या प्राचीनं पापकर्म उपलक्षयन्ति एते इति वा पापरूपं कर्मैवोपलक्षणं चिह्नं येषां ते तथा निषादाः जाता इत्यन्वयः ॥ ३६ ॥ तेन द्वारेण निषादरूपेण तत्पापं वेनपापं निषीदति निर्गच्छतीति निषादः । सीदतेर्गत्यर्थस्य रूपमिति

रत्नगर्भीयम् ।

नामितिशेषः ॥ ११ ॥ रेणुं धूलिं । आसन्नं निकटस्थं जनं ॥ ३० ॥ खर्वटाश्च इति पाठे खर्वटे अ-नायते वर्तुलेवा अक्षिणी यस्यसः ॥ ३४ ॥ तत्र ह्रस्वनिर्मन्थनेन धूमरूपनिषादे निर्गते अग्निरिव देदीप्य-

[ पा० ] १ क ख. ज—ड देवमनादि. २ ख ग. ज. हरिं ३ क—ग च. श्च ४ घ दिशं. ५ क. छ ज राजके ६ ग. मथ्नत ७ क घ ङ छ ज. ट—ड मथ्यतश्च समुत्तस्थौ । ख मध्ये तस्य समुत्तस्थौ. ८ ख, सं-ल्वाटज्योतिह्रस्व । [श्रीध॰ पा॰] खर्वटास्योऽति । [विष्णु चि॰ पा॰] खर्वटाश्चोति—खर्वटश्चाति [रत्न॰ पा॰] खर्वटाक्षो. ९ ख. घ. ट. न्विप्रानाह स्मान्वित .

तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ॥
प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ ॥ ५२ ॥
स्तूयतामेष नृपतिः पृथुर्वैन्यः प्रतापवान् ।
कर्मैतदनुरूपं वां पात्रं स्तोत्रस्य चापरम् ॥ ५३ ॥
ततस्तावूचतुर्विप्रान्सर्वानेव कृताञ्जली ।
अद्य जातस्य नो कर्म ज्ञायतेऽस्य महीपतेः ॥ ५४ ॥
गुणा न चास्य ज्ञायन्ते न चास्य प्रथितं यशः ।
स्तोत्रं किमाश्रयं त्वस्य कार्यमस्माभिरुच्यताम् ५५

ऋषय ऊचुः ॥

करिष्यत्येष यत्कर्म चक्रवर्ती महाबलः ।
गुणा भविष्या ये चास्य तैरयं स्तूयतां नृपः ५६

श्रीपराशर उवाच

ततः स नृपतिस्तोषं तच्छ्रुत्वा परमं ययौ ।
सद्गुणैः श्लाघ्यतामेति तैसाच्छ्लाघ्या गुणा मम ५७
तस्मादद्य स्तोत्रेण गुणनिर्वर्णनं त्विमौ ।
करिष्येते करिष्यामि तदेवाहं समाहितः ॥ ५८ ॥
यदिमौ वर्जनीयं च किञ्चिदत्र वदिष्यतः ।
तदहं वर्जयिष्यामीत्येवं चक्रे मतिं नृपः ॥ ५९ ॥
अथ तौ चक्रतुः स्तोत्रं पृथोर्वैन्यस्य धीमतः
भविष्यैः कर्मभिः सम्यक्सुस्वरौ सूतमागधौ ६० ॥
सत्यवाग्दानशीलोऽयं सत्यसन्धो नरेश्वरः ।
ह्रीमान्मैत्रः क्षमाशीलो विक्रान्तो दुष्टशासनः ६१

श्रीधरीयम् ।

॥ ५० ॥ तस्येति । सूत्यां सुतिः सोमाभिषवभूमिः तस्यां सौत्येऽहनि ॥ ५१ ॥ तस्मिन्निति । तस्मिन्नेव दिने ॥ ५२ ॥ स्तूयतामिति । वां युवयोः ॥ ५३ ॥ ५४ ॥ गुणा इति । अस्माभिरिति । अद्यादोर्ड्योश्चेति बहुत्वम् ॥ ५५ ॥ करिष्यतीति । चक्रवर्ती दक्षिणहस्ते प्रविष्टस्य चक्रस्योपलक्षणैः महाबलश्च विष्णवंशत्वात् अतः सर्वेऽप्यस्य सद्गुणाः सत्कर्माणि च भविष्यन्त्येव । भविष्यैरेव सद्गुणकर्मभिः स्तूयताम् । अयं भावः "नियुज्यतेऽक्षमो दण्डैरुत्तमस्तु प्रियोक्तिभिः" इति न्यायात् । अयं गुणकर्मस्तुत्यैव स्वकार्ये विज्ञापनीय इति ॥ ५६ ॥ पृथुरपि इत्यमनेन स्तुतिविशेषेण ममायमृषिभिरुपदेशः नियत इति मत्वा तथैव कर्तुमध्यवसितवानित्याह—तत इत्यादिभिः—तत इति । मम गुणाः श्लाघ्याः श्लाघार्हाः स्तुतिविषयत्वात् । तस्माल्लभ्या गुणा इति पाठे गुणाः सद्गुणाः लभ्याः प्राप्याः ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ ६० ॥ सत्यवागिति । सत्यसन्धः सत्यप्रतिज्ञः सत्यमर्यादो वा । ह्रीमानकार्ये जुगु-

विष्णुचित्तीयम् ।

॥ ५२ ॥ स्तूयतामिति । औदार्यादिगुणैरेष स्तूयतां पराक्रमादि कर्म चास्य स्तूयताम् ॥ ५३ ॥ ५४ ॥ गुणा इति । यशो हि गुणक्रियाप्रसिद्धिः ॥ ५५ ॥ ५६ ॥ तत इति । सद्गुणैरिति लोके हि जनः सद्गुणैः स्तुत्यो भवति तस्मान्मम मया गुणा लभ्याः सम्पाद्याः ॥ ५७ ॥ तस्मादिति । तदेव औदा-

दत्तात्रेयीयम् ।

छपन्त्येत्यादिना पूर्वेणान्वयः । सुतिरभिषूतिः । अभिषूयते कण्ड्यते सोमोऽस्यामिति सूतिः । तस्यां सोमाभिषवभूमौ । सौत्येऽहनि सोमाभिषवणदिवसे ॥ ५१ ॥ एतदनुरूपं कर्म च स्तूयतां अयं च वां युवयोः स्तोत्रस्य पात्रं योग्य इति संबन्धः ॥ ५३ ॥ अस्माभिरित्यावाभ्यां । अस्मदोर्द्वयोश्चेतिसूत्राद्बहुवचनं ॥ ५५ ॥ सद्गुणैर्विद्यमानगुणैः लोके जनः श्लाघनामेति स्तुत्यो भवति । तस्मान्मम मया गुणाः लभ्याः प्रा-

रत्नगर्भीयम् ।

तस्मिन्नेव दिवसे बार्हस्पत्यं हविरैन्द्रेण हविषा पृक्तमभिभूतं तस्य होमात्प्रातिलोम्येन सूतो जात एवं ऐन्द्रमारुतेन ततो मागध इति पौराणिकाः ॥ ५२ ॥ मैत्रः सपरस्मिन्समभावः ॥ ६१ ॥

[ पा० ] १ क. ख. ङ अ—ट. भाव्यं । ङ.-चाप्युवाच. १ [दत्ता० पा०] श्लाघनां । २ [धीच० पा०] तस्माल्लभ्या । ३. स्वाधाभ्यां गुणाः मम. ४ घ. धीमान्मैत्रः

धर्मज्ञश्च कृतज्ञश्च दयावान्प्रियभाषकः ।
मान्यान्मानयिता यज्वा ब्रह्मण्यः साधुसम्मतः ॥
समः शत्रौ च मित्रे च व्यवहारस्थितो नृपः ६३॥
सूतेनोक्तान्गुणानित्थं स तदा मागधेन च ।
चकार हृदि तादृक्स कर्मणा कृतवानसौ ॥ ६४ ॥
ततस्तु पृथिवीपालः पालयन्पृथिवीमिमाम् ।
इयाज विविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ ६५ ॥
तं प्रजाः पृथिवीनाथमुपतस्थुः क्षुधार्दिताः ।
ओषधीषु प्रणष्टासु तस्मिन्काले ह्यराजके ।
तमूचुस्ते नताः पृष्टास्तत्रागमनकारणम् ॥ ६६ ॥
[प्रजापतिसमं शूरं पृथुं सत्यपराक्रमम् ।]

प्रजा ऊचुः ॥

अराजके नृपश्रेष्ठ धरित्र्या सकलौषधीः ।
ग्रस्तास्ततः क्षयं यान्ति प्रजाः सर्वाः प्रजेश्वर ६७॥
त्वन्नो वृत्तिप्रदो धात्रा प्रजापालो निरूपितः ।
देहि नः क्षुत्परीतानां प्रजानां जीवनौषधीः ६८॥

श्रीपराशर उवाच ॥

ततस्तु नृपतिर्दिव्यमादायाजगवं धनुः ।
शरांश्च दिव्यान्कुपितः सोऽन्वधावद्वसुन्धराम्६९
ततो ननाश त्वरिता गौर्भूत्वा च वसुन्धरा ।
सा लोकान्ब्रह्मलोकादीन्संत्रासादगमन्मही ७०
यत्र यत्र ययौ देवी सा तदा भूतधारिणी ।
तत्र तत्र तु सा वैन्यं ददृशेऽभ्युद्यतायुधम् ७१ ॥
ततस्तं प्राह वसुधा पृथुं राजपराक्रमम् ।
प्रवेपमाना तद्बाणपरित्राणपरायणा ॥ ७२ ॥

पृथिव्युवाच ॥

स्त्रीवधे त्वं महापापं किं नरेन्द्र न पश्यसि ।
येन मां हन्तुमत्यर्थं प्रकरोषि नृपोद्यमम् ॥७३ ॥

श्रीधरीयम् ।

प्सावान् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ तस्मिन्काले वेनपृथुमहाराजयोः सन्धौ ॥ ६६ ॥ अराजक इति । सकलौषधीः सकला ओषध्यः ग्रस्ताः ॥ ६७ ॥ ६८ ॥ ६९ ॥ तत इति । सा मही

विष्णुचित्तीयम् ।

योनि ॥ ५८ ॥ ५९ ॥ ६० ॥ सत्यवागिति । ह्रीः अकार्याल्लज्जा ॥ ६१ ॥ ६२ ॥ सम इति । व्यवहारस्थितो नृप इति च पाठः । व्यवहारस्थितः व्यवहारदर्शनाय धर्मासनस्थः ॥ ६३ ॥ ६४ ॥ तत इति । यज्ञैरियाज देवपूजामकरोत् ॥ ६५ ॥ तमिति । तस्मिन् काले वेनपृथुराज्यसन्धौ । तेन आगमनकारणे पृष्टास्तमूचुः ॥ ६६ ॥ अराजक इति । ओषधीः ओषध्यः ॥ ६७ ॥ ६८ ॥ ६९ ॥ तत इति । ननाश अपलायत 'नाशः पलायने मृत्यौ मृतौ च' इति वैजयन्ती ॥ ७० ॥ ७१ ॥ ७२ ॥

दत्तात्रेयीयम् ।

ण्याः ॥ ६० ॥ सत्यसन्धः सत्यप्रतिज्ञः । ह्रीमान् अकार्ये लज्जावान् ॥ ६१ ॥ व्यवहारस्थितः व्यवहारदर्शनाय धर्मासनस्थः ॥ ६३ ॥ हृदि चकार करिष्यामीति मनसि संकल्प्य कृतवानित्यर्थः ॥ ६४ ॥ तस्मिन्काले वेनपृथुराज्यसन्धिकाले ॥ ६६ ॥ सकलौषधीः सकलौषध्यः ॥ ६७ ॥ जीवनौषधीः जीवनार्थमोषधीः ॥ ६८ ॥ ननाश अपलायत । "नाशः पलायने मृत्यौ मृतौ च" इति वैजयन्ती । वसुन्धरा तदभिमानिनी देवता ॥ ७० ॥ तस्य पृथोर्बाणात्परित्राणमेव परायणमभीष्टं यस्याः सा तथोक्ता

[ पा० ] १ क ख ह यष्टा २ क—ङ छ—ठ साधुसत्तम. ३ [विष्णु चि० पा०] व्यवहारस्थितो ४ क. ख क्षुधातुरा ५ क—ग नरा. ६ अयमर्थ न पाठे मानसधिक वर्तते ७ क सत्रांकमद्य. ८ ख—घ छ—ह. पृथु पृथुपराक्रम

पृथुरुवाच ॥
एकस्मिन्यत्र निधनं प्रापिते दुष्टकारिणि ।
बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः ॥ ७४ ॥
पृथिव्युवाच ॥
प्रजानामुपकाराय यदि मां त्वं हनिष्यसि ।
आधारः कः प्रजानां ते नृपश्रेष्ठ भविष्यति ७५ ॥
पृथुरुवाच ॥
त्वां हत्वा वसुधे बाणैर्मच्छासनपराङ्मुखीम् ।
आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥७६॥
श्रीपराशर उवाच ॥
ततः प्रणम्य वसुधा तं भूयः प्राह पार्थिवम् ।
प्रवेपिताङ्गी परमं साध्वसं समुपागता ॥ ७७ ॥

पृथिव्युवाच ॥
उपायतः समारब्धाः सर्वे सिद्ध्यन्त्युपक्रमाः ।
तस्माद्वदाम्युपायं ते तं कुरुष्व यदीच्छसि ॥७८॥
समस्ता या मया जीर्णा नरनाथ महौषधीः ।
यदीच्छसि प्रदास्यामि ताः क्षीरपरिणामिनीः ७९
तस्मात्प्रजाहितार्थाय मम धर्मभृतां वर ।
तं तु वत्सं कुरुष्व त्वं क्षरेयं येन वत्सला ॥८०॥
समां च कुरु सर्वत्र येन क्षीरं समन्ततः ।
वरौषधीबीजभूतं बीजं सर्वत्र भावये ॥ ८१ ॥
श्रीपराशर उवाच ॥
तत उत्सारयामास शैलाञ्छतसहस्रशः ।
धनुष्कोट्या तदा वैन्यस्तेन शैला विवर्धिताः ८२

चित्सुखीयम् ।

अहनि । सोमाभिषवदिने ॥ ५१ ॥ ननाश निलीनेति यावत् ॥ ७० ॥ क्षरेयं क्षीरं स्रवेयं ॥ ८० ॥

श्रीधरीयम् ।

ब्रह्मलोकादीन् लोकान् प्रति ननाश अपलायत ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ त्वामिति । आत्मयोगबलेन पृथिवीभावं प्राप्य धारयिष्यामि । तथा च हरिवंशे—"आत्मानं प्रथयित्वेमा धारयिष्याम्यहं प्रजाः" इति ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ तस्मादिति । क्षरेयं क्षीररूपेणौषधीः स्रवेयम् ॥ ८० ॥ समामिति । मां च सर्वत्र समां कुरु येन समस्थलत्वेन क्षीरं सर्वत्र भावये धारयामि ॥ ८१ ॥ तत इति । विवर्धिताः एकीकृत्योच्चतराः कृताः । विवर्जिता इति पाठे उत्सा-

विष्णुचित्तीयम् ।

॥ ७३ ॥ ७४ ॥ ७५ ॥ त्वामिति । योगः सामर्थ्यं तदेव बलं "आत्मानं प्रथयित्वेमा धारयिष्याम्यहं प्रजाः" इति हरिवंशे ॥ ७६ ॥ ७७ ॥ ७८ ॥ समस्ता इति । क्षीरपरिणामिनीः क्षीरेण परिणामिनीः ॥ ७९ ॥ ८० ॥ समामिति । समां समस्थलां येन समीकरणेन भावये उत्पादये ॥ ८१ ॥ तत इति । तेन उत्सादनेन विवर्जिताः निक्षिप्ताः । विवर्धिता इति पाठे एकत्र पुञ्जीकृताः । रिव-

रत्नगर्भीयम् ।

॥ ७२ ॥ दुष्टकारिणि अपकारशीले ॥ ७४ ॥ आत्मयोगबलेन आत्मयोगः स्वरूपसामर्थ्यं तदेव बलं तेन । आत्मानं प्रथयित्वा प्रजा धारयिष्यामीत्यर्थः । "आत्मानं प्रथयित्वेमा धारयिष्याम्यहं प्रजाः" इति हरिवंशोक्तेः ॥ ७६ ॥ उपक्रमाः आरंभाः । आरब्धाः कृताः ॥ ७८ ॥ क्षीरपरिणामिनीः क्षीराकारेणपरिणताः ॥ ७९ ॥ क्षरेयं क्षीररूपेणौषधीः स्रवेयं ॥ ८० ॥ समां समस्थलां । येन समीकरणेन वरौषधीबीजभूतं क्षीरं सर्वत्र भावये धारयामि ॥ ८१ ॥ उत्सारयामास निक्षिप्तवान् ।

रत्नगर्भीयम् ।

व्यवहारस्थितौ व्यवहाराणां ऋणादानादानापद्दानां स्थितौ निरूपणे समोऽपक्षपातीत्यर्थः । धर्मनीयं धैर्यतद्विपरीतमर्यादुत्तमम् ॥ ६३ ॥ अत्यर्थं तत्तल्लोकगमनमुत्तमं ॥ ७३ ॥ भविष्यत्पाठे भावयेः प्राप-

[ पा० ] १ ग प्रवेपमाना २ क—ख. ट—ड. प्रयत्न ३. ग. क्षीरं । क—च ग ट—ड. वीरं. ४ [रत्न० पा०] भावयं . ५ ड. विवर्जिता .




## संस्कृतनूतनपुस्तकानि ।

# ब्रह्मसूत्रशाङ्करभाष्यम् ।

### मूलमात्रं, सटिप्पणम् ।

मूल्यं २ रु. मार्ग. ४ आ.

श्रीमद्भगवत्पादाचार्यप्रणीतोऽयं ग्रन्थोऽद्वैतवेदान्तशास्त्रमूर्धन्यत्वेन समुल्लसतीति नापेक्षास्त्यैतद्दीयप्रौढिप्रपादस्य । अयं च पाठप्रवचनादावध्यापकान्तेवासिवर्गग्रहणक्षमः स्वक्षरोऽल्पायामपरिणाहोऽप्यस्तमनोहरोऽपि स्वल्पमूल्य इदानीमस्माभिर्लोकानुग्रहाय मुद्रितोऽस्ति । शब्दविशेषे व्याख्यासाहाय्यमन्तरापि निर्वाहपर्याप्तविशदटिप्पणयोजनं विहितमस्त्यत्र महतायासेन.

---

# ललितासहस्रनाम ।

### भास्कररायप्रणीतसौभाग्यभास्कराख्यभाष्योपेतम् ।

मूल्यं १। रु. मार्ग. ४ आ.

ब्रह्माण्डपुराणोत्तरभागवर्तीदमखिलसहस्रनामभ्यो महत्त्वेनातिशेते तथानेदं भाष्यमपि । श्रीमच्छाङ्करविभूतिकल्पेन सुगृहीतनामधेयेनानेन व्याख्यात्रा भाष्यप्रक्रमप्रियेणात्र बहुशस्तान्त्रिकपरमरहस्यतमा अनेके विषयाः सन्त्युपक्रान्तास्तेषु केचिद्विस्तरेण केचिच्च दिग्दर्शनेन । यदालोचनलाभेन भूरिशो विद्या मन्त्रशास्त्रविविधापूर्वविषयोद्बोधेन तत्प्रवणा मुमुक्षवो वा भूयासुः । अपि चैकैकस्य नाम्नोऽर्थस्य प्रकारकाऽनेकललितार्थावगमेनापि व्युत्पित्सवो नितान्तं तुष्येयुः । अस्यारंभे भुवनाभोगाख्यं भास्कररायचरितं विन्यस्य भाष्ये प्रामाण्यत्वेनोपात्तानां ग्रन्थानां ग्रन्थकृतां चोपन्यासोऽप्यस्माभिरकारि येन व्यंसयाद्युः प्रकाशकप्रयासयिष्करणं स्यात् ।

---

# प्रयोगरत्नं–नारायणभट्टी ।

### उत्तरनारायणभट्टी–अंत्येष्टिश्च ।

**समन्त्रकप्रयोगाः अत्र २६ यज्ञपात्राकृतयः ।**

मूल्यं २ रु. मार्ग. ४ आ.

भिन्नदिक्षमपीदं ग्रन्थद्वयं सर्वोपयुक्तत्वादेककर्तृकत्वादखिलसंग्राहकत्वाच्चाद्विधमस्त्यस्माभिरेकत्र । एतद्द्वयमुपयुञ्जाना विप्रप्रवराः निबन्धान्तरनिरपेक्षमेवाभ्यां पारयेयुः प्रयोगानिति तत्र तत्र टिप्पणेन

विशदीकरणं कृतमस्ति । अस्यारम्भे नित्यं सर्वैरुपयोक्ष्यमाणान्कतिचन विषयान्ग्रन्थकृदुपेक्षितानतो ग्रामकान्विशदीकरणपूर्वं संयोज्यान्ते पाकसंस्था अपि महाविद्वद्धृताः संति भूयः संयोजिताः । तथान्त्येष्टिगतसंकुचितदानकाण्डादिविषयाणामन्येषां चातीवोपयुक्तानां संग्रहेण ग्रन्थोऽयमङ्कितोऽस्ति ।

---

# आचाररत्नम् ।

## आह्निकग्रन्थः ।

मूल्यं १ रु. मार्ग. २ आ.

काशीक्षेत्रमण्डनायमाननारायणभट्टपौत्रो लक्ष्मणभट्ट इदं ग्रन्थरत्नमरीरचत् । अत्र चारुणोदयादाद्वितीयाहःसूर्योदयं नित्याचरणीयानां सर्वेषां श्रौतकर्मणां सविस्तरमत्यपूर्वतयातिवैशद्येन च स्फुटीकरणं कृतमस्तीत्येव न किंतु प्रत्यहं महिलाकर्तृकाणां श्राद्धविधिसंमार्जनदेहलयानुलेपनरङ्गवल्लीकरणादीनामपि सप्रमाणं स्पष्टीकरणमस्ति । अन्यस्याप्यभिनवस्यास्य ग्रन्थस्य मुद्रणशालायामयं बभूव प्रथमावतारः ।

---

# उज्ज्वलनिलमणिः । (अलंकारः)

मूल्यं ३ रु., मार्गव्ययः ६ आणकाः

श्रीमद्रूपगोस्वामिप्रणीतः, श्रीजीवगोस्वामिप्रणीतया लोचनरोचनाख्यटीकया, श्रीमद्विश्वनाथविरचितआनन्दचन्द्रिकाव्याख्यया च सहितः । काव्यमालाद्वारा प्रकाशितेष्वनेकग्रन्थेष्वयमुत्कृष्टकोटिकोऽस्ति । अत्र ग्रन्थप्रणेत्रा श्रीराधाकृष्णकृतमञ्जुलीलाप्रतिपादनमिषेणाखिलरसानां क्रमेण समावेशोऽतीव माधुरालापपदैः कृतोऽस्ति । मुहुः परिशीलितोऽयं विद्वच्चेतश्चमत्काराय स्यात् ।

---

# READY FOR SALE.



## VEDIC.

## SUKLA-YAJURVEDA-SAMHITÂ.

**(Mâddhyandina-Vâjasaneyî)**

Containing Bhâshyas of

**UVATA & MAHÎDHARA,**

with various appendices

**Price 5 Rupees Postage 12 Annas**

This work relates to the Yajna kanda, with the exception of the last chapter which treats of Brahma (Jñâna kânda) On each page the Kandikâs (Mantras) are given first, then the Uvata Bhâshya and lastly the Mahidhara Bhâshya Various manuscripts have been compared to arrive at a correct reading The contents of each of the Chapters are given at the beginning and the *Pârâyanakrama, Pratijñâ-sutra*, Yâjnavalkya Shikshâ and other Parisishtas as well as an Index of the Kandikâs are given at the end Thus it will be seen that every effort has been made to bring out the work in an up to date style

| | *Price* Rs. | As | *Postage* Rs | A |
|---|---|---|---|---|
| **Aitareyopanishads** (Annas) | 0 | 4 | 0 | 1 |
| **Aitareya Brahmana** | 1 | 0 | 0 | 2 |
| **Âs valâyanagrihyasûtra** containing 4 Chapters | 0 | 8 | 0 | ½ |
| **Deva mantras** Âpastambîya | 0 | ½ | 0 | ½ |
| Do Rigvedîya | 0 | ½ | 0 | ½ |
| **Ganapatyatharva sirsha** | 0 | ½ | 0 | ¼ |
| **Pavamâna pañcha sûktam** | 0 | 1½ | 0 | ½ |
| **Purusha sukta** | 0 | ½ | 0 | ½ |
| **Rigveda Mantra Samhitâ** (Class) | 0 | 12 | 0 | 2 |

### RIGVEDASAMHITÂ

with **Paribhâshâ, Svâhâkâra** and **Mantrakosha**

In the first portion of this work have been embodied the authoritative forms of addressing the various Deities, the modes of offering oblations and various other ritualistic observances which are fully explained Likewise, at the end of the text is given an **alphabetical index** *of all the Mantras.*

Everything calculated to facilitate the correct grasp of the subject has been incorporated in the present volume 3 0 0 8

### RIKSAMHITÂ—PADAPÂTHA

This work has been carefully and critically prepared for the use of *teachers and students of* the great Vedic work, and has further been so arranged as will be useful to performers of ritualistic ceremonies 3 0 0 6

| | Price Rs. | As. | Postage Rs. | As. |
|---|---|---|---|---|
| Rudra | 0 | ¼ | 0 | ¼ |
| Saura sûktâm | 0 | ½ | 0 | ½ |
| Sikshâdi vedângachatushtaya containing Sikshâ, Jyotish, Chhandas, and Nighantu. | 0 | 3 | 0 | ½ |
| Sikshâdi vedashadangam containing—1 Sikshâ 2 Jyotisha, 3 Chhandas 4 Nighantu Nirukta—Pûrvashatka, Uttarashatka, 6 Âsvaliyana Srautasûtra—Purvashatka Uttarashatka 6 Ashtâdhyâyî (Sûtrap.tha) | 1 | 4 | 0 | 4 |
| Srisûkta | 0 | ¼ | 0 | ¼ |
| Sukla-yajurveda Madhyandina Samhita to which are added Yâjnavalkya sikshâ, Pratijñâsûtra, Sarvânukrama Anuvâksûtra and an Index | 2 | 0 | 0 | 6 |
| Sukla-yajurvediya Rudrashtadhyayi | 0 | 3 | 0 | ½ |
| Udaka sânti | 0 | 1½ | 0 | ½ |

## RITUALISTIC

| | Price Rs. | As. | Postage Rs. | As. |
|---|---|---|---|---|
| Âhnik sûtrâvali (Suklayajurvediya) | 1 | 8 | 0 | 3 |
| Ahnika-chandrikâ or Achâra chandrikâ (with Sâyana Mantra Bhâshya) a collection of all the Âhnika Mantras Sûktas, Saura-sûktas Rudrâdhyâya, Rudrasuktas Vishnu sûktas, Devi-sûkta, Srisûkta, Ganapati sûkta, with the Sâyana-bhâshya and Ganapatyatharvasirsha with a commentary | 0 | 12 | 0 | 3 |

### BRAHMA-KARMA-SAMUCHCHAYA

A work useful alike to the Vaidika the Yâjñika, the Shâstri as well as to the Bhikshuka. It consists of four parts—(1) the daily rites (2) purificatory rites (3) the ceremonies connected with the various religious vows, and (4) obsequial rites. It contains 388 different subjects. The diagrams connected with the several purificatory rites are also given and an index of the several mantras is appended.

| | Price Rs. | As. | Postage Rs. | As. |
|---|---|---|---|---|
| (Rigvediya) | 2 | 4 | 0 | 6 |
| Do Do (Hiranyakesiya) | 2 | 4 | 0 | 6 |
| Dattâtreya-sahasra nâmâvali | 0 | 2 | 0 | ½ |
| Devi sahasra-nâmâvali | 0 | 1½ | 0 | ½ |
| Ganesa sahasra nâmâvali | 0 | 1½ | 0 | ½ |
| Hiranyakesiya Nitya vidhi (Âpastambiya) | 0 | 3 | 0 | 1 |
| Kunda-ratnavali by Râmchandra Dixit Jade giving 64 diagrams of Kundas | 1 | 0 | 0 | 2 |
| Nitya karma-paddhati | 0 | 1 | 0 | ½ |
| Panchâyatana-devatâ namâvali | 0 | 1 | 0 | ½ |
| Pratisâmvatsarika Srâddha Prayoga with the Rakshoghna Srâddha sûkta | 0 | 2 | 0 | ½ |
| Prâtah smarana | 0 | 1 | 0 | ½ |

### PUJÂ-SAMUCHCHAYA

A collection of 103 different pujâs or forms of worship of various Deities enjoined to be performed throughout the year by males as well as females wherein are also incorporated lists of names of those Deities for being recited. The work forms an appropriate supplement to the Brahmakarma-samuchchaya.

| | Price Rs. | As. | Postage Rs. | As. |
|---|---|---|---|---|
| Pujâ-samuchchaya | 0 | 12 | 0 | 2½ |
| Rigvediya Nitya vidhi | 0 | 4 | 0 | 1 |

TUKARAM JAVAJI,
*Proprietor, Nirnaya sagar Press*
*Kalbadevi Road Bombay*

न हि पूर्वविसर्गे वै विषमे पृथिवीतले ।
प्रविभागः पुराणां वा ग्रामाणां वा पुराऽभवत् ८३
न सस्यानि न गोरक्ष्यं न कृषिर्न वणिक्पथः ।
वैन्यात्प्रभृति मैत्रेय सर्वस्यैतस्य सम्भवः ॥ ८४ ॥
यत्रयत्र समं त्वस्या भूमेरासीद्द्विजोत्तम ।
तत्रतत्र प्रजाः सर्वा निवासं समरोचयत् ॥ ८५ ॥
आहारः फलमूलानि प्रजानामभवत्तदा ।
कृच्छ्रेण महता सोऽपि प्रणष्टास्वोषधीषु वै ॥ ८६ ॥
स कल्पयित्वा वत्सं तु मनुं स्वायंभुवं प्रभुम् ।
स्वपाणौ पृथिवीनाथो दुदोह पृथिवीं पृथुः ।
सस्यजातानि सर्वाणि प्रजानां हितकाम्यया ८७
तेनान्नेन प्रजास्तात वर्तन्तेऽद्यापि नित्यशः ॥ ८८ ॥
प्राणप्रदाता स पृथुर्यस्माद्भूमेरभूत्पिता ।
ततस्तु पृथिवीसंज्ञामवापाखिलधारिणी ॥ ८९ ॥
ततश्च देवैर्मुनिभिर्दैत्यै रक्षोभिरद्रिभिः ।
गन्धर्वैरुरगैर्यक्षैः पितृभिस्तरुभिस्तथा ॥ ९० ॥
तत्तत्पात्रमुपादाय तत्तद्दुग्धं मुने पयः ।
वत्सदोग्धृविशेषाश्च तेषां तद्योनयोऽभवन् ॥ ९१ ॥

चित्सुखीयम् ।

भावये भाविनं संबन्धं कुर्यात् ॥ ८१ ॥ विवर्धिताः एकैकशोऽवतराःकृताः ॥ ८२ ॥ पूर्वविसर्गे पृथोर्जन्मनः प्राक्तनसृष्टौ ॥ ८३ ॥ तद्योनयः तज्जातीयाः । देवानामिन्द्रो वत्सः दोग्धा सविता । सौवर्णं

श्रीधरीयम् ।

रणदेशे विवर्जिता इत्यर्थः ॥ ८२ ॥ न हीति । पूर्वविसर्गे पृथूत्पत्तेः पूर्वसृष्टौ ॥ ८३ ॥ ८४ ॥ ८५ ॥ आहार इति । तदा पृथोः पूर्वमराजके सोऽपि फलाहारः महता कृच्छ्रेण सम्पाद्योऽभवत् ॥ ८६ ॥ स इति । स पृथुस्तु प्रजासन्तानप्रवर्तकं मनुं वत्सं कृत्वा स्वपाणिरूपपात्रे सस्यबीजानि पृथिवीं दुदोहेत्यन्वयः ॥८७॥८८॥ प्राणप्रदातेति । प्राणदानादभयदानाद्भूमेः पिताऽभूत् । यथाहुः "जनकश्चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" इति ॥ ८९ ॥ ९० ॥ तत्तत्पात्र-

विष्णुचित्तीयम् ।

र्जिता इति पाठे उत्सारणदेशे विवर्जिता इति ॥ ८२ ॥ न हीति । पूर्वनिसर्गे इति च पाठः । पूर्वनिसर्गे पूर्वावस्थायां । पुरा पृथोः पूर्वकाले ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ स इति । सस्य मनुष्याणां योनिं सस्य पृथुर्दुदोह, तत्र दोहे, पृथुरेव यजमानः ऋत्विक्च ॥ ८७ ॥ ८८ ॥ प्राणेति । प्राणप्रदाता अभयप्रदः "जनकश्चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" इति वचनात् ॥ ८९ ॥ ९० ॥ तत्पात्रमिति । पृथूपदेशाद्देवादिभिस्तत्तद्रसैस्तत्तत्पात्रमुपादाय भू-

रत्नगर्भीयम् ।

तेनोत्सारणेन विवर्जिताः विक्षिप्ताः । विवर्धिता इति पाठे एकत्रराशीकृता ॥ ८२ ॥ पूर्वविसर्गे पूर्वावस्थायां । पुरा पृथोः पूर्वकाले ॥ ८३ ॥ वणिजैर्वणिक्पथः । निवासं समरोचयत् कर्तुमैच्छत् ॥८५॥ तदा पृथोः पूर्वं अराजके काले ओषधीषु प्रणष्टासु सतीषु सोऽपि फलाद्याहारोऽपि कृच्छ्रेण प्रयासेन संपाद्योऽभवत् ॥ ८६ ॥ प्रजासन्तानकं मनुं स्वायम्भुवं वत्सं कृत्वा स्वपाणौ स्वपाणिरूपपात्रे सस्यजातानि पृथिवीं दुदोहेत्यन्वयः ॥ ८७ ॥ प्राणप्रदानात् अभयप्रदानात् भूमेः पिताऽभवत् । "जनकश्चोपनेता च यस्तु विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" इति वचनात् ॥ ८९ ॥ ततः पृथोरपत्यत्वात् ॥ ९० ॥ देवादिभिर्दशभिर्वर्गैस्तत्तत्स्वाभिमतं पात्रमुपादाय तत्तत्स्वाभिमतं पयो भूमि-

[ पा० ] १ [विष्णु चि० पा०] पूर्वनिसर्गे. २ ख—घ ज ञ ठ तस्या ३ ग धराधिप. ४ ग ङ. प्रजाना हि । ङ—छ प्रजाना स । ज ट ठ प्रजाराना ५ ख छ. पुरा ६ ग प छ ज सङ्कल्पयित्वा ७ [श्रीध० पा०] सस्यबीजानि ८ [रत्न० पा०] विशेषाच

सैषा धात्री विधात्री च धारिणी पोषणी तथा । | सर्वस्य तु ततः पृथ्वी विष्णुपादतलोद्भवा ॥९२॥

चित्सुखीयम् ।

पात्रं । क्षीरमूर्जस्करं । मुनीनां सोमो वत्सः दोग्धा बृहस्पतिः छन्दांसि पात्रं क्षीरं तपो ब्रह्म । दैत्यानामायसं पात्रं माया क्षीरं विरोचनो वत्सः दोग्धा द्विमूर्धा । राक्षसानां पात्रं कपालं क्षीरं रुधिरं ब्रह्मवैतो दोग्धा वत्सस्सुमाली । अद्रीणां वत्सो हिमवान् मेरुर्दोग्धा शिलामयं पात्रं रत्नौषधिजातं क्षीरं । गन्धर्वाणां पद्मं पात्रं वत्सश्चित्ररथः विश्वावसुर्दोग्धा गन्धः क्षीरं । उरगाणां तक्षको वत्सः ऐरावतो दोग्धा विषं क्षीरं अलाबु पात्रं । यक्षाणामाम पात्रं वैश्रवणो वत्सः दोग्धा रजतनाभः अन्तर्धानं क्षीरं । पितॄणां राजतं पात्रं स्वधा दुग्धं यमो वत्सः

श्रीधरीयम् ।

मिति । पृथ्वादिभिर्वत्सविशेषैस्तत्तत्स्वाभिमतं पात्रमुपादाय तत्तत्स्वाभिमतं पयो भूमिर्दुग्धा । तेषां देवादीनां तद्योनयस्तत्सजातीया एव वत्सविशेषा दोग्धृविशेषाश्च अभवन् । तमेव देवादिषु दोग्धृवत्सादिक्रमं हरिवंशे मात्स्यादावप्युक्तं संक्षेपेण वक्ष्यामः । देवानामिन्द्रो वत्सः मित्रो दोग्धा सौवर्णं पात्रं बलं क्षीरम् । मुनीनां सोमो वत्सः बृहस्पतिर्दोग्धा छन्दांसि पात्रं तपो ब्रह्म च क्षीरम् । दैत्यानां द्विमूर्धा वत्सः विरोचनो दोग्धा आयसं पात्रं माया क्षीरम् । राक्षसानां सुमाली वत्सः जतुनाभः दोग्धा कपालं पात्रं रुधिरं क्षीरम् । अद्रीणां हिमवान्वत्सः मेरुर्दोग्धा शिलामयं पात्रं महौषधिः क्षीरम् । गन्धर्वाणां चित्ररथो वत्सः विश्वावसुर्दोग्धा पद्म पात्रं गन्धः क्षीरम् । उरगाणां तक्षको वत्सः धृतराष्ट्रो दोग्धा अलाबु पात्रं विषं क्षीरम् । यक्षाणां कुबेरो वत्सः सुपर्णो दोग्धा मृण्मयं पात्रम् अन्तर्धानं क्षीरम् । पितॄणां यमो वत्सः अन्तको दोग्धा राजतं पात्रं स्वधा क्षीरम् । वृक्षाणां प्लक्षो वत्सः सालवृक्षो दोग्धा पालाशं पात्रं छिन्नसंरोहणं क्षीरम् । तदुक्तं हरिवंशे "देवा मित्रेन्द्रसौवर्णैर्बलं तु मुनयस्तथा । बृहस्पतीन्दुवेदैश्च तपोदैत्यास्त्रिमूर्धतः । विरोचनायसाभ्यां च मायां रक्षोगणा अपि । जतुनाभसुमालिभ्यामस्रा रक्तं ततोऽद्रयः ॥ हिमाद्रिमेरुशैलैस्तु रत्नं गन्धर्वजातयः । वसुचित्ररथाम्भोजैर्गन्धं तु भुजगास्ततः ॥ धृतराष्ट्रतक्षकालाबुभ्यां च विषमुल्बणम् । यक्षाः सुपर्णधनदमृल्लोऽन्तर्धिं पितृव्रजः ॥ अन्तकप्रेतराड्राजतैः स्वधां हि महीरुहाः । सालप्लक्षपलाशैश्च छिन्नसंरोहणं मुहुः ॥ सदोग्धृवत्सपात्रैश्च तत्तदुदुहुरन्वयाम्" इति ॥ ९१ ॥ सेति । धात्री माता । विधात्री भर्त्री । धारिणी आधारः । पोषणी

विष्णुचित्तीयम् ।

तत्तत्पयो दुग्धा देवादिभिर्यजमानस्थानीयैर्दोग्धृवर्गैः ऋत्विक्स्थानीयैः सूर्यबृहस्पतिद्विमूर्धजतुनाभमेरुवसुरुचिधृतराष्ट्रसुपर्णान्तकसालाख्यदोग्धृविशेषैरिन्द्रसोमविरोचनसुमालिहिमवच्चित्ररथतक्षककुबेरयमप्लक्षाख्यवत्सविशेषैः सौवर्णं छन्दोमयमायसं कापालं शैलं पद्ममलाबुमयं मृण्मयं राजतं पालाशमिति तत्स्थानमादाय बलं तपो मायां रुधिरमौषधं रत्नं गन्धं विषमन्तर्धानं स्वधां पुनः प्ररोहणमिति क्षीरविशेषं मात्स्यादिपूक्तक्रमेण दुग्धा । अत्र नामभेदस्तु नामान्तरत्वेन बोद्धव्यः । तेषामिति । तेषां देवादीनां सूर्यादीनामिन्द्रादीनां च तद्योनयः तानि पात्रादीनि योनयः कारणम् ॥ ९१ ॥ सैषेति । धात्री माता ।

रत्नगर्भीयम् ।

वत्सदोग्धृविशेषाद्वत्सदोग्धृभेदान् दुग्धा । तेषां देवादीनां तद्योनयः त एव तत आप्यक्षीरविशेषा एव योनयः कारणान्यभवन् । वत्सदोग्धृविशेषा इति पाठे तेषां देवादीनां तद्योनयस्तत्सजातीया एव

[ पा० ] १ क. ग. घ—ड. अमत०.

एवं प्रभावस्स पृथुः पुत्रो वेनस्य वीर्यवान् ।
जज्ञे महीपतिः पूर्वो राजाऽभूज्जनरञ्जनात् ॥९३॥
य इदं जन्म वैन्यस्य पृथोः सङ्कीर्तयेन्नरः ।
न तस्य दुष्कृतं किञ्चित्फलदायि प्रजायते ॥९४॥
दुस्स्वप्नोपशमं नृणां शृण्वतामेतदुत्तमम् ।
पृथोर्जन्मप्रभावश्च करोति सततं शुभं ॥ ९५ ॥
इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
त्रयोदशोऽध्यायः ॥ १३ ॥

चित्सुखीयम् ।

अन्तको दोग्धा । तरूणां पलाशं पात्रं वत्सः प्लक्षः दोग्धा सालवृक्षः छिन्नदग्धप्ररोहणं दुग्धं ॥ ९१ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीधरीयम् ।

पोषणकर्त्री ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ इति श्रीश्रीधरस्वामिविरचितायामात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे त्रयोदशोऽध्यायः ॥ १३ ॥

विष्णुचित्तीयम् ।

विधात्री कर्त्री ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे त्रयोदशोऽध्यायः ॥ १३ ॥

दत्तात्रेयीयम् ।

वत्सविशेषा दोग्धृविशेषाश्चाभवन्नित्यर्थः । तत्र देवादिदशवर्गाणां दोग्धृवत्सपात्रक्षीरभेदाः हरिवंशमत्स्यानुसारेण । "कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् । हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः" इत्यादिभागवतानुसारेण च द्रष्टव्याः । तथाहि—देवानामिन्द्रो वत्सः मित्रो दोग्धा सौवर्णं पात्रं बलं क्षीरं । मुनीनां सोमो वत्सः बृहस्पतिर्दोग्धा छन्दांसि पात्रं तपो ब्रह्म च क्षीरं । दैत्यानां त्रिमूर्धा वत्सः विरोचनो दोग्धा आयसं पात्रं माया क्षीरं । राक्षसानां सुमाली वत्सः जतुनाभः दोग्धा कपालं पात्रं रुधिरं क्षीरं । अद्रीणां हिमवान्वत्सः मेरुर्दोग्धा शिलामयं पात्रं ओषधिरसं क्षीरं । गन्धर्वाणां चित्ररथो वत्सः विश्वावसुर्दोग्धा पद्मं पात्रं गन्धः क्षीरं । उरगाणां तक्षको वत्सः धृतराष्ट्रो दोग्धा अलाबु पात्रं विषं क्षीरं । यक्षाणां कुबेरो वत्सः सुपर्णो दोग्धा मृण्मयं पात्रं अन्तर्धानं क्षीरं । पितॄणां यमो वत्सः अन्तको दोग्धा राजतं पात्रं स्वधा क्षीरं । तरूणां प्लक्षो वत्सः सालवृक्षो दोग्धा पालाशं पात्रं छिन्नसंरोहणं क्षीरं । "देवामित्रेन्द्रसौवर्णैर्बलं तु मुनयस्तथा । बृहस्पतीन्दुवेदैश्च तपो दैत्यास्त्रिमूर्धतः । विरोचनायसाभ्यां च मायां रक्षोगणा अपि । जतुनाभसुमालिभ्यामस्रमारक्तं ततोऽद्रयः । हिमाद्रिमेरुशैलैस्तु रत्नं गन्धर्वजातयः । वसुचित्ररथांभोजैर्गन्धं तु भुजगास्ततः । धृतराष्ट्रतक्षकालाबुभ्यां च विषमुल्बणं । यक्षाः सुपर्णधनदमृण्मयोन्तर्धिं पितृव्रजः । अन्तकयमराजौप्यस्वधामथ्या महीरुहाः । सालप्लक्षपलाशैश्च छिन्नसंरोहणं सुहुः । स्वदोग्धृवत्सपात्रैस्ते तत्तद्दुदुहुरुर्वरां" इत्युक्तं हरिवंशे ॥ ९० ॥ ९१ ॥ धात्री माता । विधात्री कर्त्री । धारिणी आधारभूता । पोषणी पोषणकर्त्री । विष्णुपादतलोद्भवा "पद्भ्यांभूमिः" इति श्रुतेः ॥ ९२ ॥ फलदायि नप्रजायते नश्यतीत्यर्थः ॥ ९४ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्य श्रीविष्णुपुराणव्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

रत्नगर्भीयम् ।

यिष्यसि ॥८१॥ इति श्रीरत्नगर्भ०विरचितश्रीविष्णुपु०व्याख्यासारे प्रथमांशे त्रयोदशोऽध्यायः ॥१३॥

---

[ पा० ] १ ग. घ. ङ ङ. पीर्वेश्चते. २ ल. ग्रणनात्रिगत्तम.

## चतुर्दशोऽध्यायः ॥ १४ ॥

पृथुवंशविस्तारकथनप्रसङ्गे प्राचीनबर्हिषो जन्मकथनम् ॥ १ ॥ प्राचीनबर्हिषो वचनात्प्रचेतसां पुत्रकाम्यया श्रीगोविन्दाराधनार्थं पयोधिसलिले निमज्य तपश्चरणम् ॥ २ ॥ प्रचेतःकृता श्रीविष्णुस्तुतिः ॥ ३ ॥ गरुडारूढेन प्रसन्नेन हरिणा प्रचेतसां वरप्रदानकथनम् ॥ ४ ॥

श्रीपराशर उवाच ॥

पृथोः पुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्धिवादिनौ ।
शिखण्डिनी हविर्धानमन्तर्धानाद्व्यजायत ॥ १ ॥
हविर्धानात्षडाग्नेयी धिषणाऽजनयत्सुतान् ।
प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ॥ २ ॥
प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः ।
हविर्धानान्महाभाग येन संवर्धिताः प्रजाः ॥ ३ ॥
प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुने ।
प्राचीनबर्हिरभवत्ख्यातो भुवि महाबलः ॥ ४ ॥
समुद्रतनयायां तु कृतदारो महीपतिः ।
महतस्तमसः पारे सवर्णायां महामते ॥ ५ ॥

चित्सुखीयम् ।

अन्तर्धानादन्तर्धानसंज्ञात् । शिखण्डिनी तद्भार्या ॥ १ ॥ आग्नेयी अग्निवंश्या धिषणानाम्ना । तपसः

श्रीधरीयम् ।

पृथोरिति । अन्तर्धिरेवान्तर्धानः तस्माद्भार्यां शिखण्डिनी हविर्धानं पुत्रमसूयत ॥ १ ॥ हविर्धानादिति । आग्नेयी अग्निवंशजा । धिषणा नाम ॥ २ ॥ ३ ॥ प्राचीनाग्रा इति । प्राचीनाग्राः कुशाः सर्वत्र यज्ञानुष्ठानात् । तदुक्तम्—"यस्येदं देवयजनमनुयज्ञं वितन्वतः । प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम्" । इति ॥ ४ ॥ समुद्रतनयायामिति । तपसः पारे सवर्णसंज्ञायां कृतदारः तपस्तस्याऽनन्तरं ता परिणीतवानित्यर्थः । तमसः पार इति पाठे तमसो नरकस्य पारे निमित्त पुत्रोत्पत्त्या नरकतारणार्थं

विष्णुचित्तीयम् ।

॥ १ ॥ २ ॥ ३ ॥ प्राचीनाग्रा इति । प्राचीनाग्राः कुशाः यज्ञविशेषीयाः ॥ ४ ॥ समुद्रेत्यादि । अत्र दारशब्देन दारक्रिया लक्ष्यते कृतदारः कृतविवाह इत्यर्थः । महतस्तमसः पार इति सवर्णाविशेषणम् । पुत्रोत्पत्तिद्वारेण तामिस्रादिनरकोत्तारहेतुभूतायामित्यर्थः । समुद्रतनयाया सवर्णाया कृतवि-

वृत्तान्तेवीयम् ।

अन्तर्धिरन्तर्धानः । शिखण्डिनी तस्य भार्या अन्तर्धानाद्धविर्धानं पुत्र व्यजायत जनयामास ॥ १ ॥ आग्नेयी अग्निवंशजा । नाम्ना धिषणा ॥ २ ॥ प्राचीनबर्हिरिति । नामान्वर्थकमित्याह—प्राचीनाग्रा इति । तस्य प्राचीनबर्हिषः कुशाः प्राचीनाग्राः । विश्रुताः प्रसिद्धाः । सर्वदा सर्वत्र यज्ञानुष्ठानात् । "यस्येदं देवयजनमनुयज्ञं वितन्वतः । प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातल"इतिभागवतोक्तेः ॥ ४ ॥ महतः तपसः पारे समाप्तौ सत्यां समुद्रतनयायां सवर्णसंज्ञायां कृतदारः । भावप्रधानो निर्देशः । तपस्तस्य तदन्ते ता परिणीतवानित्यर्थः । तमसः पार इति पाठे तमसो नरकस्य पारे । निमित्तसप्तमी । पुत्रो-

रत्नगर्भीयम् ।

चतुर्दशे ध्रुवस्योक्तो वंशो यत्र प्रचेतसः । अन्वौ तस्या हरिं स्तुत्वा प्रजावृद्धिनियुक्ताः ॥ तमस-

[पा०] १ क ख घ ङ ड महावीर्यौ २ ख ■ ठ तेऽन्तर्धि पार्थिवौ । च म. तेऽन्तर्धि पार्थिवौ ३ क ■ हविर्धानान्महाराजो । ड हविर्धानिर्महावीर्या ४ ग ड ज ध पृथिव्यां विश्रुता । ग ट—ड पृथिव्यामभवन् ५ छ बलान्वित ६ [विष्णु चि० पा०] महीपते ७ च—ग ग—ड सर्वग ८ ग सुवर्णायां

संवर्णाऽधत्त सामुद्री दश प्राचीनबर्हिषः ।
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ ६ ॥
अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः ।
दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥ ७ ॥
श्रीमैत्रेय उवाच ॥
यदर्थं ते महात्मानस्तपस्तेपुर्महामुने ।
प्रचेतसः समुद्राम्भस्येतदाख्यातुमर्हसि ॥ ८ ॥
श्रीपराशर उवाच ॥
पित्रा प्रचेतसः प्रोक्ताः प्रजार्थममितात्मना ।
प्रजापतिनियुक्तेन बहुमानपुरस्सरम् ॥ ९ ॥
प्राचीनबर्हिरुवाच ॥
ब्रह्मणा देवदेवेन समादिष्टोऽस्म्यहं सुताः ।
प्रजाः संवर्धनीयास्ते मया चोक्तं तथेति तत् १०॥
तन्मम प्रीतये पुत्राः प्रजावृद्धिमतन्द्रिताः ।
कुरुध्वं माननीया वः सम्यगाज्ञा प्रजापतेः ११ ॥
श्रीपराशर उवाच ॥
ततस्ते तत्पितुः श्रुत्वा वचनं नृपनन्दनाः ।
तथेत्युक्त्वा च तं भूयः पप्रच्छुः पितरं मुने ॥१२॥
प्रचेतस ऊचुः ॥
येन तात प्रजावृद्धौ समर्थाः कर्मणा वयम् ।
भवेम तत्समस्तं नः कर्म व्याख्यातुमर्हसि ॥१३॥
प्राचीनबर्हिरुवाच ॥
आराध्य वरदं विष्णुमिष्टप्राप्तिमसंशयम् ।
समेति नान्यथा मर्त्यः किमन्यत्कथयामि वः १४
तस्मात्प्रजाविवृद्ध्यर्थं सर्वभूतप्रभुं हरिम् ।
आराधयत गोविन्दं यदि सिद्धिमभीप्सथ १५ ॥
धर्ममर्थं च कामं च मोक्षं चान्विच्छतां सदा ।
आराधनीयो भगवाननादिः पुरुषोत्तमः॥ १६ ॥

विष्णुचित्तीयम् ।

परे यमाचरणानन्तरं । सवर्णा नामतः ॥ ५ ॥ अपृथग्धर्मचरणाः सहैव धर्मचारिणः ॥ ७ ॥

श्रीधरीयम् ।

मित्यर्थः ॥ ५ ॥ सवर्णेति । सवर्णा दश प्रचेतसः आधत्त असूयत ॥ ६ ॥ अपृथगिति । अपृथग्धर्मचरणाः समानधर्मचारिणः । एतच्च तेषां वक्ष्यमाणैकभार्यात्वं सम्भावयितुमुक्तं । समुद्रसलिलेशयाः तत्र निम्ने मग्नाः सन्तः ॥ ७ ॥ ८ ॥ ९ ॥ ब्रह्मणेति । ते त्वया प्रजाः संवर्धनीयाः इत्यादिष्टोऽस्मि ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ धर्ममिति । अन्विच्छतां धर्मादनन्तरं मोक्षमपी-

विष्णुचित्तीयम् ।

च्छतः । कृतदारो महीपतेरिति पाठे महीपतेरित्यस्योत्तरेण सम्बन्धः ॥ ५ ॥ सवर्णेति । प्राचीनबर्हिषो महीपतेः सामुद्री सवर्णा प्रचेतसो नाम पुत्रानाधत्त । ये तमसः पारे तारितेति चान्वयः । तारितास्तादि-नरकनाशकानित्यर्थः । "इयत्पुत्रेण पितरो नाप्यायन् बहुल तमः'। ज्योतिर्हि पुनः परमेष्ठ्योमन्" इति च श्रुतेः ॥ ६ ॥ अपृथगिति । अपृथग्धर्मचरणाः एकविधधर्माचरणाः । इति दशानामप्येकपत्नीभो-

दत्तात्रेयीयम् ।

त्पादनेन नरकतारणार्थमित्यर्थः ॥ ५ ॥ सामुद्री समुद्रकन्या दश पुत्रानाधत्त असूयत । ते सर्वे प्रचेतसो नाम प्रसिद्धाः ॥ ६ ॥ अपृथग्धर्मचरणाः समानधर्मचारिणः । समुद्रसलिलेशयाः समुद्रे मग्ना-स्सन्तः ॥ ७ ॥ प्रथमतः तपसः पूर्वं ॥ ९ ॥ ते त्वया प्रजाः संवर्धनीया इत्यादिष्टोऽस्मि ॥ १० ॥ न केवलं मत्प्रीतये । प्रजापतेः मां प्रति या आज्ञाऽस्ति सा भवद्भिर्माननीया ॥ ११ ॥ अन्विच्छता

[ पा० ] १ ग सुवर्णाऽसूततनयान्दश २ [दत्ता० पा०] प्रथमत ३ घ समेति नान्यथा पुत्रा । ख. प्राप्नोति नान्यथा सत्यं ४ क—ग भूतेश्वरं. ५ घ—ज झ ट—ड चान्विच्छता ६ क ग मता

यस्मिन्नाराधिते सर्गं चकारादौ प्रजापतिः ।
तमाराध्याच्युतं वृद्धिः प्रजानां वो भविष्यति १७

श्रीपराशर उवाच ॥

इत्येवमुक्तास्ते पित्रा पुत्राः प्राचेतसा दश ।
मग्नाः पयोधिसलिले तपस्तेपुः समाहिताः ॥१८॥
दशवर्षसहस्राणि न्यस्तचित्ता जगत्पतौ ।
नारायणे मुनिश्रेष्ठ सर्वलोकपरायणे ॥ १९ ॥
तत्रैवावस्थिता देवमेकाग्रमनसो हरिम् ।
तुष्टुवुर्यः स्तुतः कामान्स्तोतुरिष्टान्प्रयच्छति २० ॥

श्रीमैत्रेय उवाच ॥

स्तवं प्रचेतसो विष्णोः समुद्राम्भसि संस्थिताः ।
चक्रुस्तन्मे मुनिश्रेष्ठ सुपुण्यं वक्तुमर्हसि ॥ २१ ॥

श्रीपराशर उवाच ॥

शृणु मैत्रेय गोविन्दं यथापूर्वं प्रचेतसः ।
तुष्टुवुस्तन्मयीभूताः समुद्रसलिलेशयाः ॥ २२ ॥

प्रचेतस ऊचुः ॥

नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती ।
तमाद्यन्तमशेषस्य जगतः परमं प्रभुम् ॥ २३ ॥
ज्योतिराद्यमनौपम्यमण्वनन्तमपारवत् ।
योनिभूतमशेषस्य स्थावरस्य चरस्य च ॥ २४ ॥

चित्सुखीयम् ।

प्रतिष्ठा परिसमाप्तिः ॥ २३ ॥ अनौपम्यं उपमानाविषय इति यावत् । अनन्तरं अव्यवहितं । अपारवत्

श्रीधरीयम् ।

च्छताम् ॥ १६ ॥ यस्मिन्निति । यस्मिन्नाराधिते यमाराध्येत्यर्थः ॥ १७ ॥ इतीति । प्रचेतस एव प्राचेतसाः ॥ १८ ॥ १९ ॥ २० ॥ स्तवमिति । प्रचेतसः यं स्तवं चक्रुः तं स्तवं वक्तुमर्हसि ॥ २१ ॥ ॥ २२ ॥ "जगद्बीजतया नत्वा चित्ररूपतया ततः (चतूरूपविभागतः) । शुद्धात्मप्रणामेन दध्यौ (तुष्टौ) विष्णुः प्रचेतसाम्" । तत्र प्रथमं जगत्कारणतया प्रणमन्ति—नताःस्मेत्यादिद्वाभ्याम् । नताःस्मेति । प्रतिष्ठा तात्पर्यमित्यर्थः । आद्यन्तं करोतीत्याद्यन्तम् अत एव परमं च प्रभुं च ॥ २३ ॥ प्रधानशङ्कां

विष्णुचित्तीयम् ।

गोपक्षेपः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ स्तवमिति । यं स्तवं चक्रुस्तं वक्तुमर्हसि ॥ २१ ॥ २२ ॥ नताःस्मेति । वचसां यत्र प्रतिष्ठा । वाच्ये हि वचसां प्रतिष्ठा । प्रवृत्तिनिमित्तमात्रं हि सर्वं वस्तुजातं वचसां । न तु प्रधानतया वाच्यम् । यथा गुणजात्यादिकम् ॥ २४ ॥ ज्योतिरिति । ज्योतिः अप्राकृततेजोनिर्मयरूपम् ।

रत्नगर्भीयम् ।

धर्मानन्तरं मोक्षमपीच्छता पुंसा ॥ १६ ॥ यस्मिन्नाराधिते यमाराध्येत्यर्थः । तमाराध्य तस्मिन्नाराधिते सतीत्यर्थः । तमाराध्य स्थितानामित्यध्याहारो वा । अनेन भिन्नकर्तृकत्व परिहृतं । करप्रत्ययो वा ॥१७॥ सर्वलोकपरायणे सर्वलोकानां मुख्याश्रये ॥ १९ ॥ तुष्टुवुः स्तवं चक्रुः ॥ २० ॥ तमेव स्तवं पृच्छति —स्तवमिति । यं स्तवं चक्रुः तं वक्तुमर्हसि ॥ २१ ॥ तन्मया भूत्वा तदेकमनसो भूत्वा ॥ २२ ॥ सर्ववचसां सर्वशब्दानां । प्रतिष्ठा परममुख्यवृत्तिः । शाश्वती नियता । अशेषस्य जगतः आद्यन्तं उत्पत्तिनाशहेतुं । अतएव परं प्रभुश्च ॥ २३ ॥ ज्योतिः तेजोरूपं । आद्यं सर्वस्यादिभूतं । उपजीव्यं वा ।

स्वगतम् ।

स्नातः सद्दास । समुद्रस्य पारे पारमूमाविति केचित् ॥ ५ ॥ तत्रैव समुद्राम्भस्येव यो हरिः ॥ २० ॥ न तपोभिर्यदा तुष्टस्तदा सगुणनिर्गुणैः । स्तवैराराधितो विष्णुरासीत्प्रचेतसाम् ॥ २२ ॥

[ पा० ] १ ङ सर्व २ ग—ट. तत्रैव ३ क. ग जनार्दन ४ ज. च चेतसः । ग. वेदसा. ५ छ मग्नाः । भूत्वा ६ ध छ द्य च नामदं ७ ख. ग—ङ अनन्तमपारवत् । ख. ग. मणीयस्मपारवत्, ८ क योनिभूत । ग. आदिभूत । ग. बीजभूत.

यस्याहः प्रथमं रूपमरूपस्य तथा निशा ।
सन्ध्याच परमेशस्य तस्मै कालात्मने नमः ॥२५॥
भुज्यतेऽनुदिनं देवैः पितृभिश्च सुधात्मकः ।
बीजभूतं समस्तस्य तस्मै सोमात्मने नमः ॥ २६ ॥
यैस्तमांस्याचि तीव्रात्मा प्रभाभिर्भासयन्नभः ।
धर्मशीताम्भसां योनिस्तस्मै सूर्यात्मने नमः २७ ॥
काठिन्यवान् यो विभर्ति जगदेतदशेषतः ।
शब्दादिसंश्रयो व्यापी तस्मै भूम्यात्मने नमः २८
यद्योनिभूतं जगतो बीजं यत्सर्वदेहिनाम् ।
तत्तोयरूपमीशस्य नमामो हरिमेधसः ॥ २९ ॥
यो मुखं सर्वदेवानां हव्यभुक्कव्यभुक्तथा ।
पितृणां च नमस्तस्मै विष्णवे पावकात्मने ॥३०॥
पञ्चधाऽवस्थितो देहे यश्चेष्टां कुरुतेऽनिशम् ।
आकाशयोनिर्भगवांस्तस्मै वाय्वात्मने नमः ३१ ॥

चित्सुखीयम् ।

पाररहितं अवधिशून्यमिति यावत् ॥२४॥ हरिरेव हरिमेधास्तस्य ॥२९॥ मुखमिव मुखं तद्द्वारेण हविषः

श्रीधरीयम् ।

ध्यायसंयति—ज्योतिरिति । अनौपम्यं सूर्यांशुपमानशून्यं चिद्रूपमित्यर्थः । अणुनाडीप्रचारचातुर्यवत् अनन्तं निर्भेदम् । अपारमवधिशून्यम् ॥२४॥ कालरूपेण प्रणमन्ति—यस्याहरिति ॥ २५ ॥ विश्वरूपेण प्रणमन्ति—भुज्यत इत्यादिदशभिः । भुज्यत इति । जीवभूतः जीवनरूपः ॥ २६ ॥ य इति । धर्मस्तापः शीतं च अम्भश्च तेषां योनिः कारणम् ॥ २७ ॥ काठिन्यवानिति । शब्दादीनां पञ्चानामपि गुणानां संश्रयः ॥ २८ ॥ यदिति । योनिरूपं शोणितरूपेण । बीजरूपं शुक्ररूपेण ॥ २९ ॥ य इति । यो हव्यभुग्देवानां मुखं । कव्यभुक् पितॄणां च मुखम् ॥ ३० ॥ पञ्चधेति । पञ्चधा प्राणादि-

विष्णुचित्तीयम् ।

आद्यं आदौ भवं "तमेव भान्तम्" इत्यादिश्रुतेः । अनौपम्यम् उपमैवौपम्यं तद्रहितम् । अणु सूक्ष्मम् । अनन्तमपारवत् देशकालपरिच्छेदरहितम ॥ २४ ॥ २५ ॥ भुज्यत इति । बीजभूतः समस्तस्येति च पाठः । बीजभूतः शुद्धोपधिद्वारा ॥ २६ ॥ य इति । घर्मं उष्णम् आतपः । शीतं हिमम ॥ २७ ॥

दत्तात्रेयीयम् ।

अनौपम्यं उपमैवौपम्यं तद्रहितं । अनन्तं अनादिनित्यत्वेन परिच्छेदकालकृतनाशरहितं । स्वावतारनिर्भेदया । अपारवत् देशतोगुणतश्च परिमितिशून्यं । योनिभूतं कारणभूत ॥ २४ ॥ जगत्कारणत्वेन नत्वा कालनियामकत्वेनापि नमन्ति—यस्येति ॥ रूप्यत इति रूपं नियम्यमित्यर्थः । अरूपस्येत्यनेनाहरादेः स्वरूपत्वं व्यावर्तितं । कालात्मने कालान्तर्यामिणे ॥ २५ ॥ चन्द्रादिसर्वान्तर्यामित्वेनापि प्रणमन्ति—भुज्यत इत्यादिना ॥ भुज्यते उपजीव्यते । सुधात्मकः सुधादानादिकर्ता । जीवभूतः जीवप्राणधारणे इति धातोः सर्वस्य प्राणधारकत्वेन स्थितः । सोमात्मने सोमान्तर्यामिणे । एवमुत्तरश्लोकेष्वप्यर्थो बोद्धव्यः ॥ अस्ति नाशयति । धर्मस्तापः शीतं हिमं अंभो जलंच तेषां योनिः कारणं ॥ २७ ॥ शब्दादिसंश्रयः शब्दादिपञ्चगुणाश्रयः ॥ २८ ॥ तोयरूपं तोयान्तर्गतं तोयशब्दवाच्यरूपं । हरिमेधसः पापादिहरणात् । ज्ञातरूपत्वाच्च हरिमेधा विष्णुः तस्य । "हरणाज्ज्ञानरूपत्वाद्धरिमेधा हरिः स्मृतः" इतिवचनात् ॥ २९ ॥ "देवानांच पितॄणांच मुखं भूत्वा यथाक्रमं । हव्यभुक् कव्यभुक्" ॥ ३० ॥ पञ्चधा प्राणादिपञ्चस्वन्तर्यामितया तत्तद्रूपेण । आकाशो योनिर्यस्य सः आकाशयोनिः । आकाशाग-

रत्नगर्भीयम् ।

प्रथमं मुख्यं । अरूपस्य परमार्थतः ॥२५॥ सुधात्मकः अमृतमयः । जीवभूतः ओषध्याद्यात्मना जीवनरूपः

[पा०] १ ख—ग. ङ ज. झ—ढ. बीजभूतस्समस्तस्य. २ क—घ. च झ. ढ. यस्तमोऽहन्ति. ३ क. ख. घ—च. ज—ढ. स्वभासि. ४ ग. रूपं जगतो. ५ ग. घ. छ. जीवनं सर्वं ग. बीजरूपञ्च देहिनाम्. ६ च. ञ परमात्मने. ७ क. ख. घ. स्थिते.

अवकाशमशेषाणां भूतानां यः प्रयच्छति ।
अनन्तमूर्तिमाञ्छुद्धस्तस्मै व्योमात्मने नमः ॥ ३२ ॥
समस्तेन्द्रियसर्गस्य यः सदा स्थानमुत्तमम् ।
तस्मै शब्दादिरूपाय नमः कृष्णाय वेधसे ॥ ३३ ॥
गृह्णाति विषयान्नित्यमिन्द्रियात्मा क्षराक्षरः ।
यस्तस्मै ज्ञानमूलाय नताः स्म हरिमेधसे ॥ ३४ ॥
गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति ।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः ॥ ३५ ॥
यस्मिन्ननन्ते सकलं विश्वं यस्मात्तथोद्गतम् ।
लयस्थानं च यस्तस्मै नमः प्रकृतिधर्मिणे ॥ ३६ ॥

विष्णुचित्तीयम् ।

स्वीकारात् ॥ ३० ॥ पञ्चधा प्राणापानादिरूपेण ॥ ३१ ॥ स्थानमालम्बनं विषय इति यावत् ॥ ३३ ॥ क्षरः इन्द्रियात्मत्वात् प्रवाहरूपेण । अक्षरः नित्यात्माविनाभावात् ॥ ३४ ॥ यस्मिन्ननन्त इति ।

श्रीधरीयम् ।

रूपेण ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ प्रधानरूपेण प्रणमन्ति—यस्मिन्निति । यस्मिन्ननन्ते

विष्णुचित्तीयम् ।

॥ २८ ॥ २९ ॥ ३० ॥ पञ्चधेति । पञ्चधा प्राणादिरूपेण । येषाम् उच्छ्वासनिश्वासव्यायामरसस-माधानोच्चारणादिकाम् । आकाशयोनिः आकाशादि वायुः ॥ ३१ ॥ ३२ ॥ समस्तेति । स्थानमाल-म्बनम् ॥ ३३ ॥ गृह्णातीति । विषयः क्षराक्षरः । क्षरं चक्षुः विनाश्य विषयग्रहणात् । अक्षरं श्रो-त्रादि ॥ ३४ ॥ गृहीतानिति । गृहीतान् बाह्येन्द्रियैः शब्दान् आलोचितान् आत्मानं विषयान् करोति । अन्तःकरणभूताय मनोबुद्ध्यहङ्कारचित्तात्मने ॥ ३५ ॥ यस्मिन्निति । यस्मिन्सकलं तिष्ठतीति शेषः ।

दृत्तात्रेयीयम् ।

न्तर्यामिणोऽपि विष्णोराकाशजन्यवायुस्वत्वेनाभ्यासाभिव्यक्तत्वादाकाशयोनिरित्युक्तं । तदुक्तं सुग्रहता "कारणत्वेन चाकाशादिषु तथाप्यविशेषतः" इति ॥ ३१ ॥ अनन्तमूर्तिमान् असङ्ख्यातमूर्तिमान् ॥ ३२ ॥ स्थानमाश्रयः । शब्दादिरूपाय शब्दादिकं रूपं प्रतिमा यस्य तस्मै ॥ ३३ ॥ क्षराः ब्रह्मा-दिजीवाः । अक्षरा लक्ष्मीः तन्नियामकः । "यदधीनायत्सत्ता" इत्यादेः । ज्ञानमूलाय ज्ञानोत्पादकाय ॥ ३४ ॥ इन्द्रियैर्गृहीतान्विषयीकृतानर्थानात्मने जीवाय प्रयच्छति जीवस्वरूपभूतसाक्षिज्ञानविषया-न्करोति । अन्तःकरणभूताय अन्तःकरणे भूताय स्थिताय ॥ ३५ ॥ लयस्थानं विश्वस्येति शेषः । प्रकृ-तिधर्मिणे स्थितिहेतुत्वोत्पादकत्वलयहेतुत्वानि प्रकृतिधर्माः अस्य सन्तीति प्रकृतिधर्मी तस्मै । प्रकृतौ स्थित्वा विश्वस्थित्यादिहेतुत्वं प्रकृतौ संपादयतीति मुख्यतः तस्यैव ते धर्मा इति भावः ॥ ३६ ॥

रत्नगर्भीयम् ।

॥ २६ ॥ स्वकार्यापेक्षया महत्परिमाणत्वाद्व्यापी ॥ २८ ॥ आरम्भकत्वेनिरासनकारणकः । भगवान् वीर्यवान् ॥ ३१ ॥ अनन्ता घटादिमूर्तयो व्याप्यतया सन्ति यस्य सः व्यापक इत्यर्थः ॥ ३२ ॥ स्था-नमालम्बनं विषय इत्यर्थः ॥ ३३ ॥ इन्द्रियात्मा इन्द्रियस्वरूपः । क्षरः स्थूलदेहावच्छेदेन । अक्षरो लिङ्गदेहस्थत्वेन । ज्ञानमूलाय शब्दादिज्ञानसाधनाय ॥ ३४ ॥ गृहीतानिति ॥ अयंभावः । अर्थसन्नि-कृष्टेनेन्द्रियेणान्तःकरणसंबन्धादर्थाकारवृत्तिर्भवति तद्वृत्तिस्थमात्मार्थमात्मा साक्षात्करोतीति अन्तःकरण-रूपाय मनोऽहङ्कारबुद्धिचित्तरूपाय ॥ ३५ ॥ पुरुषरूपेण प्रणमन्ति—शुद्ध इति । शुद्धो मन्तुतः ।

[ पा० ] १ य. ग. घ—ट. ड. वयेस । ठ. वर्षेद. २ ग. समस्ता स्थान. ३ ग. ज्ञानरूपाय । ज. ढ. ड. इन्द्र-

शुद्धः संलक्ष्यते भ्रान्त्या गुणवानिव योऽगुणः ।
तमात्मरूपिणं देवं नताः स्म पुरुषोत्तमम् ॥ ३७ ॥
अविकारमजं शुद्धं निर्गुणं यन्निरञ्जनम् ।
नताः स्म तत्परं ब्रह्म विष्णोर्यत्परमं पदम् ॥ ३८ ॥
अदीर्घह्रस्वमस्थूलमनण्वश्याममलोहितम् ।
अस्नेहच्छायमतनुमसक्तमशरीरिणम् ॥ ३९ ॥
अनाकाशमसंस्पर्शमगन्धमरसं च यत् ।
अचक्षुःश्रोत्रमचलमवाक्पाणिममानसम् ॥ ४० ॥
अनामगोत्रमसुखमतेजस्कमहेतुकम् ।
अभयं भ्रान्तिरहितमनिद्रमजरामरम् ॥ ४१ ॥

चित्सुखीयम् ।

स्थितिकाले उद्भूतं जातं । प्रकृतिधर्मिणे प्रधानस्वरूपाय ॥ ३६ ॥ इदानीं पुरुषरूपनमस्कारः क्रियते—शुद्ध इति ॥ ३७ ॥ इदानीं ब्रह्मरूपनमस्कारः—अविकारमिति ॥ नविद्यते विकारः कार्यं यस्येत्यविकारः । शुद्धं पुण्यपापास्पृष्टं । निरञ्जनं अविद्यासङ्गरहितं ॥ ३८ ॥ तदेव विष्णोः परमं पदं विशि-

श्रीधरीयम् ।

नष्टि विष्टति । प्रकृतेर्धर्माः सत्त्वादयो गुणाः सन्त्यस्येति प्रकृतिधर्मी तस्मै ॥ ३६ ॥ पुरुषरूपेण प्रणमन्ति—शुद्ध इति । गुणवानिव गुणप्रेरकत्वेन तेष्वासक्त इव । आत्मरूपिणं प्रत्यग्रूपम् ॥ ३७ ॥ पश्चाद्। प्रथमं रूपमित्यनेन कालरूपेण, भुज्यत इत्यादिना व्यक्तरूपेण, यस्मिन्नित्यनेन प्रधानरूपेण शुद्ध इत्यनेन पुरुषरूपेणेत्येवं स्वसृष्ट्युपयोगि तत्तद्रूपविभागेन प्रणम्य ततः परं शुद्धरूपं प्रणमन्ति—अविकारमित्यादिषड्भिः—अविकारमिति । अविकारम् अस्तीत्यादिविकाररहितम् । अजं जन्मरहितं । शुद्धं स्वभावत एव निर्मलं । निरञ्जनमागन्तुकमलशून्यम् ॥ ३८ ॥ ३९ ॥ ४० ॥ अनामेति । अनिद्रं नि-

विष्णुचित्तीयम् ।

प्रकृतिधर्मिणे प्रकृतिरूपवते ॥ ३६ ॥ पुरुषरूपमाह—शुद्ध इति ॥ ३७ ॥ मुक्तस्वरूपमाह—अविकारमिति । बद्धस्य ज्ञानसङ्कोचादिरूपो विकारोऽस्ति तद्रहितत्वमविकारत्वम् । निरञ्जनं प्रकृतिसंबन्धरहितम् । परं ब्रह्मेति प्रधानाद्यपेक्षया । सघानन्त्यायेति ब्रह्मत्वमुक्तम् । पद्यत इति पदं परमत्वं स्वरूपत्वम् ॥ ३८ ॥ अहङ्कारादिभुक्तपर्यन्तारूपवतः परस्य स्वरूपमाह—अदीर्घेति । अनेन व्यस्तान्यस्तपञ्चगुणेभ्यो व्यावृत्तिः । छाया कान्तिः । अतनु निरवयवम् । असक्तम् अप्रतिहतम् ॥ ३९ ॥ अनाकाशमिति । अनाकाशं मिथररहितम् ॥ ४० ॥ अनामेति । असुखम् अन्नपानादिजन्यसुखरहितम् ।

दत्तात्रेयीयम् ।

शुद्धः प्रकृतिविकाररहितः । अत्रहेतुःअगुणः सत्त्वादिगुणरहितः । गुणवानिव सत्त्वादिगुणवानिव भ्रान्त्या लक्ष्यते । आत्मा जीवो रूपं प्रतिमा अस्यास्तीति आत्मरूपी तं ॥ ३७ ॥ अविकारं प्रधानं सत् स्वरूपेण विकाररहितं । अजं जीववद्देहतोऽपि विकाररहितं । तत्रहेतुर्निर्गुणमिति । तदुपपादनायाह—निरञ्जनमिति ॥ निरञ्जनं रागादिदोषरहितं । पदं स्वरूपं ॥ ३८ ॥ अत्र दीर्घत्वादीनां प्राकृतानामेव निषेधः । अस्नेहच्छायं स्निग्धत्वकान्तिभ्यां रहितं । असक्तमप्रतिहतं । सत्त्वादित्रयस्य स्वरूपतोऽपि निषेधः ॥ ३९ ॥ अचलं चलनरहितं ॥ ४० ॥ अनामगोत्रं नामगोत्ररहितं । अत्र नाम्नो

रत्नगर्भीयम् ।

अगुणोऽपि गुणवानिव तेष्वासक्त इव भ्रान्त्या प्रकृतिच्छायापत्तिदृष्ट्या लक्ष्यते । आत्मरूपिणं जीवस्वरूप ॥ ३७ ॥ तत्त्वतः निषेधशेषत्वेनैव प्रतीतेरित्याह—अदीर्घमित्यादि । अनण्वण्वमत्यणु । अतनुम-

[ पा० ] १ क ख म्तु २ घ ङ धान्त ३ क ख घ ङ—ड व्ययमाहितम् ४ क. घ छ मशरीरणम्. ५ क—ग छ मतुल. ६ घ—ङ मवाक्प्राणममानस । ङ घ छ ञ मवाक्प्राण. ७ ख. घ च मयम्.

अरजोऽशब्दममृतमप्लुतं यदसंवृतम् ।
पूर्वापरे न वै यस्मिंस्तद्विष्णोः परमं पदम् ॥ ४२ ॥
परमेशत्वगुणवत्सर्वभूतमसंश्रयम् ।
नताः स तत्पदं विष्णोर्जिह्वादृग्गोचरं न यत् ॥ ४३ ॥

श्रीपराशर उवाच ॥

एवं प्रचेतसो विष्णुं स्तुवन्तस्तत्समाधयः ।
दशवर्षसहस्राणि तपश्चेरुर्महार्णवे ॥ ४४ ॥
ततः प्रसन्नो भगवांस्तेषामन्तर्जले हरिः ।
ददौ दर्शनमुन्निद्रनीलोत्पलदलच्छविः ॥ ४५ ॥
पतत्त्रिराजमारूढमवलोक्य प्रचेतसः ।
प्रणिपेतुः शिरोभिस्तं भक्तिभारावनामितैः ॥ ४६ ॥
ततस्तानाह भगवान्व्रियतामीप्सितो वरः ।
प्रसादसुमुखोऽहं वो वरदः समुपस्थितः ॥ ४७ ॥
ततस्तमूचुर्वरदं प्रणिपत्य प्रचेतसः ।
यथा पित्रा समादिष्टं प्रजानां वृद्धिकारणम् ॥ ४८ ॥

विष्णुचित्तीयम् ।

नद्धि—अदीर्घेत्यादिना ॥ ३९ ॥ अनिद्रं निद्रा अविद्या तद्रहितं ॥ ४१ ॥ अप्लुतं प्लुताख्यस्वररहितं । असंवृतं संवृताख्यकरणरहितं । पूर्वं कारणं अपरं कार्यं ॥ ४२ ॥ सर्वभूतं सर्वात्मकं । असंश्रयि

श्रीधरीयम् ।

त्वगम् ॥ ४१ ॥ अरज इति । अप्लुतं गतिशून्यं । पूर्वापरे दिक्कालकृते ॥ ४२ ॥ परमिति । परं निरुपाधिकमपि ईशित्वगुणवत्स्वाभाविकषड्गुणैश्वर्ययुक्तः । मायया सर्वभूतमपि असंश्रयं निराधारम् अत एव जिह्वाया दृशश्च गोचरं न भवति तं नताः स्म ॥ ४३ ॥ एवमिति । तस्मिन्नेव समाधिश्चित्तैकाग्र्यं

विष्णुचित्तीयम् ।

अभयमित्यादिना षड्भ्यावृत्तिः ॥ ४१ ॥ अरज इति । अप्लुतं यदसंभृतमिति च पाठः । प्लुतं गतिः तद्रहितम् । पूर्वापरे वस्तुनी नस्तः तस्य नित्यत्वात् । परममक्षरं स्वरूपमितिशेषः ॥ ४२ ॥ परमिति । परमेशित्वगुणवदिति च पाठः । परमेशित्वगुणवदिति मुकुन्दव्यावृत्तिः । असंश्रयमिति नित्यव्यावृत्तिः ।

दत्तात्रेयीयम् ।

लोकसिद्धार्थस्यैव निषेधः । मोक्षस्य तु सर्वात्मना निषेधः "लोकसिद्धार्थनाम्नः स दर्शितासामर्जितः । अलौकिकार्थसत्त्वात्मनस्तस्याज्जनार्दनः । अनन्तनामा परमः मुमुक्षुज्ञानरूपवान्" इति प्रमाणवचनात् । अमृतं जन्ममृत्युरहितं । अनेकात्मकं साभिन्नप्रकाशरहितं । अहेतुकं स्वयं हेतुशून्यं ॥ ४१ ॥ अरजः रजो रागः विषयरागशून्यं । अमृतं मूर्तं जडं तद्विलक्षणं । अप्लुतं अन्याधीनगतिशून्यं । असंवृतं स्वप्रावरणरहितं । "अन्येषामावृतो विष्णुः स्वस्यानावृत एव च" इति वचनात् । पूर्वापरे पूर्वत्वापरत्वे दिक्कालकृते नित्यविभुत्वात् । नताःस्मेति पूर्वेण संबन्धः ॥ ४२ ॥ परं उत्तमं । ईशत्वगुणवत् जगत्सृष्ट्यादिसामर्थ्यमिति । सर्वभूतं सर्वाणि भूतानि यस्मिंस्तत्सर्वभूतं । असंश्रयं स्वस्याश्रयरहितं । जिह्वेत्यादि सर्वेन्द्रियोपलक्षणं ॥ ४३ ॥ तस्मिन्नेव समाधिश्चित्तैकाग्र्यं येषां ते तत्समाधयः ॥ ४४ ॥

रत्नगर्भीयम् ।

शरीरं । अशरीरिणं जीवं । असमीरणमिति पाठे अप्राणं ॥ ३९ ॥ अनिद्रमनभ्यार्दनं ॥ ४१ ॥ भक्ति-

[ पा० ] १ ग. महर्षे २ क. ग. सगुण ३ छ. ज. मसमाप्तं. ४ [श्रीध० पा०] परमेशित्व । [दत्ता० पा०] रमीशत्व. ५ घ. छ. समाश्रयं । ज. ट. ठ. सर्वधामे ६ घ. य. ग. [illegible] स्तोऽवदेनास्तं. ७ म. [illegible] प्युरुत्तसमे स्थित. ८ क. ट. प्रणिपत्य. ९ ग. ड. भावावनामितैः. १० घ. लब्धुरि.

रा चापि देवत्वं दत्वा यथाभिलषितं वरम् ।
अन्तर्धानं जगामाशु ते च निश्चक्रमुर्जलात् ॥४९॥

इतिश्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

प्रचेतस्सु तपश्चरत्सु प्रजाक्षय ॥ १ ॥ सोमवचनात्प्रचेतसा वृक्षसमुद्भूताया मारिषाख्यकन्यकाया पाणिग्रहणप्रस्तावे मारिषाजन्मसबद्धकण्डुमुनिचरित्रवर्णनम् ॥ २ ॥ कण्डुमुनिकृतब्रह्मपारस्तव ॥ ३ ॥ मारिषायां प्रचेतोभ्यो दक्षोत्पत्तिवर्णनम् ॥ ४ ॥ असिक्न्या दक्षस्य सहस्रशः पुत्राणां समुत्पादनम् ॥ ५ ॥ नारदनाशितास्वपुत्रान्दृष्ट्वा दक्षेण नारदाय शापदानम् ॥ ६ ॥ तत पुन दक्षात् वैरिण्या षष्टिकन्यानामुत्पत्तिकथनम् । तासा सोमादिभिर्विवाहश्च ॥ ७ ॥ सङ्क्षेपेण प्रह्लादचरित्रकथनम् ॥ ८ ॥

श्रीपराशर उवाच ॥
तपश्चरत्सु पृथिवीं प्रचेतस्सु महीरुहाः ।
अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ॥ १ ॥
नाशकन्मरुतो वातुं वृतं खमभवद्द्रुमैः ।
दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥ २ ॥

---

चित्सुखीयम् ।

निराधार ॥ ४३ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे चतुर्दशोऽध्याय ॥ १४ ॥

श्रीधरीयम् ।

येषां ते तत्समाधयः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ इति श्रीश्रीधरस्वामिविरचितायामात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे चतुर्दशोऽध्यायः ॥ १४ ॥

तप इति । प्रचेतस्सु तपश्चरत्सु सत्सु तत्पितरि च नारदात्तत्त्वज्ञान प्राप्य राज्य त्यक्त्वा वन गते सतीति द्रष्टव्य । तदुक्तम् "प्राचीनबर्हिषं जात कर्मस्वासक्तचेतसम् । नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत्" इत्यादिना पुरञ्जनाख्यानेन । अरक्ष्यमाणां पृथिवीं कर्षणाद्यभावात् महीरुहा आवव्रुः

विष्णुचित्तीयम् ।

सर्वभूत सर्वात्मभूतम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे चतुर्दशोऽध्याय ॥ १४ ॥

दत्तात्रेयीयम् ।

निश्चक्रमु निर्गता ॥ ४९ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां चतुर्दशोऽध्याय ॥ १४ ॥

प्रचेतस्सु तपश्चरत्सु सत्सु महीरुहा अरक्ष्यमाणां पृथिवीमावव्रु । कर्षणाद्यभावादावृतवन्त । प्रचेतसां तपश्चरणकाले तत्पितुः प्राचीनबर्हिषः सत्त्वेऽपि तस्य कर्मासक्तचेतस्त्वेन नारदोपदिश्यमानतत्त्वश्रवणेन च पृथिवीपालनोदासीनतया पृथिव्या अरक्ष्यमाणत्व बोध्य । तदुक्त भागवते "प्राचीनबर्हिषं क्षत्त कर्मस्वासक्तचेतस । नारदोऽध्यात्मतत्त्वज्ञ कृपालुः प्रत्यबोधयत्"इत्यादिना ॥ १ ॥

रत्नगर्भीयम् ।

भारैरिवावनते ॥ ४६ ॥ इति श्रीरत्नग०विरचितश्रीविष्णुपु०व्याख्यासारे प्रथमांशे चतुर्दशोऽध्याय १४

सोपाख्यान जन्म वाक्ष्यांस्तस्या दक्षस्य सम्भवम् । प्रचेतोभ्य. पञ्चदशे दक्षात्सृष्टिं ततोऽब्रवीत् ॥१॥

---

[ पा० ] १ क छ अरक्ष्यमाणा वव्रुर्बभू ।

तान्दृष्ट्वा जलनिष्क्रान्ताः सर्वे क्रुद्धाः प्रचेतसः ।
मुखेभ्यो वायुमग्निं च तेऽसृजञ्जातमन्यवः ॥३॥
उन्मूलानथ तान्वृक्षान्कृत्वा वायुरशोषयत् ।
तानग्निरदहद्घोरस्तत्राभूद्द्रुमसंक्षयः ॥ ४ ॥
द्रुमक्षयमथो दृष्ट्वा किञ्चिच्छिष्टेषु शाखिषु ।
उपगम्याब्रवीदेतान्राजा सोमः प्रजापतीन् ॥५॥
कोपं यच्छत राजानः शृणुध्वं च वचो मम ।
सन्धानं वः करिष्यामि सह क्षितिरुहैरहम् ॥६॥
रत्नभूता च कन्येयं वार्क्षेयी वरवर्णिनी ।
भविष्यज्जानता पूर्वं मया गोभिर्विवर्धिता ॥७॥
मारिषा नाम नाम्नैषा वृक्षाणामिति निर्मिता ।
भार्या वोऽस्तु महाभागा ध्रुवं वंशविवर्धिनी ॥८॥
युष्माकं तेजसोऽर्धेन मम चार्धेन तेजसः ।
अस्यामुत्पत्स्यते विद्वान्दक्षो नाम प्रजापतिः ॥९॥
मम चांशेन संयुक्तो युष्मत्तेजोमयेन वै ।
तेजसाऽग्निसमो भूयः प्रजाः संवर्धयिष्यति १० ॥

विष्णुचित्तीयम् ।

यच्छत नियमयत ॥ ६ ॥ इत्थं वक्ष्यमाणन्यायेन वृक्षाणां कन्येयं निर्मितेत्यन्वयः ॥ ८ ॥ ममांशेन सौम्येन युष्मत्तेजोमयेन च संयुक्तः अग्नीषोमात्मक इत्यर्थः । अग्निसमप्रतापेन तेजसा च ॥१०॥

श्रीधरीयम् ।

आप्लुतवन्तः ॥ १ ॥ २ ॥ ३ ॥ वायोरग्नेः सृष्टिप्रयोजनमाह—उन्मूलानिति ॥ ४ ॥ द्रुमक्षयमिति । सोमो वृक्षाधिपः । प्रजापतीनित्यनेन कन्दमूलफलादिभिः प्रजापुष्टिकारणानां वृक्षाणां नाशः प्रजापालानां युष्माकमनुचित इति सामोपायः ॥ ५ ॥ कोपमिति । कोपं यच्छत उपरमत ॥ ६ ॥ उपप्रदानेन सन्धानं करोति—रत्नभूतेति । वार्क्षेयी वृक्षजा । भविष्यज्जानता भविष्यदीयं युष्माकं पत्नी भविष्यति, अस्यां च दक्षो जनिष्यते, तद्द्वारेण च लोकं पूरयिष्यतीत्यादिजानता मया गोभिः सुधामयै रश्मिभिः संवर्धिता ॥ ७ ॥ मारिषेति । नाम्ना मारिषाख्या । वृक्षाणामेषा कन्येति, नाम एवं हि प्रसिद्धा । निर्मिता निष्पन्नेत्यन्वयः ॥ ८ ॥ युष्माकमिति । युष्माकं तपोमयस्य तीव्रतेजसोऽर्धेन च शान्तैर्मदीयैर्गोभिः संवृद्धत्वादस्याः मम तेजसोऽर्धेन दक्षोऽस्यामुत्पत्स्यते ॥ ९ ॥ एतच्च ममेति । सौ-

विष्णुचित्तीयम् ।

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ द्रुमक्षयमिति । राजा वृक्षादीनाम् ॥५॥ कोपमिति । यच्छत नियमयत ॥ ६ ॥ रत्नभूतेति । वार्क्षेयी वृक्षजा । भविष्यत इव एषा प्रचेतसां पत्नी दक्षस्य माता च भविष्यतीत्यादिकम् जानता मया । गोभिः रश्मिभिः ॥ ७ ॥ मारिषेति । नाम प्रसिद्धौ । मारिषेति नाम्ना प्रसिद्धा वृक्षाणामिति । वृक्षाणां सम्बन्धिनी वार्क्षेयीति निर्मिता ॥ ८ ॥ ९ ॥ मम चेति । मम दौहित्रत्वान्ममा

दत्तात्रेयीयम् ।

क्रुद्धाः बभूवुः ततः किं तत्राह—जातमन्यवः सन्तो वायुमग्निं चासृजन् ॥३॥ वाय्वग्निसर्जनफलमाह—उन्मूलानिति । सोमो राजा । वृक्षाणां राजा प्रजापतीनित्यनेन कन्दमूलादिभिः प्रजापुष्टिकारणानां प्रजापालकाना युष्माकं वृक्षाणां नाशोऽनुचित इति सामोपायः सूचितः ॥ ५ ॥ तथाह—कोपमिति । यच्छत नियमयत ॥ ६ ॥ उपप्रदानेन सन्धानं करोति—रत्नभूतेति ॥ रत्नभूता श्रेष्ठा । वार्क्षेयी वृक्षजा । भविष्यज्जानता [illegible] भवतां पत्नी भविष्यतीति दक्षस्य माता भविष्यतीत्यादि भविष्यत्कार्यं जानता मया गोभिः सुधामयैः रश्मिभिः संवर्धिता ॥ ७ ॥ नाम्ना मारिषा । वृक्षाणामेषा कन्येति नाम प्रसिद्धा । निर्मिता कृता ॥ ८ ॥ युष्माकं तेजसः तपस्तेजसः अर्धेनांशेन कारणेन । मदीयैर्गोभिः संवृद्धत्वादस्या मम तेजसोऽर्धेनांशेनच कारणेन अस्यां दक्ष उत्पत्स्यते ॥ ९ ॥ ममांशेन सौम्येन

[पा०] १ म शाखिषु २ क—ख प्रजापतीन् ३ क ख तेजसा ४ क ख ग—ड अग्निसमप्रख्यो

कण्डुर्नाम मुनिः पूर्वमासीद्वेदविदां वरः ।
सुरम्ये गोमतीतीरे स तेपे परमं तपः ॥ ११ ॥
तत्क्षोभाय सुरेन्द्रेण प्रम्लोचाख्या वराप्सराः ।
प्रयुक्ता क्षोभयामास तमृषिं सा शुचिस्मिता १२॥
क्षोभितः स तया सार्धं वर्षाणामधिकं शतम् ।
अतिष्ठन्मन्दरद्रोण्यां विषयासक्तमानसः ॥ १३ ॥
तं सा प्राह महाभाग गन्तुमिच्छाम्यहं दिवम् ।
प्रसादसुमुखो ब्रह्मन्ननुज्ञां दातुमर्हसि ॥ १४ ॥
तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः ।
दिनानि कतिचिद्भद्रे स्थीयतामित्यभाषत ॥१५॥
एवमुक्ता ततस्तेन साग्रं वर्षशतं पुनः ।
बुभुजे विषयांस्तन्वी तेन साकं महात्मना ॥१६॥
अनुज्ञां देहि भगवन्व्रजामि त्रिदशालयम् ।
उक्तस्तथेति स पुनः स्थीयतामित्यभाषत ॥ १७ ॥
पुनर्गते वर्षशते साधिके सा शुभानना ।
यामीत्याह दिवं ब्रह्मन्प्रणयस्मितशोभनम् ॥१८॥
उक्तस्तथैव स मुनिरुपगुह्यायतेक्षणाम् ।
इहास्यतां क्षणं सुभ्रु चिरकालं गमिष्यसि ॥ १९ ॥
सा क्रीडमाना सुश्रोणी सह तेनर्षिणा पुनः ।
शतद्वयं किंचिदूनं वर्षाणामन्वतिष्ठत ॥ २० ॥

चित्सुखीयम् ।

इदानीं मारिषाया उत्पत्तिं कथयितुमाह—कण्डुर्नामेति ॥ ११ ॥ प्रणयः स्नेहः तत्पूर्वकं स्मितं प्रणयस्मितं तेन शोभनं यथाभवति तथाऽऽहेति क्रियाविशेषणं ॥ १८ ॥ उपगुह्य परिष्वज्य । क्षणमास्यता-

श्रीधरीयम् ।

म्येन ममांशेन युष्मत्तेजोमयेन अग्निना च संयुक्तः । अग्नीषोमात्मकः अग्नितुल्यो भूत्वा प्रजाः संवर्धयिष्यतीत्यर्थः ॥ १० ॥ न चैवं शङ्कनीयं दशानां कथमियमेका भार्या भवतीति । यस्मादियं कण्डोस्तपःसम्भूतेति । वीर्येणास्य गर्भसम्भूता महाप्रभावा चायोनिजा च दैवी न तु मानुषी । न हि बहूनामेकाऽप्सरस्सम्भोगो विरुध्यते । विष्णोः प्रसादाद्बाल्ये बहवः पतयो न दुष्यन्तीति वर्णयम् तस्याः जन्माह—कण्डुर्नामेत्यादिना युष्मत्पत्नीनृपात्मजेत्यन्तेन ॥ ११ ॥ तत्क्षोभायेति । तस्य क्षोभाय चित्तविकारेण तपोनाशाय ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ उक्त इति । उप-

विष्णुचित्तीयम् ।

शेन सौम्येन शान्त्यादिविपुलेन मामगुणेन । युष्मत्तेजःसम्भवेनाग्नेयांशेन । कौर्यशौर्यादिविपुलगुणेन च युक्तः । प्रजाः समर्धयिष्यति सर्वस्याग्नीषोमात्मकत्वात् ॥ १० ॥ कन्याया आभिजात्यख्यापनाय तज्जन्माह-

दशावधेयम् ।

युष्मत्तेजोमयेन चाग्निना संयुक्तत्वात् अग्निसमः ॥ यो ब्रह्मपुत्रत्वावस्थाया पूर्वजन्मनि प्रजाः संवर्धितवान् । स एवास्यामुत्पन्नो भूयः पुनः प्रजाः समर्धयिष्यतीत्यर्थः ॥ १० ॥ वार्क्षेयी कन्येत्युक्त तद्वदितुं तस्याऽऽभिजात्यख्यापनार्थं तज्जन्मवर्णनमाह—कण्डुर्नामेत्यादिना । गोमती वज्राद्री नदी ॥ ११ ॥ तस्य मुनेः क्षोभाय चित्तविकारेण तपोनाशाय ॥ १२ ॥ शतं ततोऽधिकं च ॥ १३ ॥ साग्रं साधिकं च ॥ १६ ॥ स्मितशोभनमिति क्रियाविशेषणं ॥ १८ ॥ उपगुह्य प्राहेत्यनेन संभोगातिरेकादनुरागातिरेको दर्शितः । चिरकालं गमिष्यसि गत्वा शीघ्रं नागमिष्यसीत्यर्थः ॥ १९ ॥ अन्वतिष्ठत अनंतर-

रत्नगर्भीयम् ।

अग्निश्च नाग्निरनुष्णः सोमश्च तौ अग्निनाग्नी अग्नीषोमाविति यावत् ॥ १० ॥ कतिचिदन्यानि ॥ १५ ॥ चिरकालं गमिष्यसीति । गता सती शीघ्रं नागमिष्यसीत्यर्थः । यद्वा चिरकालं तत्र वस्तुं गमिष्यसि

[ पा० ] १ ख. श्रीमान्नासी २ ख मिहोभाय. ३ ज प्रयुक्तत ४ ख साग्रे वर्षशते तदा ५ क. ख. घ. ङ. ज. झ. ट ड. साग्रेति ६ ख शुचिस्मिता ७ ठ—प्रणया प्रणसोमन ८ ख—घ च छ. झ—ड. महासतां. ९ क—ङ. तच्चापर्शता सुश्रोणी.

गमनाय महाभाग देवराजनिवेशनम् ॥
प्रोक्तः प्रोक्तस्तया तन्व्या स्थीयतामित्यभाषत २१
तस्य शापभयाद्भीता दाक्षिण्येन च दक्षिणा ।
प्रोक्ता प्रणयभङ्गार्तिवेदिनी न जहौ मुनिम् २२॥
तया च रमतस्तस्य परमर्षेरहर्निशम् ॥
नवंनवमभूत्प्रेम मन्मथाविष्टचेतसः ॥ २३ ॥
एकदा तु त्वरायुक्तो निश्चक्रामोटजान्मुनिः ।
निष्क्रामन्तं च कुत्रेति गम्यते प्राह सा शुभा २४॥
इत्युक्तः स तया प्राह परिवृत्तमहः शुभे ।
सन्ध्योपास्तिं करिष्यामि क्रियालोपोऽन्यथा भवेत् ॥ २५ ॥
ततः प्रहस्य सुदती तं सा प्राह महामुनिम् ।
किमद्य सर्वधर्मज्ञ परिवृत्तमहस्तव ॥ २६ ॥
बहूनां विप्र वर्षाणां परिवृत्तमहस्तव ।
गतमेतन्न कुरुते विस्मयं कस्य कथ्यताम् ॥ २७ ॥

विष्णुचित्तीयम् ।

सिति प्राहेत्यन्वयः ॥ १९ ॥ देवराजनिवेशनं प्रति गमनाय ॥ २१ ॥ उटजात् पर्णशालातः । कुत्र गम्यत इति प्राहेत्यन्वयः ॥ २४ ॥ अहः परिवृत्तं पर्यवसितं ॥ २५ ॥ बहूनामतीतवर्षाणामन्ते परिवृत्तम् ।

श्रीधरीयम् ।

गुह्य प्राहेत्यनेन मन्मथोपासितेरेकान्तानुरागातिरेकं दर्शयति । चिरकालं गमिष्यसि गत्वा गती शीघ्रं नागमिष्यसीत्यर्थः । अनेन बहुतपोनाशकत्वे दृष्टेऽपि स्त्रियाः, तत्कालनयनीकृतस्य ब्राह्मणस्य वीर्यवैकल्यं तुल्यत्वेति भावः ॥ १९ ॥ तच्छापभीतेति । अन्यनिवृत्त अनन्तरमनिवृत्तेत्यर्थः ॥ २० ॥ गमनायेति । देवराजनिवेशनं प्रति गमनाय ॥ २१ ॥ तस्येति । दक्षिणेति । "या गौरवं भयं प्रेम सद्भावं पूर्वनायके । न मुञ्चत्यन्यसक्ताऽपि सा ज्ञेया दक्षिणा बुधैः" इति । तस्याः भावो दाक्षिण्यं तेन ॥२२॥ ॥ २३ ॥ एकदेति । उटजात्पर्णशालायाः ॥ २४ ॥ इतीति । परिवृत्तमस्तगमनं जातम् ॥ २५ ॥ तत इति । विस्मयेन प्रहस्य सर्वधर्मज्ञेति सोपालम्भं सम्बोधनम् । अद्य तवाहः परिवृत्तं किमिति ॥ २६ ॥ स्वलीलाभूतं भाषणं विचिन्त्य मैत्रस्य वचः अन्येषामपि विस्मयकरमिति स्वगतमनुभूय मुनिवचनो

विष्णुचित्तीयम् ।

कण्डुरित्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ तस्येति । "या गौरवं भयं प्रेम सद्भावं पूर्वनायके । न मुञ्चत्यन्यचित्ताऽपि सा ज्ञेया दक्षिणा बुधैः" दक्षिणायाः भावो दाक्षिण्यं । प्रणयो याच्ञा ॥ २२ ॥ २३ ॥ एकदेति । उटजः पर्णशाला ॥ २४ ॥ ॥ २५ ॥ तत इति । परिवृत्तं परिणतम् । सर्वधर्मज्ञेति गतमप्यह्नः कृत्यमविस्मरणोपालम्भः ॥ २६ ॥ बहूनामिति । तव बहूनां वर्षाणां गतानां सताम् अहः परिणामं गतमित्येतत्कस्य विस्मयं न कुरुते ।

ब्रह्माश्रेयीयम् ।

प्रतिप्रविरतार्थः ॥ २० ॥ देवराजनिकेतनंप्रति गमनाय ॥ २१ ॥ "या गौरवं भयं प्रेम सद्भावं पूर्वनायके । न मुञ्चत्यन्यचित्ताऽपि सा ज्ञेया दक्षिणा बुधैः ।" तस्या भावो दाक्षिण्यं । तेन प्रणयभङ्गार्तिवेदिनी प्रणयभङ्गजन्यदुःखज्ञा ॥ २२ ॥ प्रेम स्नेहः । नवंनवमभूत् ॥ २३ ॥ उटजात् पर्णशालायाः ॥ २४ ॥ अहः परिवृत्तं समाप्तं ॥ २५ ॥ विस्मयेन प्रहस्य सर्वधर्मज्ञेति सोपहासं सम्बोधनं । किमद्य तवाहः परिवृत्तमिति प्राह ॥ २६ ॥ विस्मयहेतुं स्वयमेव स्पष्टयति—बहूनामिति ॥

रत्नगर्भीयम् ।

॥ १९ ॥ बहूनां वर्षाणां परिणामं प्राप्तं यदहः [illegible] कस्य विस्मयं न

[ वा० ] १ ग. देवराजनिवेशनं २ ङ—ञ. झ—ट. ठ [illegible] ३ ङ ब. [illegible] । [illegible] ४ क. ख. ग. घ. ङ. ट. ठ [illegible] ५ क. ख. ग—ट. [illegible]

मुनिरुवाच ॥

प्रातस्त्वमागता भद्रे नदीतीरमिदं शुभम् ।
मया दृष्टाऽसि तन्वङ्गि प्रविष्टाऽसि ममाश्रमम् ॥२८॥
इयं च वर्तते सन्ध्या परिणाममहर्गतम् ।
उपहासः किमर्थोऽयं सद्भावः कथ्यतां मम ॥२९॥

प्रम्लोचोवाच ॥

प्रत्युषस्यागता ब्रह्मन्सत्यमेतन्न तन्मृषा ।
नैन्वस्य तस्य कालस्य गतान्यब्दशतानि ते ॥३०॥

सोम उवाच ॥

ततस्ससाध्वसो विप्रस्तां पप्रच्छायतेक्षणाम् ।
कथ्यतां भीरु कः कालस्त्वया मे रमतः सह ॥३१॥

प्रम्लोचोवाच ॥

सप्तोत्तराण्यतीतानि नववर्षशतानि ते ।
मासाश्च षट्तथैवान्यत्समतीतं दिनत्रयम् ॥३२॥

ऋषिरुवाच ॥

सत्यं भीरु वदस्येतत्परिहासोऽथ वा शुभे ।
दिनमेकमहं मन्ये त्वया सार्धमिहासितम् ॥३३॥

प्रम्लोचोवाच ।

वदिष्याम्यनृतं ब्रह्मन्कथमत्र तवान्तिके ।
विशेषेणाद्य भवता पृष्टा मार्गानुयायिना ॥३४॥

सोम उवाच ॥

निशम्य तद्वचः सत्यं स मुनिर्नृपनन्दन ।
धिग्धिङ्मामित्यतीवेत्थं निनिन्दात्मानमात्मना ॥

चित्सुखीयम् ।

णाम समाप्तिमेतदहो गतमिति यदा कथ्यते तदा कस्य न विस्मयं कुरुत इत्यन्वयः ॥ २७ ॥ क काल

श्रीधरीयम् ।

विस्मयहेतुं स्वयमेव स्फुटयिष्यति—बहूनामिति । एतद्बहुभिर्वर्षैः परिणामं गतं तवातिदीर्घमहः कस्य विस्मयं न कुरुते तदिदं कथ्यताम् ॥ २७ ॥ २८ ॥ इयमिति । सद्भावः परमार्थः ॥ २९ ॥ प्रत्युषसीति । तद्दिवैकदिनबद्धस्य कालस्य बहुशतानि गतानि ॥ ३० ॥ तत इति । ततः धर्मलोपापराधेन स साध्वसो विप्रस्तां पृच्छति स्म । कः कालः कियानयं गतः कालः ॥ ३१ ॥ ३२ ॥ सत्यमिति । इहास्थितमत्र स्थितम् ॥ ३३ ॥ वदिष्यामीति । एतावन्तं कालमतिविस्रम्भार्द्रा सती कथमनृतं वदिष्यामि अद्य भवता कर्मलोपशङ्काव्याकुलेन पुनः स्वमार्गानुवर्तिना पृष्टा सती ॥ ३४ ॥ निशम्येति ।

विष्णुचित्तीयम् ।

इदं कथ्यताम् ॥ २७ ॥ २८ ॥ इयमिति । सद्भावः सत्यम् ॥ २९ ॥ ३० ॥ तत इति । कः कि यान् ॥ ३१ ॥ ३२ ॥ ३३ ॥ वदिष्यामीति । मार्गानुवर्तिना रागकृतमुत्पथं त्यक्त्वा हित्वा विवेकास्वप-

रत्नगर्भीयम् ।

बहूनां वर्षाणां गतानां सतां अहः परिणामं पर्यवसानं गतमित्येतत् कस्य न विस्मयं कुरुते । तदिदं कथ्यतां ॥ २७ ॥ सद्भावः सत्यं ॥ २९ ॥ नन्वस्येति ॥ एतद्दिनप्रत्यूषे नागता अपितु यस्मिन्दिने प्रत्युषस्यहमागता तस्य कालस्य ॥ ३० ॥ ससाध्वसः धर्मलोपभययुक्तः । कः कालः कियान् गतः कालः ॥ ३१ ॥ ३२ ॥ इहोषितं अत्र स्थितं ॥ ३३ ॥ मार्गानुवर्तिना मुनिधर्मचिकीर्षुणा कर्मलोपभयाद्विशेषेण तत्त्वबुभुत्सया पृष्टा सती एतावन्तं कालमतिविस्रम्भार्द्रा सती कथमनृतं वदिष्यामि । कर्मलोपशङ्काव्याकुलेन च पुनः स्वमार्गानुवर्तिना रागकृतमुत्पथं हित्वा विवेकात्स्वमार्गानुसन्धित्सया परिहासानर्हेण पृष्टा सती ॥३४॥ धिग्धिङ्मामिति गर्हायां । धिगित्यव्ययं । तद्योगे द्वितीया च ॥ ३५ ॥

[पा०] १ ग न—छ ञ ञ ट ठ महोगतम् । २ ठ मरीमृषा । ३ ग घ छ तद्बद्धतस्य कालस्य । ठ दिवैव तस्य कालस्य । ४ ठ मे । ५ क मिहाश्रित । ग मिहाश्रित । ख ञ ण ट ठ मिहासित । प मिहागत । ६ ग तद्वचस्सत्य

मुनिरुवाच ॥

तपांसि मम नष्टानि हतं ब्रह्मविदां धनम् ।
हृतो विवेकः केनापि योषिन्मोहाय निर्मिता ॥ ३६ ॥
ऊर्मिषट्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ।
मतिरेषा हृता येन धिक्त्वां कामं महाग्रहम् ॥ ३७ ॥
व्रतानि वेदवेद्याप्तिकारणान्यखिलानि च ।
नरकग्राममार्गेण सङ्गेनापहृतानि मे ॥ ३८ ॥
विनिन्द्येत्थं स धर्मज्ञः स्वयमात्मानमात्मना ।
तामप्सरसमासीनामिदं वचनमब्रवीत् ॥ ३९ ॥

गच्छ पापे यथाकामं यत्कार्यं तत्कृतं त्वया ।
देवराजस्य मत्क्षोभं कुर्वन्त्या भावचेष्टितैः ॥ ४० ॥
न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ।
सतां साप्तपदं मैत्रमुषितोऽहं त्वया सह ॥ ४१ ॥
अथ वा तव को दोषः किं वा कुप्याम्यहं तव ।
ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥ ४२ ॥
यया शक्रप्रियार्थिन्या कृतो मे तपसो व्ययः ।
त्वया धिक्त्वां महामोहमञ्जूषां सुजुगुप्सिताम् ॥

चित्सुखीयम् ।

चियान्कालः ॥ ३१ ॥ अशनापिपासाशोकमोहजरामृत्यवः षडूर्मयः ॥ ३७ ॥ मत्क्षोभं कुर्वन्त्या त्वया ।

श्रीधरीयम् ।

धिग्धिङ्मामिति गर्हायां । धिगित्यव्ययं । तद्योगे द्वितीया ॥ ३५ ॥ तपांसीति । ब्रह्मविदां वेदज्ञाना[illegible] एव धनञ्च मम हृतं नष्टम् ॥ ३६ ॥ ऊर्मिषट्कातिगमिति । "क्षुत्तृष्णे लोभमोहौ च जरामृत्यू षडूर्मयः।" इत्येवं प्रोक्तं षडूर्मिषट्कं तदतिक्रम्य स्थितं ब्रह्म । मया मनोजयेन ज्ञेयमित्येवं कृतैषा मतिर्येन हृता तं धिक् ॥ ३७ ॥ ३८ ॥ ३९ ॥ गच्छेति । प्रेमभावगर्भैश्चेष्टितैर्भ्रूभङ्गादिभिर्मम क्षोभं कुर्वन्त्या त्वया देवराजस्य यत्कार्यं तत्कृतमित्यन्वयः ॥ ४० ॥ ४१ ॥ ४२ ॥ अजितेन्द्रियस्यापि स्वस्य चित्त-

विष्णुचित्तीयम् ।

सन्तुलसन्धितत्त्वा परिहासानन्देन ॥ ३४ ॥ ३५ ॥ तपांसीति । हृतं ब्रह्म विस्मृतो वेदः ॥ ३६ ॥ ऊर्मीति । "अशनाया पिपासे च शोकमोहौ जरामृती । युगपत्प्राणधीदेहधर्मास्ते हि षडूर्मयः" इति । आत्मजयो मनोनियमः । अत्रेति करण द्रष्टव्यम् । एषा ब्रह्मविषया मतिः ॥ ३७ ॥ व्रतानीति । वेदवेद्यं ब्रह्म तदाप्तिकारणानि ॥ ३८ ॥ विनिन्द्येति । आत्मना मनसा ॥ ३९ ॥ गच्छेति । भावचेष्टितैः भावार्थैश्चेष्टितैः विलासैः ॥ ४० ॥ नेति । सप्त पदानि सह गच्छतां सतां मैत्रं । किं पुनश्चिर-

हरिप्रियोयम् ।

हृतं ब्रह्म विस्मृतो वेदः । विवेकः सदसद्विभाजकं ज्ञानं । मोहाय योषित्वेनापि येनना निर्मिता । दुःखातिशयादाक्षेपः । यद्वा अपिशब्दो गर्हायां । केन धनुर्मुखेन लोकहितकारिणा योषिन्मोहाय निर्मितेत्येतद्गर्हितमिति भावः ॥ ३६ ॥ ऊर्मिषट्कातिगं "क्षुत्तृष्णे शोकमोहौ च जरामृत्यू तथैव च" इत्युक्तं । यदूर्मिषट्कं तदतिक्रम्य स्थितं परं ब्रह्म । आत्मजयेन मनोनिग्रहेण । ज्ञेयमित्येवं कृतैषा ब्रह्मविषया मतिर्येन कामेन हृता अपहृता । तं कामं महाग्राहं धिगित्यन्वयः ॥ ३७ ॥ वेदवेद्याप्तिकारणानि वेदवेद्यं ब्रह्म तत्प्राप्तिकारणानि व्रतानि ब्रह्मचर्यादीनि । नरकस्य ग्रामः वासस्थानं ॥ ३८ ॥ भावचेष्टितैः शृङ्गारादिविलासैः । मत्क्षोभं कुर्वन्त्या त्वया देवराजस्य यत्कार्यं तत्त्वया कृतमित्यन्वयः ॥ ४० ॥ सतां साप्तपदं मैत्रं सप्तपदानि सह गच्छतां मैत्रं प्रसिद्धं । अहं तु त्वया महोषितः बहुकालं स्थितः । अतस्त्वां शापवह्निना भस्म नकुर्यामिति संबन्धः ॥ ४१ ॥ जितेन्द्रियस्यापि मम चित्तक्षोभे त्वदागमनमेव निमित्तं । अतस्त्वामेव निन्दामीति भावेन पुनरात्मानं निन्दति—यथेति ॥ यया त्वया संभोगादिभिः

[ पा० ] १ क. ग—ज. ग. ट. ढ. तपांसि नष्टानि मम ब्रह्मविदां २ क—ट. कृतो ३ ट वञ्चिता, ४ ट. मतिरेषा ५ ग—ड विनिन्द्य ६ ग. यत्कार्यं ७ ङ ढ कोपवह्निना

कण्डोरपत्यमेवं सा वृक्षेभ्यश्च समुद्गता ।
ममापत्यं तथा वायोः प्रम्लोचातनया च सा ५१
स चापि भगवान्कण्डुः क्षीणे तपसि सत्तमः ।
पुरुषोत्तमाख्यं मैत्रेय विष्णोरायतनं ययौ ॥५२॥
तत्रैकाग्रमतिर्भूत्वा चकाराराधनं हरेः ।
ब्रह्मपारमयं कुर्वञ्जपमेकाग्रमानसः ।
ऊर्ध्वबाहुर्महायोगी स्थित्वासौ भूपनन्दनाः ५३

प्रचेतस ऊचुः ॥
ब्रह्मपारं मुने श्रोतुमिच्छामः परमं स्तवम् ।
जपता कण्डुना देवो येनाराध्यत केशवः ॥५४

सोम उवाच ॥
पारं परं विष्णुरपारपारः
परः परेभ्यः परमार्थरूपी ।
स ब्रह्मपारः परपारभूतः
परः पराणामपि पारपारः ॥ ५५ ॥

विष्णुचित्तीयम् ।

परः उत्कृष्टः "इन्द्रियेभ्यः पराह्यर्थाः" इतिश्रुतेः । परमात्मरूपी परमात्मनो रूपं परमात्मरूपं तद्वान् परमात्मरूपी । धर्मिस्वरूपमुपचारात् तद्वाच्यपदेशः । पुरुषस्य चैतन्यवत् । परमार्थरूपीति पाठे समस्तद्वैतविभ्रमाधिष्ठानतया अबाध्यस्वभावः "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुतिभ्य इत्यर्थः । ब्रह्म पारः ब्रह्म वेदः तेन ब्रह्मणा वेदेन पार्यते अधिगम्यते इति ब्रह्मपारः । परपारभूतः परेषां पुरुषाणां पारभूतो निस्तारहेतुभूत इति यावत् । परः पराणां पराणां ज्ञानैश्वर्यादतिशयवतां विरिञ्च्यादीनां मध्ये परोऽतिशायितः । निरवधिकज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्न इत्यर्थः । पारपारः अपेक्षितदानेन पूरणात्

श्रीधरीयम् ।

येति । समाहितः सम्यगाहितः निषिक्तः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ तर्हि योगभ्रष्टस्य कण्वेः यमित्यनादरं वारयितुं पुनः कण्डोर्योगमाह—स चापीति सार्धद्वाभ्याम् ॥ ५२ ॥ तत्रेति । ब्रह्मणश्च पारस्तत्त्वं प्रचुरो यस्मिंस्तं ब्रह्मपारमयं । यद्वा—ब्रह्मणो वेदस्य पारो वेदान्तस्तन्मयं तत्प्रतिपादनभूतम् ॥ ५३ ॥ ब्रह्मपारमिति । आराध्यत आराधितः ॥ ५४ ॥ [श्रीधरीयोऽत्र स्तोत्र] "सङ्कीर्ण

विष्णुचित्तीयम् ।

वृक्षाणामम पत्नानि स एव गर्भः ॥ ५० ॥ ५१ ॥ अथ मारिषाजन्मानुपयुक्तमपि प्रसङ्गात्स्वदुष्टसमायधिचार्युक्तिरूप भगवत्स्तोत्रादिक कण्डुचरितशेषमाख्याति—स चापीति ॥ ५२ ॥ तत्रेति । ब्रह्मपारतत्व ब्रह्मपारस्वरूपम् ॥ ५३ ॥ ५४ ॥ पारंपरमिति । पारंपरं संसाराम्बुधेः परं पारम् अतः

दत्तात्रेयीयम् ।

॥ ५० ॥ प्रम्लोचागमनानन्तरं स्वदुष्टबुद्धिस्वभावक्षिप्तस्वरूपभगवत्स्तोत्रं कण्डुः कृतवानिति प्रसङ्गादाह—स चापीत्यादिना ॥ ५२ ॥ ब्रह्मपारमयं ब्रह्मणः पारत्वं पूर्णत्वं तत्प्रतिपादकत्वेन ब्रह्मपारात्मकं । जप्यत इति जपः स्तोत्रं ॥ ५३ ॥ आराध्यत आराधितः ॥ ५४ ॥ पारंपरमिति श्लोकत्रयेण स्तुत्वा पुरुषोत्तमं प्रसन्नीकृत्य तुरीयेण अपराधदोषपरिहारः प्रार्थ्यत इत्याशयेन प्रथमं स्तौति—पारंपरमित्यादिना ॥ स प्रसिद्धो विष्णुः पारंपरं । ब्रह्म पारंपरया गुरुसम्प्रदायपरम्परयोपदेशप्राप्यं । परं ब्रह्म । "एवं परम्पराप्राप्तमिमं राजर्षयो विदुः" इतिवचनात् । यद्वा पारं परमिति पदद्वयं । परं निर्दोषं गुणपूर्णं ।

रङ्गनाथीयम् ।

तत्रैवाराधनदरेः । ब्रह्मपारेण तं स्तुत्वा कण्डुरवाप परां गतिम् ॥ अपारपारः अपारो दुष्पारः पारः समाप्तिः प्रान्तः यस्य सः । पारतीरकर्मसमाप्ताविति धातोः । परपारभूतः परस्यप्रकाशस्य पारं प्राप्तः

[ पा० ] १ स स ब्रह्मणा । २ [ वि० पा० ] परमात्म ह्री

श्रीधरीयम्।

तत्र त्रिश्लोक्या प्रार्थनाद्य चतुर्थेन । ब्रह्मपारस्तवेनैव कण्डोस्तुणेऽचिराद्धरि ।" पारम्परमित्यादि त्रिभि श्लोकैर्विष्णोस्तत्त्व सकीर्त्य चतुर्थेन रागादिदोषशम प्रार्थ्यते—पारम्परमिति । पार पर निरति शयमावृत्तिशून्य ससाराध्वन पारमवधि विष्णु "सोऽध्वन पारमाप्नोति तद्विष्णो परम पदम्" इति श्रुते । तथा न पार दुरन्तस्य ससाराध्वन पारत्वादपारो दुष्प्राप पारोऽन्तो यस्य स । पारतीर-कर्मसमाप्ताविति धातु । तर्हि दीर्घेण कालेन प्राप्य स्यात्तत्राह—पर परेभ्य इति । परेभ्य आकाशा दिभ्योऽपि पर अनन्त इत्यर्थ "महतो महीयान्" इति श्रुते । अत एव परमार्थरूपी सत्यरूप । यद्वा—अर्थ प्रयोजन परमपुरुषार्थ परमानन्द स एव रूपी मूर्तिमान् । अथ पुरुषोत्तम इत्यर्थ । ननु तस्यात्यन्तत्वे कथ परमपुरुषार्थस्वरूपता कथ वा "सोऽध्वन पारमाप्नोति" इति श्रुतिस्तत्राह—ब्रह्मपार ब्रह्म वेदस्तपो वा तत्सहितास्तन्निष्ठास्तत्प्रब्राह्मणस्तेषा पार प्राप्तु शक्य । तत्कुत इत्यत आह—परपारभूत । परस्यानात्मप्रपञ्चस्य पारभूतोऽवधिरूप । तद्धेतु पर पराणामपीति । आत्माभ्या सात्मत्वेन प्रतीतानामिन्द्रियादीना पर निरुपाधि । परमात्मा "इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च

विष्णुचित्तीयम्।

"सोऽध्वन पारमाप्नोति, यमध्वन पारमुशन्ति योगिन" इति श्रुतिपुराणाभ्याम् । यद्वा परपरया गुरुसम्प्रदायाविच्छेदेनोपदेश्य रहस्य वस्तु । यथा छान्दोग्ये "तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापति र्मनवे मनु प्रजाभ्य" इति "एव परम्पराप्राप्तमिम राजर्षयो विदु" इति च । अपारपार पारती रकर्मसमाप्ताविति धातो यद्वत्तु नैव पार्यते इत्यादौ शक्त्यर्थे प्रयोगदर्शनाल्लक्षणया पार शक्ति । अपारपार अनन्तशक्तिरित्यर्थ । "पराऽस्य शक्तिर्विविधैव श्रूयते" इति श्रुते । यद्वा पार यस्य नास्ति सोऽपारपार अपरिमितपरिमाण इतिवन्निर्देश "न ते विष्णो जायमानो न जातो देव म हिम्न परम तमाप" इति श्रुते । अथ वा अपारस्यासमाप्तस्यापूर्णस्य यज्ञादिकर्मण पार स्वकीर्तन-स्मरणादिना पारयिता समापक पूरको वा "विष्णुर्वै यज्ञस्य दुरिष्ट पाति" इत्यादि "विदु कृष्ण ब्राह्मणास्तत्त्वतो ये तेषा राजन्सर्वयज्ञा समाप्ता । सर्व करोति निश्छिद्र नामसकीर्तन तव" इत्यादि च । पर परेभ्य कारणत्वनिरतिशयानन्दत्वादिना परेभ्य ब्रह्मादिभ्य पर । परमार्थरूपी ब्रह्मादि-वत्र विनाशिविग्रह । अपि तु सर्वशक्त्याश्रयपरमार्थदिव्यविग्रह । परमप्रयोजनानन्दस्वरूपो वा ।

दत्तात्रेयीयम्।

"निर्दोषगुणपूर्णत्वात्परं प्राह जनार्दन इति तत्त्वभागवतवचनात् । पार ससाराध्वन पारमवधीभूत ब्रह्म ॥ "सोऽध्वन पारमाप्नोति तद्विष्णो परम पद इतिश्रुते । "यमध्वन पारमुशन्ति योगिन" इति भागवतवचनाच्च । अपारपार । पारतीरकर्मसमाप्ताविति धातो । "यद्वत्तुनैवपार्यते इत्यादौ शक्त्यर्थेऽपि प्रयोगदर्शनात् द्वितीय पारशब्द शक्त्यार्थक । प्रथम पारशब्द परिमितिवाचक । "अन्तो वि-नाश सभोक्त पार परिमितिस्तथा" इतिवचनात् । तथा नविद्यते पार परिमितिर्यस्य स । अपार पारशक्तिर्यस्य स अपरिमितशक्तिरित्यर्थ । "अनन्तशक्तिर्भगवाननन्त" इति भागवतवचनात् । यद्वा अपारस्यासमाप्तस्यापूर्णस्य कर्मण पार स्वसकीर्तनस्मरणादिना पारयिता समापक । पूरकोवा । "विष्णुर्वै यज्ञस्य दुरिष्ट पाति इत्यादि श्रुते । "विदु कृष्ण ब्राह्मणास्तत्त्वतो ये तेषा राजन्सर्वयज्ञा स माप्ता इति वचनात् । "मन्त्रतस्तन्त्रतश्छिद्र देशकालार्हवस्तुत । सर्व करोति निश्छिद्रमनुसङ्कीर्तन तव" इति भागवतवचनात् । पार ससारतरण नविद्यते येषा ते अपारा ससारिणस्तान्पारयति ससारात्तारयतीत्यपारपार इति वा । परेभ्य पर परेभ्यो ब्रह्मादिभ्य पर उत्तम । उक्तार्थोपपादनायोक्त परमार्थ-

स कारणं कारणतस्ततोऽपि
तस्यापि हेतुः परहेतुहेतुः ।
कार्येषु चैवं सह कर्मकर्तृ-
रूपैरशेषैरवतीह सर्वम् ॥ ५६ ॥

विष्णुचित्तीयम् ।

पारः । पालनाच्च पारः । पॄ पालनपूरणयोरित्यस्य धातोरूपं ॥ ५५ ॥ स विष्णुः कारणं हेतुः । कारणसंश्रितोऽपि कारणेनाऽपि स्वहेतुतया संश्रितः । कारणस्यापि कारणमिति यावत् । कारणतोऽपि इति पाठे कारणतः प्रथमनिर्दिष्टात्कारणादपि परं कारणं । ततोऽपि द्वितीयात्कारणात् परं कारणमित्यर्थः ।

श्रीधरीयम् ।

परम्" इत्युपक्रम्य "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतेः । अयं भावः । सामाविभक्त्या तत्प्राप्तिः, येन दुरन्तसंसारपारत्वात् अपारपारत्वाम् अनन्तत्वाद अर्हत्सु न प्राप्येत । निःस्वसालसारविदूरीभूतोऽपि तपोविशुद्धचित्तैर्वेदोत्पन्नज्ञानेन कृतात्मप्रसङ्गापयादतः प्राप्तुं शक्य इति अत एवोपाधिपरिच्छेदाभावान्निरङ्कुशाचिन्त्यपारमैश्वर्येण पारपारः पारश्चासौ पारश्चेति समासः । पॄ पालनपूरणयोरिति धातोः पार इति रूपम् । स्वभक्तानां पालनात्पारः । अपेक्षितैर्वरैः पूरणं च पार इति द्वितीयपारशब्दस्यार्थः । यद्वा—पाराः पालकाः पूरकाश्च ये इन्द्रब्रह्माद्याः तेषामपि पालकः पूरकश्चेत्यर्थः ॥ ५५ ॥ तदेवं विशुद्धरूपेण स्तुत्वा सार्वात्म्येन स्तौति—सकारणमिति । कारणत इति प-

विष्णुचित्तीयम् ।

ब्रह्मपारः ब्रह्मणः प्रधानस्य पारः अवसानभूमिः । आर्षो लिङ्गव्यत्ययः । यद्वा सब्रह्मणः सर्वेषान् वैदिकाम् पालयतीति सब्रह्मपारः । रलयोरभेदः । परपारभूतः प्रधानापेक्षया परः समष्टिपुरुषः तस्य पारभूतः । "प्रधानपुंसोरजयोः कारणं, कर्मावेतौ लीयेते परमात्मनि" इति च वर्णनात् । यद्वा परेषां परस्परभिन्नानां वस्तूनां पारभूतः असाङ्कर्यकृन्मर्यादाभूतः "एष सेतुर्विधारणः" इति श्रुतेः । परः पराणां परेभ्यो नित्यमुक्तेभ्यः नित्यमुक्तत्वजगद्योनित्वलोपितत्वादिभ्यः परः । पारपारः सर्वहेतुभूतः कालस्यापि पारः अवसानभूमिः । कालं स पचत इति । यद्वा पाराणां पूरकाणां व्योमादिविभुद्रव्याणां पारः पूरयिता । पॄ पालनपूरणयोरिति धातोर्णिजन्तात्पचाद्यच् "तेनेदं पूर्णं पुरुषेण सर्वं" इति । अथ वा पालानां पालः रलयोरभेदः "एष हीदं सर्वं गोपायति" इति, "न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्" इति च ॥ ५५ ॥ स कारणमिति । कारणतस्तत इति पञ्चम्यर्थे तसिः । परमपायस्य देहादेः कारणं

रत्नगर्भीयम् ।

रूपीति । परमार्थं गविनाशरूपं देहोऽस्यास्तीति परमार्थरूपी । "सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः" इति वचनात् । यद्वा सत्यरूपत्वात् "सत्यस्य सत्यं परमार्थरूपम्" इतिवचनात् । पारः सर्वेषामाश्रयत्वेन तीरभूतः । पारसीरवर्त्मेममारुरावेति धातुः । यद्वा सब्रह्मपार इत्येकं पदं । ब्रह्म वेदः तदर्थितात्पर्यनिश्चयवन्तः सब्रह्माणः तेषां पारः प्राप्तुं शक्यः । तान्पालयतीति वा रलयोरभेदात् । अभिन्नपक्षे पारपरमित्यत्र वस्तुपदाध्याहारः कार्यः । परपारभूतः सर्वजगन्मूलकारणत्वेन परमुत्तमं प्रधानं तस्य पारभूत आश्रयभूतः । यद्वा परेषां लोकेषां पारः असाङ्कर्यकृन्मर्यादाभूतः । "एष सेतुर्विधारणः" इतिवचनात् । पराणामपि मुक्तानां सकाशादपि परः उत्तमः । पारपारः पारश्चासौ पारश्चेति समासः । पॄ पालनपूरणयोरिति धातोः पार इति रूपं । भक्तानां पालनात्पारः । अपेक्षितपूरणाच्च पार इति द्वितीयपारशब्दार्थः । यद्वा पाराः पालकाः पूरकाश्च ये ब्रह्मादयः तेषामपि पालकः पूरकश्चेत्यर्थः ॥ ५५ ॥ कार-

[ पा० ] १ ग ड ट मोक्षितोऽपि २ ज. परे स विष्णुः

विष्णुर्गीयम्।

तस्यापि हेतुः तस्य पूर्वनिर्दिष्टस्य कारणस्यापि कारणं हेतुरित्यर्थः। परहेतुहेतुः तस्मादपि पूर्वनिर्दिष्टात् परो हेतुस्तस्यापि हेतुरित्यर्थः। कार्येषु चैवं यथा कारणपरपरारूपत्वं एवं सएव कार्यं। तस्यापि कार्यं। तस्य तस्यापि कार्यस्य कार्यमिति कार्यपरपरादिषु द्रष्टव्यं। एतेन प्रकृतिमहदहङ्कारतन्मात्रभूतानां कार्यकारणभावव्यवस्थितानां प्रतिलोमानुलोमाभ्यां ब्रह्मरूपता दर्शिता। कर्मकर्तृरूपैः सह सर्वं जगद्-

श्रीधरीयम्।

त्वर्थे तसिः। विष्णुः कारणस्यापि कारणं तस्यापि कारणमित्येवं परापरकारणम्, ब्रह्माण्डमारभ्य मूलकारणपर्यन्तकारणमालात्मकः। यथोक्तं ब्रह्मस्तुतौ "कारणं कारणस्यापि तस्य कारणकारणम्" इत्यादि। कार्येषु चैवमित्यनेन प्रकृतिकार्यमहत्तत्त्वमारभ्य चरमकार्यपर्यन्तकार्यमालात्मको विष्णुरेवेत्युक्तम्। तदेवं सृष्टिक्रियायामुपादानकारणत्वेन च सार्वात्म्यमुक्त्वा पालनक्रियायां पाल्यकर्मरूपतया तत्कर्तृतया च सार्वात्म्यमाह—स इति। ह इति निपातोऽवधारणार्थः। स विष्णुरेव कर्मरूपैः पालनीयैस्तत्पालकैश्च कर्तृरूपैरंशैः स्वर्यायैरुपलक्षितसमस्त भवति। यद्वा—अशेषैः कर्मकर्तृरूपैः सहैवमिति कर्मकर्तृरूपमालान्तरात्मत्वादेः। अत्र "कर्तुरीप्सिततमं कर्म" इति स्मृतेः। कर्तुः क्रियया प्राप्तुमिष्टतमं तदेव मुख्यं कर्मत्वेन गृह्यते। ग्रामादेस्तु याथार्थ्यकर्मत्वेन न भावनाकर्मता। अत एव आस्ते शेते इत्यादिषु अकर्मकेष्वपि प्रत्ययांशे भावनाप्रतीतिर्भाव्यं विनाभावाद। सुखस्नातः आसीत स्वारस्यकामः शयीतेत्यादिप्रयोगाद्यात्मनेन सुखं भावयेदित्येवमादि वचनव्यक्तौ सुखादेर्भावनाकर्मत्वमभ्युपगम्यते। तदुक्तं भट्टैः। "अस्त्यादावपि कर्त्रंशे भाव्यस्यैव हि भावना। अन्यत्रासोपभावात्तु न तथा सा प्रकाशते" इति। यन्नेवमकर्मकेष्वपि भाव्यं स्यात्। कर्हि सकर्मकाकर्मकयोर्भेद इत्याशङ्क्य परिहारश्लोकः। "साक्षाद्व्यभिचारेण धात्वर्थो यत्र कर्मभाक्। सकर्मकः स धातुः स्यात्तदन्यो स्वकर्मकः।" इति। अतोऽत्र कर्मशब्देनेप्सिततममुख्यसाधिका सुखप्रपञ्चमारभ्य ब्रह्मानन्दपर्यन्तपुरुषार्थमालारूपो विष्णुरेव कर्तृशब्देन तत्साधकमानुष मनुष्यगन्धर्व देवगन्ध-

विष्णुचित्तीयम्।

विराट् तस्य भूतानीत्यादिकमरल्पता कारणमाला स विष्णुः। कारणतत्त्वतोऽपि कारणमित्यनुषङ्गः। भूतानि तस्यापि हेतुस्तन्मात्राणि। परहेतुहेतु परोऽहङ्कारः तद्धेतुर्महान् तद्धेतुः प्रकृतिरिति। एवं महदादिदेहान्तकार्येषु च महदादिकार्यमालाऽपि स एवेत्यर्थः। अनेनोपादानत्वमुक्तं। रक्षकत्वमाह—सोऽहमिति। स इति पदच्छेदः। स एव तत्क्रियारूपैः स्वकर्तृरूपैरात्मीयैरित्थंभूतः सर्वभवति। हेति प्रसिद्धौ अथ

दत्तात्रेयीयम्।

यत इति पञ्चम्यां तसिः। परमकार्यस्य देहादेः। कारणस्य ब्रह्माण्डस्य कारणं भूतरूपी। ततोऽपि तस्यापि हेतुरहङ्कारः परहेतुहेतुः परोऽहङ्कारः तद्धेतुर्महान् तद्धेतुः प्रकृतिः। एतत्सर्वं ब्रह्माण्डादिप्रकृतिपर्यन्त कारणजातं [illegible] विष्णुः। विष्ण्वधीनमेवेत्यर्थः। कार्येषुचैव महदादिदेहान्तकार्येष्वप्येवं। महदादिदेहान्तकार्यमपि सः विष्णुः तदधीनमेवेत्यर्थः। "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इत्यादेः। एव कारणकार्याणां भगवदधीनत्वोक्त्या स्वातन्त्र्येण अशेषजगत्स्रष्टृत्वं भगवतएवेत्युक्तं। पालकत्वमपि समर्थयन्नाह—सहेति॥ स विष्णुः कर्माणि पाल्यानि कर्तार पालकाः तेषुस्थितैरंशैः सर्वैः स्वरूपैः सर्वं भवति। तत्पालकेषु च स्थित्वा सर्वं पालयतीत्यनेन भगवतएव मुख्यपालकत्वं तदन्येषान्तु तदधीनमित्युक्तं भवति। हरिरपालकत्वेनप्रत्यवस्थापनार्थं कर्मरूपत्वोक्तिः। इत्यनेन उभयोरागमप्रसिद्धि दर्शयति॥५६॥

ब्रह्म प्रभुर्ब्रह्म स सर्वभूतो
ब्रह्म प्रजानां पतिरच्युतोऽसौ ।
ब्रह्माव्ययं नित्यमजं स विष्णु-
रपक्षयाद्यैरखिलैरसङ्गि ॥ ५७ ॥

विष्णुचित्तीयम् ।

यति रक्षति । इह संसार इत्यर्थः ॥ ५६ ॥ ब्रह्मप्रभुः हानोपादानयोः स्वतन्त्रः । अन्योऽपि कश्चिद्धानोपादानयोः प्रभुरस्ति ततो विशिनष्टि—ब्रह्मेति ॥ ब्रह्मरूपः प्रभुरित्यर्थः । सर्वभूतः सर्वात्मकः । प्रधानमपि सर्वकारणत्वात् सर्वात्मकमिति ततो व्यावर्तयति—ब्रह्म स सर्वभूत इति ॥ ब्रह्मात्मना सर्वभूत इत्यर्थः । प्रजानां पतिर्दक्षादिरपि स्यादित्यतो विशिनष्टि—ब्रह्म प्रजानां पतिरिति ॥ अव्ययं एकदेशविनाशशून्यं । नित्यं कृत्स्नस्वरूपनाशरहितं । अपक्षयाद्यैरन्यथाभावविपरिणामादिभिः । असङ्गि संब-

श्रीधरीयम् ।

र्योविरूपेणात्मन्निरूपलयारयमहानन्दपुरुषार्थसाधकोऽपि विष्णुरेवेत्युक्तम् । तदेवं कार्यकारणकर्मरूपैः सृष्टिप्रलयक्रियाप्रतियोगिभिस्तस्मिन्निखिलसार्वात्म्यमुक्तम् । तैरेव रूपैः पालनक्रियाप्रतियोगिभिः तत्सम्बन्धिसार्वात्म्यमाह—मनोरैरेतैरुपायैः स विष्णुः सर्वमवतीति ॥ ५६ ॥ ननु यदि शुद्धं ब्रह्मैवासौ विष्णुस्तर्हि कथमशेषैः रूपैरवतीत्युच्यते । अथ सर्वात्मकस्तर्हि सर्वभावविकारप्राप्तेः कुतोऽस्य शुद्धतेत्याशङ्क्याह—ब्रह्मेति । स विष्णुः शुद्धं ब्रह्मैव सन् सर्वभूतश्च ब्रह्मैव सर्वभूतानां पतिश्च पालकः । न तु स्वरूपप्रच्युत्या यतोऽसावच्युतः प्रसिद्धः । अतः स विष्णुर्व्यापनशीलः सर्वात्मकोऽपि सप्रकारं ब्रह्म नित्यमजमपक्षयाद्यैरसङ्गि अपक्षयवृद्धिपरिणामसङ्गरहितं च ब्रह्मैवाचिन्त्यस्वाधीनमायया सर्वात्मतया

विष्णुचित्तीयम् ।

वा सह कर्मभिः कर्मसहितैः तत्तत्कर्तृरूपैः ॥५६॥ ब्रह्मेति । ब्रह्मप्रभुः वेदनिर्वाहकः । स ब्रह्मभूरिति पाठे ब्रह्मणि वेदे प्रतिपाद्यत्वेनाविर्भवतीत्यर्थः । ब्रह्म सः वेदश्च सः । सर्वभूतः अन्यदपि वेदबाह्यादिरूपं शब्दजातं स एव । प्रकृतसजातीयविशेषपदार्थोऽहि सर्वशब्दः । शब्दमूर्तिधरस्यैतानिति हि वक्ष्यति । ब्रह्म द्वे ब्रह्मणीति वक्ष्यमाणं ज्ञानद्वयं तद्रूपश्चासौ । यद्वा ब्रह्मणो वेदप्रभुर्हिरण्यगर्भस्तज्जातो वेदार्थस्मर्तृणां मन्वादीनां च पतिः । परस्य स्वरूपमाह—ब्रह्माक्षरमिति । ब्रह्माव्ययमिति च पाठः । अव्ययत्वादिना प्रधानाद्व्यावृत्तिः । अजत्वेन ब्रह्मा तस्य कर्माधीनशरीरग्रहणलक्षणजन्मवत्त्वात् । नित्यमजमिति मुक्तव्यावृत्तिः

सत्यव्रतीयम् ।

ब्रह्मप्रभुः ब्रह्मभ्यो जीवेभ्यः प्रभुः समर्थः । "ब्रह्माणि जीवाः सर्वेऽपि परब्रह्मणि मुक्तिगाः" इति श्रुतेः । ब्रह्मादिसर्वजीवेभ्यः उत्तम इत्यर्थः । ब्रह्म सः वेदोऽपि सः । "ब्रह्मवेदस्तपस्तत्त्वं" इत्यभिधानात् । वेदानां प्रथमवक्तृत्वेन वेद इत्युच्यते । तदुक्तं शब्दनिर्णये "वेदानां प्रथमो वक्ता हरिरेव यतो विभुः । अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिनः" इति । सर्वभूतः सर्वेषु चराचरेषु भूतो विद्यमानः । सर्वान्तर्यामी । ब्रह्मप्रजानां पतिः ब्रह्मणश्चतुर्मुखस्य तत्प्रजानां रुद्रादीनां च पतिः नियामकः । तत्र हेतुरच्युत इति । देहतोऽपि च्युतिरहितः । स विष्णुरव्ययं नित्यं अजं अपक्षयाद्यैरखिलैरसङ्गि ब्रह्म परंब्रह्म । अव्ययं प्रकृतिवद्विकाररहितं । नित्यमविनाशि । अजं देहग्रहणलक्षणजन्मरहितं । अपक्षयवृद्ध्यादिस-

रत्नगर्भीयम् ।

सारपि भूतः सतः अविनाशी नित्य इत्यर्थः ॥ ५५ ॥ इतीति गद्यात्मपनाख्यान्यर्थानुयोगादर्शितं परं

[ पा० ] १ [वि० चि० पा०] ब्रह्मप्रभु. २ ब. ब्रह्माव्ययं.

ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तमः ।
तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ॥५८॥

सोम उवाच ॥

एतद्ब्रह्मपराख्यं वै संस्तवं परमं जपन् ।
अवाप परमां सिद्धिं स तमाराध्य केशवम् ॥५९॥
[इमं स्तवं यः पठति शृणुयाद्वाऽपि नित्यशः ।
स कामदोषैरखिलैर्मुक्तः प्राप्नोति वाञ्छितम् ।]

इयं च मारिषा पूर्वमासीद्या तां ब्रवीमि वः ।
कार्यगौरवमेतस्याः कथने फलदायि वः ॥६०॥
अपुत्रा प्रागियं विष्णुं मृते भर्तरि सत्तमाः ।
भूपपत्नी महाभागा तोषयामास भक्तितः ॥६१॥
आराधितस्तया विष्णुः प्राह प्रत्यक्षतां गतः ।
वरं वृणीष्वेति शुभे सा च प्राहात्मवाञ्छितम् ॥६२॥
भगवन्बालवैधव्याद्वृथाजन्माऽहमीदृशी ।
मन्दभाग्या समुद्भूता विफला च जगत्पते ॥६३॥

चित्सुखीयम् ।

न्धरहित ॥ ५७ ॥ यथाऽसौ पुरुषोत्तमस्तथेति । अस्य पुरुषोत्तमस्याक्षरादिरूपमक्षरूपत्वं यथाऽन-पायि तथा रागादिदोषोपशमोऽपि ममानपायी स्यात् । यद्वा एवं विशिष्टमक्षररूपस्य पुरुषोत्तमस्य सत्स्मरणेन ममापि रागादिदोषाः प्रशमं गच्छन्त्विति भावः ॥ ५८ ॥ एतस्याः कार्यगौरवं [1]प्रयोजनमाहात्म्यकथने सति वः युष्माकं फलदायि । फलत्यापि शङ्कया तस्या दशभिर्भार्यात्वेनाभ्युपगमः ॥ ६० ॥ स्तुतिः

श्रीधरीयम् ।

■ विवर्तते । अतो नाथ विरोध इति भावः ॥ ५७ ॥ उक्तं तत्त्वमनुस्मरन्दोषोपशमं प्रार्थयते—ब्रह्मा-क्षरमिति ॥ यथा निर्विकारं ब्रह्मैवासौ पुरुषोत्तमः तदा तदनुस्मरणेन तत्प्रसादात्तत्स्वरूपाविर्भावाय मम रागादयः राग आदिः कारणं येषां क्रियालोपयोगभङ्गादिदोषाणां ते सर्वदोषाः प्रशमं प्रकर्षेण शमं प्रयान्तु ॥ ५८ ॥ ५९ ॥ इदानीमस्या बहुपतित्वं भगवतैव प्रसादीकृतमिति नास्या युष्माकं वा कश्चि-द्दोष इति पद्यमाह—इयं चेत्यादिना—इयं चेति । कार्यगौरवं सत्पुत्रलाभाख्यं एतस्याः कथने सति वो युष्माकं फलदायि वक्षविस्ताराख्यफलं भविष्यतीत्यर्थः ॥ ६० ॥ अपुत्रेति । प्राक् प्रथमजन्मनि भूपस्य पत्नीयं तस्मिन्भूपे भर्तरि मृते सति विष्णुं तोषयामासेत्यन्वयः ॥ ६१ ॥ ६२ ॥ भगवन्निति ।

विष्णुचित्तीयम् ।

तस्य कदाचिज्जन्मवत्त्वात् ॥ ५७ ॥ एवमुक्तस्य महागुणजातस्यानुक्तस्य च सौलभ्यादेरर्थावतारे पौ-ष्कल्यं सूचयन्कृतार्थं करोति ब्रह्माक्षरमिति । असाविति पुरुषोत्तमाख्याद्री पुरः स्थितं पुरुषोत्तमसंज्ञं भगवन्तमङ्गुल्या निर्दिश्याह ॥ ५८ ॥ ५९ ॥ इयं चेति । एतस्याः कथने मम कार्यगौरवं यत्नगौरवं । वः सुपुत्रत्वादिफलदं । कार्यं गौरवमितिपाठे युष्माभिर्गौरवं कर्तव्यमिति ॥ ६० ॥ ६१ ॥ ६२ ॥

दत्तार्यीयम् ।

न्धरहित ॥ ५७ ॥ उक्तमर्थमनुस्मरन् दोषोपशमं प्रार्थयते—ब्रह्माक्षरमिति । असौ पुरुषोत्तमो देहे स्थितः पुरुषोत्तमो यथा अक्षरं अजं नित्यं ब्रह्मैव तथा तदनुस्मरणेन तत्प्रसादात् मम रागादयः रागोऽशोभनोध्यासः आदिः कारणं येषां क्रियालोपध्यानभङ्गविस्मरणादीनां ते दोषाः । प्रशमं प्रकर्षेण शमं नाशं समूलनाशं प्रयान्तु ॥ ५८ ॥ इदानीमस्या बहुपतित्वं भगवतैव दत्तमित्यतो नास्या युष्मा-कं वा कश्चिद्दोष इति भावेन तस्याः पूर्वजन्मवृत्तान्तमाह—इयं चेत्यादिना ॥ वो युष्मान् वो युष्माकं एतस्याः कथने क्रियमाणे कार्यगौरवं प्रयोजनमहत्त्वं वः पुत्रलाभाख्यलक्षणं कार्यं परिणयनाख्यं तत्र गौरवमादरः सत्पुत्रलाभफलदायि सत्कर्तव्यमित्यर्थः । कार्यं गौरवमिति पाठे एतस्याः पतिभिः गौरवं कर्तव्यमित्यर्थः ॥ ६० ॥ प्राक् पूर्वजन्मनि भूपपत्नी राजभार्येयं । तस्मिन् भूपे पत्यौ मृते सति विष्णुं

[पा०] १ अयं श्लोक (ग) पुस्तके मात्र दृश्यते २ [विष्णु चि० पा०] कार्यं ३ क ग घ च ल सुपा

भवन्तु पतयः श्लाघ्या मम जन्मनि जन्मनि ।
त्वत्प्रसादात्तथा पुत्रः प्रजापतिसमोऽस्तु मे ॥६४॥
कुलं शीलं वयः सत्यं दाक्षिण्यं क्षिप्रकारिता ।
अविसंवादिता सत्त्वं वृद्धसेवा कृतज्ञता ॥ ६५ ॥
रूपसम्पत्समायुक्ता सर्वस्य प्रियदर्शना ।
अयोनिजा च जायेयं त्वत्प्रसादादधोक्षज ॥६६॥

सोम उवाच ॥

तयैवमुक्तो देवेशो हृषीकेश उवाच ताम् ।
प्रणामनम्रामुत्थाप्य वरदः परमेश्वरः ॥ ६७ ॥

देव उवाच ॥

भविष्यन्ति महावीर्या एकस्मिन्नेव जन्मनि ।
प्रख्यातोदारकर्माणो भवत्याः पतयो दश ॥६८॥
पुत्रञ्च सुमहावीर्यं महाबलपराक्रमम् ।
प्रजापतिगुणैर्युक्तं त्वमवाप्स्यसि शोभने ॥ ६९ ॥
वंशानां तस्य कर्तृत्वं जगत्यस्मिन्भविष्यति ।
त्रैलोक्यमखिला सूतिस्तस्य चापूरयिष्यति ॥७०॥
त्वं चाप्ययोनिजा साध्वी रूपौदार्यगुणान्विता ।
मनःप्रीतिकरी नृणां मत्प्रसादाद्भविष्यसि ७१ ॥
इत्युक्त्वान्तर्दधे देवस्तां विशालविलोचनाम् ।
सा चेयं मारिषा जाता युष्मत्पत्नी नृपात्मजाः ७२ ।

पराशर उवाच ॥

ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
संहृत्य कोपं वृक्षेभ्यः पत्नीधर्मेण मारिषाम् ॥७३॥

विष्णुचित्तीयम् ।

सन्ततिः ॥ ७० ॥ कालस्य नयने माने गुणाः उपगुणाः । अथवा कालस्य नयने प्रेरणे गुणा इ-त्युक्ताः । नक्षत्रभ्रमणेनाहोरात्रादिरूपकालस्यात्ययात ॥ ७१ ॥ दौहित्रस्य सोमस्येति । दक्षकन्याया-मात्मनः पुत्रस्य सोमस्य दक्षस्य दौहित्रः । तथाऽपि सप्तर्षिमनिमित्तत्व इति पचनायस्य सातु-

श्रीधरीयम् ।

पुत्रेन जन्म यस्याः सा पुत्राजन्मा । विफला अपुत्रा ॥ ६३ ॥ भवसिन्धुरिति । भक्त्या विफलादर्माः ॥ ६४ ॥ ६५ ॥ रूपेति । रूपेण सम्पदा च समायुक्ता ॥ ६६ ॥ तयेति । प्रणामेन नम्रां । जन्मभे-देन तया बहुपतिप्रार्थने कृतेऽपि स्वभक्तानां पुनःपुनर्जन्मासहमानो विष्णुरेकस्मिन्नेव जन्मनि तं वरं ददौ ॥ ६७ ॥ तदाह देवः भविष्यन्तीति । अस्मिन्ननन्तर एव जन्मनि ॥ ६८ ॥ ६९ ॥ वंशाना-मिति । सूतिः सन्ततिः ॥ ७० ॥ त्वञ्चेति । साध्वी पतिव्रता ॥ ७१ ॥ ७२ ॥ ७३ ॥

विष्णुचित्तीयम् ।

भगवतीति । विशदा वैष्णवमुखतादि ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

रत्नगर्भीयम् ।

दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ।
जज्ञे दक्षो महाभागो यः पूर्वं ब्रह्मणोऽभवत् ॥७४॥
स तु दक्षो महाभागस्सृष्ट्यर्थं सुमहामते ।
पुत्रानुत्पादयामास प्रजासृष्ट्यर्थमात्मनः ॥७५॥
अवरांश्च वरांश्चैव द्विपदोऽथ चतुष्पदान् ।
आदेशं ब्रह्मणः कुर्वन् सृष्ट्यर्थं समुपस्थितः ॥७६॥
स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः ।
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ ७७ ॥
तासु देवास्तथा दैत्या नागा गावस्तथा खगाः ।
गन्धर्वाप्सरसश्चैव दानवाद्याश्च जज्ञिरे ॥ ७८ ॥
ततः प्रभृति मैत्रेय प्रजा मैथुनसम्भवाः ।
सङ्कल्पाद्दर्शनात्स्पर्शात्पूर्वेषामभवन्प्रजाः ।
तपोविशेषैः सिद्धानां तदात्यन्ततपस्विनाम् ७९॥

श्रीमैत्रेय उवाच ॥

अङ्गुष्ठाद्दक्षिणाद्दक्षः पूर्वं जातो मया श्रुतः ।
कथं प्राचेतसो भूयः समुत्पन्नो महामुने ॥ ८० ॥

विष्णुचित्तीयम् ।

रतो गतस्तत्कथमिति संशय इत्यर्थः । दौहित्रश्चेति पाठे सोमदुहितरि मारिषायां प्रचेतोभ्यः समुत्पन्न-

श्रीधरीयम् ।

दशभ्य इति । यः पूर्वं ब्रह्मणः पुत्रोऽभवत् स दक्षो मारिषायां जज्ञे ॥७४॥ स इति सृष्ट्यर्थं प्रजापतिसृ-ष्टिवृद्ध्यर्थम् । आत्मनः प्रजासृष्ट्यर्थं सन्तानार्थम् ॥ ७५ ॥ अवरानिति । अवरान्नीचान्वरान् श्रेष्ठान् । अचरांश्च चरांश्चैवेति वा पाठः ॥ ७६ ॥ स इति । पश्चात् हर्यश्वादिपुत्रनाशानन्तरं स्त्रियः कन्यास्ति-स्त्रोऽसृजत् । तासां मध्ये पञ्चाशत्कन्यानां विवाहान् वंशांश्च प्रदर्शनार्थमुपक्षिपति—ददावित्यादिद्वाभ्याम् । ददाविति । कालस्य नयने परिवर्तने युक्ताः नियुक्ताः कृत्तिकाद्याः । तदुक्तम् "कृत्तिकादीनि नक्ष-त्राणीन्दोः पत्न्यस्तु भारत" इति ॥ ७७ ॥ ७८ ॥ तत इति । ततः प्रभृति ततो दक्षात्प्रभृति दक्षा-त्पूर्वेषां सङ्कल्पादिमात्रात् प्रजा अभवन् । यद्यपि प्राचेतसाद्दक्षात्पूर्वमपि मैथुनसृष्टिरस्त्येव तथापि प्राचु-

विष्णुचित्तीयम् ।

यज्ञानामिति । सूतिः सन्तानः ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ स इति । सृष्ट्यर्थमित्यस्य यः पूर्वं ब्रह्मणोऽभवदित्यनेन पूर्वश्लोकेनान्वयः ॥ ७५ ॥ ७६ ॥ स सृष्ट्वेति । चराचरादिरूपान् पुत्रा-न्मनसा सृष्ट्वा । पश्चाद्वक्ष्यमाणहर्यश्वादिपुत्रनाशादूर्ध्वम् । कालस्य नयने प्रहरादिविपर्ययेन स्वभ्रमणेन च ज्ञापने नियुक्ताः अश्विन्यादितारा: ॥ ७७ ॥ ७८ ॥ तत इति । पूर्वेषां दक्षात्पूर्वेषाम् ॥ ७९ ॥

दत्तात्रेयीयम् ।

प्रचेतोभ्यो तद्वे ॥ ७४ ॥ सृष्ट्यर्थं प्रजापतेस्सृष्टिवृद्ध्यर्थं । आत्मनश्च प्रजासृष्ट्यर्थं सन्तानार्थं ॥ ७५ ॥ चराचराद्यादिकान्मनसा सृष्ट्वा पश्चाद्वक्ष्यमाणहर्यश्वादिपुत्रनाशानन्तरं स्त्रियः कन्यास्तिस्रोऽसृजदिति-योज्य । तासां मध्ये पञ्चाशत्कन्यानां विवाहान्वंशांश्च संक्षेपेणाह—ददाविति । कालस्य नयने कालप-रिवर्तने कालस्य नयने उन्नयने ज्ञाने कालज्ञापनार्थं वा युक्ताः । ईश्वरेण नियुक्ताः कृत्तिकाद्याः धर्माय दश कश्यपाय त्रयोदश इन्दवे सप्तविंशतिमित्येवं पञ्चाशत्कन्या ददावित्यन्वयः ॥ ७६ ॥ ७७ ॥ ततः प्रभृति प्राचेतसदक्षात्प्रभृति । यद्यपि पूर्वमपि मैथुनसृष्टिरस्त्येव । तथाऽपि बाहुल्याभिप्रायेणैवमुच्यत इति नविरोधः ॥ पूर्वेषां च प्रचेतसः दक्षात्पूर्वेषां । इदमपि प्राचुर्याभिप्रायकं । अत्यन्ततपस्विनां मध्ये

[ पा० ] १ ङ भोगी २ क ङ छ सुमहातपा । ख. सुमहामति ३ ज. ट. प्रजासृष्ट्यर्थमात्मना । झ. सृष्टिकृन्महात्मन . ४ क ग घ—छ. ङ. अचरांश्च चरांश्चैव. ५ क—छ ज. चतुष्पद . ६ क ग घ च य सङ्कृत्ये समवस्थित . ७ ख ज दृष्ट्वा ८ ध पश्चादसृजत् ९ क कालस्यानुनये १० क ख घ छ ज ञ ट विशेषैरिद्धानां ११ ग. पूर्वजात प्रजापते १२ अ थ प्रचेतसा. १३ अ समजातः प्रजापतेः.

एष मे संशयो ब्रह्मन्सुमहान्हृदि वर्तते ।
यद्दौहित्रश्च सोमस्य पुनः श्वशुरतां गतः ॥ ८१ ॥
श्रीपराशर उवाच ॥
उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु सर्वदा ।
ऋषयोऽत्र न मुह्यन्ति ये चान्ये दिव्यचक्षुषः ८२ ॥
युगेयुगे भवन्त्येते दक्षाद्या मुनिसत्तम ।
पुनश्चैवं निरुद्ध्यन्ते विद्वांस्तत्र न मुह्यति ॥ ८३ ॥
कानिष्ठ्यं ज्यैष्ठ्यमप्येषां पूर्वं नाभूद्द्विजोत्तम ।
तप एव गरीयोऽभूत्प्रभावश्चैव कारणम् ॥ ८४ ॥
मैत्रेय उवाच ॥
देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
उत्पत्तिं विस्तरेणेह मम ब्रह्मन्प्रकीर्तय ॥ ८५ ॥

चित्सुखीयम् ।

त्वात्सोमस्य दक्षो दौहित्रः । श्वशुरश्च सप्तविंशतिमिन्दवे इत्युक्तत्वात् ॥ ८१ ॥ नित्यौ प्रवाहरूपौ

श्रीधरीयम् ।

स्यात्प्रायेणैतदुच्यत इत्यविरोधः ॥ ७९ ॥ ८० ॥ एष इति । सोमदुहितुर्मारिषायाः पुत्रत्वात्सोमस्य दौहित्रः पुनश्च सप्तविंशतिकन्या इन्दवे ददाविस्युक्तेः श्वशुरतां च गत इति । अत एषोऽन्यः संशय इत्यर्थः । यद्दौहित्रस्येति पाठे दक्षकन्यायामनसूयायामत्रेः सोमस्योत्पत्तेर्दक्षस्य दौहित्रस्सोमस्तस्य दक्षः श्वशुरता पुनर्गतः कथमिति ॥ ८१ ॥ उत्पत्तिरिति । नित्यः प्रवाहरूपेणाविच्छिन्नः ॥ ८२ ॥ युगे युग इति भवन्ति सुतप्रसुतप्रभृत्युत्पद्यन्ते । निरुद्ध्यन्ते सुसमुद्धीयन्त इत्यर्थः । युगेयुग इति । युज्यन्तेऽस्मिन् सदा एकस्थानं यान्तीति युगम् । अत्र कल्पमन्वन्तरादिः कालः ॥ ८३ ॥ स्वायम्भुवमन्वन्तरे जातस्य दक्षस्य पुनश्चाक्षुषमन्वन्तरे प्रचेतोभ्यो जन्मप्रसिद्धेः । न चात्यन्तकनिष्ठस्य श्वशुरत्वे पूज्यपूजाव्यतिक्रम आशङ्कनीय इत्याह—कानिष्ठ्यमिति ॥ गरीयो गुरुतरं तपश्च प्रभावश्च श्रेष्ठ्यकारणमभूत् न तु वयोमात्रमित्यर्थः ॥ ८४ ॥ दक्षसृष्टिं विस्तरेण जिज्ञासुः पृच्छति—देवानामिति । इक्षाविमान्प्राचेतसे वक्ष्ये

विष्णुचित्तीयम् ।

॥ ८० ॥ ८१ ॥ उत्पत्तिरिति । नित्यः प्रवाहरूपेण ॥ ८२ ॥ युगेयुग इति । युज्यन्तेऽस्मिन्सर्वे मदा एकस्थानं यान्तीति व्युत्पत्त्या महयुगं कल्पयतीति ज्योतिषप्रसिद्धेश्च कल्पमन्वन्तरादिकालोऽत्र युगम् । पुराणान्तरे दक्षस्य स्वायंभुवेऽन्तरे जातस्य पुनश्चाक्षुषे जन्मप्रसिद्धेः कल्पचासिभुग्यादिप्रजेश्वरान्तर्ग-

दत्तात्रेयीयम् ।

तपोविशेषैरिद्धानामिति पूर्वेषां विशेषणं ॥ ७९ ॥ अङ्गुष्ठाद्दक्षः पूर्वं जातः ॥ ८० ॥ सोमस्य दौहित्रः सोमदुहितुर्मारिषायाः पुत्रत्वात् । पुनश्च सप्तविंशतिमिन्दवे इत्युक्तेः । श्वशुरता च गत इति । अतएषोऽन्यः संशय इत्यभिप्रायः । यद्दौहित्रस्येति पाठे दक्षकन्यायामनसूयायामत्रेः सोमस्योत्पत्तेर्दक्षस्य दौहित्रः सोमस्तस्य पुनः दक्षः श्वशुरता पुनर्गतइत्येतत्कथमिति संशयः ॥ ८१ ॥ नित्यौ प्रवाहरूपेणाविच्छिन्नौ । दिव्यचक्षुषः आगन्तुकदिव्यदृष्टयः ॥ ८२ ॥ किं ततः प्रकृत इत्यत आह—युगेयुग इति । मन्वन्तरभेदेन तत्तद्युगे स्वायंभुवमन्वन्तरे ब्रह्मणो जातस्य दक्षस्य पुनश्चाक्षुषमन्वन्तरे प्रचेतोभ्यो जन्मप्रसिद्धेः । अनेन जन्मद्वयोपपत्तिरुक्ता ॥ ८३ ॥ सोमस्य दौहित्रत्वेन कनिष्ठत्वात्कथं श्वशुरतां गतः । "पञ्चमो गुरुः" इतिवचनात् श्वशुरतायाः गुरुत्वप्रयोजकत्वादित्याशङ्क्य तत्रोपपत्तिमाह—कानिष्ठ्यमिति ॥ एषां दक्षसोमादीनां पूर्वं पूर्वविद्यमानं ज्यैष्ठ्यं कानिष्ठ्यं च पूज्यत्वापूज्यत्वयोः कारणं नाभूत् । किन्तु गरीयो गुरुतरं तपःप्रभावश्चात्र पूज्यत्वे कारणमभूत् । नतु वयोमात्रमित्यर्थः ॥ ८४ ॥ सङ्क्षेपश्रुता दक्षसृष्टिं विस्तरेण जिज्ञासुः पृच्छति—देवानामिति ॥ इह प्राचेतसदक्षजन्मनि । या देवादी-

[ पा० ] १ [वि० पा०] यद्दौहित्रस्य. २ इ म ड नित्यौ. ३ ड म ड. सत्तम । ज स. ट ठ वैमुने.

श्रीपराशर उवाच ॥
प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
यथा ससर्ज भूतानि तथा शृणु महामुने ॥ ८६ ॥
मानसान्येव भूतानि पूर्वं दक्षोऽसृजत्तदा ।
देवानृषीन्सगन्धर्वानसुरान्पन्नगांस्तथा ॥ ८७ ॥
यदाऽस्य सृज्यमानस्य न व्यवर्धन्त ताः प्रजाः ।
ततः संचिन्त्य स पुनः सृष्टिहेतोः प्रजापतिः ८८॥
मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः ।
असिक्नीमावहत्कन्यां वीरणस्य प्रजापतेः ।
सुतां सुतपसा युक्तां महतीं लोकधारिणीम् ८९ ॥

अथ पुत्रसहस्राणि वैरिण्यां पञ्च वीर्यवान् ।
असिक्न्यां जनयामास सर्गहेतोः प्रजापतिः ९०॥
तान्दृष्ट्वा नारदो विप्र संविवर्धयिषून्प्रजाः ।
सङ्गम्य प्रियसंवादो देवर्षिरिदमब्रवीत् ॥ ९१ ॥
हे हर्यश्वा महावीर्याः प्रजा यूयं करिष्यथ ।
ईदृशो दृश्यते यत्नो भवतां श्रूयतामिदम् ॥ ९२ ॥
बालिशा बत यूयं वै नास्या जानीत वै भुवः ।
अन्तरूर्ध्वमधश्चैव कथं स्रक्ष्यथ वै प्रजाः ॥ ९३ ॥
ऊर्ध्वं तिर्यगधश्चैव यथाऽप्रतिहता गतिः ।
तथा कस्माद्भुवो नान्तं सर्वे द्रक्ष्यथ बालिशाः ९४

श्रीधरीयम् ।

या देवादीनामुत्पत्ति ता विस्तरेण प्रकीर्तयेत्यर्थः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ तानिति । प्रजाः सम्यक् विवर्धयितुमिच्छतस्तान् दृष्ट्वाऽभिसङ्गम्याब्रवीत् ॥ ९१ ॥ ९२ ॥ बालिशा इति । बालिशा बतेत्यादेरय मासमार्थः । बतेति खेदे । तेषां तत्त्वविमर्शनं विना प्रजासृष्टौ क्लेशाभासः । अहो यूयं बालिशा अज्ञाः । यतोऽस्या भुव संसाराङ्कुरप्रसवक्षेत्रस्य लिङ्गशरीरस्याप, उपक्रममूर्ध्वमवसानम् अन्तर्मध्यञ्च न जानीथ । अतो मोक्षमार्गमज्ञात्वा कथं प्रजाः स्रक्ष्यथ व्यर्थसंसारापादकं प्रजासर्गं कि-मिति करिष्यथ ॥ ९३ ॥ यूयञ्च विशुद्धबुद्धित्वात्तत्त्वज्ञानाधिकारिण एवेत्याह—ऊर्ध्वमिति ॥ ऊर्ध्वं तिर्यगधश्च सर्वतस्तत्त्वविचारे यथेदानीं नृजन्मनि युष्माकं गतिः बुद्धिरप्रतिहता वर्तते । तथा कस्मा-

विष्णुचित्तीयम् ।

त्वात्व ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥

दत्तात्रेयीयम् ।

नामुत्पत्ति, सा विस्तरेण प्रकीर्तयेत्यन्वयः ॥ ८५ ॥ पूर्वं मैथुनसृष्टेः पूर्वं । मानसाः सङ्कल्पजाः ॥ ८७ ॥ कन्या कमनीया लोकधारिणीं लोकसृष्टिहेतुप्रभाधारिणीं ॥ ८९ ॥ पञ्चेति पञ्चकद्वय विवक्षित । "हर्यश्वसञ्ज्ञानयुत पुत्रानजनयद्विभुः" इतिभागवतोक्ते ॥ ९० ॥ संविवर्धयिषून् सम्यग्वर्धयितुमिच्छन्तः । तान्दृष्ट्वा अभिसङ्गम्य । प्रियसंवादः प्रियोक्तिमान् देवर्षिरब्रवीत् ॥ ९१ ॥ बत खेदे । तत्त्वविमर्शाभावे केवल सृष्टयर्थव्यापारे क्लेशप्राप्तेः यूय बालिशा अज्ञाः यतोऽस्याः भुव संसारबीजभूतकर्मप्रसवक्षेत्रत्वाद्भूशब्दवाच्यस्य देहस्यान्तर्मध्य ऊर्ध्वमवसान अध उपक्रम च नजानीत अतो मोक्षोपायमज्ञात्वा कथ प्रजा स्रक्ष्यथ । व्यर्थसंसारापादक प्रजासर्गं किमिति करिष्यथ ॥ ९३ ॥ यूयञ्च विशुद्धबुद्धित्वात्तत्त्वज्ञानाधिकारिण एवेत्याह—ऊर्ध्वमिति ॥ ऊर्ध्वं तिर्यगधश्च सर्वतस्तत्त्वविचारे यदा यस्मात्कारणाद्युष्माकं गतिर्बुद्धिरप्रतिहता प्रतिबन्धकरहिताऽस्ति तदा तस्मात्कारणाद्भुवः शरीरस्यान्त विनाशं कस्मान्न द्रक्ष्यथ । मोक्षार्थं किमिति यत्नं न करिष्यथेत्यर्थः । "भू क्षेत्रं बीजसञ्ज्ञस्य यदनादिर्निबन्धनं । अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत्" इत्यादिपञ्चमस्कन्धवचनानुसारेणैव व्याख्यातमिति बोध्यं ॥ ९४ ॥

रत्नगर्भीयम् ।

ददाविति बोद्धव्यम् ॥ ६८ ॥ दिव्यचक्षुषः अतीन्द्रियवेदिनः ॥ ८२ ॥ पञ्चसहस्राणीतिसम्बन्धः

[ पा० ] १ क—छ मनसात्वेव २ क घ नुरमान्पक्षिणतथा ३ ग घ च समुनि । ख छ महुरा ४ म वीरिण्यां. ५ ज ट. ठ. कस्यते भावो

एष मे संशयो ब्रह्मन्सुमहान्हृदि वर्तते ।
यद्दौहित्रश्च सोमस्य पुनः श्वशुरतां गतः ॥ ८१ ॥

श्रीपराशर उवाच ॥

उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु सर्वदा ।
ऋषयोऽत्र न मुह्यन्ति ये चान्ये दिव्यचक्षुषः ॥ ८२ ॥
युगेयुगे भवन्त्येते दक्षाद्या मुनिसत्तम ।
पुनश्चैवं निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥ ८३ ॥
कानिष्ठ्यं ज्यैष्ठ्यमप्येषां पूर्वं नाभूद्द्विजोत्तम ।
तप एव गरीयोऽभूत्प्रभावश्चैव कारणम् ॥ ८४ ॥

मैत्रेय उवाच ॥

देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
उत्पत्तिं विस्तरेणेह मम ब्रह्मन्प्रकीर्तय ॥ ८५ ॥

चित्सुखीयम् ।

स्यात्सोमस्य दक्षो दौहित्रः । श्वशुरश्च सप्तविंशतिमिन्दवे इत्युक्त्वात् ॥ ८१ ॥ नित्यौ प्रवाहरूपौ

श्रीधरीयम् ।

स्यात्तमायेनैतदुच्यत इत्यविरोधः ॥ ७९ ॥ ८० ॥ एष इति । सोमदुहितुर्मारिषायाः पुत्रत्वात्सोमस्य दौहित्रः पुनश्च सप्तविंशतिकन्या इन्दवे ददाविस्युक्तेः श्वशुरता च गत इति । अत एषोऽन्यः संशय इत्यर्थः । यद्दौहित्रस्येति पाठे दक्षकन्यायामनसूयायामत्रेः सोमस्योत्पत्तेर्दक्षस्य दौहित्रस्सोमस्तस्य दक्षः श्वशुरतां पुनर्गत। कथमिति ॥ ८१ ॥ उत्पत्तिरिति । नित्यः प्रवाहरूपेणाविच्छिन्नः ॥ ८२ ॥ युगे युग इति भवन्ति सृजन्त्युद्भवन्त्युत्पद्यन्ते । निरुध्यन्ते मुह्यन्तीयन्त इत्यर्थः । युगेयुग इति । युग्मतोऽस्मिन् महा एकस्थानं यास्यन्तीति युगम् । अत्र कल्पमन्वन्तरादिः कालः ॥ ८३ ॥ स्वायम्भुवमन्वन्तरे जातस्य दक्षस्य पुनश्चाक्षुषमन्वन्तरे प्रचेतोभ्यो जन्मप्रसिद्धेः । न चात्यन्तकनिष्ठस्य श्वशुरत्वे पूज्यपूजाव्यतिक्रम आशङ्कनीय इत्याह—कानिष्ठ्यमिति ॥ गरीयो गुरुतरं तपश्च प्रभावश्च ज्येष्ठकारणमभूत् न तु वयोमात्रमित्यर्थः ॥ ८४ ॥ दक्षसृष्टिं विस्तरेण जिज्ञासुः पृच्छति—देवानामिति । इहाखिलप्राचेतसे दक्षे

विष्णुचित्तीयम् ।

॥ ८० ॥ ८१ ॥ उत्पत्तिरिति । नित्यः प्रवाहरूपेण ॥ ८२ ॥ युगेयुग इति । युज्यन्तेऽस्मिन्नर्थे महा एकस्थानं यान्तीति व्युत्पत्त्या महद्युगं कल्पयतीति ज्योतिषप्रसिद्धेश्च कल्पमन्वन्तरादिकालोऽत्र युगम् । पुराणान्तरे दक्षस्य स्वायंभुवेऽन्तरे जातस्य पुनश्चाक्षुषे जन्मप्रसिद्धेः कल्पवासिभृग्वादिप्रजेश्वरान्तर्ग-

दत्तात्रेयीयम् ।

तपोविशेषैरिद्धानामिति पूर्वेषां विशेषणं ॥ ७९ ॥ ब्रह्मणाद्ब्रह्मणः पूर्वं जातः ॥ ८० ॥ सोमस्य दौहित्रः सोमदुहितुर्मारिषायाः पुत्रत्वात् । पुनश्च सप्तविंशतिमिन्दवे इत्युक्तेः । श्वशुरता च गत इति । अत एषोऽन्यः संशय इत्यभिप्रायः । यद्दौहित्रस्येति पाठे दक्षकन्यायामनसूयायामत्रेः सोमस्योत्पत्तेर्दक्षस्य दौहित्रः सोमस्तस्य पुत्रः दक्षः श्वशुरता पुनर्गत इत्येतत्कथमिति संशयः ॥ ८१ ॥ नित्यौ प्रवाहरूपेणाविच्छिन्नौ । दिव्यचक्षुषः आगन्तुकदिव्यदृष्टयः ॥ ८२ ॥ किं ततः अत्र तत्र इत्यत आह—युगेयुग इति । मन्वन्तरभेदेन तत्तद्युगे स्वायंभुवमन्वन्तरे ब्रह्मणो जातस्य दक्षस्य पुनश्चाक्षुषमन्वन्तरे प्रचेतोभ्यो जन्मप्रसिद्धेः । अनेन जन्मद्वयोपपत्तिरुक्ता ॥ ८३ ॥ सोमस्य दौहित्रत्वेन कनिष्ठत्वात्स्वयं श्वशुरतां गतः । "पञ्चमो गुरुः" इतिवचनात् श्वशुरतायाः गुरुत्वप्रयोजकत्वादित्याशङ्क्य तदोपपत्तिमाह—कानिष्ठ्यमिति ॥ एषां दक्षसोमादीनां पूर्वं पूर्वविद्यमानं ज्यैष्ठ्यं कानिष्ठ्यं च पूज्यत्वापूज्यत्वयोः कारणं नाभूत् । किन्तु गरीयो गुरुतरं तपःप्रभावश्चात्र पूज्यत्वे कारणमभूत् । न तु वयोमात्रमित्यर्थः ॥ ८४ ॥ संक्षेपेणश्रुतां दक्षसृष्टिं विस्तरेण जिज्ञासुः पृच्छति—देवानामिति ॥ इह प्राचेतसदक्षजन्मनि । या दैवादी-

[ पा० ] १ [वि० पा०] यद्दौहित्रस्य २ क ख ग नित्यौ. ३ क. ख ग. सत्तम । ग. ख ट ठ वैमुने.

श्रीपराशर उवाच ॥
प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
यथा ससर्ज भूतानि तथा शृणु महामुने ॥८६॥
मानसान्येव भूतानि पूर्वं दक्षोऽसृजत्तदा ।
देवानृषीन्सगन्धर्वानसुरान्पन्नगांस्तथा ॥ ८७ ॥
यदाऽस्य सृज्यमानस्य न व्यवर्धन्त ताः प्रजाः ।
ततः संचिन्त्य स पुनः सृष्टिहेतोः प्रजापतिः ८८॥
मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः ।
असिक्नीमावहत्कन्यां वीरणस्य प्रजापतेः ।
सुतां सुतपसा युक्तां महतीं लोकधारिणीम् ८९ ॥
अथ पुत्रसहस्राणि वैरिण्यां पञ्च वीर्यवान् ।
असिक्न्यां जनयामास सर्गहेतोः प्रजापतिः ९०॥
तान्दृष्ट्वा नारदो विप्र संविवर्धयिषून्प्रजाः ।
सङ्गम्य प्रियसंवादो देवर्षिरिदमब्रवीत् ॥ ९१ ॥
हे हर्यश्वा महावीर्याः प्रजा यूयं करिष्यथ ।
ईदृशो दृश्यते यत्नो भवतां श्रूयतामिदम् ॥ ९२ ॥
बालिशा बत यूयं वै नास्या जानीत वै भुवः ।
अन्तरूर्ध्वमधश्चैव कथं स्रक्ष्यथ वै प्रजाः ॥ ९३ ॥
ऊर्ध्वं तिर्यगधश्चैव यदाऽप्रतिहता गतिः ।
तदा कस्माद्भुवो नान्तं सर्वे द्रक्ष्यथ बालिशाः ९४

श्रीधरीयम् ।

या देवादीनामुत्पत्तिः तां विस्तरेण प्रकीर्तयेत्यर्थः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ तानिति । प्रजाः सम्यक् विवर्धयितुमिच्छतस्तान् दृष्ट्वाऽभिसङ्गम्याब्रवीत् ॥ ९१ ॥ ९२ ॥ बालिशा इति । बालिशा बतेत्यादेरयं वाक्यार्थः । बतेति खेदे । तेषां तत्त्वविमर्शनं विना प्रजासृष्ट्यादिक्लेशभाजः । अहो यूयं बालिशा अज्ञाः । यतोऽस्या भुवः संसाराङ्कुरप्रसवक्षेत्रस्य लिङ्गशरीरस्याधः उपक्रममूर्ध्वमवसानम् अन्तर्मध्यञ्च न जानीथ । अतो मोक्षमार्गमज्ञात्वा कथं प्रजाः स्रक्ष्यथ व्यर्थसंसारापादकं प्रजासर्गं किमिति करिष्यथ ॥ ९३ ॥ यूयञ्च विशुद्धबुद्धित्वात्तत्त्वज्ञानाधिकारिण एवेत्याह—ऊर्ध्वमिति ॥ ऊर्ध्वं तिर्यगधश्च सर्वतस्तत्त्वविचारे यथेदानीं तु जन्मनि युष्माकं गतिः बुद्धिरप्रतिहता वर्तते । तथा कस्मा-

विष्णुचित्तीयम् ।

सत्याय ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥

[illegible]

तासामुत्पत्तिः तां विस्तरेण प्रकीर्तयेत्यन्वयः ॥ ८५ ॥ पूर्वं मैथुनसृष्टेः पूर्वं । मानस्यः सङ्कल्पजाः ॥ ८७ ॥ कन्यां कमनीयां लोकधारिणीं लोकप्रसूतिहेतुप्रजाधारिणीं ॥ ८९ ॥ पञ्चेति पञ्चकद्वयं विवक्षितं । "हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः" इतिभागवतोक्तेः ॥ ९० ॥ संविवर्धयिषून् सम्यग्वर्धयितुमिच्छून् । तान्दृष्ट्वा अभिसङ्गम्य । प्रियसंवादः प्रियोक्तिमान् देवर्षिरब्रवीत् ॥ ९१ ॥ बत खेदे । तत्त्वविमर्शाभावे केवलं सृष्टव्यापारे क्लेशभाजः यूयं बालिशा अज्ञाः यतोऽस्याः भुवः संसारबीजभूतकर्मप्रसवभूमित्वाद्भूशब्दवाच्यस्य देहस्यान्तर्मध्यं ऊर्ध्वमवसानं अधः उपक्रमं च नजानीत अतो मोक्षोपायमज्ञात्वा कथं प्रजाः स्रक्ष्यथ । व्यर्थसंसारापादकं प्रजासर्गं किमिति करिष्यथ ॥ ९३ ॥ यूयंच विशुद्धबुद्धित्वात्तत्त्वज्ञानाधिकारिण एवेत्याह—ऊर्ध्वमिति ॥ ऊर्ध्वं तिर्यगधश्च सर्वतस्तत्त्वविचारे यदा यस्मात्कारणाद्युष्माकं गतिर्बुद्धिरप्रतिहता प्रतिबन्धकरहिताऽस्ति तदा तस्मात्कारणाद्भुवः शरीरस्यान्तं विनाशं कस्मान्न द्रक्ष्यथ । मोक्षार्थं किमिति यत्नं नकरिष्यथेत्यर्थः । "भूःक्षेत्रंबीजसंज्ञस्य यदनादिनिबन्धनं । अदृष्ट्वातस्यनिर्वाणंकिमसत्कर्मभिर्भवेत्" इत्यादिभागवतवचनानुसारेणैवं व्याख्यातमितिनोद्यं ॥ ९४ ॥

रत्नगर्भीयम् ।

दशाविति बोद्धव्यम् ॥ ६८ ॥ दिव्यचक्षुषः अतीन्द्रियवेदिनः ॥ ८२ ॥ पञ्चसहस्राणीतिसंबन्धः

[ पा० ] १ क—ठ. मनसान्येव. २ क. ख. तुरान्पक्षिंस्तथा. ३ ख. प. च. समुनि. । घ. ठ. बहुधा . ४ ञ. वैरिण्यां. ५ ञ. ट. ठ. कन्यकां भगो.

ये त्वनेकवसुप्राणा देवा ज्योतिःपुरोगमाः ।
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥
आपो ध्रुवश्च सोमश्च धर्मश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ११०॥
आपस्य पुत्रो वैतण्डः श्रमः शान्तोऽध्वनिस्तथा
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः १११॥
सोमस्य भगवान्वर्चो वर्चस्वी येन जायते॥११२॥
धर्मस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।
मनोहरायां शिशिरः प्राणोऽथ रवणस्तथा ११३॥
अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ ११४॥
अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः ११५॥

चित्सुखीयम् ।

अनेकं वसु तेज एव प्राणो देहधारकं येषां ते अनेकवसुप्राणाः । यद्वाऽनेकं वसु धनं प्राणो बलं येषां ते तथा । ज्योतिरग्निः पुरोगमो मुख्यो येषां ते ज्योतिःपुरोगमाः । यद्वाऽग्नस्तेजोवभासिता इत्यर्थः ॥ १०९ ॥ लोकप्रकालनः लोकानां प्रकालनः संहारक इत्यर्थः ॥ १११ ॥ यत्संबन्धात्पुरुषो वर्चस्वी भवति । जगतां दीप्तिर्वर्चस्तदभिमानिनी देवता सोमस्य पुत्रः ॥ ११२ ॥ धरस्य मनोहरा भार्या तस्यां

श्रीधरीयम् ।

सर्वात्मा सर्ववस्तुविषयः ॥ १०८ ॥ वसूनामष्टानां नामपूर्वकं वंशान्यक्रमाह—येत्वित्यादिना विश्वरूपो महातपा इत्यन्तेन । ये त्विति । अनेकं नानाविधं वसु तेजस्तदेव प्राणो बलमेषां ते अनेकवसुप्राणा इति वसूनां नामनिरुक्त्यर्थमुक्तम् । ज्योतिःपुरोगमा अग्निमुख्याः "वसूनां पावकश्चास्मि" इति स्मृतेः ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ अग्निपुत्र इति । शरस्तम्बे मुञ्जस्तम्बे

विष्णुचित्तीयम् ।

॥ १०९ ॥ एतेषां धर्मपुत्राणां मध्ये वसुपुत्राः आपादयोऽष्टौ प्रथमिरदेवतान्तःपातित्वेन प्रसिद्धा इत्याह—ये त्विति । अनेकवसुप्राणाः अनेकं वसु धनं रश्मिर्वा प्राणो बलं येषां ते । ज्योतिःपुरोगमा अग्निमुख्याः "वसूनामस्मि पावकः" इति स्मृतेः ॥ ११० ॥ १११ ॥ सोमस्येति । येन वर्चसा जनो वर्चस्वी जायते स वर्चोऽधिदैवतम् ॥ ११२ ॥ धर्मस्येति । मनोहरायां धर्मादिति शेषः ॥ ११३ ॥ ॥ ११४ ॥ अग्निपुत्र इति । अग्निपुत्रः पूर्वमग्नेः पुत्रः । यद्वा अग्निपुत्रः कुमारः । तस्य कुमारस्येन्द्रा-

रत्नगर्भीयम् ।

स्तुविषयः । सङ्कल्पः मनोवृत्तिविशेषः सङ्कल्पाभिमानी देवः ॥ १०८ ॥ वसूनामष्टानां नामपूर्वकं वंशान्वयमाह—येत्वित्यादिना ॥ अनेकं वसु धनं तेजो वा प्राणो बलं येषां ते अनेकवसुप्राणा इति वसुनामनिरुक्त्यर्थमुक्तिः । ज्योतिरग्निः पुरोगमः प्रमुखो येषां ते ज्योतिःपुरोगमाः । "वसूनामस्मि पावकः" इति गीतोक्तेः ॥ १०९ ॥ आपस्य वैतण्डादयश्चत्वारः पुत्राः । लोकप्रकालनः लोकसंहारे हेतुः ॥ १११ ॥ येन पुमान्वर्चस्वी कान्तिमान् जायते स वर्चोभिमानी देवो वर्चः ॥ ११२ ॥ धरस्य भार्या मनोहरा । द्रविणादयः पञ्च तत्पुत्राः । हुतं हव्यं वहतीति तथा ॥ ११३ ॥ अनिलस्य शिवा नाम भार्या । तस्या अनिलस्य सकाशात् मनोजव एकः पुत्रः । अन्यावाक्ष अविज्ञातगतिश्चेति अनिलस्य द्वौ पुत्राविति योज्यं ॥ ११४ ॥ ततो मुञ्जस्तम्बे तस्य कुमारस्य पृष्ठजाः अनन्तरजाः शाखादयस्त्रयः

[ पा० ] १ प—ढ. धर्मश्चा. २ म. वसवोऽष्टौ प्रकीर्तिताः. ३ ट. भगवान् । घ. वैतण्डः । ठ. ज. झ. ट—ए. वैतण्ड्यः । ■ वैतण्ड । ग. घ. वैतण्ड्य । म. वैतण्ड्य.. ४ क. च. शम । झ. समः. ५ क. ख. शान्तो मुनिस्तथा । ङ. शान्तो मुनिस्तथा । ग. शांतो मुनिस्तथा । छ. शान्तो मुनिस्तथा. ६ [वि० पा०] धरस्य, ७ क—ग. ङ. ञ. ट. रमणस्तथा । क. बहलस्तथा. ८ ग. पुत्र. पुरोजवः । क. ख. ट. च. पुत्र पुरोजवः । ठ पुत्र पुरोजव. ९ क. घ. ठ. हृष्ट.

अपत्यं कृत्तिकानां तु कार्तिकेय इति स्मृतः ११६
प्रत्यूषस्य विदुः पुत्रं ऋषिं नाम्नाथ देवलम् ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ११७
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत्कृत्स्नमसक्ता विचरत्युत ।
प्रभासस्य तु सा भार्या वसूनामष्टमस्य तु ॥११८॥
विश्वकर्मा महाभागस्तस्यां जज्ञे प्रजापतिः ।
कर्ता शिल्पसहस्राणां त्रिदशानां च वार्धकिः ॥
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ।
यः सर्वेषां विमानानि देवतानां चकार ह ।
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः १२०
तस्य पुत्रास्तु चत्वारस्तेषां नामानि मे शृणु ।
अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्यवान् ।
त्वष्टुश्चाप्यात्मजः पुत्रो विश्वरूपो महातपाः १२१
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ।
वृषाकपिश्च शम्भुश्च कपर्दी रैवतः स्मृतः ॥१२२॥
मृगव्याधश्च शर्वश्च कपाली च महामुने ।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥१२३॥

### निरुक्तीयम् ।

द्रविणादयो रमणान्ताः पुत्राः ॥ ११३ ॥ पृष्ठजा अनुजाः ॥ ११५ ॥ तस्या प्रभासभार्याया बृहस्पतिभगिन्या विश्वकर्मा जज्ञे ॥ ११९ ॥ रुद्राणां गणनपरवाक्यस्यासमाप्तावेव त्वष्टृपुत्रस्य विश्वरूपस्य प्रस्तावः ॥ १२० ॥ अपराजित इति त्र्यंबकस्य विशेषणं । एवंचसति वसूनां परिगणनानन्तरं रुद्राणामेकादशानां गणनं । अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रो हरो बहुरूपस्त्र्यंबको वृषाकपिः शंभुः कपर्दी रैवत

### श्रीधरीयम् ।

तस्य पृष्ठजा अनुजाः कुमारा गुहरूपाः । तदुक्तं शल्यपर्वणि "ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् गुहः" इत्यादि ॥ ११५ ॥ अपत्यमिति । कुमार एव कार्त्तिकेय इति स्मृतः ॥ ११६ ॥ ११७ ॥ बृहस्पतेरिति । बृहस्पतेर्भगिनी प्रभासस्य भार्या । असक्ता सङ्गवर्जिता ॥ ११८ ॥ विश्वकर्मेति । तस्यां जज्ञे विश्वकर्मा ॥ ११९ ॥ १२० ॥ अजैकपादिति । तस्या बृहस्पतेर्भगिन्याम् अजैकपादाद्याश्चत्वारो जज्ञिरे ॥ १२१ ॥ त्वष्टुस्तनुजस्य रुद्रस्यैकादशविभागमाह—हरश्चेत्यादिद्वाभ्याम् ॥ १२२ ॥ १२३ ॥

### विष्णुचित्तीयम् ।

हस्तप्रदेशाज्जातो नैगमेयः । शाखविशाखौ स्कन्दसृष्टौ ॥ ११५ ॥ ११६ ॥ ११७ ॥ बृहस्पतेरिति । असक्ता विरक्ता ॥ ११८ ॥ विश्वकर्मेति । तस्या विश्वकर्मा ॥ ११९ ॥ १२० ॥ अजैकपादिति । अजैकपादादिरुद्रचतुष्कं च तस्या प्रभासभार्यायामेव जज्ञे । विश्वरूपान्तोऽत्र वसुसन्तानः ॥ १२१ ॥ एव रुद्रप्रसङ्गात्त्र्यम्बकाम् महापुनीलोलोहिताशाम् रुद्रान् हरादिनामभिर्निर्दिशति—हरश्चेति । अथ या प्रभासभार्यासुतस्त्रयो रुद्रास्त्वष्टृसूनवोऽष्टौ तदन्वये परिशिष्टा रुद्रा इति ॥ १२२ ॥ १२३ ॥

### वत्सत्रेयीयम् ।

कुमारस्यैव रूपविशेषाः । तदुक्तं शल्यपर्वणि । "युगपद्योगमास्थाय ससर्ज विविधात्मनः । ततो भवच्चतुर्मूर्तिःक्षणेन भगवान् गुहः । ततः शाखोविशाखश्चनैगमेयश्चपृष्ठतः"इत्यादि ॥ ११५ ॥ षट्कृत्तिकास्तनपानेन कृत्तिकापत्यत्वात्कार्त्तिकेय इतिस्मृतः ॥ ११६ ॥ सा बृहस्पतिभगिनी प्रभासस्यभार्या ॥ ११८ ॥ तस्या विश्वकर्मा जज्ञे ॥ ११९ ॥ अजैकपादादिरुद्रत्रय जज्ञ इति योज्यं ॥ १२१ ॥ त्वष्टृपुत्रः विश्वरूपः हरादयोऽष्टौ रुद्राश्च । अजैकपादाद्यश्चैकादशरुद्रा जज्ञिरे । मध्ये त्वष्टृवंशमुक्त्वा रुद्रसङ्ख्यासमापनं । अपराजित इति त्र्यं त्र्यम्बकविशेषणं । अन्ये प्रभासस्य सुतास्त्रयः । त्वष्टृसुता

[ पा० ] १ ज. ट ,कामरूपिणी । ठ कामचारिणी । म ब्रह्मचारिणी २ अवमर्ग ह पाठ. ३ स—ख. ढ, बुद्धिमान्

शतं त्वेकं समाख्यातं रुद्राणाममितौजसाम् ।
काश्यपस्य तु भार्या यास्तासां नामानि मे शृणु ॥
अदितिर्दितिर्दनुश्चैवारिष्टा च सुरसा खसा ।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा ।
कद्रूर्मुनिश्च धर्मज्ञ तदपत्यानि मे शृणु ॥ १२५ ॥

पूर्वमन्वन्तरे श्रेष्ठा द्वादशासन्सुरोत्तमाः ।
तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे ॥ १२६ ॥

उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः ।
समवायीकृताः सर्वे समागम्य परस्परम् ॥ १२७ ॥

विष्णुचित्तीयम् ।

इति ॥ १२२ ॥ १२३ ॥ शतं त्वेकमिति ॥ एकादशानामेवैकैकस्य दशधाभावे सत्येकादश रुद्रा एवै-कादशशतरुद्रा भवन्तीत्यर्थः ॥ १२४ ॥ एवं दत्तौ स दक्ष धर्मायेति निर्दिष्टधर्मभार्यासु सन्ततिमभि-धाय कश्यपाय त्रयोदशेति निर्दिष्टकश्यपभार्यासु सन्ततिं दर्शयितुं ता नामतो निर्दिशति—अदितिर्दि-तिरित्यादिना ॥ १२५ ॥ पूर्वमन्वन्तरे चाक्षुषे । वैवस्वतेऽन्तरे उपस्थिते तुषिता नाम देवा अन्योन्य-

श्रीधरीयम् ।

एषामेवैकादशानां प्रत्येकं शतं भेदानाह—शतं त्विति । रुद्राणामेकं शतमाख्यातं । यद्वा एतद्विरूपाणां रुद्राणामानन्त्यमश्नुते । शतशब्दस्यापरिमितवाचकत्वात् असङ्ख्याताः "सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्" इति श्रुतेश्च ॥ १२४ ॥ तदेवं धर्मभार्याणां वंशा उक्ताः । इदानीं कश्यपाय त्रयोद-शेत्युक्तानां नामानि च वंशांश्चक्रमाह—अदितिरित्यादिना ॥ १२५ ॥ तत्र तुषिता एवादितेः पुत्रा जाता इति कथापूर्वकमाह—पूर्वेति । पूर्वमन्वन्तरे चाक्षुषे तुषितानाम देवा आसन् ॥ १२६ ॥ उप-स्थित इति । ते चाक्षुषस्य मनोरन्तरे वर्तमाने वैवस्वतमन्वन्तरे भावितिनि सति । परस्परं समागम्या-न्योन्यपार्श्वं गत्वा समवायीकृता मिलिताः सन्तोऽन्योन्यमूचुरिति द्वयोरन्वयः । अतियशसः प्रख्या-

विष्णुचित्तीयम् ।

शतं त्वेकमिति । शतं त्वेषमिति च पाठः एवं रुद्राणां शतकं समाख्यातम् । इदं शतमीश्वरस्यमिति केचित् । अत्र शतशब्दोऽनन्तवचनः ॥ १२४ ॥ अदितिरिति । अदित्यादयः काश्यपस्त्रियः । सुरसायसेति च पाठः ॥ १२५ ॥ पूर्वेति । पूर्वमन्वन्तरे द्वितीये स्वारोचिषमन्वन्तरे ये तुषितानाम देवा आसन् ते वैवस्वते सप्तमे मन्वन्तरे ॥ १२६ ॥ उपस्थित इति । उपस्थिते आसन्ने चाक्षुषस्य षष्ठस्य मन्वन्तरे परस्परं समागम्य

दत्तात्रेयीयम् ।

अष्टाविंशत्येकादश रुद्राः ॥ १२२ ॥ १२३ ॥ रुद्रसङ्ख्यादन्येऽपि कोटिशो रुद्रास्सन्तीत्याह—शत-मिति ॥ शतशब्दो बहुत्ववाची । न तु शतसङ्ख्यामात्रवाची । "सुरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटि-शः" इति भागवतोक्तेः ॥ १२४ ॥ तदेवं धर्मभार्याणां वंशा उक्ताः । इदानीं "कश्यपाय त्रयोदश" इत्यु-क्तानां कश्यपपत्नीनां वंशान्वक्तुमाह—अदितिरित्यादिना ॥ १२५ ॥ तत्र तुषिता एव द्वादशादितेः पुत्राः जाता इति कथापूर्वकमाह—पूर्वमन्वन्तर इत्यादिना ॥ पूर्वमन्वन्तरे द्वितीये स्वारोचिषमन्वन्तरे तुषिता नाम द्वादश देवा आसन् ॥ १२६ ॥ ते चाक्षुषस्य षष्ठस्य मनोरन्तरे वर्तमाने वैवस्वते सप्तमे मन्वन्तरे उपस्थिते आसन्नभाविनि सति परस्परं समागम्यान्योन्यपार्श्वं गत्वा समवायीकृताः मिलिता-स्सन्तोऽन्योन्यमूचुरिति द्वयोरन्वयः । तुषितानां द्वादशत्वं शान्तिविष्णुभ्यां ग्राहेति बोध्यं । अतिय-

[ पा० ] १ ख. ङ. ड. त्वेषा. २ क. ग घ. च. छ ज. समाख्यात ३ [विष्णु चि० पा०] सरसा । ग. कथा । ठ वसा ४ ङ. च. दश

[1]आगच्छत द्रुतं देवा अदितिं संप्रविश्य वै ।
मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भवेदिति ॥१२८॥
एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः ।
मारीचात्कश्यपाज्जाता अदित्या दक्षकन्यया ॥
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि ।
अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥१३०॥
विवस्वान्सविता चैव मित्रो वरुण एव च ।
[2]अंशुर्भगश्चातितेजा आदित्या द्वादश स्मृताः ॥१३१॥
चाक्षुषस्यान्तरे पूर्वमासन्ये तुषिताः सुराः ।
वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः ॥१३२॥
[3]सप्तविंशति याः प्रोक्ताः सोमपत्न्योऽथ सुव्रताः ।
सर्वा नक्षत्रयोगिन्यस्तन्नाम्न्यश्चैव ताः स्मृताः ।
तासामपत्यान्यभवन्[4]दीप्तान्यमिततेजसाम् ॥१३३॥

चित्सुखीयम् ।

मूचुः ॥ १२६ ॥ १२७ ॥ चाक्षुषस्य मनोरन्तरे वर्तमाने किमूचुरित्यत आह—आगच्छतेत्यादिना ॥ मन्वन्तरे वैवस्वते प्रसूयामः जनिष्यामः ॥ १२८ ॥ चतस्रोऽरिष्टनेमिन इत्युक्तानां सन्ततिमाह—

श्रीधरीयम् ।

सकीर्तयः ॥ १२७ ॥ किमूचुस्तत्राह—आगच्छतेति । मन्वन्तरे प्रसूयामः प्रसूयेमहि । किमर्थमित्याह—तदिति । ततो नः श्रेयो भवेद्भद्रं भविष्यतीति ॥ १२८ ॥ गत्यमिति । चाक्षुषस्य मनोरन्तरे एवमुक्त्वा वैवस्वतमन्वन्तरे अदित्या निमित्तभूतया काश्यपाज्जाता इत्यर्थः ॥ १२९ ॥ १३० ॥ १३१ ॥ पृषोदरत्वाद्द्वादशादित्या इत्युपसंहरन्नाह—चाक्षुषस्येति ॥ १३२ ॥ एवं तावद्ब्रह्मौ वसवश्च एकादश रुद्रा द्वादशादित्या इत्यादिश्रुतिक्रमेण रुद्रानन्तरमादित्यादीनामुपस्थानात् अदित्या वंश उक्तः । इदानीमदितिर्दितिरिति कश्यपभार्योद्देशानुसारेण दित्यादिवंशक्रमं प्राप्तक्रममपि प्रह्लादचरितादिबहुविस्तरत्वेन पश्चाद्वक्ष्यमाणो तावदल्पत्वादन्यासां दक्षकन्यानां वंशानाह—याः सप्तविंशतिः प्रोक्ता इत्यादिसार्धैः पञ्चभिः । या इति । तासाममिततेजसां दीप्तिमन्त्यपत्यान्यासन् । दीप्तान्यमिततेजस इति पाठान्तरे

विष्णुचित्तीयम् ।

समवायीकृता अन्योन्यमूचुरिति पूर्वेणान्वयः ॥ १२७ ॥ कथमूचुरित्यत्राह—आगच्छतेति । मन्वन्तरे सप्तमेऽदितिं संप्रविश्य प्रसूयामः ततः श्रेय इति ॥ १२८ ॥ एतन्निगमयति—एवमुक्तेति ॥ १२९ ॥ ॥ १३० ॥ १३१ ॥ १३२ ॥ भगवतः प्रतिमन्वन्तरं प्रतियुगं चावतारं तृतीयांशे वक्ष्यति । अदितिवंशादनन्तरं प्राप्तमपि दित्यादिवंशं प्रह्लादचरितादि विस्तरविवक्षयाऽन्ते वक्ष्यन्मध्ये स्वल्पस्वाभिष्ट-

दत्तात्रेयीयम् ।

क्षसः । मध्यमात्सकीर्तयः ॥ १२७ ॥ किमूचुरित्यत आह—आगच्छतेति ॥ मन्वन्तरे वैवस्वतमन्वन्तरे प्रसूयामः प्रसूयेमहि । किंप्रयोजनमित्यत्राहुः—तदिति ॥ तस्मात्प्रसूतेः पुनरपि देवाधिकारप्राप्त्या नः श्रेयो मुक्तावानन्दोद्रेकलक्षणं भविष्यतीति ॥ १२८ ॥ चाक्षुषस्य मनोरन्तरे एवमुक्त्वा वैवस्वतमन्वन्तरे विष्णुः शक्रश्च पुनः जज्ञाते, प्रतिमन्वन्तरं विष्णोरवतारस्य तृतीयांशे वक्ष्यमाणत्वात् । षष्ठे मन्वन्तरे जातस्यैव पुरन्दरेन्द्रस्य सप्तमेऽपि जातत्वात्पुनरित्युक्तं "पुरन्दरः षष्ठ उवाच सप्तमः" इति तात्पर्यनिर्णयोक्तेः ॥ १२९ ॥ १३१ ॥ अदितिवंशमुपसंहरति—चाक्षुषस्येति ॥ १३२ ॥ अदितिवंशानन्तरं क्रमप्राप्तदितिवंशं प्रह्लादचरितादिबहुविस्तृतत्वादन्ते वक्ष्यन्मध्ये स्वल्पत्वादवशिष्टानां दक्षकन्यानां वंशमाह—सप्तविंशतीत्यादिना ॥ विसर्गलोपश्छान्दसः तासाममिततेजसां दीप्तिमन्त्यपत्यान्यभवन्

[पा० ] १ ख. आगत्यचाब्रुवन् २ ग अंशो भगश्चामितौजा । थ. अंशो भगश्चातितेजा. ३ [श्रीध० विष्णु० पा०] याः सप्तविंशति प्रोक्ताः. ४ ग. घ. ज झ. ढ—ड. दीप्तिमन्त्यतितेजसा । [श्रीध० पा०] दीप्तान्यमिततेजस .

अरिष्टनेमिपत्नीनामपत्यानीह षोडश ॥ १३४ ॥
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ॥ १३५ ॥
प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः १३६
कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः ॥ १३७ ॥
एते युगसहस्रान्ते जायन्ते पुनरेव हि ।
सर्वे देवगणास्तात त्रयस्त्रिंशत्तु छन्दजाः ।
तेषामपीह सततं निरोधोत्पत्तिरुच्यते ॥ १३८ ॥

चित्सुखीयम् ।

अरिष्टनेमीति ॥ १३४ ॥ द्वेचैवबहुपुत्रायेत्युक्तयोर्वंशमाह—बहुपुत्रस्येति ॥ विद्युतो विद्युदभिमानिन्यो देवताश्चतस्रःकन्यकाः ॥ १३५ ॥ द्वेचैवाङ्गिरस इत्युक्तयोरसन्ततिमाह—प्रत्यङ्गिरसजा इति ॥ आङ्गिरसः ऋगभिमानिन्यो देवताः अङ्गिरसः सुताः ॥ १३६ ॥ द्वे कृशाश्वायेत्युक्तयोरसन्ततिमाह—कृशाश्वस्येति ॥ देवप्रहरणाः देवा आयुधाभिमानिन्यो देवताः ॥ १३७ ॥ छन्दत इच्छातो जायन्त

श्रीधरीयम् ।

अमिततेजसः सोमादीनन्यानपीत्यर्थः ॥ १३३ ॥ चतस्रोरिष्टनेमिन इत्युक्तानां वंशमाह—अरिष्टनेमीति ॥ १३४ ॥ द्वे चैव बहुपुत्रायेत्युक्तयोर्वंशमाह—बहुपुत्रस्येति । चतस्रो विद्युतस्तु "वाताय कपिला विद्युदातपायातिलोहिता । पीतावर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ।" इति ज्योतिःशास्त्रप्रसिद्धाः ॥ १३५ ॥ द्वे चैवाङ्गिरस इत्युक्तयोर्वंशमाह—प्रत्यङ्गिरसजा इति । अङ्गिरसं प्रत्यागते प्रत्यङ्गिरसे ताभ्यां जाताः प्रत्यङ्गिरसाख्या ऋचः । याः "यां कल्पयन्ति" इत्यादित्रिंशन्मन्त्राभिमानिदेवताः ॥ १३६ ॥ द्वे कृशाश्वायेत्युक्तयोर्वंशमाह—कृशाश्वस्येति । देवप्रहरणाः देवाः शस्त्रदेवताः ॥ १३७ ॥ एत इति । त्रयस्त्रिंशत् अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतयश्च वषट्कारश्चेति श्रुत्युक्ताः । स्वच्छन्दतः स्वेच्छया जायन्त इति स्वच्छन्दजाः । निरोधसहिता उत्पत्तिर्निरोधो-

विष्णुचित्तीयम् ।

दक्षकन्यावंशमाह—याः सप्तविंशतिरिति ॥ १३३ ॥ १३४ ॥ बहुपुत्रस्येति । चतस्रो विद्युतः कपिलातिरक्तपीतसितवर्णाः ॥ १३५ ॥ प्रत्यङ्गिरसजा इति । प्रत्यङ्गिरसः प्रत्यङ्गिरसाख्या ऋचः यां कल्पयन्तीत्याद्यास्त्रिंशन्मन्त्राः ॥ १३६ ॥ कृशाश्वस्येति । देवप्रहरणाः शस्त्रदेवताः ॥ १३७ ॥ एत इति ।

सत्यव्रतीयम् ।

॥ १३३ ॥ चतस्रोऽरिष्टनेमिनइत्युक्तानां वंशमाह—अरिष्टनेमीति ॥ १३४ ॥ द्वे चैव बहुपुत्रायेत्युक्तयोर्वंशमाह—बहुपुत्रस्येति । चतस्रो विद्युतस्तु "वाताय कपिला विद्युदातपायातिलोहिता । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्"इति ज्योतिश्शास्त्रे प्रसिद्धाः ॥ १३५ ॥ [illegible] चैवाङ्गिरस इत्युक्तयोर्वंशमाह—प्रत्यङ्गिरसजा इति ॥ अङ्गिरा एव प्रत्यङ्गिरसस्तस्यापत्यानि । अङ्गिरसं प्रत्यागते भार्ये प्रत्यङ्गिरसे ताभ्यां जाता वा । प्रत्यङ्गिरसाख्याऋचः "यान्कल्पयन्ति" इत्यादित्रिंशन्मन्त्राभिमानिदेवताः ॥ १३६ ॥ द्वेकृशाश्वायेत्युक्तयोर्वंशमाह—कृशाश्वस्येति ॥ देवप्रहरणाः देवाः शस्त्राभिमानिदेवताः ॥ १३७ ॥ एते प्रागुक्ताः सर्वे देवगणाः युगसहस्रान्ते दैनन्दिनप्रलयावसाने जायन्ते प्रतिदैनन्दिनकल्पे उत्पद्यन्ते तत्र ये त्रयस्त्रिंशद्देवगणाः अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेति श्रुत्युक्तास्ते छन्दजाः स्वेच्छया जायन्ते युगसहस्रमध्येऽपि जायन्त इत्यर्थः । तेषामपि त्रय-

रत्नगर्भीयम् ।

छन्दजाश्चेत्कल्पमध्येऽपि न कथं लीयन्ते जायन्तेचेति तत्रेश्वरनियोगादेव तथेति सदृष्टान्तमाह—य-

[ पा० ] १ ख. ग. ङ—ञ. प्रथासस्य. २ ग. सुता°. ३ घ. च. स्वच्छन्दजाः.

यथा सूर्यस्य मैत्रेय उदयास्तमनाविह।
एवं देवनिकायास्ते सम्भवन्ति युगेयुगे ॥१३९॥
दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम्।
हिरण्यकशिपुश्चैव हिरण्याक्षश्च दुर्जयः॥ १४०॥
सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः १४१
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः।
अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव बुद्धिमान्।
संह्लादश्च महावीर्या दैत्यवंशविवर्धनाः ॥१४२॥
तेषां मध्ये महाभागः सर्वत्र समदृग्वशी।
प्रह्लादः परमां भक्तिं य उवाह जनार्दने ॥१४३॥
दैत्येन्द्रदीपितो वह्निः सर्वाङ्गोपचितो द्विज।
न ददाह च यं विप्रे वासुदेवे हृदि स्थिते ॥१४४॥
महार्णवान्तःसलिले स्थितस्य चलतो मही।
चचाल चलता यस्य पाशबद्धस्य धीमतः ॥१४५॥
न भिन्नं विविधैः शस्त्रैर्यस्य दैत्येन्द्रपातितैः।
शरीरमद्रिकठिनं सर्वत्राच्युतचेतसः ॥ १४६ ॥
विषानलोज्ज्वलमुखा यस्य दैत्यप्रचोदिताः।
नान्ताय सर्पपतयो बभूवुरुरुतेजसः ॥ १४७ ॥
शैलैराक्रान्तदेहोऽपि यः स्मरन्पुरुषोत्तमम्।
तत्याज नात्मनः प्राणान् विष्णुस्मरणदंशितः॥

विष्णुचित्तीयम्।

इति छन्दजाः ॥ १३८ ॥ परिग्रहो भार्या ॥ १४१ ॥ सर्वैरङ्गैर्घृतकाष्ठादिभिरुपचितः समेधितः।

श्रीधरीयम्।

त्पत्तिः ॥ १३८ ॥ उत्पत्तिनिरोधयोः दृष्टान्तः कथं स्यादित्याह—यथा सूर्यस्येति। युगेयुगे प्रतिकल्पमन्वन्तरादिषु ॥ १३९ ॥ दितेर्वंशमाह—दित्या इत्यादिना यावदेकविंशतितमाध्यायं दनोर्वंशोक्तिः ॥ १४० ॥ सिंहिकेति। परिग्रहो भार्या ॥ १४१ ॥ १४२ ॥ "प्रह्लादोऽयं नृसिंहैकभक्तिलाभाय देहिनाम्। आवहन् श्रवणौत्सुक्यं तत्प्रभावमसूचयत्॥" तेषां मध्य इत्यादिना यावत्समाप्तिः ॥ १४३ ॥ ॥ १४४ ॥ १४५ ॥ १४६ ॥ १४७ ॥ शैलैरिति। विष्णोः स्मरणेन दंशितः सन्नद्धः ॥ १४८ ॥

विष्णुचित्तीयम्।

स्वच्छन्दजाः स्वेच्छया जाताः। निरोधश्चोत्पत्तिश्च निरोधोत्पत्तिः ॥ १३८ ॥ यथेति। युगेयुगे प्रतियुगं कल्पमन्वन्तरादि ॥ १३९ ॥ १४० ॥ १४१ ॥ १४२ ॥ १४३ ॥ १४४ ॥ १४५ ॥ १४६ ॥

दत्तात्रेयीयम्।

किंशरदेवानामपि। इह ब्रह्मणः प्रतिदिनं निरोधसहिता उत्पत्तिर्निरोधोत्पत्तिः ॥ १३८ ॥ उक्तमर्थं दृष्टान्तेनोपपादयति—यथेति ॥ युगेयुगे प्रतिकल्पमन्वन्तरादिषु ॥ १३९ ॥ इदानीं दितेर्वंशमाह—दित्या इत्यादिना ॥ १४० ॥ परिग्रहः पत्नी ॥ १४१ ॥ १४२ ॥ प्रह्लादचरितं विस्तरतः श्रोतुं जिज्ञासोत्पादनार्थं संक्षेपेण तावदाह—तेषामित्यादिना ॥ सर्वत्र समदृक् समविषये यथायोग्यवस्तुदर्शी। यद्वा सर्वैस्समं निर्दोषं ब्रह्म पश्यतीति समदृक् "निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः" इति वचनात् ॥ १४३ ॥ दैत्येन्द्रो हिरण्यकशिपुः सर्वेषु प्रह्लादाङ्गेषु उपचितः समेधितः। वह्निरिति द्विरुक्तिराधिक्यद्योतनाय। विप्रेतिक्वचित्पाठः ॥ १४४ ॥ अन्ताय नाशाय नबभूवुः समर्था नासन्

रत्नगर्भीयम्।

थेति ॥ १३९ ॥ भगवद्वासनासिद्धा इहामुत्र जायते। इति प्रह्लादमाहात्म्यमहोत्सवमिवातनोत् ॥

[पा०] १ छ. दित्यां. २ ङ च. धार्मिक। क—ध. छे. ज. य—ङ. धर्मवान्। झ. धर्मवित्. ३ प—छ. पूर्व। क. ख. ज—ठ. वह्नि. ४ क—ट. सकला मता. ५. ख. छिन्न.

पतन्तमुच्चादवनिर्यमुपेत्य महामतिम् ।
दधार दैत्यपतिना क्षिप्तं स्वर्गनिवासिना ॥१४९॥
यस्य संशोषको वायुर्देहे दैत्येन्द्रयोजितः ।
अवाप संक्षयं सद्यश्चित्तस्थे मधुसूदने ॥ १५० ॥
विषाणभङ्गमुन्मत्ता मदहानिं च दिग्गजाः ।
यस्य वक्षःस्थले प्राप्ता दैत्येन्द्रपरिणामिताः १५१
यस्य चोत्पादिता कृत्या दैत्यराजपुरोहितैः ।
बभूव नान्ताय पुरा गोविन्दासक्तचेतसः १५२॥
शम्बरस्य च मायानां सहस्रमतिमायिनः ।
यस्मिन्प्रयुक्तं चक्रेण कृष्णस्य वितथीकृतम् १५३
दैत्येन्द्रसूदोपहृतं यस्य हालाहलं विषम् ।
जरयामास मतिमानविकारममत्सरी ॥ १५४ ॥
समचेता जगत्यस्मिन्यः सर्वेष्वेव जन्तुषु ।
यथाऽऽत्मनि तथाऽन्येषां परं मैत्रगुणान्वितः ॥
धर्मात्मा सत्यशौर्यादिगुणानामाकरः परः ।
उपमानमशेषाणां साधूनां यः सदाऽभवत् १५६

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
पञ्चदशोऽध्यायः ॥ १५ ॥

चित्सुखीयम् ।

यद्वा सर्वेषु प्रह्लादाङ्गेषु उपचितः ॥ १४४ ॥ विष्णुस्मरणेन रक्षितः सन्नद्धः ॥ १४८ ॥ दैत्येन्द्रेण परिणामिताः दन्तव्यापारकारिताः ॥१५१॥ अविकारं विषयविकाररहितमिति क्रियाविशेषणं ॥१५४॥ इति श्रीचित्सुख० श्रीविष्णुपु०टिप्पण्यां प्रथमांशे पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीधरीयम् ।

॥ १४९ ॥ १५० ॥ विषाणेति । दन्तैः प्रहर्तुं गजाः शिक्षाक्रमेणोद्यताः ॥ १५१ ॥ १५२ ॥ १५३ ॥ दैत्येन्द्रेति । यः दैत्येन्द्रस्य सूदैः सूपकारैरुपहृतं दत्तं हालाहलं विषं । न चेदमप्रसिद्धम् "नदी हालाहला नाम हैमवत्यतिदारुणा । जाता तत्तीरसम्भूतविषं हालाहलं स्मृतम्" इति । अविकारं रोमाञ्चस्वेदवक्त्रशोषादिविकारशून्यं यथा भवत्येवं जरयामास ॥ १५४ ॥ १५५ ॥ १५६ ॥ इति श्रीश्रीधरस्वामिविरचितायामात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चदशोऽध्यायः ॥ १५ ॥

विष्णुचित्तीयम् ।

॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥ विषाणेति । परिणामिताः दन्तैर्हन्तुं प्रेरिताः ॥ १५१ ॥ ॥ १५२ ॥ १५३ ॥ दैत्येन्द्रेति । हालाहलं विषम् "नदी हालाहलानाम तज्जं हालाहलं विषम्" इत्यायुर्वेदे ॥ १५४ ॥ १५५ ॥ १५६ ॥ इति श्रीविष्णुचित्ताचार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चदशोऽध्यायः ॥ १५ ॥

वृत्ताब्रेबीयम् ।

॥ १४७ ॥ विष्णुस्मरणेन दंशितः कवचितः ॥ १४८ ॥ स्वर्गनिवासिना दैत्यपतिना हिरण्यकेन क्षिप्तं उच्चस्थानात्पतन्तं महामतिमवनिरुपेत्य तत्समीपं गत्वा दधारेत्यन्वयः ॥ १४९ ॥ दैत्येन्द्रपरिणामिताः दैत्येन्द्रेण प्रहर्तुं प्रेरिताः । विषाणभङ्गं दन्तनाशं मदहानिं च प्राप्ता इत्यन्वयः ॥ १५१ ॥ चक्रेण प्रह्लादरक्षार्थं कृष्णप्रेरितेन चक्रेण ॥ १५३ ॥ दैत्येन्द्रस्य सूदैः सूपकारैः उपहृतं दत्तं हालाहलंविषं "नदी हालाहला नाम हैमवत्यतिदारुणा । जाता तत्तीरसंभूतविषं हालाहलं स्मृतं"इत्यायुर्वेदोक्तेः । अविकारं वक्त्रशोषमूर्छादिविकाररहितं यथाभवति तथा जरयामास ॥ १५४ ॥ लोको यथाऽऽत्मनि स्वस्मिन्नपत्ये च मैत्रगुणान्वितस्तथाऽयमपि सर्वत्र मैत्रगुणान्वित इत्यर्थः ॥ १५५ ॥ धर्मात्मा धर्मचित्तः । प्रह्लादेऽन्योपि विशेषोस्तीत्याह—उपमानमिति ॥ केचिदशेषाणां तु सर्वेषामशेषाणां "सत्तेषु तात्त्विकान्देवभारदादींस्तथैव च । प्रह्लादादुत्तमः कोनु विष्णुभक्तो जगत्त्रये"इति स्कान्दोक्तेः । उपमानं दृष्टान्तः ॥१५६॥ इति श्रीवृत्ताचा०सुबोधि०श्रीविष्णुपुराणव्याख्यायां प्रथमांशे पञ्चदशोऽध्यायः॥१५॥

रत्नगर्भीयम् ।

तेषांमध्यइत्यादिना ॥ १४३ ॥ स्वर्गेतिग्धतरोपलक्षणम् ॥ १४९ ॥ इति श्रीरत्नग०विरचितश्रीविष्णुपु०व्याख्यासारे प्रथमांशे पञ्चदशोऽध्यायः ॥ १५ ॥

[ पा० ] १ ग मुचुका. २ क ग—ङ. यथाऽऽत्मे. ३ क—ङ. शौचादि

## षोडशोऽध्यायः ॥ १६ ॥

प्रह्लादचरित्रस्य विस्तारश्रवणे कुतूहलिना मैत्रेयेण पराशरंप्रति तत्कथाप्रश्नकरणम् ॥ १ ॥

श्रीमैत्रेय उवाच ॥

कथितो भवता वंशो मानवानां महात्मनाम् ।
कारणं चास्य जगतो विष्णुरेव सनातनः ॥ १ ॥
यस्त्वेतद्भगवानाह प्रह्लादं दैत्यसत्तमम् ।
ददाह नाग्निर्नास्त्रैश्च क्षुण्णस्तत्याज जीवितम् ॥ २ ॥
जगाम वसुधा क्षोभं यत्राब्धिसलिले स्थिते ।
पौशैर्बद्धे विचलति विक्षिप्ताङ्गैः समाहता ॥ ३ ॥
शैलैराक्रान्तदेहोऽपि न ममार च यः पुरा ।
त्वया चातीव माहात्म्यं कथितं यस्य धीमतः ॥ ४ ॥
तस्य प्रभावमतुलं विष्णोर्भक्तिमतो मुने ।
श्रोतुमिच्छामि यस्यैतच्चरितं दीप्ततेजसः ॥ ५ ॥
किंनिमित्तमसौ शस्त्रैर्विक्षिप्तो दितिजैर्मुने ।
किमर्थं चाब्धिसलिले विक्षिप्तो धर्मतत्परः ॥ ६ ॥
आक्रान्तः पर्वतैः कस्माद्दष्टश्चैव महोरगैः ।
क्षिप्तःकिमद्रिशिखरात्किं वा पावकसञ्चये ॥ ७ ॥
दिग्दन्तिनां दन्तभूमिं स च कस्मान्निरूपितः ।
संशोषकोऽनिलश्चास्य प्रयुक्तः किं महासुरैः ॥ ८ ॥

विष्णुचित्तीयम् ।

क्षुण्णः क्षतः ॥ २ ॥ विक्षिप्ताङ्गः बन्धजनिताङ्गसङ्कोचविपर्जितः ॥ ३ ॥ इति श्रीविष्णु० श्रीविष्णु० टिप्पण्यां प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

श्रीधरीयम् ।

उक्तानुवादपूर्वकं प्रह्लादचरितं पृच्छति मैत्रेयः—कथित इति । मानवानामुत्तानपादध्रुवादीनाम् ॥ १ ॥ यस्त्विति । ददाह यं नाग्निः । अस्त्रैः क्षुण्णः प्रहृतोऽपि ॥ २ ॥ जगामेति । यत्र यस्मिन् प्रह्लादे बन्धैर्बद्धेऽपि विचलतिसति तस्य विक्षिप्तैरङ्गैः समाहता सती वसुधा क्षोभं जगाम । विक्षिप्ताङ्गः समाहित इति पाठेतूत्तरेणान्वयः । बन्धबद्धो विचलतीति पाठे पृथगेवाख्यानम् । शिष्टाः प्रश्नाः स्पष्टार्थाः ॥ ३ ॥

विष्णुचित्तीयम् ।

कथित इति । मानवानां स्वायम्भुवमनुवंश्यानाम् उत्तानपादादीनां । कारणमिति शास्त्रतात्पर्यार्थप्रश्नोत्तरस्मारणम् ॥ १ ॥ तादृशः साधुः स्वबन्धुभिः किंनिमित्तं जिघांसित इति कौतुकच्छलेन वि-

दत्तात्रेयीयम् ।

उक्तानुवादपूर्वकं प्रह्लादचरितं विशेषाच्छ्रोतुं पृच्छति—कथित इत्यादिना ॥ मानवानां स्वायंभुववंश्यानामुत्तानपादादीनां । सनातनो विष्णुः अस्य जगतः कारणमिति कथितं । अनेनोक्तवक्ष्यमाणमानववंश्यानां चरितकथनं विष्णुमाहात्म्यसूचकमिति दर्शितं "चरितंवैष्णवानांतुविष्णोर्द्रेकायकथ्यते" इति वचनात् ॥ १ ॥ अस्त्रैः क्षुण्णः हतोऽपि ॥ २ ॥ यत्र यस्मिन्प्रह्लादे बन्धैर्बद्धेऽपि विचलतीति तस्य विक्षिप्तैरङ्गैरसमाहता सती वसुधा क्षोभं जगाम । विक्षिप्ताङ्गस्संमाहित इति क्वचित्पाठस्तस्योत्तरेणान्वयः ॥ ३ ॥ किंनिमित्तमित्यादिना श्रुतमर्थमनूद्य निमित्तमात्रे प्रश्नः । अब्धिसलिले क्षिप्तः ॥ ६ ॥

रत्नगर्भीयम् ।

प्रह्लादचरिताश्चर्यश्रवणानि कुतूहलात् । तेष्वेव विस्तरप्रश्नाः षोडशेनानुवर्णिताः ॥ १ ॥ मानसा-

[ पा० ] १ [ज० ध०] मानवानां. २ ध. च प्रति सत्तम. ३ छ. बन्धबद्धो विचलितो । ग. ढ. ज—ड. बन्धबद्धे विचलति । च ख. बन्धं बद्धो विचलति । घ च दृढबद्धोऽपि चलति. ४ क. ख. घ—छ. ज. विक्षिप्ताङ्गस्समाहितः । ट. ठ. विक्षिप्ताङ्गसमाहता ५ घ. तस्य प्रभावं सुमहद्विष्णुभक्तिमतो मुने. ६ क. घ. ङ छ. विष्णौ भक्तिमतो. ७ क. छ. यस्येति चरित. ८ क छ सितचेतस । ग. ध. न. त्वमितौजसः । ज. झ. ढ. ठ. ज़िम्मतेजस. । थ. भूरितेजस । य स्थिरतेजस. ९ क. घ—ट. हतो १० क. ग. घ—ञ. ट—ड. कस्माद्दृष्टो. ११ ख. ज. गदन्तिना. १२ ख. ज. दन्तभूमौ । ब. दन्तभागै. १३ म. निपीडित.

कृत्यां च दैत्यगुरवो युयुजुस्तत्र किं मुने ।
शम्बरश्चापि मायानां सहस्रं किं प्रयुक्तवान् ॥९॥
हालाहलं विषमहो दैत्यसूदैर्महात्मनः ।
कस्माद्दत्तं विनाशाय यज्जीर्णं तेन धीमता ॥१०॥
एतत्सर्वं महाभाग प्रह्लादस्य महात्मनः ।
चरितं श्रोतुमिच्छामि महामाहात्म्यसूचकम् ११
न हि कौतूहलं तत्र यद्दैत्यैर्न हतो हि सः ।
अनन्यमनसो विष्णौ कः समर्थो निपातने ॥१२॥
तस्मिन्धर्मपरे नित्यं केशवाराधनोद्यते ।
स्ववंशप्रभवैर्दैत्यैः कृतो द्वेषोऽतिदुष्करः ॥ १३ ॥
धर्मात्मनि महाभागे विष्णुभक्ते विमत्सरे ।
दैतेयैः प्रहृतं कस्मात्तन्ममाख्यातुमर्हसि ॥ १४ ॥
प्रहरन्ति महात्मानो विपक्षा अपि नेदृशे ।
गुणैस्समन्विते साधौ किं पुनर्यः स्वपक्षजः ॥१५॥
तदेतत्कथ्यतां सर्वं विस्तरान्मुनिपुङ्गव ।
दैत्येश्वरस्य चरितं श्रोतुमिच्छाम्यशेषतः ॥ १६ ॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

---

श्रीधरीयम् ।

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

विष्णुचित्तीयम् ।

प्रह्लादचरितशुश्रूषया पृच्छति—यस्यैतदिति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ न हि कौतूहलमिति । आश्चर्यश्रवणे हि कौतूहलम् । इह तु विष्णुभक्तस्य परैरवध्यत्वस्य नाश्चर्यं महानुभावस्य बन्धुभिः पीडनेनिमित्तशुश्रूषा विद्यते ॥ १२ ॥ १३ ॥ १४ ॥ प्रहरन्तीति । यः स्वपक्षजस्तस्मिन्निति शेषः ॥ १५ ॥ तदिति । चरितं वृत्तं ॥ १६ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

दत्तात्रेयीयम् ।

अनन्तरं पर्वतैराक्रान्तः आचितः कस्मात् । किं वा किमर्थं ॥ ७ ॥ दन्तभूमि दन्तप्रहारविषय । निरूपितः प्रापितः ॥ ८ ॥ महामाहात्म्यसूचकं महतो विष्णोर्माहात्म्यस्य सूचकं ॥ ११ ॥ १२ ॥ अतिदुष्करः कर्तुमत्यन्तायोग्यः ॥ १३ ॥ १४ ॥ यः स्वपक्षजः तस्मिन्निति शेषः ॥ १६ ॥ इति श्रीदत्ताचा० सुबोधि० श्रीविष्णुपुराणव्याख्यायां प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

रत्नगर्भीयम् ।

नामिति पाठे मन्वादीनां ॥ १ ॥ किन्निमित्तमित्यादिना श्रुतमर्थमनूद्य निमित्तमात्रे प्रश्नः ॥ ६ ॥ इति श्रीरत्नग० विरचित श्रीविष्णुपु० व्याख्यासारे प्रथमांशे षोडशोऽध्यायः ॥ १६ ॥

---

[ पा० ] १ ख. ग. घ च ॥ विषघोरं । ट महाघोरं. २ च. इते ३ ज ट ठ तेजसैवागा । ग स्वैनतेजसा, ४ ग महार्थस्य च सूचक । ठ माहात्म्यमनुपूर्वं ५ य ड शक्नोति ६ म घ. कर्तुं ७ ग. दैत्यैः प्रहृत । अ. द्वेषे प्रतिकूल । ड. दैत्यैः प्रहृत. ८ क—ड विपक्षे चापि नेदृशे ९ ज ॥ ठ भगवान् । ग. स्वदेहम. १० घ. महात्मनो निरवद्यस्य

## सप्तदशोऽध्यायः ॥ १७ ॥

मैत्रेयकृतप्रश्नस्योत्तरत्वेन पराशरेण कृतो नरसिंहावतारकथाप्रस्तावः ॥ १ ॥ ब्रह्मवरदर्पितहिरण्यकशिपुना कृतो देवपराजयः ॥ २ ॥ विष्णुभक्तितत्परे स्वपुत्रे प्रह्लादे हिरण्यकशिपोः बलवत्कोपः ॥ ३ ॥ गुरोर्हितैः हिरण्यकशिपुनाच बहुधा बोधितस्यापि प्रह्लादस्य हरिवैमुख्याभावेन तद्वधाय हिरण्यकशिपोः अनेकविधयत्नकथनम् ॥ ४ ॥ वयस्यदैत्यबालकान्प्रति विष्णुभक्तिकरणविषये तन्माहात्म्यादिवर्णनपूर्वकं प्रह्लादस्योपदेशः ॥ ५ ॥

श्रीपराशर उवाच ॥
मैत्रेय श्रूयतां सम्यक्चरितं तस्य धीमतः ।
प्रह्लादस्य सदोदारचरितस्य महात्मनः ॥ १ ॥
दितेः पुत्रो महावीर्यो हिरण्यकशिपुः पुरा ।
त्रैलोक्यं वशमानिन्ये ब्रह्मणो वरदर्पितः ॥ २ ॥
इन्द्रत्वमकरोद्दैत्यः स चासीत्सविता स्वयम् ।
वायुरग्निरपां नाथः सोमश्चाभून्महासुरः ॥ ३ ॥
धनानामधिपः सोऽभूत्स एवासीत्स्वयं यमः ।
यज्ञभागानशेषांस्तु स स्वयं बुभुजेऽसुरः ॥ ४ ॥
देवाः स्वर्गं परित्यज्य तत्त्रासान्मुनिसत्तम ।
विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम् ॥ ५ ॥
जित्वा त्रिभुवनं सर्वं त्रैलोक्यैश्वर्यदर्पितः ।
उपगीयमानो गन्धर्वैर्बुभुजे विषयान्प्रियान् ॥ ६ ॥
पानासक्तं महात्मानं हिरण्यकशिपुं तदा ।
उपासांचक्रिरे सर्वे सिद्धगन्धर्वपन्नगाः ॥ ७ ॥
अवादयञ्जगुश्चान्ये जयशब्दांस्तथापरे ।
दैत्यराजस्य पुरतश्चक्रुः सिद्धा मुदान्विताः ॥ ८ ॥

---

श्रीधरीयम् ।

॥ १ ॥ भगवद्द्वेष एव तद्भक्तस्वपुत्रद्वेषेऽपि कारणमिति वक्ष्यन् हिरण्यकशिपोर्वृत्तान्तमाह—दितेः पुत्र इत्यादिना—दितेः पुत्र इति । "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" इत्याद्यनेकवरप्रार्थने कृते तथैव ब्रह्मणा दत्तैर्वरैर्दर्पितः सन् ॥ २ ॥ ३ ॥ ४ ॥ देवा इति । तत्त्रासाद्धिरण्यकशिपोर्भयात् ॥ ५ ॥ ६ ॥ पानासक्तमिति । महात्मानमप्रधृष्यप्रभावम् ॥ ७ ॥ अवादयन्निति । अवादयन् वाद्यानि

विष्णुचित्तीयम् ।

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अवादयन्निति । अवादयन् वाद्यानि ॥ ८ ॥

दत्तात्रेयीयम् ।

भगवद्द्वेष एव तद्भक्तस्वपुत्रद्वेषेऽपि कारणमिति वक्ष्यन् हिरण्यकशिपोर्वृत्तान्तमाह—दितेः पुत्र इत्यादिना ॥ "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" । इत्याद्यनेकवरप्रार्थने कृते सति ब्रह्मणा तथैव दत्तैर्वरैर्दर्पितः सन् ॥ २ ॥ इन्द्रत्वमिन्द्रराज्याधिपत्यं । सचासीत्सवितास्वयमित्यादावपि सवित्रादिकर्तृव्यापाराधिपत्यं स्वयमेव कृतवानित्यर्थः ॥ ३ ॥ तत्त्रासात्तद्भयात् ॥ ५ ॥ महात्मानं अतिस्थूलकायं ॥ ७ ॥ अवादयन् वाद्यानि चक्रुः । जगुर्गानं कृतवन्तः । अपरे दैत्येश्वरस्य पुरतः जयशब्दं चक्रुरित्य-

रत्नगर्भीयम् ।

प्रह्लादस्य प्रह्लादस्ते हरिभक्तस्य कीर्त्यते । इह चैनैव बालानां भक्तिशिक्षाकथेरिता ॥ १ ॥ रागः स्वीये सुते तस्मिन्द्वेषो विष्णुपरायणे । हिरण्यकशिपोर्द्वेषस्तत्राह बलवानिति ॥ २ ॥ अनुशास्तारं प्रवृ-

---

[ पा० ] १ छ सर्वान् २ ख. ग उद्गीयमानो ३ ङ ज. विजया.

तत्र प्रनृत्ताप्सरसि स्फाटिकाभ्रमयेऽसुरः ।
पपौ पानं मुदा युक्तः प्रासादे सुमनोहरे ॥ ९ ॥
तस्य पुत्रो महाभागः प्रह्लादो नाम नामतः ।
पपाठ बालपाठ्यानि गुरुगेहंगतोऽर्भकः ॥ १० ॥
एकदा तु स धर्मात्मा जगाम गुरुणा सह ।
पानासक्तस्य पुरतः पितुर्दैत्यपतेस्तदा ॥ ११ ॥
पादप्रणामावनतं तमुत्थाप्य पिता सुतम् ।
हिरण्यकशिपुः प्राह प्रह्लादममितौजसम् ॥ १२ ॥

हिरण्यकशिपुरुवाच ॥

पठ्यतां भवता वत्स सारभूतं सुभाषितम् ।
कालेनैतावता यत्ते सदोद्युक्तेन शिक्षितम् ॥ १३ ॥

प्रह्लाद उवाच ॥

श्रूयतां तात वक्ष्यामि सारभूतं तवाज्ञया ।
समाहितमना भूत्वा यन्मे चेतस्यवस्थितम् ॥ १४ ॥
अनादिमध्यान्तमजमवृद्धिक्षयमच्युतम् ।
प्रणतोऽस्म्यन्तसन्तानं सर्वकारणकारणम् ॥ १५ ॥

श्रीपराशर उवाच ॥

एतन्निशम्य दैत्येन्द्रः सकोपो रक्तलोचनः ।
विलोक्य तद्गुरुं प्राह स्फुरिताधरपल्लवः ॥ १६ ॥

विष्णुचित्तीयम् ।

स्फटिकाभ्रमये स्फटिकाभ्रमाये स्फटिकपङ्क्तिमण्डले । अभ्रमयोऽसत इति यावत् ॥ ९ ॥ अनादिमध्या-

श्रीधरीयम् ।

चनुः । जगुः गीतश्चनुः ॥ ८ ॥ तत्रेति । प्रहृष्टं नृत्तं यासां ताः अप्सरसो यस्मिन् तस्मिन्प्रासादे । स्फाटिकाभ्रमये स्फटिकशिलाभिरभ्रशिलाभिश्च रचिते । पीयत इति पानं मदिरादि ॥ ९ ॥ तदेवं तस्य परमैश्वर्यमुक्त्वा पुत्रद्वेषकारणं वक्तुमाह—तस्य पुत्र इत्यादि ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अनादिमध्यान्तमिति । अनादिमध्यान्तं देशतः कालतश्च परिच्छेदरहितम् । अजं जन्मशून्यम् । अवृद्धिक्षयं वृद्धिक्षयशून्यम् । अच्युतं नाशशून्यम् । तत्र हेतुः । सर्वकारणानां कारणं । प्रणतोऽस्म्यन्तसन्तानमिति पाठे अन्तयतीति अन्तः संहर्ता सन्तन्यतेऽनेनेति सन्तानः स्थितिकर्ता तं । पाठान्तरं सुग-

विष्णुचित्तीयम् ।

तत्रेति । अभ्रम् अभ्रकाख्यः शिलाविशेषः । यद्वा आकाशसमत्वादभ्रमयत्वं । स्फटिकाभ्रमये इति वा पाठः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अनादीति । अनादीत्याद्यशेषविशेषणैरन्वयतो व्याप्तिः । अजमिति क-

रत्नगर्भीयम् ।

स्यः ॥ ८ ॥ प्रनृत्ताप्सरसः प्रहृष्टं नृत्तं नर्तनं यासां ता अप्सरसो यस्मिन्प्रासादे । स्फाटिकाभ्रमये स्फटिकशिलानिर्मिते । स्फटिकेऽभ्रमये इति पाठे अभ्रमय इत्यस्य धवलमेघाकार इत्यर्थः । पीयत इति पानं मदिरादि ॥ ९ ॥ स्वभावदुष्टस्यापि दर्पहेतुभूतमत्यन्तैश्वर्यमुक्त्वा विष्णुभक्तपुत्रद्वेषकारणं वक्तुमाह—तस्येत्यादिना । नामतः नाम्ना । नाम प्रसिद्धौ ॥ १० ॥ सुभाषितं मङ्गलरूपं ॥ १३ ॥ अनादिमध्यान्तं स्वरूपेणादिमध्यादिरहितं । अजं देहतोऽप्युत्पत्तिरहितं । अवृद्धिक्षयं वृद्धिक्षयरहितं । अच्युतं देहतश्च्युतिरहितं । गुणतश्च्युतिरहितं वा । अन्तयत्यन्तः संहर्ता । सन्तन्यते सम्यक् विस्तार्यते जगदनेनेति सन्तानः स्थितिकर्ता तं । सर्वकारणानां कारणं सर्गस्थित्यादिकर्तारं ॥ १५ ॥ ब्रह्मबन्धो ब्राह्मणाधम । हे त्वया विपक्षस्य विष्णोः स्तुत्यादिसंहितं संवद्धं । अतएवैतद्गा

[ पा० ] १ क ख प्रनृत्ताप्सरसि । ग. ट. तत्रप्रनृत्ताप्सरसि २ [ वि० चि० पा० ] स्फटिकाभ्रमये [ स्फा० पा० ] स्फटिकेऽभ्रमये ३ ख स्फाटिकाभ्रे । ■ स्वल्पान्तरे । घ. ज. झ ठ ट. विभ्रमय । क ग, ङ भिन्न हाभार्न. ४ ग — ङ ट. ठ कोपसंरक्तलोचन .

हिरण्यकशिपुरुवाच ॥

ब्रह्मबन्धो किमेतत्ते विपक्षस्तुतिसंहितम् ।
असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥१७॥

गुरुरुवाच ॥

दैत्येश्वर न कोपस्य वशमागन्तुमर्हसि ।
ममोपदेशजनितं नायं वदति ते सुतः ॥ १८ ॥

हिरण्यकशिपुरुवाच ॥

अनुशिष्टोऽसि केनेदृग्वत्स प्रह्लाद कथ्यताम् ।
मयोपदिष्टं नेत्येष प्रब्रवीति गुरुस्तव ॥ १९ ॥

प्रह्लाद उवाच ॥

शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः ।
तमृते परमात्मानं तात कः केन शास्यते ॥२०॥

हिरण्यकशिपुरुवाच ॥

कोऽयं विष्णुः सुदुर्बुद्धे यं ब्रवीषि पुनः पुनः ।
जगतामीश्वरस्येह पुरतः प्रसभं मम ॥ २१ ॥

प्रह्लाद उवाच ॥

न शब्दगोचरं यस्य योगिध्येयं परं पदम् ।
यतो यश्च स्वयं विश्वं स विष्णुः परमेश्वरः ॥२२॥

हिरण्यकशिपुरुवाच ॥

परमेश्वरसंज्ञोऽज्ञ किमन्यो मय्यवस्थिते ।
तथापि मर्तुकामस्त्वं प्रब्रवीषि पुनःपुनः ॥२३॥

प्रह्लाद उवाच ॥

न केवलं तात मम प्रजानां
स ब्रह्मभूतो भवतश्च विष्णुः ।
धाता विधाता परमेश्वरश्च
प्रसीद कोपं कुरुषे किमर्थम् ॥ २४ ॥

हिरण्यकशिपुरुवाच ॥

प्रविष्टः कोऽस्य हृदये दुर्बुद्धेरतिपापकृत् ।
येनेदृशान्यसाधूनि वदत्याविष्टमानसः ॥२५॥

विष्णुचित्तीयम् ।

स्वतातेनोपपादयति—भ्रातस्त्वद्धिभ्रयमिति ॥ १५ ॥ प्रसभं निःशङ्कं ॥ २१ ॥ यतो विश्वं यश्च स्वयं विश्वं जगतां कारणं । सर्वात्मा स विष्णुरिति यावत् ॥ २२ ॥ नकेवलं ममैव विष्णुः परमेश्वरः ।

श्रीधरीयम् ।

मम ॥ १५ ॥ १६ ॥ ब्रह्मबन्धो इति । ब्रह्मबन्धो ब्राह्मणाधम । ते त्वया विपक्षस्तुत्या संहितं मन्यसे । किमेतद्ग्राहितः शिक्षितः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ कोऽयमिति । प्रसभं निःशङ्कम् ॥ २१ ॥ नेति । यतो विश्वं स्वयं विश्वं विश्वरूपः स परमेश्वरो विष्णुः ॥ २२ ॥ २३ ॥ नेति । न केवलं ममैव किन्तु प्रजानां सर्वासां भवतश्च धाता धारयिता विधाता कर्ता च परमेश्वरश्च स एव

विष्णुचित्तीयम् ।

सांधीनजन्मनः पुरुषान् । अन्तं संहारे सन्तनोतीत्यन्तासन्तानः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥१९॥ शास्तेति । शास्ता शासिता । शास्यते शिक्ष्यते ॥ २० ॥ २१ ॥ नेति । परं स्वरूपं न शब्दगोचरं जात्याद्यभावात् "यतो वाचो निवर्तन्ते" इति श्रुतेः । वाक्यप्रमाणमिति वा ॥ २२ ॥ २३ ॥ नेति ।

दत्तात्रेयीयम् ।

किमर्थं ग्राहितः शिक्षितः ॥ १७ ॥ जगतामीश्वरस्येह मम पुरतः प्रसभं निर्भयं ॥ २१ ॥ यस्य परं पदं स्वरूपं शब्दगोचरं शब्दविषये न । "यतोवाचोनिवर्तन्ते" इति श्रुतेः । साकल्येन शब्दविषयो नभवतीत्यर्थः। यतो विश्वं जातं यश्च स्वयं परमेश्वरः अनन्यापेक्षं परमस्वामी सविष्णुरित्यन्वयः ॥२२॥ हे अज्ञ मय्यवस्थितेसति । मत्तोऽन्यः परमेश्वरसंज्ञस्त्वयास्ति किं। त्वन्तु मर्तुकामः पुनःपुनर्ब्रवीषि ॥२३॥ ब्रह्मभूतः परब्रह्मभूतः सविष्णुः नकेवलं ममैव किन्तु सर्वप्रजानां भवतश्च धाता धारकः। विधाता कर्ता।

[ पा० ] १ ज. म. ट—ड. अनुशास्योऽसि. २ घ. ट. ममेव. ३ ट. म. प्रसभं. ४ ख. दृशिगोचरं यस्य। ट—ड शब्दगोचरे. ५ [श्रीध० पा०] यतो विश्वं सर्वंविश्वं. ६ ग. ट. तथाऽप्य मर्तुकाम.

प्रह्लाद उवाच ॥

न केवलं मद्धृदयं स विष्णु-
राक्रम्य लोकानखिलानवस्थितः ।
स मां त्वदादींश्च पितस्समस्ता-
न्समस्तचेष्टासु युनक्ति सर्वगः ॥ २६ ॥

हिरण्यकशिपुरुवाच ॥

निष्कास्यतामयं पापः शास्यतां च गुरोर्गृहे ।
योजितो दुर्मतिः केन विपक्षविषयस्तुतौ ॥२७॥

श्रीपराशर उवाच ॥

इत्युक्तोऽसौ तदा दैत्यैर्नीतो गुरुगृहं पुनः ।
जग्राह विद्यामनिशं गुरुशुश्रूषणोद्यतः ॥ २८ ॥

कालेऽतीतेऽतिमहति प्रह्लादमसुरेश्वरः ।
समाहूयाब्रवीद्गाथा काचित्पुत्रक गीयताम् ॥२९॥

प्रह्लाद उवाच ॥

यतः प्रधानपुरुषौ यतश्चैतच्चराचरम् ।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु ॥३०॥

हिरण्यकशिपुरुवाच ॥

दुरात्मा वध्यतामेष नानेनार्थोऽस्ति जीवता ।
स्वपक्षहानिकर्तृत्वाद्यः कुलाङ्गारतां गतः ॥३१॥

श्रीपराशर उवाच ॥

इत्याज्ञप्तास्ततस्तेन प्रगृहीतमहायुधाः ।
उद्यतास्तस्य नाशाय दैत्याः शतसहस्रशः ॥३२॥

---

[illegible] ।

किन्तु प्रजानां भवतश्च धाता । परमेश्वरः स एवेत्यर्थः ॥ २४ ॥ नकेवलं मद्धृदयमाक्रम्यावस्थितो विष्णुः । अपितु अखिलान् लोकान् ॥ २६ ॥ प्रधानपुरुषौ यतोऽभिव्यक्तौ । अस्यैव विशेषेणेत्याह—

श्रीधरीयम् ।

॥ २४ ॥ २५ ॥ न केवलमिति । आक्रम्याधिष्ठायावस्थितः । युनक्ति प्रवर्तयति । "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति श्रुतेः ॥ २६ ॥ २७ ॥ इतीति । जग्राह विद्यां गुरोरुपकारार्थमेव । अन्यथा तद्वृत्तिलोपप्रसङ्गात् ॥ २८ ॥ काल इति । गाथा गद्यपद्यादि ॥ २९ ॥ यत इति । यतः प्रधानपुरुषावाविर्भूतौ ॥ ३० ॥ दुरात्मेति । कुलस्याङ्गारतां दाहकताम् ॥ ३१ ॥ ३२ ॥

विष्णुचित्तीयम् ।

धाता धारकः । विधाता निर्माता ॥ २४ ॥ २५ ॥ २६ ॥ निष्काम्यतामिति । विपक्षपतिसंस्तुताविति च पाठः । विपक्षपतिः तस्य स्तुतौ केन योजित इति निर्वेदः ॥ २७ ॥ २८ ॥ काल इति । गाथा

दत्तात्रेयीयम् ।

परमेश्वरः प्रभुः स्वामी च ॥ २४ ॥ येनाविष्टमानसा इत्यन्वयः ॥ २५ ॥ आक्रम्य अधिष्ठायावस्थितः ॥ युनक्ति प्रेरयति ॥ २६ ॥ विपक्षविषयस्तुतौ विपक्षविषयकधर्मस्तुतौ ॥ २७ ॥ जग्राहेति । विद्याग्रहणं गुरोरुपकारार्थं अन्यथा तद्वृत्तिलोपप्रसङ्गादितिभावः ॥ २८ ॥ गाथा पद्यं । प्रगीयतां पठ्यतां

रत्नगर्भीयम् ।

त्तिनिवृत्तिहेतुम् । अगम्यरूपमिति पाठः सुगमः ॥ २५ ॥ मत्त्वदादीनिति पाठे अहं त्वं च आदिर्येषां तान् युनक्ति प्रवर्तयति ॥ २६ ॥ दुर्ज्ञेय आत्मा अन्तःकरणं यस्य स इति यथान्वयोऽर्थः । स्वपक्षहानिकर्तृत्वाद्विरोधिसंश्रयकारित्वात् कुलस्य अङ्गारतां दाहकतां कुलेऽङ्गारतां अप्रशस्ततामप्रगमनिमित्तां । स्वपक्षस्य तमोगुणस्य सात्त्विकत्वेन हानिकर्तृत्वात् कुलस्य तमःप्रवृत्तेरङ्गारतां नाशकतां गतो दैत्यबाल-

---

[ पा० ] १ [स० पा०] स मत्त्वदादींश्च २ ष. ङ. ञ. ट. ढ. विष्काम्यतामयं. ३ क. ग. घ. ञ—ढ. विपक्षस्तुतौ । ङ—ठ. पतितस्तुतौ । च. पतिविस्तुतौ । [विष्णुचि० पा०] पतिसंस्तुतौ. ४ क. ङ—ढ. इत्युक्तमसुरा । ख. इत्युक्तमसुरादैत्यैः. ५ ग. घ. च. ङ. चेतसः. ६ छ. विमनेनास्ति.

प्रह्लाद उवाच ॥

विष्णुः शस्त्रेषु युष्मासु मयि चासौ व्यवस्थितः ।
दैतेयास्तेन सत्येन माऽऽक्रामन्त्वायुधानि मे ३३

श्रीपराशर उवाच ॥

ततस्तैश्शतशो दैत्यैः शस्त्रौघैराहतोऽपि सन् ।
नावाप वेदनामल्पामभूच्चैव पुनर्नवः ॥ ३४ ॥

हिरण्यकशिपुरुवाच ॥

दुर्बुद्धे विनिवर्तस्व वैरिपक्षस्तवादतः ।
अभयं ते प्रयच्छामि माऽतिमूढमतिर्भव ॥३५॥

प्रह्लाद उवाच ॥

भयं भयानामपहारिणि स्थिते
मनस्यनन्ते मम कुत्र तिष्ठति ।
यस्मिन्स्मृते जन्मजरान्तकादि-
भयानि सर्वाण्यपयान्ति तात ॥ ३६ ॥

हिरण्यकशिपुरुवाच ॥

भोभोः सर्पा दुराचारमेनमत्यन्तदुर्मतिम् ।
विषज्वालाकुलैर्वक्त्रैः सद्यो नयत संक्षयम् ॥३७॥

श्रीपराशर उवाच ॥

इत्युक्तास्ते ततः सर्पाः कुहकास्तक्षकादयः
अदशन्त समस्तेषु गात्रेष्वतिविषोल्बणाः ॥३८॥
स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः ।
न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसुस्थितः ३९

सर्पा ऊचुः ॥

दंष्ट्रा विशीर्णा मणयः स्फुटन्ति
फणेषु तापो हृदयेषु कंपः ।
नास्य त्वचः स्वल्पमपीह भिन्नं
प्रशाधि दैत्येश्वर कार्यमन्यत् ॥ ४० ॥

हिरण्यकशिपुरुवाच ॥

हे दिग्गजाः संकटदन्तमिश्रा
घ्नतैनमस्मद्रिपुपक्षभिन्नम् ।
तज्जा विनाशाय भवन्ति तस्य
यथारणेः प्रज्वलितो हुताशः ॥ ४१ ॥

---

विष्णुचित्तीयम् ।

कारणमिति ॥ ३० ॥ तत्स्मरणजनिताह्लादः तत्सुस्थितः ॥ ३९ ॥ सङ्कटदन्तमिश्राः अन्योन्यघट्टितदन्त-

श्रीधरीयम् ।

॥३३॥३४॥३५॥ भयमिति । यस्मिन्स्मृते एव जन्मादीन्यपि भयान्यपयान्ति तस्मिन्मनसि नित्य स्थिते सति भय कुत्र तिष्ठति ॥ ३६ ॥ ३७ ॥ इतीति । अदशन्त दष्टवन्तः ॥ ३८ ॥ ३९ ॥ दंष्ट्रा इति । एतत्कार्यमशक्यम् अन्यत्कार्यं प्रशाधि व्यादिश ॥ ४० ॥ हे दिग्गजा इति । सङ्कटैः सङ्कीर्णैर्दन्तैर्मिश्रा

विष्णुचित्तीयम् ।

श्लोक० ॥ २९ ॥ यत इति । चराचर कार्यभूत जगत् ॥ ३० ॥ ३१ ॥ ३२ ॥ विष्णुरिति । माऽऽक्रामन्त्वित्यत्र मास्मित्यध्याहार ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ इतीति । कुहकाः क्रूराः ॥ ३८ ॥ ३९ ॥ दंष्ट्रा इति । दंष्ट्रा विशीर्णा इति विपस्य प्रातिलोम्यात् ॥ ४० ॥ हे दिग्गजा इति ।

ठप्पलेयीयम् ।

॥ २९ ॥ कुलाङ्गारता कुलाङ्गारकत्ता ॥ ३१ ॥ माऽऽक्रामन्तु मे मयि ॥ ३३ ॥ अतः अस्माद्वैरिपक्षत्वा-थात् ॥ ३५ ॥ यस्मिन् स्मृते जन्मादिभयान्यपयान्ति तस्मिन्ननन्ते मनसि स्थिते सति भय मम कुत्र तिष्ठतीत्यर्थः ॥ ३६ ॥ विषेण या ज्वाला अग्निशिखा तयोज्ज्वलैः प्रदीप्तैः ॥ ३७ ॥ अदशन्त दष्ट-वन्तः ॥ ३८ ॥ मणयः स्वर्णिकाः । त्वचः स्वल्पमपि अल्पप्रदेशमात्रमपि । एतदन्यत् अन्यत्कार्य

सत्यव्रतीयम् ।

कोपदेशत्वादिवास्तवोऽर्थः ॥ ३१ ॥ यथा यत्प्रकार सत्येन प्रतिष्ठितेन शस्त्रादिषु विष्णुः स्थितः तेन सत्येन हेतुना मे मयि ॥ ३३ ॥ दुराचार असुरधार्मिन । अन्ते अधिष्ठाने निर्णीत दुर्मतिर्येषा तान-

[ पा० ] १ ख—ग ङ—ढ यथास्थित . २ ख प—ट व . ३ ग ट नोपद्रवाणि भयानि ४ [दत्ता० पा०] विदारयलीलार्थं ५ ग. ड. वाजमनकोऽपवा । ख कलाग्नोऽग्नि ६ छ कुल ७ [विष्णु० पा०] शुष्यिन ८ ङ ख ग उर्वी

श्रीपराशर उवाच ॥

ततः स दिग्गजैर्बालो भूभृच्छिखरसन्निभैः ।
पातितो धरणीपृष्ठे विषाणैर्वावपीडितः ॥ ४२ ॥
स्मरतस्तस्य गोविन्दमिभदन्ताः सहस्रशः ।
शीर्णा वक्षस्थलं प्राप्य स प्राह पितरं ततः ॥ ४३ ॥
दन्ता गजानां कुलिशाग्रनिष्ठुराः
शीर्णा यदेतेन बलं ममैतत् ।
महाविपत्तापविनाशनोऽयं
जनार्दनानुस्मरणानुभावः ॥ ४४ ॥

हिरण्यकशिपुरुवाच ॥

ज्वाल्यतामसुरा वह्निरपसर्पत दिग्गजाः ।
वायो समेधयाग्निं त्वं दह्यतामेष पापकृत् ॥ ४५ ॥

श्रीपराशर उवाच ॥

महाकाष्ठचयस्थं तमसुरेन्द्रसुतं ततः ।
प्रज्वाल्य दानवा वह्निं ददहुः स्वामिनोदिताः ४६

प्रह्लाद उवाच ॥

तातैष वह्निः पवनेरितोऽपि
न मां दहत्यत्र समन्ततोऽहम् ।
पश्यामि पद्मास्तरणास्तृतानि
शीतानि सर्वाणि दिशां मुखानि ॥ ४७ ॥

श्रीपराशर उवाच ॥

अथ दैत्येश्वरं प्रोचुर्भार्गवस्यात्मजा द्विजाः ।
पुरोहिता महात्मानः साम्ना संस्तूय वाग्मिनः ४८

पुरोहिता ऊचुः ॥

राजन्नियम्यतां कोपो बालेऽपि तनये निजे ।
कोपो देवनिकायेषु तेषु ते सफलो यतः ॥ ४९ ॥

श्रीधरीयम् ।

मिलिताः सन्तो घ्नत मारयत । अस्मद्रिपुपक्षैर्वैष्णवैः सामाद्युपायेनासक्तो भिन्नं पृथक्कर्तुं । तस्माज्जाता अपि तस्य विनाशाय कश्चिद्भवन्ति । यथा अरणेर्जातो हुताश अरणेर्नाशाय ॥ ४१ ॥ तत इति । विषाणैर्दन्तैः ॥ ४२ ॥ ४३ ॥ पितुरपि भगवद्भक्तिमुत्पादयितुं तत्स्मरणप्रभावमाह—दन्ता इति । कुलिशं वज्रं तस्याग्रमिव निष्ठुराः दृढतीक्ष्णाः । महतीर्विपदस्तन्मूलभूतानि पापानि च विनाशयतीति च तथा ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ अथेति । भार्गवस्यात्मजाः शण्डामर्कादयः ॥ ४८ ॥

विष्णुचित्तीयम् ।

सङ्घटेति चतुर्दन्ततया परस्परनिबिडदन्तयुक्ताः । रिपुपक्षेण भिन्नम् असक्तो भेदितं । तस्य जनकस्य ॥ ४१ ॥ ४२ ॥ ४३ ॥ अपृष्टोऽपि भगवन्माहात्म्यज्ञापनायाह—दन्ता इति ॥ ४४ ॥ ४५ ॥

वत्सात्रेयीयम् ।

प्रशाधि आदिश ॥ ४० ॥ सङ्घटदन्तमिथाः चतुर्दन्ततया परस्परं निबिडदन्तयुक्ताः सन्तः अस्मद्रिपुपक्षभिन्नं अस्मद्रिपुपक्षत्याक्रान्तं वैरिणमेनं घ्नत मारयत । तस्माज्जातास्तस्माज्जाता अपि तस्य विनाशाय कश्चिद्भवन्ति । यथा अरणेर्जातो हुताशोऽरणेर्नाशाय ॥ ४३ ॥ अपृष्टोऽपि भगवन्माहात्म्यज्ञापनायाऽऽह—दन्ता इति ॥ कुलिशाग्रनिष्ठुराः वज्राग्रतीक्ष्णतया कठिनाः । एते गजानां दन्ता विशीर्णा इति यदेतन्मम बलं न । किन्तु जनार्दनस्य अनुस्मरणस्यानुकूलस्मरणस्य अनुभावो बलमिति योज्यं । नकेवलमेतावदेव तस्य सामर्थ्यं किन्त्वन्यदप्यस्तीत्याह—महाविपदिति ॥ महतीर्विपदः पापानि विनाशयतीति

रत्नगर्भीयम् ।

तिक्रम्य वर्तमानमिति वास्तवोऽर्थः ॥ ३७ ॥ महान्तं विपदं पातमागमं नाशयतीति तथा ॥ ४४ ॥ एष पापकृदतीतिशेषः इति वास्तवोऽर्थः ॥ ४५ ॥ दिशां मुखानि निकटदिग्देशान् ॥ ४७ ॥ नियम्यतां निराक्रियतां । अनुतनये कनिष्ठात्मजे । अत्रेतिना पाठः । निजे सौरमे देवनिकाये सफलः

[ पा० ] १ ग—च, ट स्पर्शोऽस्मत । ण, ख ठ-अरिष्वत. २ ठ. यदो नैव बल. ३ ग. ड—ड. ग ट, ड. विपत्ताप । ट. विपतात. ४ घ. सर्वेन्तु ५ क—ड. चयस्थमसुरेन्द्र ६ क—अ. ठ. ड. चोदिता. ७ ज. ट. ग्राम्यतां । ठ. शम्यतां । ग. रम्यतां. ८ [स्म० मा०] बालेऽनुतनये । बालेऽत्र तनये ९ घ. ड. यत्र ते सफलोदयः.

तथातथैनं बालं ते शासितारो वयं नृप ।
यथा विपक्षनाशाय विनीतस्ते भविष्यति ॥५०॥
बालत्वं सर्वदोषाणां दैत्यराजास्पदं मतः ।
ततोऽत्र कोपमत्यर्थं योक्तुमर्हसि नार्भके ॥५१॥
न त्यक्ष्यति हरेः पक्षमस्माकं वचनाद्यदि ।
ततः कृत्यां वधायास्य करिष्यामोऽनिवर्तिनीम् ॥
श्रीपराशर उवाच ॥
एवमभ्यर्थितस्तैस्तु दैत्यराजः पुरोहितैः ।
दैत्यैर्निष्कासयामास पुत्रं पावकसंचयात् ॥५३॥

ततो गुरुगृहे बालः स वसन्बालदानवान् ।
अध्यापयामास मुहुरुपदेशान्तरे गुरोः ॥ ५४ ॥
प्रह्लाद उवाच ॥
श्रूयतां परमार्थो मे दैतेया दितिजात्मजाः ।
न चान्यथैतन्मन्तव्यं नात्र लोभादिकारणम् ५५
जन्म बाल्यं ततः सर्वो जन्तुः प्राप्नोति यौवनम् ।
अव्याहतैव भवति ततोऽनुदिवसं जरा ॥ ५६ ॥
ततश्च मृत्युमभ्येति जन्तुर्दैत्येश्वरात्मजाः ।
प्रत्यक्षं दृश्यते चैतदस्माकं भवतां तथा ॥ ५७ ॥

श्रीधरीयम् ।

॥ ४९ ॥ ५० ॥ ५१ ॥ नेति । निवर्तिनीं हिंसाम् । अनिवर्तिनीमिति वा छेदः । दुष्प्रतीकारामित्यर्थः ॥ ५२ ॥ ५३ ॥ तत इति । पितुर्विपर्यासत्वया विष्णुभक्तिर्न भवति । तेषां तु भविष्यतीति बालदानवान् गुरोरुपदेशस्य अध्यापनस्यान्तरे विच्छेदे तन्मध्ये मुहुर्मुहुः स्वयमध्यापयामास उपदिदेश ॥ ५४ ॥ श्रूयतामिति । हे दितिजात्मजाः । मद्भ्रातरः । दैतेयाः अन्ये । परमार्थस्तत्त्वं श्रूयतां । मे मत्तः । एतदन्यथा सिध्येत्येवं न मन्तव्यं । यथाऽत्र गुरूपदेश इव मदुक्तौ लोभादिकारणं नास्ति ॥ ५५ ॥ बाल्यादारभ्य बन्धमुक्त्यै विष्णुभक्तिरेव कर्तव्येति वक्तुं प्रवृत्तिमार्गे जन्मादिसर्वावस्थासु नित्यं दुःखमेवेति दर्शयन्नाह—जन्मेत्यादि सर्वदुःखमयंजगदित्यन्तैश्चतुर्दशभिः ॥ ५६ ॥ ५७ ॥

विष्णुचित्तीयम् ।

॥ ४६ ॥ ४७ ॥ अथेति । द्विजाःशण्डामर्कादयः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ नेति । कृत्या अभिचारजन्यो भूतविशेषः ॥ ५२ ॥ ५३ ॥ तत इति । उपदेशान्तरे अध्यापनस्य विच्छेदावसरे ॥ ५४ ॥ श्रूयतामिति । परमार्थः परमपुरुषार्थः । लोभादीत्यादिशब्देनाप्तत्वहेतुभ्रमविप्रलम्भादिग्रहणम् ॥ ५५ ॥ जन्मेति । त्रिश्लोक्या देहात्मनोरनित्यत्वनित्यत्वे वदति ॥ ५६ ॥ तत इति । दृश्यते

सत्यव्रतीयम् ।

महाविपत्पापविनाशनः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ भार्गवस्य शुक्रस्यात्मजाः शण्डामर्कादयः ॥ ४८ ॥ हे दैत्यराज ॥ ५१ ॥ कृत्या अभिचारकर्मजन्योभूतविशेषः । निवर्तिनीं मरणहेतुभूतां । अनिवर्तिनीमितिवा पदच्छेदः । दुष्प्रतीकारामित्यर्थः ॥ ५२ ॥ गुरोरुपदेशस्याध्यापनस्यान्तरे विच्छेदे तन्मध्ये ॥ ५४ ॥ मे मत्तः । हे दितिजात्मजाः दितिजो हिरण्यकशिपुस्तस्यात्मजाः मद्भ्रातरः । दैतेयास्तदन्ये । अन्यथापरमार्थोऽयमितिविपरीतबुद्ध्या मदुक्तमिष्टमेतन्नमन्तव्यं । यतोऽत्र मदुक्तौ गुरूपदेश इव लोभादिकारणं नास्ति । आदिपदेन विप्रलम्भादिग्रहणं ॥ ५५ ॥ विमुक्तिसाधनं विष्णुभक्तिरेव बाल्यादारभ्य कर्तव्येति वक्तुं तद्धेतुभूतवैराग्यजननार्थं जन्मादिसर्वावस्थासु नित्यं दुःखमेवेत्याह—जन्मेत्यादिना ॥ ततोऽनन्तरं । जरा अव्याहतैवाप्रतिबद्धैव भवति ॥ ५६ ॥ एतत् जन्मादिषट्कं ॥ ५७ ॥

रसगर्भीयम् ।

वधफलकत्वात् ॥ ४९ ॥ मदर्थं हरिभक्तेस्त्वत्प्रभावान्पितरं प्रति । प्रह्लाद उपदेशार्हान्दैत्यान्बालान-शिक्षयत् ॥ ५४ ॥ हे दैतेया दित्यपत्यानि । दितिजात्मजाः दितेर्नप्तारः ॥ ५५ ॥ अव्याहता अव-

[ पा० ] १ ज. ट. ठ. सत्करिष्यामहे वयं. २ ज. ॥. दृश्यमेवैतत्.

मृतस्य च पुनर्जन्म भवत्येतच्च नान्यथा ।
आगमोऽयं तथा यच्च नोपादानं विनोद्भवः ॥५८॥
गर्भवासादि यावत्तु पुनर्जन्मोपपादनम् ।
समस्तावस्थकं तावद्दुःखमेवावगम्यताम् ॥५९॥
क्षुत्तृष्णोपशमं तद्वच्छीताद्युपशमं सुखम् ।
मन्यते बालबुद्धिस्तद्दुःखमेव हि तत्पुनः ॥६०॥

चित्सुखीयम् ।

सुकाः ॥ ४१ ॥ आगमोऽयमिति । मृतस्यपुनर्जन्मभवतीत्यत्र । "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतं"इत्याद्यागमः प्रमाणमित्यर्थः । उद्भवश्च तदुद्भवशुक्रशो-

श्रीधरीयम् ।

मृतस्येति । मृतस्य पुनर्जन्म भवतीत्ययमेव तदर्थप्रतिपादकः प्रमाणभूतः श्रुतिस्मृत्यादिरूप आगमोऽस्ति । "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम्" इति । "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इत्यादि । एतदनुकूलतर्कमाह । तच्च तथैव मन्तव्यं । यस्माज्जीवाधिष्ठितं शुक्रशोणितरूपमुपादानकारणं विना देहस्योद्भवो न घटते । श्रुतिश्च "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति । यदा जीवन्मुक्तव्यावृत्त्यर्थमाह—नेति । उपादीयते निमित्ततया स्वीक्रियते पुनर्जन्मार्थं इत्युपादानं पुण्यपापादि । तद्विना तदुद्भवो जन्म नास्ति । किन्तु तत्सद्भावे । अतो जीवन्मुक्ते नातिप्रसङ्ग इत्यर्थः ॥ ५८ ॥ ततः किमत आह—गर्भवासादीति । पुनर्जन्मन उपपादनं प्राप्ति यावत्तावद्दुःखमेव ॥ ५९ ॥ अन्नपानादिजनितं सुखमस्ति इती दुःखमे-

विष्णुचित्तीयम् ।

वैतत् जन्मादिपञ्चकम् ॥ ५७ ॥ देहिनो देहात्मागूर्ध्वं च सत्त्वमित्यत्राह—मृतस्येति । पुनर्जन्म भाविदेहग्रहणं स्यादेव । अन्यथा मृतस्य जन्माभावे एतच्च वर्तमानं जन्म च न स्यात् । अत्र प्रमाणम् । अयमप्येतर्हि प्रत्यक्षं पठ्यमानः "स इतः प्रतीयन्नेव पुनर्जायते, अथैतमेवाध्वानं पुनर्निवर्तन्ते, मृत्वा पुनर्मृत्युमापद्यन्ते" इत्यादिरागमः । तदागमेनोक्तं तच्च तथैवेत्यनुग्राहकं तर्कं चार्वाकादिनिरासार्थमाह—नोपादानमिति । प्रतिप्राणिप्रतीयमानः सुखदुःखादिकार्योद्भवः प्राग्जन्मानुष्ठितसुकृतादिविशिष्टं स्थायिनमात्मानमुपादानकारणं विना न स्यादित्यर्थः । प्रत्यक्षमेव प्रमाणं नानुमानागमाविति वदतो वादिनो युक्तिपूर्वो विवादः स्ववाक्प्रणयनं च व्याहतमिति भावः ॥ ५८ ॥ नित्यस्यात्मनोऽनित्यदेहादिकं गर्भादिपुनरुत्पत्तिपर्यन्तसमस्तावस्थायुक्तं दुःखहेतुरिति वैराग्यायाह—गर्भवासादीति ॥ ५९ ॥ अन्न-

वृत्ताभेदीयम् ।

दुःखातिशयप्रदर्शनार्थं प्रतिशरीरमेवमेवेत्याह—मृतस्येति ॥ जन्मपदं बाल्यादीनामुपलक्षणं । इत्यर्थे आगमोऽपि प्रमाणमित्याह—आगमइति ॥ अयमप्येतर्हि-पठ्यमान आगमः श्रुतिस्मृत्यादिरूपः । अत्रार्थे प्रमाणमिति शेषः । "स इतःप्रतीयन्नेव पुनर्जायते, अथैतमेवाध्वानं पुनर्निवर्तन्ते, मृत्वा पुनर्मृत्युमापद्यन्ते"इत्याद्याः श्रुतयः । "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च"इत्यादिस्मृतयः । "भूतानां विनिवृत्तिश्च मरणं समुदाहृतं"इतिभारतोक्तेर्भूतवियोगस्यैव मरणत्वात्कथं भूतोपादानकदेहग्रहणलक्षणं जन्मेत्यत आह—नयेति ॥ तच्च पुनर्जन्म तथा युक्तं । कुतः यस्मादुपादानं विना उद्भव उत्पत्तिर्नास्ति । श्रुतिसिद्धपुनर्जन्मान्यथानुपपत्त्या मरणे सर्वात्मना सर्वभूतनिवृत्तिर्नास्ति किन्तु भागतो निवृत्तिर्भागतस्त्वनिवृत्तिरिति कल्प्यत इति भावः । तदुक्तं ब्रह्माण्डे । "मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च । तथापि भागतस्त्वेनमनुगच्छन्ति सर्वदा"इति ॥ ५८ ॥ अस्तु मृतस्य पुनर्जन्म ततः किमित्यत आह—गर्भवासादीति ॥ गर्भवासादि पुनर्जन्मन उपपादनं प्रापणं यावत्तावद्दुःखमेव ॥ ५९ ॥ गर्भवासमा-

अत्यन्तस्तिमिताङ्गानां व्यायामेन सुखैषिणाम् ।
भ्रान्तिज्ञानावृताक्षाणां दुःखमेव सुखायते ॥ ६१
क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ।
क्व कान्तिशोभासौन्दर्यरमणीयादयो गुणाः ६२॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽप्यसौ ६३ ॥

श्रीधरीयम् ।

घेत्युच्यत इति चेत्तत्राह—क्षुदिति । क्षुत्पिपासादिदुःखोपशमं मूर्खो भ्रान्तः सुखं मन्यते तदप्यन्नपानादिसंपादनप्रयासाद्दुःखमेव ॥ ६० ॥ दुःखत्वेन प्रसिद्धेऽपि व्यायामप्रहारादौ सुखभ्रमं दृष्टान्तत्वेनाह—अत्यन्तेति । अत्यन्तस्तिमिताङ्गानां वातादिदोषेणात्यन्तजडीभूतगात्राणां । व्यायामेन गमनादिना श्रमेण । सुखैषिणां सुखमिच्छतां । व्यायामेऽपि सुखमिव भवति । भ्रान्तिज्ञानावृताक्षाणाञ्च मोहपिहितदृष्टीनां कामिनां प्रणयकुपितकामिनीकलनूपुरक्वणत्कारचरणप्रहारोऽपि सुखवत्प्रतिभाति तदेव कामिनां सुखं वदन्ति चेति ॥६१॥ निन्दति—क्वेति । महाचयः स्थूलसङ्घातः । कान्तिर्गौरत्वादिः । अङ्गच्छाया शोभा भूषणादिकृता । सौरभ्यं सौगन्ध्यम् । कमनीयं सौन्दर्यम् । एवमादयो गुणागुणाश्च क्व ॥ ६२ ॥ मांसेति । यदि देहे ममकारास्पदेऽतिप्रीतिमांस्तर्हि नरकेऽपि प्रीतिमान् भविष्यतीति । तस्यापि नारकि-

विष्णुचित्तीयम् ।

अन्नपानादीनां सुखहेतुत्वस्य दर्शनात्कथं दुःखमेवेत्युक्तमित्याशङ्क्य दुःखहेतुत्वेन सुखहेतुत्वभ्रम इत्याह—क्षुत्तृष्णेति । क्षुच्छीतादिदुःखशामकमन्नशाट्यादिदुःखमेव सुखसाधनं मन्यते बालः । हि हेतौ । तदन्नादिकं क्षुधाद्यभावे पुनरग्निमान्द्याजीर्णसन्तापादिदुःखहेतुरेव ॥ ६० ॥ दुःखहेतुत्वेन प्रसिद्धेऽपि दुःखान्तरोपशामकत्वमात्रेण सुखहेतुत्वधीर्दृश्यत इति निदर्शनेनाऽऽह—अत्यन्तेति । व्यायाम आयासः ॥ ६१ ॥ तथा स्वपरदेहे श्लेष्मादिमये दुःखदेऽपि कान्त्याद्यारोपात्सुखहेतुत्वधियं दर्शयति—क्व शरीरमिति । रमणीयं कमनीयं कमनीयत्वम् ॥ ६२ ॥ किञ्च नरके मलमांसादिकमात्मनोऽन्यत्वेन भुज्यते अत्र तु तत्समूहदेहं आत्मत्वेन भोग्यत्वेन च मन्यमानो नरके प्रीयेततरामित्यभिप्रायेणाह—मां-

दत्ताश्रेयीयम् ।

स्थ्य पुनर्जन्मप्राप्तिपर्यन्तं सुखहेतूनामपि विद्यमानत्वात्कथं सर्वावस्थासु दुःखमेवेत्युक्तमित्यत आह—क्षुदिति ॥ बालबुद्धित्वात् क्षुदादिदुःखोपशमं सुखं मन्यते । तदपि दुःखमेव अन्नपानादिसंपादनायासेन महादुःखसंपाद्यत्वात्तत्पुनस्तदपि दुःखमेव ॥ ६० ॥ दुःखत्वेन प्रसिद्धेऽपि व्यायामप्रहारादौ सुखभ्रमं दृष्टान्तत्वेनाह—अत्यन्तेति ॥ अत्यन्तस्तिमिताङ्गानां वातादिदोषप्राचुर्येण जडीभूताङ्गानां व्यायामेन गमनादिश्रमेण सुखैषिणां सुखमिच्छतां अतएव भ्रान्तिज्ञानावृताक्षाणां मोहपिहितदृष्टीनां व्यायामः सुखायते प्रहारोऽपि मुष्टिप्रहारोऽपि सुखायत इत्यर्थः ॥ ६१ ॥ कान्त्यादिगुणयुक्तत्वाच्छरीरं पुरुषस्य सुखहेतुर्भविष्यतीत्याशङ्क्याह—क्वेति ॥ श्लेष्मादीनां धातूनां महाचयः स्थूलसङ्घातः क्व । कान्तिः गौरत्वादिशोभा भूषादिकृता । सौरभ्यं सौगन्ध्यं । कमनीयादयो गुणाः मनोहरत्वादयो गुणाः क्व । कान्त्यादिप्रीतिर्भ्रान्तिरेवेत्यर्थः ॥ ६२ ॥ एतादृशे शरीरे ममतां यः करोति सोऽतिमूढ इत्याह—मांसेति ॥ यदि मांसाद्यात्मके देहे प्रीतिमान्भवेत् तर्हि नरकेऽपि प्रीतिमान्भविष्यति । तस्यापि मांसाद्या-

[ पा० ] १ ग. ट. ङ. ज्ञानवतां पुनः. २ क—ङ. प्रहारोऽपि सुखायते. ३ घ. ढ. कान्त्याढ्यशोभा. ४ घ. ढ. सौभाग्य । क—ग. ज—ञ. ठ. ढ. सौरभ्य. ५ क—ग. ज—ञ ठ. ढ. कमनीयादयो.

अग्नेः शीतेन तोयस्य तृषा भक्तस्य च क्षुधा ।
क्रियते सुखकर्तृत्वं तद्विलोमस्य चेतरैः ॥ ६४ ॥
करोति हे दैत्यसुता यावन्मात्रं परिग्रहम् ।
तावन्मात्रं स एवास्य दुःखं चेतसि यच्छति ६५ ॥

यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ६६ ॥
यद्यद्गृहे तन्मनसि यत्र तत्रावतिष्ठतः ।
नाशदाहोपकरणं तस्य तत्रैव तिष्ठति ॥ ६७ ॥

चित्सुखीयम् ।

णिताद्युपादानंविना नभवति ॥५८॥ जन्म उपपद्यते अनेनेति जन्मोपपादनं ॥ ५९ ॥ तद्विलोमस्यचेति । शीतस्याग्निना तृष्णायास्तोयेन क्षुधाया भक्तेन सुखकर्तृत्वं क्रियत इत्यर्थः ॥ ६४ ॥ नाशो दाहोपकरणं

श्रीधरीयम् ।

भोग्यमांससङ्घातस्याविशेषात् ॥ ६३ ॥ किञ्च न वस्तुतः किञ्चित्सुखसाधनमस्ति । सुखसाधनस्यैव कदाचिद्दुःखसाधनत्वदर्शनादित्याह—अग्नेरिति । शीतेन पूर्वभाविना अग्नेः सुखकर्तृत्वं दृश्यते । शीताभावे ग्रीष्मे अग्नेर्दुःखसाधनत्वम् । एवं पूर्वभाविन्या ग्रीष्मे तृषा तोयस्य । क्षुधा भक्तस्य अन्नस्य । तयोरभावे तोयान्नयोरपि प्रतिकूलत्वात् तद्विलोमस्याग्न्यादिप्रतियोगिनः शीतादेः इतरैरग्न्यादिभिः । अग्निना सन्तापे सति तृषः । अन्नो सति क्षुधः सुखहेतुत्वम् । अन्यथा तेषामेव दुःखहेतुत्वमित्यर्थः । तद्वैलोम्येनेति पाठेऽप्ययमेवार्थः ॥ ६४ ॥ किञ्च धनाश्वगजस्थलादिपरिग्रहोऽपि दुःखहेतुरेव तत्पालनादिबहुक्लेशावहत्वादित्याह—करोतीति ॥ ६५ ॥ कलत्रपुत्रादिसम्बन्धो दुःखहेतुरेवेत्याह—यावत इति । शोकरूपाः शङ्कवः कीलकानि निखन्यन्ते निपात्यन्ते । तेषामपगमे तन्नाशादिशोकानपगमादित्यर्थः ॥ ६६ ॥ एतत्स्पष्टयति—यद्यदिति । यद्यद्गृहादवतिष्ठति धनादि तदपि यत्र कुत्र देशान्तरेऽप्यव-

विष्णुचित्तीयम् ।

स्थितमिति ॥ ६७ ॥ क्षुत्तृष्णोत्यादिश्लोकोक्तं विवृणोति—अग्नेरिति । अग्नेः प्रतियोगिना शीतेन सुखकर्तृत्वं क्रियते । न तु स्वतः । एवं तोयभक्तयोस्तृट्क्षुद्भ्यां । तद्विलोमस्य तेषामग्न्यादीनां प्रतियोगिनः शीतादेः इतरैरग्न्यादिभिः सुखकर्तृत्वं क्रियते । यद्वा तद्विलोमस्य सुखविलोमस्य दुःखस्य कर्तृत्वमग्न्यादीनां शीतादीनामभावैः क्रियत इति । द्वयमनियतत्वादुभयमपि भ्रान्तम् । यथा वक्ष्यति—"तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्" इति ॥ ६४ ॥ एवं भृत्यधनाद्यपि दुःखदमित्याह—करोतीति । परिगृह्यते इति परिग्रहः ॥ ६५ ॥ तथा कलत्रादिसम्बन्धमपीत्याह—यावत इति । सम्बध्यत इति सम्बन्धः । सम्बन्धिनो न स्थिराः । तन्नाशे शोकस्तु स्थिर इत्यर्थः ॥ ६६ ॥ किञ्चाज्ञानां परि-

दत्तात्रेयीयम् ।

ग्रहकत्वात् । अतो नरकशरीरयोस्तुल्यत्वाच्छरीरे प्रीतिमान्मूढ इत्यर्थः ॥ ६३ ॥ किञ्च न नियमेन सुखसाधनं किञ्चिदस्ति । सुखसाधनस्यैव कदाचिद्दुःखसाधनत्वदर्शनादित्याह—अग्नेरिति ॥ शीतेन पूर्वभाविना अग्नेः सुखकर्तृत्वं दृश्यते । एवं पूर्वभाविन्या तृषा तोयस्य । क्षुधाच भक्तस्यान्नस्य । तद्विलोमस्य सुखप्रतिकूलस्य दुःखस्य कर्तृत्वमग्न्यादीनामितरैः शीताद्यभावैः क्रियत इत्यर्थः । तथाच शीताभावे ग्रीष्मेऽग्नेः तृट्क्षुधोरभावेच तोयान्नयोश्च दुःखकर्तृत्वमिति भावः ॥ ६४ ॥ परिग्रहं परिगृह्यत इति परिग्रहो भृत्यधनादिकं दुःखहेतुरेव । तत्पालनादिबहुक्लेशसाध्यत्वात् स परिग्रहः ॥ ६५ ॥ कलत्रपुत्रादिसंबन्धोऽपि दुःखहेतुरित्याह—यावत इति ॥ शोकरूपाः शङ्कवः कीलका हृदये मनसि निखन्यन्ते पात्यन्ते । तेषां व्यवधाने नाशेवा शोकानपगमादित्यर्थः ॥ ६६ ॥ एतदेव स्पष्टयति—यद्यदिति ॥

[ पा० ] १ [श्रीध० पा०] तद्वैलोम्येनचेतरैः. २ क—ङ. कुलावतिष्ठतः । छ. कुत्रापितिष्ठत'. ३ झ. नाशदाहो-द्रणं । ङ. ञ. ट. ठ. नाशदाहास्पदणं । [चि० पा०] नाशो दाहोपकरणं. ४ [चि० पा०] तत्रस्यासंवतिष्ठति । ब. घ. तस्तत्रभतिष्ठति । ख. ग. ङ. कुतस्तनैवतिष्ठति । छ. कुतस्तस्योपतिष्ठति.

जन्मन्यत्र महद्दुःखं म्रियमाणस्य चापि तत् ।
यातनासु यमस्योग्रं गर्भसङ्क्रमणेषु च ॥ ६८ ॥
गर्भेषु सुखलेशोऽपि भवद्भिरनुमीयते ।
यदि तत्कथ्यतामेवं सर्वं दुःखमयं जगत् ॥६९॥
तदेवमतिदुःखानामास्पदेऽत्र भवार्णवे ।
भवतां कथ्यते सत्यं विष्णुरेकः परायणः ॥७०॥
मा जानीत वयं बाला देही देहेषु शाश्वतः ।
जरायौवनजन्माद्या धर्मा देहस्य नात्मनः ॥७१॥

चित्सुखीयम् ।

या यद्यत् गृहे तद्यत्तत्रावतिष्ठतोऽपि मनसि सन्तिष्ठति । तत्रैव गृहे नाशादि तिष्ठतीति सुखः । तत्रैव तिष्ठतीति पाठे तत्रैव गृहे तिष्ठतः पुंसो यद्गृहे नाशादि तन्मनसि तिष्ठति । सुखः किमु वक्ष्यामिस्यर्थः । ग्रस्तस्यास्यैव तिष्ठतीति पाठे नाशादिशङ्कया ग्रस्तस्यास्यैव पुंसो मनसि तिष्ठति । अतो नकदाचिदप्यस्य सुखमित्यभिप्रायः ॥ ६७ ॥ तत्कथ्यतामिति । तस्याभावात्कथयितुं नशक्यत इति भावः

श्रीधरीयम् ।

तिष्ठमानस्य मनसि नित्यं चिन्तयतस्तिष्ठति । तस्य धनादेर्नाशः दाहः उपहरणं वा तत्रैव गृह एव तिष्ठति न तु मनसि । स्मर्यमाणतया स्थितस्य धनादेर्नाशादिर्भवति । कुतस्तत्रैव तिष्ठत इति पाठे गृहे मनसि च तस्यैव धनादेरवस्थानेऽपि गृहे तिष्ठत एव नाशादिकं भवति । मानसे मनसि स्थितस्य न तु भवतीति सुखः । अतो विचित्रं । गृहे नष्टमपि धनादि यत्रकुत्रचिद्देशान्तरे स्थितमपि परिग्रहीतं व्यथयितुमेव मनसि वासनारूपेण तिष्ठति । अतस्तद्वासनापरित्यागे विनाशो भवति । न तद्वियोगमात्रेणेति भावः । पाठान्तरेऽप्ययमेव तात्पर्यार्थः ॥ ६७ ॥ एवं सर्वास्ववस्थास्वपि दुःखमनुसन्धेयमित्याह—जन्मनीत्यादिद्वाभ्याम् ॥ ६८ ॥ ६९ ॥ तदेव प्रवृत्तिमार्गे दोषोक्त्या विरक्तिमुत्पाद्य विष्णुसेवां प्रवर्तयन्नाह—तदेवमिति ॥ ७० ॥ तथाऽप्यस्माकं बालानां तत्रानधिकार इति शङ्कां व्यावर्तयति—मा जा-

विष्णुचित्तीयम् ।

महदादेः सन्निधावसन्निधौ च शोकः सम इत्याह—यद्यदिति । यद्यद्गृहे वस्तु तस्य नाशदाहकरणं कुतस्स्यादिति यत्र कुत्रावतिष्ठतः स्वामिनो मनसि सन्तिष्ठतीत्यन्वयः । करणमेवोपकरणं । गृहे क्षेमेण स्थितमपि प्रेम्णाऽन्यथाशङ्किनो दुःखायैव सर्वं वस्त्वित्यर्थः । नाशदाहोपहरणमिति च पाठः । यत्र तत्रावतिष्ठत इति च पाठः ॥ ६७ ॥ एवं बाल्यादिषु प्रत्यक्षं दुःखमुक्त्वा जन्मादिष्वपि तदेवानुमेयमित्याह—जन्मनीति । जन्मादिषु दुःखमनुमीयत इत्यन्वयः ॥ ६८ ॥ गर्भे चेति । सुखलेशोऽपि यदि तत्कथ्यतां । तत्सुखं नास्तीत्यर्थः । तत् तस्मादेव दुःखमयं जगत् ॥ ६९ ॥ तस्माद्भगवत्प्राप्तिलक्षणो मोक्षः प्रार्थ्य इत्याह—तदेवमिति ॥ ७० ॥ वयमद्यैव विरज्येमहीति श्रुत्वा झटिति भगवज्ज्ञाने

दत्तात्रेयीयम् ।

यत्र गृहे यद्धनादिकं तिष्ठति । तत् तिष्ठतः यत्र क्वचित्तिष्ठतः स्वामिनो मनसि तत्रैव तिष्ठति । नाशदाहोपकरणं नाशदाहोपयोग्यं । तत् कुतः तत्रैव तिष्ठति । अतोऽस्थिरधनादिकं दुःखहेतुरिति नचिन्तायोग्यमिति भावः । "यद्यद्गृहे तन्मनसि यत्रक्वाप्यवतिष्ठतः । नाशदाहोपकरणं कुतः स्यात्तत्र तिष्ठति" इति पाठे यद्यद्गृहे वस्तु तस्य नाशदाहोपकरणमिति द्वन्द्वैकवद्भावः । नाशोदाहोपकरणं वा कुतश्चित्स्यादित्यत्र यत्र क्वाप्यवतिष्ठतः स्वामिनो मनसि तिष्ठतीति योज्यं । गृहे क्षेमेण स्थितमपि प्रेम्णाऽन्यथाशङ्किनो दुःखायैव सर्वं वस्त्विति भावः ॥ ६७ ॥ एवं सर्वावस्थास्वपि दुःखमनुसन्धेयमित्याह—जन्मनीत्यादिना ॥ ६८ ॥ गर्भेष्विति ॥ चकाराज्जन्मादिकं समुच्चीयते । जन्मादिषु सुखलेशोऽपि यदि भवद्भिरनुमीयते तत्सुखं कथ्यतां । सुखं नास्त्येवेत्यर्थः ॥ ६९ ॥ एवं संसारस्यातिदुःखरूपत्वात्तत्परिहारार्थं विष्णुरेवप्रार्थनीय इत्याह—तदेवमिति ॥ ७० ॥ बालानामस्माकं विष्णुप्रार्थने नेदानी-

[ पा० ] १ ग. ङ व्यस्य. २ ग परायणम् ।

बालोऽहं तावदिच्छातो यतिष्ये श्रेयसे युवा ।
युवाऽहं वार्धके प्राप्ते करिष्याम्यात्मनो हितम् ७२
वृद्धोऽहं मम कार्याणि समस्तानि न गोचरे ।
किं करिष्यामि मन्दात्मा समर्थेन न यत्कृतम् ७३
एवं दुराशयाऽऽक्षिप्तमानसः पुरुषः सदा ।
श्रेयसोऽभिमुखं याति न कदाचित्पिपासितः ७४

बाल्ये क्रीडनकासक्ता यौवने विषयोन्मुखाः ।
अज्ञा नयन्त्यशक्त्या च वार्धकं समुपस्थितम् ७५
तस्माद्बाल्ये विवेकात्मा यतेत श्रेयसे सदा ।
बाल्ययौवनवृद्धाद्यैर्देहभावैरसंयुतः ॥ ७६ ॥
तदेतद्वो मयाख्यातं यदि जानीत नानृतम् ।
तदस्मत्प्रीतये विष्णुः स्मर्यतां बन्धमुक्तिदः ७७॥

चित्सुखीयम् ।

॥ ६९ ॥ वयं बाला माजानीतेत्यत्रेतिशब्दोऽध्याहरणीयः ॥ ७१ ॥ पिपासितः भोगतृष्णावान् ॥७४॥

श्रीधरीयम् ।

नीतेति । वयं बालाः अतोऽस्माकम् अत्र नाधिकार इति यूयं मा जानीत । परिणामभेदेन भिन्नेष्वपि बाल-युवादिदेहेषु देहिनः प्रतिसन्धानादेहात्मनो नित्यः । अतो जराद्या धर्मा देहस्यैव न त्वात्मनः । देहात्मविवेकशून्यानां अविरक्तानामेवात्र नाधिकारः । तद्विवेकवतां तु विरक्तानां सततमत्रैवा-धिकारः । देहावस्था तु न कारणं "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतेरिति भावः ॥ ७१ ॥ किञ्चिद्विवेकवतामप्यविरक्तानां श्रेयसि प्रवृत्तौ कालप्रतीक्षया पूर्वैव जीवितं यातीत्याह बालोऽहमित्या-दित्रिभिः—बालोऽहमिति । इच्छातो विचारिष्यामीति शेषः ॥ ७२ ॥ ७३ ॥ एवमिति । दुराशया विपर्यासरूपया आक्षिप्तमानसः आकृष्टचित्तः । पिपासितः भोगतृष्णाकुलः । अनेन रजकादिदृष्टान्तस्सू-चितः । रजको हि जाह्नवीजलस्थोऽपीदं वस्त्रं प्रक्षाल्य पास्यामीदं चेत्येवं पिपासया म्रियते । जालि-कश्च इमं चामुं चापरं मत्स्यं हत्वा तोयं पास्यामीत्येवं पिपासित एव यथा म्रियते तद्वदित्यर्थः ॥ ७४ ॥ अज्ञास्तु पशुवदायुः क्षपयन्तीत्याह—बाल्य इति । समुपस्थितं प्राप्तं वार्धकं नाशतया नयन्ते । न तु कदाऽपि श्रेयोजिज्ञासा तेषामित्यर्थः ॥ ७५ ॥ अतः श्रेयसि विलम्बो न कार्य इत्याह—तस्मादिति । विवेकात्मा विवेकचित्तः । तमेव विवेकं स्मारयति—बाल्येति ॥ ७६ ॥ तदेतदिति । यद्यपि युष्माक-

विष्णुचित्तीयम् ।

यतितव्यं न विलम्बितव्यमित्याह—मा जानीतेति ॥ ७१ ॥ ७२ ॥ ७३ ॥ एवमिति । दुराशा विष-येच्छा । पिपासितः श्रेयस्तृष्णावानपि । पिपासित इति जलस्थरजकजालिकदृष्टान्तस्मारणम् । तौ हि पिपासितावेव पश्चात्पास्यामीति वस्त्रशोधनमत्स्यग्रहणोत्क्षीणौ ॥ ७४ ॥ ७५ ॥ तस्मादिति । वृद्धाद्यै-रिति । वृद्धं वार्धकं । भावे निष्ठा ॥ ७६ ॥ तदिति । अस्मत्प्रीतये युष्माकमनिच्छतामपि ॥ ७७ ॥

इत्यात्रेयीयम् ।

मधिकार इत्याशङ्क्याऽऽह—माजानीतेति ॥ वयं बाला इति माजानीत । देही जीवः देहेषु तत्तत्परिमाणानां भेदेन भिन्नेषु बालयुवादिदेहेषु स एवाहमिति प्रत्यभिज्ञानाच्छाश्वतो नित्यः । अतो जराद्या देहस्यैव धर्माः । तत्वादात्मनो जीवस्य । देहात्मविवेकिनामेवात्राधिकारात् । देहगतबाल्यादिकं त्वधिकारोऽप्यनधिकारो-क्तिर्नयुक्तेति भावः ॥ ७१ ॥ अविवेकिनां तु बाल्यादिव्याजेन कालप्रतीक्षया विष्ण्वाराधनलक्षणश्रेयः-स्साधनार्थं यतिष्ये ॥ ७२ ॥ दुराशया विषयेच्छया । आक्षिप्तमानसः आकृष्टचित्तः । पिपासितः भो-गतृष्णावान् ॥ ७४ ॥ उक्तमेव स्पष्टयति—बाल्य इति ॥ समुपस्थितं प्राप्तं वार्धकं नाशकत्वा नयन्ति प्रापयन्ति । तदाऽपि न श्रेयसे यतन्त इति भावः ॥ ७५ ॥ अतः श्रेयसि विलम्बो न कार्य इत्याह—तस्मादिति ॥ विवेकात्मा विवेकयुक्तचित्तः । उक्तमेव विवेकहेतुं स्मारयति—बाल्येति ॥ वृद्धं वृद्धत्वं

[ पा० ] १ ग. ङ. शश्वत्. २ ख. घ—घ. ङ. देहभावै.

प्रयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ ७८ ॥
सर्वभूतस्थिते तस्मिन्मतिर्मैत्री दिवानिशम् ।
भवतां जायतामेवं सर्वक्लेशान्प्रहास्यथ ॥ ७९ ॥

तापत्रयेणाभिहतं यदेतदखिलं जगत् ।
तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥८०॥
अथ भद्राणि भूतानि हीनशक्तिरहं परम् ।
मुदं तदाऽपि कुर्वीत हानिर्द्वेषफलं यतः ॥ ८१ ॥

विष्णुचित्तीयम् ।

समुपस्थितं यावैकमतां असत्यया नयन्ति । यावैवेऽपि श्रेयसे न यतन्त इति भावः ॥ ७५ ॥ सर्वभूतस्थिते तस्मिन्विष्णौ मैत्रीभूता मतिर्भवता जायताम् । एवं सति सर्वक्लेशान् प्रहास्यथेत्यन्वयः ॥ ७९ ॥ तापत्रयेण आध्यात्मिकादिदुःखत्रयेण ॥८०॥ अथ मद्व्यतिरिक्तसर्वभूतानि भद्राणि सुखसाधनसंपन्नानि ;

श्रीधरीयम् ।

मन नास्था तथाऽप्यस्मत्प्रीतये विष्णुः स्मर्यताम् ॥ ७७ ॥ युष्माकमपि विष्णुभक्त्यैव प्रवृत्तिर्युक्ता । सुकरत्वान्महाफलत्वाच्चेत्याह—आयास इति ॥ ७८ ॥ विष्णुभक्तौ च सर्वत्र विष्णुदृष्टिः सर्वभूतमैत्री च कारणमित्याह—सर्वेति । सर्वभूतेष्वन्तर्यामितया स्थिते विष्णौ मतिर्भवतामस्तु । अत एव तदधिष्ठानभूतमात्रे मैत्री चाहर्निशमस्तु । एवमनेन प्रकारेण रागद्वेषादिकृतान्सर्वान्क्लेशान्प्रहास्यथेत्यर्थः ॥ ७९ ॥ ननु सर्वभूतेषु मैत्री दुष्करा मदमत्सरादिभिरसन्तप्यमानेषु च धनविद्यागर्वितेषु पृथैव बद्धवैरेषु च द्वेषस्य दुष्परिहारत्वादित्याह । तापत्रयेणेत्यादिभिः—तापत्रयेणेति । तापत्रयेण आध्यात्मिकादिदुःखत्रयेण मदमत्सरादिना जगदेतदभिहतम् इति यदा बुद्धिस्तदा शोच्येषु कृपाविषयेषु तेषु भूतेषु कः प्राज्ञो द्वेषं करोति ॥ ८० ॥ अथ तथैवविधमतिः भूतानि भद्राणि धनविद्यादिसम्पदा हृष्टा-

विष्णुचित्तीयम् ।

आयास इति । अहर्निशमिति स्मरणस्य सदाकाल इत्याह । यथा अपवित्रः पवित्रो वा इति ॥ ७८ ॥ अथ शमदमादिफला मैत्रीकरुणामुदितोपेक्षाश्चतुरश्चोक्याऽऽह—सर्वभूत इति । सर्वात्मस्वरूपेण विष्णौ स्थिते सति सर्वत्र मित्रधीः कार्या ॥ ७९ ॥ सर्वात्मकत्वमेवस्य मानुसन्धायि । तथाऽपि तापत्रयग्रस्तेषु भूतेषु द्वेषो न कार्यः । किन्तु करुणैव कार्येत्याह—तापत्रयेणेति ॥ ८० ॥ यदि पुण्याधिकानि भूतानि अहन्तु क्षीण इति मतिः तदा तेषु मुदिता कार्या । न तु द्वेषः । द्वेषस्यात्मपुण्यहानिफलत्वा-

दत्तात्रेयीयम् ।

॥ ७६ ॥ तर्हि युष्माकमनिच्छायामप्यस्मत्प्रीतये विष्णुः स्मर्यताम् ॥ ७७ ॥ प्रयाससाध्यं विष्णुस्मरणं भवत्प्रीतयेऽपि कथं कर्तव्यं कृते वा किं फलमित्यत आह—आयास इति ॥ शोभनमितीष्टप्राप्तिः पापक्षय इत्यनिष्टनिवृत्तिरुक्ता भवति । अहर्निशमित्यनेन सदाकाल इति दर्शितं । तदुक्तं "अपवित्रः पवित्रोवा" इत्यादिना ॥ ७८ ॥ सर्वभूतस्थिते सर्वभूतेष्वन्तर्यामितयाऽवस्थिते तस्मिन् विष्णौ मतिर्भवतां जायताम् । तदधिष्ठानसर्वभूतेषु मैत्री जायताम् । एवं कृते सर्वक्लेशान्प्रहास्यथेत्यर्थः ॥ ७९ ॥ ननु सर्वभूतेषु मैत्री दुष्करा मदमत्सरादिभिः सन्तप्यमानेषु धनविद्यादिगर्वितेषु स्वस्मिन् बद्धवैरेषु स्वस्य तेषु द्वेषस्य दुष्परिहरत्वादित्याशङ्कयाऽऽह—तापत्रयेणेति ॥ तापत्रयेण आध्यात्मिकादिदुःखत्रयेण । एतज्जगदभिहतं पीडितमिति यदा जानन्ति तदा शोच्येषु कृपाविषयेषु तेषु भूतेषु कः प्राज्ञो द्वेषं करोति । द्वेषकरणं त्वविवेकिन इति भावः ॥ ८० ॥ भूतानि भद्राणि धनविद्यादिसंपन्नानि अहं परं केवलं हीनशक्तिः धनाद्यार्जनशक्तिरहित इति मतिर्यदा । तथाऽपि तेषु तेषु मुदं प्रीतिं कुर्वीत । नतु द्वेषं ।

[ पा० ] १ ख—ह. आयास .

बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ।
शोच्यान्यतिमोहेन व्याप्तानीति मनीषिणा
एते भिन्नदृशां दैत्य विकल्पाः कथिता मया ।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥८३॥
विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत् ।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥ ८४ ॥

चित्सुखीयम् ।

अहं परं स्वयमेव हीनशक्तिः सुखसाधनसंपादनासमर्थ इति । तथाऽपि परेषु द्वेषो नकरणीयः । यस्मात् द्वेषस्य जन्मान्तरकृतस्य एवाक्षमन्यनुभूयमाना हानिः फलं । ततो भवान्तरेऽपि हानिर्माभूदिति मत्वा इदानीमपि द्वेषो नकरणीय इति भावः ॥ ८१ ॥ बद्धं दृढत्वेन स्वीकृतं वैरं यैस्तानि बद्धवैराणि । यस्मिन् द्वेषं कुर्वन्ति चेत्ततस्तथाऽपि मनीषिणा विदुषा शोच्यानि ॥ ८२ ॥ एते विकल्पाः विविधप्रकाराः । क्रोधादिनिरसनोपायविशेषाः । भिन्नदृशा भेददृशा । तत्र भेददृशि अभ्युपगमं स्वीकारं कृत्वा कथिताः । नतु परमार्थदृशा । संक्षेपः परमार्थवस्तुसङ्ग्रहः ॥ ८३ ॥ सर्वभूतस्य सर्वभूतात्मनस्

श्रीधरीयम् ।

त्यहमेव केवलं धनधान्यार्जनहीनशक्तिस्तथापि तथाऽपि तेषु सुखं प्रीतिमेव कुर्वीत । न तु द्वेषं । यतो द्वेषस्य फलं हानिरेव । तथाहि न्यायविदः "इष्टसाधनज्ञानस्य रागस्य उपादानं फलम् । अनिष्टसाधनज्ञानस्य द्वेषतो हानिः फलं" इति वर्णयन्ति । अतो हानिफलो द्वेषो न कार्य इत्यर्थः ॥ ८१ ॥ बद्धवैराणीति । यदि येऽद्यैव बद्धवैराणि यस्मिन् द्वेषं कुर्वन्ति तदा मनीषिणा तान्यतीव मोहेन व्याप्तानीति शोच्यानि अनुकम्प्यानि । तेषु सर्वथा द्वेषो न युक्त इत्यर्थः ॥ ८२ ॥ एते च द्वेषोपशमप्रकारा मध्यमाधिकारिणमेवोक्ताः न तूत्तमाधिकारिणामित्याह—एत इति । भिन्नदृशां भेददृष्टीनां । छिन्नदृशामिति वा पाठः । तत्र भेददृष्ट्यङ्गीकारं कृत्वा एते विकल्पा द्वेषोपशमप्रकाराः कथिताः । उत्तमानां

विष्णुचित्तीयम् ।

विस्माह्—अथेति ॥ ८१ ॥ बद्धवैराणीति । यत्राऽऽत्मानं प्रति बद्धवैराणि भूतानि द्विषन्ति । तथाप्यहो मोहेन व्याप्तानीति तानि शोच्यानि तेषूपेक्षा कार्या ॥ ८२ ॥ एते मैत्र्यादिविचित्रसाधनविकल्पा भिन्नदृशां मध्यमाधिकारिणां गतमभ्युपगम्योक्ताः । भिन्नदृशां स्वात्मानो ते हि भिन्नं जगत्पश्यन्ति न भगवदात्मकत्वेनाभिन्नम् । प्रसन्नचित्तानामुत्तमाधिकारिणां मतं तु मत्तः संक्षिप्तं श्रूयतामित्याह—एत

इत्यादेवीयम् ।

यतो द्वेषं कुर्वतः द्वेषफलं हानिः स्वश्रेयोहानिः ॥ ८१ ॥ भूतानि बद्धवैराणि आत्मनि द्वेषं कुर्वन्ति चेत्तदा तानि अहो अतिमोहेन व्याप्तानीति शोच्यान्यनुकम्प्यानि । तेषु द्वेषो न कार्य इत्यर्थः । अत्र द्वेषस्य हानिफलकत्वे कर्तव्योक्तिरुत्तमविषया । तदुक्तं महासंहितायां "उत्तमश्चात्मनो नित्यं मात्सर्यं परिवर्जयेत् । कुरुते यत्र मात्सर्यं तत्तस्य च विहीयते" इति ॥ ८२ ॥ एतेच द्वेषोपशमप्रकारा अल्पज्ञानिनामेवोक्ताः नतु पूर्णज्ञानिनामित्याह—एत इति ॥ भिन्नदृशामल्पज्ञानिनां । अभ्युपगममङ्गीकारं कृत्वा । तानुद्दिश्येतियावत् । एते विकल्पाः द्वेषोपशमप्रकाराः मया कथिताः । पूर्णज्ञानिनामुत्तमाधिकारिणां द्वेषोपशमप्रकारसंक्षेपो मत्तः श्रूयतां ॥ ८३ ॥ तमेव प्रकारमाह—विस्तारइति ॥ इदं विश्वं समस्तं जगत् सर्वभूतस्य सर्वेष भूतस्य सर्वान्तर्यामिणो विष्णोर्विस्तारः । विस्तारस्थानं मन्नाद्यन्यानभे-

रत्नगर्भीयम् ।

दसंभाविनी ॥ ५६ ॥ तमेवाह—विस्तार इति ॥ सर्वभूतस्य सर्वात्मनो विष्णोरिदं सर्वं जगत् ।

[ पा० ] १ घ. तदा । २ ब. शोच्यान्यहोऽतिमोहेन । ३ [श्रीध० पा०] छिन्नदृशां [वि० पा०] भिन्नदृशा

समुत्सृज्यासुरं भावं तस्माद्यूयं यथा वयम् ।
तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ॥ ८५ ॥
यां नाग्निना न चार्केण नेन्दुना न च वायुना ।
पर्जन्यवरुणाभ्यां वा न सिद्धैर्न च राक्षसैः ॥ ८६ ॥
न यक्षैर्न च दैत्येन्द्रैर्नोरगैर्न च किन्नरैः ।
न मनुष्यैर्न पशुभिर्दोषैर्नैवात्मसम्भवैः ॥ ८७ ॥
ज्वराक्षिरोगातीसारप्लीहगुल्मादिकैस्तथा ।
द्वेषेर्ष्यामत्सराद्यैर्वा रागलोभादिभिः क्षयम् ॥ ८८ ॥
न चान्यैर्नीयते कैश्चिन्नित्या यात्यन्तनिर्मला ।
तामाप्नोत्यमले न्यस्य केशवे हृदयं नरः ॥ ८९ ॥

चित्सुखीयम् ।

विष्णोः सर्वमिदं जगत् । विस्तारः विभूतिः । तस्मादात्मवदभेदेन द्रष्टव्यं । तत्तुद्वेगवतया ॥ ८४ ॥ यथा वयमासुरं भावं समुत्सृज्य यत्नं कुर्मस्तथा यूयं वयं च करिष्यामः यथा निर्वृतिं प्राप्स्यामः । तथेति पद-स्योभयत्राप्यनुषङ्गः ॥ ८५ ॥ या निर्वृतिर्मुक्तिरग्न्यादिभिः क्षयं न नीयते तां केशवे हृदयं न्यस्य प्राप्नो-तीत्यन्वयः ॥ ८६ ॥ आत्मसंभवैः आत्मतयाभिमन्यमानस्थूलसूक्ष्मदेहसंभवैः ॥ ८७ ॥ तानेव दोषा-नाह—ज्वरेत्यादिना ॥ ईर्ष्या नाम परेषामुन्नतावक्षमा । मत्सरः समानगुणेषु हीनत्वमहः ॥ ८८ ॥

श्रीधरीयम् ।

तु परमार्थसंक्षेपो मत्तः श्रूयताम् ॥ ८३ ॥ तमेवाह—विस्तार इति ॥ ८४ ॥ समुत्सृज्येति । आसुरं भावं रागद्वेषादिस्वभावं सम्यगुत्सृज्य यूयं वयं च यथा निर्वृतिं यथा येन प्रकारेण प्राप्स्यामः तथा यत्नं करिष्यामः ॥ ८५ ॥ तामेव निर्वृतिं तत्प्रयत्नं च विशिनष्टि—नैवाग्निनेत्यादिचतुर्भिः ॥ ८६ ॥ ॥ ८७ ॥ ८८ ॥ नेति । या विमोक्षाख्या सा अग्न्यादिना अन्यैरपि कैश्चिदभयं न नीयते तां निर्वृतिं केशवे हृदयं न्यस्य प्राप्नोतीति चतुर्थेनान्वयः । तत्र नैवाग्निनेत्याधिदैविकैरुपघातैः क्षयो वार्यते । न मनुष्यैर्न पशुभिरित्याधिभौतिकैः । दोषैर्नैवात्मसम्भवैरिति शारीरमानसभेदेनाध्यात्मिकैः । तत्र शारी-रैर्ज्वरादिभिः मानसैर्द्वेषादिभिः अन्यैश्च तन्मूलभूतैरविद्यास्मितादिभिः या क्षयं न प्राप्यते सा निर्वृतिं

विष्णुचित्तीयम् ।

इति ॥ ८३ ॥ तमेवाह—विस्तार इति ॥८४॥ समुत्सृज्येति । आसुरं भावं देहात्माभिमानम् ॥८५॥ निर्वृतिं विशिनष्टि—नैवाग्निनेत्यादिभिः—नैवाग्निनेति । अग्न्यादिजं दुःखमाधिदैविकम् ॥८६॥ नेति । मनुष्यादिजं दुःखमाधिभौतिकम् । आत्मदोषजं दुःखमाध्यात्मिकम् ॥ ८७ ॥ तदाध्यात्मिकं दुःखं द्विधे-त्याह—ज्वरेति । ज्वरादि शारीरं । द्वेषादि मानसम् ॥ ८८ ॥ नेति । अन्यैरविद्यादिभिः ॥ ८९ ॥

कृष्णाश्रेयीयम् ।

देन विचक्षणैः पूर्णतया विचक्षणैर्यथायोग्यपूर्णज्ञानिभिः आत्मनो जगद्द्रष्टव्यं । सर्वेन विष्णवधिष्ठानत्व-बुद्ध्याऽऽत्मवत्प्रेम कार्यमित्यर्थः । अत्र भिन्नाभिन्नशब्दयोरल्पपूर्णवाचित्वंतु । "भिन्नमल्पं विजानीयाद-भिन्नं पूर्णमुच्यते" इतिवचनानुसारेण द्रष्टव्यं ॥ ८४ ॥ आसुरं भावं । "ईश्वरोऽहमहं भोगी" इत्यादिगी-तोक्तमासुरं भावं समुत्सृज्य यूयं वयं च यथा येन प्रकारेण निर्वृतिं प्राप्स्यामः तथा यत्नं करिष्याम इत्यन्वयः । युगपद्वचने उत्तमः पुरुषः ॥ ८५ ॥ तामेव निर्वृतिं विशिनष्टि—येत्यादिना ॥ या मोक्षे जायमानपरमानन्दावाप्तिलक्षणा निर्वृतिरग्न्यादिना अन्यैश्च क्षयं न नीयते । तां निर्वृतिं केशवे हृदयं न्यस्य प्राप्नोतीति चतुर्थेनान्वयः । तत्राग्न्यादिनेत्याधिदैविकोत्पातैः क्षयो वार्यते ॥ ८६ ॥ न मनुष्यै-रित्यादिनाऽऽधिभौतिकैः । दोषैर्नैवात्मसंभवैरित्यादिना शारीरमानसभेदेनाध्यात्मिकैः ॥ ८८ ॥ अन्यैस्त-

रत्नगर्भीयम् ।

विस्तारो विभूतिः । तस्मादात्मवदभेदेन द्रष्टव्यम् ॥ ८४ ॥ वेदान्तिनस्तु केशवे तत्पदलक्ष्ये हृदयं त्वं-

[ पा० ] १ [वि० पा० नैवाग्निना. २ ग ट ति मत लक्ष्य वा केशवे हृदि सन्निवे । क ज झ. ट ठ त्वमल न्यस्य.

असारसंसारविवर्तनेषु
मा यात तोषं प्रसभं ब्रवीमि ।
सर्वत्र दैत्याः समतामुपेत
समत्वमाराधनमच्युतस्य ॥ ९० ॥
तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं
धर्मार्थकामैरलमल्पकास्ते ।
समाश्रिताद्ब्रह्मतरोरनन्ता-
न्निःसंशयं प्राप्स्यथ वै महत्फलम् ॥९१॥
इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
सप्तदशोऽध्यायः ॥ १७ ॥

चित्सुखीयम् ।

असारश्चासौ संसारश्चेत्यसारसंसारः । तस्मिन्विवर्तनानि देवतिर्यङ्मनुष्यादिभावेषु सञ्चरणानि तेषु । तोषं मा यात । अपि तु सर्वभूतेषु समतां रागद्वेषादिवैषम्यहीनतां ॥ ९० ॥ आराधने सति किंस्वात्प्रसादः । प्रसन्नेऽपि तस्मिन् किंस्यादित्यत आह—तस्मिन्निति ॥ ९१ ॥ इति श्रीचित्सुखमुनिवि० श्रीविष्णुपु०टिप्पण्यां प्रथमांशे सप्तदशोऽध्यायः ॥ १७ ॥

श्रीधरीयम् ।

केशवस्तुत्या प्राप्नोतीत्यर्थः ॥ ८९ ॥ सर्वोपदेशसारमाह—असारेति । असारो यः संसारः तत्र विवर्तनानि देवमनुष्यतिर्यगादिजन्मानि तेषु तत्तदुचितैर्भोगैस्तोषं मा यात नमाप्नुत । किन्तु सर्वभूतेषु समतां समदर्शित्वामुपेत प्राप्नुत । तदेवाच्युतस्याराधनम् प्रीणनम् ॥ ९० ॥ ततः किमत आह—तस्मिन्निति । तस्मिन्प्रसन्ने प्रीते सति न किञ्चिद्दुर्लभं । तथाऽपि तुच्छत्वात् त्रिवर्गो न प्रार्थ्यः । मोक्षोऽपि न प्रार्थ्यः । मूलमूलमाश्रितस्योपरि यथा तत्फलं पतति तथैव ब्रह्मतरुलक्षणादनन्तात्तमाश्रितान्प्रति मुक्तिफलप्रपातस्यावश्यं भावित्वादित्यर्थः ॥ ९१ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तदशोऽध्यायः ॥ १७ ॥

विष्णुचित्तीयम् ।

उपसंहरति—असारेति । अपारसंसारेति च पाठः । बहुदेहपरिवर्तनप्रदेषु स्वर्गादिपदेषु सर्वत्र विष्णुबुद्धिं कुरुत ॥ ९० ॥ तस्मिन्निति । सर्वत्र सन्निहिताद्ब्रह्मकल्पतरोर्मोक्षफललाभो निःसंशयः ॥ ९१ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तदशोऽध्यायः ॥ १७ ॥

दत्तात्रेयीयम् ।

स्थूलसूक्ष्माविद्यात्मककर्मोर्मिभिः । तत्र हेतुमाह—नित्येति ॥ ८९ ॥ उपसंहरति ॥ प्रवाहनित्यत्वाभिप्रायेणापारत्वं । तस्मिन्विवर्तनानि देवमनुष्यतिर्यगादिजन्मानि । तेषु तत्तदुचितैर्भोगैस्तोषं मा यात नमाप्नुत ॥ किन्तु सर्वत्र सर्वभूतेषु समतां यथायोग्यवस्तुदर्शितां उपेत प्राप्नुत । समत्वमच्युतस्याराधनं प्रीणनं ॥ ९० ॥ ततः किमत आह—तस्मिन्निति ॥ तस्मिन्नच्युते प्रसन्ने प्रीते सति अलभ्यं किं किञ्चिदपि । तथाऽपि धर्मार्थकामैस्त्रिवर्गैरलं । यतस्तेऽल्पकास्तुच्छाः । तर्ह्यच्युताराधनस्य किं फलमित्यत आह—समाश्रितादिति ॥ ब्रह्मतरोः परब्रह्माख्यतरोः । पक्वफलप्रपातः भक्तिपरिपाकलभ्यमोक्षाख्यफलप्राप्तिः । निःसंशयोऽवश्यंभावीत्यर्थः ॥ ९१ ॥ इति श्रीदत्तात्रेयाचा०सुबोधि० श्रीविष्णुपुराणव्याख्यायां प्रथमांशे सप्तदशोऽध्यायः ॥ १७ ॥

रत्नगर्भीयम् ।

पदलक्ष्यं न्यस्य एकत्वेनानुसन्धाय निर्वृतिं मुक्तिं प्राप्नोतीति वदन्ति ॥ ८६ ॥ इति श्रीरत्नग० विरचितश्रीविष्णुपु० व्याख्यासारे प्रथमांशे सप्तदशोऽध्यायः ॥ १७ ॥

[पा०] १ घ. च. ञ. ड. अपार. २ च. ड. निःसंशयः पक्वफलप्रपातः । क—च. निःसंशयो मुक्तिफलप्रपातः.

## अष्टादशोऽध्यायः ॥ १८ ॥

स्वतनयानयं दानवेभ्यः श्रुतवतः हिरण्यकशिपोः प्रह्लादस्य विषदानाद्यनेकोपायैर्हनने यत्नः ॥ १ ॥ दैत्यपुरोहितैः प्रह्लादवधार्थोत्पादितकृत्यया पुरोहितानामेव नाशे समुत्पन्ने प्रह्लादेन विष्णुस्तवनपूर्वकं तेषामुज्जीवनम् ॥ २ ॥

श्रीपराशर उवाच ॥

तस्यैतां दानवाश्चेष्टां दृष्ट्वा दैत्यपतेर्भयात् ।
आचचक्षुः स चोवाच सूदानाहूय सत्वरः ॥ १ ॥

हिरण्यकशिपुरुवाच ॥

हे सूदा मम पुत्रोऽसावन्येषामपि दुर्मतिः ।
कुमार्गदेशिको दुष्टो हन्यतामविलम्बितम् ॥ २ ॥
हालाहलं विषं तस्य सर्वभक्ष्येषु दीयताम् ।
अविज्ञातमसौ पापो हन्यतां मा विचार्यताम् ३ ॥

श्रीपराशर उवाच ॥

ते तथैव ततश्चक्रुः प्रह्लादाय महात्मने ।
विषदानं यथाज्ञप्तं पित्रा तस्य महात्मनः ॥ ४ ॥
हालाहलं विषं घोरमनन्तोच्चारणेन सः ।
अभिमन्त्र्य सहान्नेन मैत्रेय बुभुजे तदा ॥ ५ ॥
अविकारं स तद्भुक्त्वा प्रह्लादः स्वस्थमानसः ।
अनन्तख्यातिनिर्वीर्यं जरयामास तद्विषम् ॥ ६ ॥

विष्णुचित्तीयम् ।

अविकारं विकाररहितमिति क्रियाविशेषणं । अनन्तख्यातिः अनन्तविषयानुस्मृतिः तया निर्वीर्यं

श्रीधरीयम् ।

तस्येति । चेष्टामुपदेशरूपाम् ॥ १ ॥ हे सूदा इति । कुमार्गस्य देशिकः उपदेष्टा ॥ २ ॥ हालाहलमिति । पूर्वं शस्त्रसर्पगजाग्नीन्दृष्ट्वा अनेन कोऽपि मन्त्रादिप्रतीकारः कृतः । तस्मादविज्ञातं यथा भवत्येवं सर्वभक्ष्येषु रम्भकलुकादिषु विषं दत्त्वा हन्यतामित्यर्थः ॥ ३ ॥ ४ ॥ हालाहलविषमिति । अनन्तस्येति । नामाभक्ष्यभोज्यादिसर्वमभिमन्त्र्य तस्मै निवेद्य तदुच्छिष्टमसावरूपेण नित्यमसौ भुङ्क्ते ॥५॥ अविकारमिति । तस्मादनन्तस्य ख्यात्या कीर्त्या निर्वीर्यत्वादविकारं यथा भवत्येवं जरयामास ॥ ६ ॥

विष्णुचित्तीयम् ।

तस्येति । चेष्टामुपदेशात्मिकाम् ॥ १ ॥ हे सूदा इति । देशिकः उपदेशकृत् ॥ २ ॥ हालाहलमिति । अविज्ञातं ज्ञाते हि स पूर्ववत्परिहरिष्यतीति ॥ ३ ॥ ४ ॥ ५ ॥ अविकारमिति । सर्वविषहरत्वान्मृत्युञ्जयत्वाच्च भुक्तौ नित्यजप्यस्यानन्तनाम्नः ख्यात्या कीर्तनेन निर्वीर्यं विषम् । अविकारम्

सत्यव्रतीयम् ।

चेष्टामुपदेशात्मिकां ॥ १ ॥ स्वयं दुष्टः अन्येषामपि कुमार्गदेशिकः कुमार्गस्योपदेष्टा । अविलम्बितं यथा भवति तथा हन्यतां ॥ २ ॥ अविज्ञातं यथा भवति तथा दीयतां । ज्ञातं चेद्विषं न भक्षिष्यतीति भावः । माविचार्यतां राजपुत्रः कथं हन्तव्य इति विचारो न क्रियतां ॥ ३ ॥ अनन्तोच्चारणेन अनन्तनाम्न उच्चारणेनाभिमन्त्र्यान्नेन सह विषं बुभुजे ॥ ५ ॥ अनन्तनाम्नः ख्यात्या कीर्तनेन निर्वीर्यं विगत-

रत्नगर्भीयम् ।

पुरोधसो दैत्यपतेर्हन्तुकामान्स्वकृत्यया । प्रह्लादोऽस्थापयत्तान् प्राणजीवयदितीर्यते ॥ १ ॥ अनन्तस्मृतिनिर्वीर्यमिति पाठे स्मृत्या तदनुसन्धानेन निर्वीर्यमतोऽविकारं । कंपादिशून्यं यथास्यादेवं जरयामास

[ पा० ] १ ज—द. तस्यैव २ क. ख. घोरं. ३ ग—ड. च. झ. ट. ठ. वध्यतां. ४ क. घ. तत्तथैव ततश्चक्रुः । झ दस्युकास्ते तथाचक्रु । ग तेतथैव बहुसत्ती. ५ [ श्रीध० पा० ] हालाहलविषं. ६ घ. अयोकारं. ७ [रत्न० पा०] स्मृति. ८ ग—छ. दुर्विषं । क. निर्विषं.

कृत्यया दह्यमानांस्तान्विलोक्य स महामतिः ।
त्राहि कृष्णेत्यनन्तेति वदन्नभ्यवपद्यत ॥ ३८ ॥

प्रह्लाद उवाच ॥

सर्वव्यापिञ्जगद्रूप जगत्स्रष्टर्जनार्दन ।
पाहि विप्रानिमानस्माद्दुःसहान्मन्त्रपावकात् ३९॥

यथा सर्वेषु भूतेषु सर्वव्यापी जगद्गुरुः ।
विष्णुरेव तथा सर्वे जीवन्त्वेते पुरोहिताः ४० ॥

यथा सर्वगतं विष्णुं मन्यमानोऽनपायिनम् ।
चिन्तयाम्यरिपक्षेऽपि जीवन्त्वेते पुरोहिताः ४१

ये हन्तुमागता दत्तं यैर्विषं यैर्हुताशनः ।
यैर्दिग्गजैरहं क्षुण्णो दष्टः सर्पैश्च यैरपि ॥ ४२ ॥

तेष्वहं मित्रभावेन समः पापोऽस्मि न क्वचित् ।
यथा तेनाद्य सत्येन जीवन्त्वसुरयाजकाः ॥४३॥

श्रीपराशर उवाच ॥

इत्युक्तास्तेन ते सर्वे संस्पृष्टाश्च निरामयाः ।
समुत्तस्थुर्द्विजा भूयस्तमूचुः प्रश्रयान्वितम् ॥४४॥

पुरोहिता ऊचुः ॥

दीर्घायुरप्रतिहतो बलवीर्यसमन्वितः ।
पुत्रपौत्रधनैश्वर्यैर्युक्तो वत्स भवोत्तमः ॥ ४५ ॥

श्रीपराशर उवाच ॥

इत्युक्त्वा तं ततो गत्वा यथावृत्तं पुरोहिताः ।
दैत्यराजाय सकलमाचचख्युर्महामुने ॥ ४६ ॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
अष्टादशोऽध्यायः ॥ १८ ॥

---

चित्सुखीयम् ।

तथा ॥ ३४ ॥ अभ्यवपद्यत उपगतवान् ॥ ३८ ॥ पापक । पातकमिति वा पाठे कारणशब्देन तत्कार्यमुच्यते । "गोभिःश्रीणीत मत्सरम्" इतिवत् ॥४१॥ इति श्रीचित्सुख०श्रीविष्णुपु०टिप्पण्यां प्रथमांशे अष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरीयम् ।

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ कृत्ययेति । अभ्यवपद्यत रक्षणार्थं तदभिमुखम् अधावदित्यर्थः । इतःपरं स्पष्टमन्यत् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे अष्टादशोऽध्यायः ॥१८॥

विष्णुचित्तीयम् ।

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ कृत्ययेति । अभ्यवपत्तिरनुग्रहः ॥ ३८ ॥ ॥ ३९ ॥ यथेति । यथेत्यादिना अपकारिष्वप्युपकुर्वन्तीति वैष्णवानामाचारः प्रदर्शितः ॥ ४० ॥४१॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशेऽष्टादशोऽध्यायः ॥ १८ ॥

दत्तात्रेयीयम् ।

अभ्यवपद्यत रक्षणार्थं तदभिमुखमधावत् ॥ ३८ ॥ अपकारिष्वपि सज्जन उपकारमेव करोतीति दर्शयितुमपकारिणामपि तेषां जीवनमेव प्रार्थयते—सर्वव्यापिन्नित्यादिना ॥ ३९ ॥ पापक दुष्ट ॥ ४१ ॥ पापोऽनिष्टचिन्तकः ॥ ४३ ॥ बलं सामर्थ्यं । वीर्यं तेजः ॥ ४५ ॥ इति श्रीदत्ता०सुबो०श्रीविष्णुपुराणव्याख्यायां प्रथमांशे अष्टादशोऽध्यायः ॥ १८ ॥

रत्नगर्भीयम् ।

॥ २४ ॥ तत्र हृदि ॥ ३५ ॥ इति श्रीरत्नग० विरचितश्रीविष्णुपु० व्याख्यासारे प्रथमांशे अष्टादशोऽध्यायः ॥ १८ ॥

---

[ पा० ] १ [चि० पा०] नपातक । [दत्ता० पा०] नपापक । २ क—ट ड ट ठ तथा द्विजा. ३ ग—ड ढ. ट ठ संहृष्टाश्च ४ क घ ङ छ भविष्यसि ५ क ख द्विजोत्तमा

## एकोनविंशोऽध्यायः ॥ १९ ॥

कृत्यां विफलीभूतां श्रुत्वा प्रह्लादस्य भगवद्भक्तिदार्ढ्यं च दृष्ट्वा पुनस्तद्वधार्थं हिरण्यकशिपुना शंबरमायाप्रयोगादिकर्तव्यकथनम् ॥ १ ॥ तद्रक्षार्थं भगवता सुदर्शनप्रेषणम् ॥ २ ॥ समयान्तरे दैत्यराजस्य पुरतः प्रह्लादेन भगवन्माहात्म्यवर्णने कृते प्रह्लादहननार्थं हिरण्यकशिपुना नागपाशबन्धनाद्युपायकथनम् ॥ ३ ॥ प्रह्लादकृता श्रीविष्णुस्तुतिः ॥ ४ ॥

श्रीपराशर उवाच ॥

हिरण्यकशिपुः श्रुत्वा तां कृत्यां वितथीकृताम्।
आहूय पुत्रं पप्रच्छ प्रभावस्यास्य कारणम् ॥१॥

हिरण्यकशिपुरुवाच ॥

प्रह्लाद सुप्रभावोऽसि किमेतत्ते विचेष्टितम्।
एतन्मन्त्रादिजनितमुताहो सहजं तव ॥ २ ॥

श्रीपराशर उवाच ॥

एवं पृष्टस्तदा पित्रा प्रह्लादोऽसुरबालकः।
प्रणिपत्य पितुः पादाविदं वचनमब्रवीत् ॥ ३ ॥

प्रह्लाद उवाच ॥

न मन्त्रादिकृतं तात न च नैसर्गिको मम।
प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥४॥
अन्येषां यो न पापानि चिन्तयत्यात्मनो यथा।
तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥ ५ ॥
कर्मणा मनसा वाचा परपीडां करोति यः।
तद्बीजं[1] जन्म फलति प्रभूतं तस्य चाशुभम् ॥६॥
सोऽहं न पापमिच्छामि न करोमि वदामि वा।
चिन्तयन्सर्वभूतस्थमात्मन्यपि च केशवम् ॥७॥

चित्सुखीयम्।

पापानि दुःखानि। पापागमो दुःखागमः। हेत्वभावात् परद्रोहादिनिमित्ताभावात् ॥ ५ ॥ तद्बीजं जन्म सदैव परपीडादि बीजं कारणं यस्य जन्मनस्तत्तद्बीजं जन्म। तच्च प्रभूतं बहुलं दुःखं तस्य

श्रीधरीयम्।

॥ १ ॥ प्रह्लादेति। सहजं नैसर्गिकम् ॥ २ ॥ ३ ॥ नेति। सामान्यः समानः ॥ ४ ॥ किंच अन्येषामिति। अन्येषां यः पापानि पापफलानि दुःखानि न चिन्तयति तस्य पापागमो दुःखागमो नास्ति ॥ ५ ॥ कर्मणेति। यतस्तत्पीडाकरणमेव बीजं तस्माद्यस्य जन्म यस्यैतदशुभं पापं तस्य कर्तुः

विष्णुचित्तीयम्।

॥ १ ॥ २ ॥ ३ ॥ नेति। समान एव सामान्यः। सर्वगतोऽप्यच्युतो भक्तस्य शुद्धे हृद्याविर्भवति नान्यस्याशुद्धे ॥ ४ ॥ तां पापदुःखाभावरूपामात्मनो हृच्छुद्धिं चतुःश्लोक्याऽऽह अन्येषामिति ॥ ५ ॥ कर्मणेति। तद्बीजं जन्म सा परपीडैव बीजं यस्य तज्जन्म। तस्य पीडयितुरशुभं फलति। तद्बीज-

दत्तात्रेयीयम्।

सहजं नैसर्गिकं ॥ २ ॥ ३ ॥ यस्ययस्य हृद्यच्युतस्तिष्ठति तस्यतस्यायं प्रभावः सामान्यः। समान एव सामान्यः ॥ ४ ॥ अच्युतस्य सर्वगतत्वेऽपि भक्तस्य शुद्धे हृदये सन्निधिविशेषोऽस्तीति ज्ञापयितुं हृदयस्य शुद्धिप्रकारमाह—अन्येषामित्यादिना। पापानि पापफलानि दुःखानि। पापागमो दुःखागमो नास्ति। हेत्वभावात्। परपीडादिनिमित्ताभावात् ॥ ५ ॥ तद्बीजं जन्म तत्परपीडाकरणमेव बीजं। तस्माज्जन्म यस्य। यस्यैतदशुभं पापं तस्य परपीडाकर्तुः प्रभूतमत्यधिकं अशुभफलं फलति। दुःखातिशयजनकं भवतीत्यर्थः ॥ ६ ॥ सोऽहं भवदृष्टसामर्थ्योपेतोऽहं। पापमन्येषां पापं दुःखं ॥ ७ ॥

रत्नगर्भीयम्।

प्रह्लादस्योनविंशे तु पुनः कदनमुल्बणं। अचलैश्चाब्धिरव्याब्धौ भगवत्स्तुतिरुच्यते ॥ १ ॥ तत्पर-

१ [पा०] [वि० पा०] तद्बीजजन्म फलति.

शारीरं मानसं दुःखं दैवं भूतभवं तथा ।
सर्वत्र शुभचित्तस्य तस्य मे जायते कुतः ॥ ८ ॥
एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥९॥

श्रीपराशर उवाच ॥

इति श्रुत्वा स दैत्येन्द्रः प्रासादशिखरे स्थितः ।
क्रोधान्धकारितमुखः प्राह दैतेयकिङ्करान् ॥१०॥

हिरण्यकशिपुरुवाच ॥

दुरात्मा क्षिप्यतामस्मात्प्रासादाच्छतयोजनात् ।
गिरिपृष्ठे पतत्वस्मिञ्छिलाभिन्नाङ्गसंहतिः ॥११॥

श्रीपराशर उवाच ॥

ततस्तं चिक्षिपुः सर्वे बालं दैतेयदानवाः ।
पपात सोऽप्यधः क्षिप्तो हृदयेनोद्वहन्हरिम् ॥१२॥
पतमानं जगद्धात्री जगद्धातरि केशवे ।
भक्तियुक्तं दधारैनमुपसङ्गम्य मेदिनी ॥ १३ ॥
ततो विलोक्य तं स्वस्थमविशीर्णास्थिपञ्जरम् ।
हिरण्यकशिपुः प्राह शम्बरं मायिनां वरम् ॥१४॥

हिरण्यकशिपुरुवाच ॥

नास्माभिः शक्यते हन्तुमसौ दुर्बुद्धिबालकः ।
मायां वेत्ति भवांस्तस्मान्माययैनं निषूदय ॥१५॥

शम्बर उवाच ॥

सूदयाम्येष दैत्येन्द्र पश्य मायाबलं मम ।
सहस्रमत्र मायानां पश्य कोटिशतं तथा ॥१६॥

श्रीपराशर उवाच ॥

ततः स ससृजे मायां प्रह्लादे शम्बरोऽसुरः ।
विनाशमिच्छन्दुर्बुद्धिः सर्वत्र समदर्शिनि ॥१७॥

---

चित्सुखीयम् ।

पत्पीडाकर्तुः फलति जनयतीत्यर्थः ॥ ६ ॥ शारीरं मानसमिति द्विप्रकारं आध्यात्मिकं । दैवमाधि-दैविकं । भूतभवं आधिभौतिकं ॥ ८ ॥ क्रोधेनान्धकारितं दुर्दर्शं मुखं यस्य स तथा क्रोधान्धकारित-

श्रीधरीयम् ।

प्रभूततरमधिकम् अशुभफलं फलति । अतिदुःखफलात्मतया वर्धते ॥ ६ ॥ ७ ॥ ८ ॥ एवमिति । एवं सर्वभूतमयं हरिं ज्ञात्वा सर्वेषु भूतेषु तद्भक्तिः कर्तव्या ॥ ९ ॥ इतीति । क्रोधेनान्धकारितं आ-तान्धकारमिव दुष्प्रेक्ष्यं मुखं यस्य ॥ १० ॥ शस्त्राग्निविषादिभिरुक्तानां नाशितमत्वादिभिः तात्पर्यं सम्भ-वति, पतने तु न निश्चितप्रमत्तत्वाशयेन दैत्यानाज्ञापयति—दुरात्मा क्षिप्यतामिति ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ बालत्वेऽप्यविहन्तुमशक्यत्वात्तद्वधे मायाविनं नियुङ्क्ते नास्माभिरिति ॥ १५ ॥ १६ ॥

विष्णुचित्तीयम् ।

जन्मेति च पाठः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ नेति । हन्तुं न

दत्तात्रेयीयम् ।

शारीरं मानसमित्यनेन द्विविधमाध्यात्मिकं दुःखमुच्यते । दैवमाधिदैविकं । भूतभवमाधिभौतिकं ॥८॥ अव्यभिचारिणी भक्तिः कर्तव्या । सर्वभूतमयं सर्वभूतेषुस्थितं ॥ ९ ॥ क्रोधेनान्धकारितं जातान्ध-कारमिव दुष्प्रेक्ष्यं मुखं यस्य स तथा ॥ १० ॥ प्रह्लादस्य प्रासादात्पातनं शस्त्रादिवत्तदृष्ट-मेति मत्वा दैत्यानाज्ञापयति—दुरात्मेति । अस्मिन्प्रासादादधोदेशे गिरौ ॥ ११ ॥ बालत्वेऽप्यविहन्तुम-शक्यत्वात्तद्वधाय मायाविनं नियुङ्क्ते—नेति । यतो भवान्मायां वेत्ति अतस्त्वं माययैनं निषूदय मारय ॥ १५ ॥ सहस्रमात्रं अन्यूनानतिरिक्तं कोटीनां शतं यथा तथा पश्य ॥ १६ ॥ सर्वत्र समदर्शिनि

---

[ पा० ] १ दृढचित्तस्य । घ. च. शान्तचित्तस्य. २ च. छ. बालमात्मना. ३ ग. स्वस्थमविशीर्णा. ४ क—ग. ट. ड. दैत्यं. ५ क—ग. ङ. वन्ध्यं. ६ क. ग—झ. ट. ड. दुर्बुद्धिबालकः. ७ क. घ—ड. सूदयाम्येष । ग. पश्यैतद्ध. ८ ट. ड. मायानां. ९ ग. समदर्शिनि

समाहितमतिर्भूत्वा शम्बरेऽपि विमत्सरः ।
मैत्रेय सोऽपि प्रह्लादः सस्मार मधुसूदनम् ॥१८॥

श्रीपराशर उवाच ॥

ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् ।
आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥१९॥
तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमेकैकं च विनाशितम् ॥२०॥
संशोषकं तथा वायुं दैत्येन्द्रस्त्विदमब्रवीत् ।
शीघ्रमेष ममादेशाद्दुरात्मा नीयतां क्षयम् ॥२१॥
तथेत्युक्त्वा तु सोऽप्येनं विवेश पवनो लघु ।
शीतोऽतिरूक्षः शोषाय तद्देहस्यातिदुःसहः २२॥
तेनाविष्टमथात्मानं स बुध्वा दैत्यबालकः ।
हृदयेन महात्मानं दधार धरणीधरम् ॥ २३ ॥
हृदयस्थस्ततस्तस्य तं वायुमतिभीषणम् ।
पपौ जनार्दनः क्रुद्धः स ययौ पवनः क्षयम् ॥२४॥
क्षीणासु सर्वमायासु पवने च क्षयं गते ।
जगाम सोऽपि भवनं गुरोरेव महामतिः ॥२५॥
अहन्यहन्यथाचार्यो नीतिं राज्यफलप्रदाम् ।
ग्राहयामास तं बालं राज्ञामुशनसा कृताम् ॥२६॥
गृहीतनीतिशास्त्रं तं विनीतं च यदा गुरुः ।
मेने तदैनं तत्पित्रे कथयामास शिक्षितम् ॥२७॥

आचार्य उवाच ॥

गृहीतनीतिशास्त्रस्ते पुत्रो दैत्यपते कृतः ।
प्रह्लादस्तत्त्वतो वेत्ति भार्गवेण यदीरितम् ॥२८॥

हिरण्यकशिपुरुवाच ॥

मित्रेषु वर्तेत कथमरिवर्गेषु भूपतिः ।
प्रह्लाद त्रिषु लोकेषु मध्यस्थेषु कथं चरेत् ॥२९॥

---

चित्सुखीयम् ।

मुरः ॥ १० ॥ शिलामिश्रा अङ्गाना सहतिर्यस्य स तथा ॥ ११ ॥ एकैकशोभावः एकैकश्य । तेन

श्रीधरीयम् ।

॥ १७ ॥ १८ ॥ तत इति । सुदर्शनं सुदर्शनगयम् ॥ १९ ॥ तेनेति । अतस्तेन मायासहस्रं एकैकश्च प्रत्येकं विनाशितम् ॥ २० ॥ दृष्ट्येषु वधोपायेषु प्रतिघातमसौ करोतीति अदृश्यवधोपाय वायुन्नियुक्तेत्याह—संशोषकमिति ॥ २१ ॥ तथेति । लघु शीघ्रं । लघुरिति पाठे वेगवान् । शीतोऽतिरूक्षश्च शीतज्वरप्रायः ॥ २२ ॥ तेनेति । तेनाविष्टं व्याप्तं । धरणीधरं वायुभक्षं शेषस्वरूपम् ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ मित्रेष्विति । त्रिषु कालेषु क्षयवृद्धिसाम्यकालेषु ॥ २९ ॥

विष्णुचित्तीयम् ।

शाम्यते ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ मित्रेष्विति । मित्रेषु सहजप्राकृतकृत्रिमेषु । सहजं मातुलेयादि । प्राकृत

वृत्तात्रेयीयम् ।

समो विष्णुस्सर्वदर्शिनि ॥ १७ ॥ चक्रं सुदर्शनं । भगवच्चक्रस्य सुदर्शनमित्यसाधारणं नाम ॥ १९ ॥ तेन सुदर्शनेन मायासहस्रं एकैकांशेन प्रत्येकं निषूदितं विनाशितं ॥ २० ॥ दृश्यवधोपायप्रतिघातं दृष्ट्वा अदृश्यवधोपायं वायुं नियुङ्क्त इत्याह—संशोषकमित्यादिना ॥ २१ ॥ लघु शीघ्रं । लघुरिति-पाठे वेगवान् । शीतोऽतिरूक्षः शीतज्वररूपः ॥ २२ ॥ धरणीधरं शेषान्तर्गतं वायुं । वायुभक्षकं सङ्कर्षणं ॥ २३ ॥ मित्रेषु सहजप्राकृतकृत्रिमेषु त्रिविधेषु । एवमेवारिवर्गेषु त्रिविधेषु । त्रिषु कालेषु राज्ञां क्षयवृद्धिसाम्यकालेषु । मध्यस्थवर्गोऽपि त्रिविधः । स्वस्य शत्रोश्च भूम्यनन्तरः । क्षयवृद्ध्युदा-

रत्नगर्भीयम् ।

पीडनं बीजं जन्म फलति निष्पादयति । तस्य जन्मनः अशुभं प्रसूतं प्रसवः ॥ ६ ॥ सुष्ठु दर्शनं सु-

---

[ पा० ] १ घ च झ ठ ढ मेकैकशेन सूदितं । क ग ङ छ मेकैकं न निषूदितं । य मेकैकं येन सूदितं २ [धीध० पा०] लघु ३ च विष्ट महात्मानं ४ क—ख ठ ढ शोषणं ५ क सक्षयं गते ६ ख ग ग—ड कालेषु

कथं मन्त्रिष्वमात्येषु बाह्येष्वाभ्यन्तरेषु च ।
चारेषु पौरवर्गेषु शङ्कितेष्वितरेषु च ॥ ३० ॥
कृत्याकृत्यविधानञ्च दुर्गाटविकसाधनम् ।
प्रह्लाद कथ्यतां सम्यक्तथा कण्टकशोधनम् ॥ ३१ ॥
एतच्चान्यच्च सकलमधीतं भवता यथा ।
तथा मे कथ्यतां ज्ञातुं तवेच्छामि मनोगतम् ॥ ३२ ॥

श्रीपराशर उवाच ॥

प्रणिपत्य पितुः पादौ तदा प्रश्रयभूषणः ।
प्रह्लादः प्राह दैत्येन्द्रं कृताञ्जलिपुटस्तथा ॥ ३३ ॥

चित्सुखीयम् ।

एकैकश्येन । इत्थं भावे तृतीया ॥ २० ॥ लघुर्वेगवान ॥ २२ ॥ कण्टकशोधनं शत्रुसंहरण ॥ ३१ ॥

श्रीधरीयम् ।

कथमिति । मन्त्रिषु बुद्धिसहायेषु । अमात्येषु कार्यसहायेषु । तदुक्तम् "मन्त्री बुद्धिसहायः स्यादमात्यः कार्यसाधकः" इति । बाह्येषु शुल्काद्यधिकृतेषु । आभ्यन्तरेषु अन्तःपुरमहानसाद्यधिकृतेषु दूतेषु वा । चारेषु गूढचारेषु चारेषु वा । शङ्कितेषु जित्वा बलाद्दासीकृतेषु भूपेषु । इतरेष्वशङ्कितेषु वा ॥ ३० ॥ कृत्याकृत्यविधानमिति । सन्धिविग्रहयानादिषु कुत्र किं कृत्यं कुत्र किमकृत्यम् एवं प्रकारः । यद्वा कृत्याः भेद्याः तेषामकृत्यविधानम् अभेद्यत्वकरणं । दुर्गं पार्वतौदकादि । आटविका महारण्यनिवासिनः पुलिन्दम्लेच्छादयः तेषां साधनं वशीकरणम् । कण्टकाश्चोराः गूढशत्रवो वा तेषां शोधनं निरसनम् ॥ ३१ ॥ एतदिति । अन्यच्च सामभेदादि ॥ ३२ ॥ प्रणिपत्येति । प्रश्रय एव भूषणं यस्य सः ॥ ३३ ॥

विष्णुचित्तीयम् ।

स्वभूम्यनन्तराः शत्रोरनन्तरम् । कृत्रिमं दानमानवशीकृतं । अरिश्च त्रिविधः । सहजो दायादः । प्राकृतो भूम्यनन्तरादिः । कृत्रिमः कृतापकारः । मध्यस्थाश्च त्रिविधाः । त्रिषु लोकेषु मित्रादिषु त्रिषु जनेषु । कालेष्विति पाठे क्षयवृद्धिस्थानकालेषु । कथं वर्तेत भूतलो हि वर्णमानानामुपभेदमाध्यस्थ्यपूर्णस्वामिपत्यसहिष्णुत्वरूपाः सप्त । यथोक्तम् "इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च । चन्द्रस्य च पृथिव्याश्च नृपः सप्तगुणो भवेत्" इति ॥ २९ ॥ कथमिति । "मन्त्री बुद्धिसहायः स्यादमात्यः कार्यसाधकः । दुर्गाध्यक्षो धनाध्यक्षः सेनाध्यक्षश्च भूपतेः । सूतः पुरोधा दैवज्ञः सर्वेते मन्त्रिणो मताः" । दुर्गाध्यक्षो धनाध्यक्षः । 'सूतः पुरोधाः' इति च पाठः । बाह्या अमात्याः शुल्काध्यक्षादयः । आभ्यन्तरा अन्तःपुरमहानसाद्यधिकृताः । शङ्किताः जितशत्रुभूताः । सापराधा वा । इतरे स्वामिहितैषिणः । धर्माधर्मकामभयपरीक्षासु शुद्धा वा ॥ ३० ॥ कृत्याकृत्येति । कृत्याः भेद्याः । तेषामकृत्यत्वमभेद्यत्वम्य विधानम् । "अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः" इति भेद्याः । जलप्राकारमरुगिरिवनात्मकं पञ्चधा दुर्गम् । आटविकाः वन्या म्लेच्छाद्याः साधनम् । कण्टकश्चोरः क्षुद्रशत्रुर्वा तस्य शोधनम् साधनं ॥ ३१ ॥ एतदिति । अन्यच्चेति नीतिजातम् गम

रत्नगर्भीयम् ।

सीतद्रव्यः स्वस्य शत्रोर्वा विषयस्य निगृह्य माध्यस्थ्यवांश्चेति ॥ २९ ॥ मन्त्रिषु बुद्धिसहायेषु । अमात्येषु कार्यसहायेषु । "मन्त्री बुद्धिसहायः स्यादमात्यः कार्यसाधकः" इति वचनात् । बाह्येषु शुल्काद्यधिकृतेषु । आभ्यन्तरेषु अन्तःपुरमहानसाद्यधिकृतेषु । चारेषु गूढचारेषु । शङ्कितेषु जित्वा बलाद्दासीकृतेषु भूपेषु । इतरेषु अशङ्कितेषु ॥ ३० ॥ कृत्याकृत्यविधानं सन्धिविग्रहादिषु कुत्र किं कृत्यं कुत्र किमकृत्यमित्येवंप्रकारः । दुर्गाटविकसाधनं दुर्गाणि जलप्राकारमरुगिरिवनात्मकानि पञ्चविधानि । आटविकाः महारण्यनिवासिनः निषादपुलिन्दादयः तेषां साधनं वशीकरणं । कण्टकाश्चोराः क्षुद्रशत्रवश्च । तेषां शोधनं निरसनं ॥ ३१ ॥ अन्यच्च सामभेदादिच ॥ ३२ ॥ प्रश्रय एव भूषणं यस्य सतयोक्तः

प्रह्लाद उवाच ॥

ममोपदिष्टं सकलं गुरुणा नात्र संशयः ।
गृहीतन्तु मया किन्तु न मदेतन्मतं मम ॥ ३४ ॥
साम चोपप्रदानं च भेददण्डौ तथापरौ ।
उपायाः कथिताः सर्वे मित्रादीनां च साधने ३५
तानेवाहं न पश्यामि मित्रादींस्तात मा क्रुधः ।
साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ३६
सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥ ३७ ॥
त्वय्यस्ति भगवान्विष्णुर्मयि चान्यत्र चास्ति सः ।
यतस्ततोऽयं मित्रं मे शत्रुश्चेति पृथक्कुतः ॥ ३८ ॥
तदेभिरलमत्यर्थं दुष्टारम्भोक्तिविस्तरैः ।
अविद्यान्तर्गतैर्यत्नः कर्तव्यस्तात शोभने ॥ ३९ ॥

विष्णुचित्तीयम् ।

प्रश्रयो विनयो भूषणं यस्य स तथा प्रश्रयभूषणः ॥ ३३ ॥ दुष्टाश्च ते आरंभाश्चेति दुष्टारंभास्तद्विषया

श्रीधरीयम् ।

॥ ३४ ॥ सामेति । कुपितस्य स्तुत्यादिभिः सान्त्वनं साम । भूमिधनधान्यादिप्रदानमुपप्रदानम् । ऐकमत्येन स्थितानां भयजननादिना पृथक्करणं भेदः । अर्थापहारादिर्दण्ड इत्येते उपायाः ॥३५॥ तानिति मा क्रुधः कोपं मा कार्षीः ॥३६॥ सर्वेति । सर्वभूतात्मके सर्वेषां भूतानामात्मनि । परमात्मनि सर्वजीवनियन्तरि ॥ ३७ ॥ तदेवाह—त्वय्यस्तीति । पृथग्भेदः कुतः ॥ ३८ ॥ तदिति । दुष्टाः रागद्वेषादिपूर्वका ये आरम्भा उद्यमाः तेषूक्तिविस्तरैर्नीतिशास्त्रैरलम् । दुष्टारम्भेति पाठे दृष्टा ऐहिकभोगार्थाः ।

विष्णुचित्तीयम् ।

प्रदत्तादिकम् ॥ ३२ ॥ ३३ ॥ ममोपदिष्टमिति । न सदेतत्, शत्रुमित्रादिभेदविषयत्वादस्य ॥ ३४ ॥ ॥ ३५ ॥ ३६ ॥ सर्वभूतात्मक इति । सर्वभूतात्मके सर्वजीवशरीरके । जगन्मये व्यक्ताव्यक्तप्रपञ्चरूपे । परमात्मनि आत्मान्तररहिते ॥ ३७ ॥ ३८ ॥ तदिति । दृष्टारम्भाः राज्याद्यर्थोद्योगाः तेषामुक्तिविस्तरैः अर्थशास्त्रैः । अविद्यान्तर्गतैः विद्यायामन्तर्गतानि विद्यासाधनानि तदितरैः । शोभने पर-

दत्तात्रेयीयम् ।

॥ ३३ ॥ एतद्गुरूपदेशोक्तं न सत् । शत्रुमित्रादिभेदविषयत्वेन रागद्वेषजनकत्वात् ॥ ३४ ॥ तदेतदुक्तमेवोपपादयति—सामेत्यादिना । साम कुपितस्य सान्त्वनं । उपप्रदानं भूमिधनादीनां समर्पणेन दानं । भेदः ऐकमत्येन स्थितानां बुद्धिभेदजननादिना पृथक्करणं । अर्थापहारादिर्दण्डः ॥ ३५ ॥ मा क्रुधः सामाद्युपायानां असत्त्वोक्त्या क्रोधं माकार्षीः । मित्रादिसाध्याभावे तदुपायानां वैयर्थ्यमित्याह—साध्याभावइति ॥ ३६ ॥ जगन्मये जगत्कारणभूते । "मयट्प्रधाने सारूप्ये कार्यकारणयोरपि" इत्यभिधानात् । जगन्नाथे गोविन्दे सर्वभूतात्मके सर्वभूतान्तर्यामिणि सति मित्रामित्रकथा कुतः । भगवदधीनत्वेन सर्वस्यापि मित्रत्वादिति भावः ॥ ३७ ॥ तदेवाह—त्वय्यस्तीति । पृथक् भेदः कुतः ॥३८॥ दुष्टाः रागद्वेषादिपूर्वकाः ये आरंभा उद्यमास्तेषामुक्तिविस्तरैर्नीतिशास्त्रैरलं । दृष्टारंभ इति पाठे दृष्टारंभो राज्यार्थोद्योग इत्यर्थः । अविद्यान्तर्गतैर्विज्ञानरहितैः । शोभने निष्कामे कर्मण्यात्मविद्यायां च

रत्नगर्भीयम् ।

दर्शनं शुद्धज्ञानगर्भ ॥ १९ ॥ राज्ञां राज्यफलप्रदामित्यन्वयः ॥ २६ ॥ पूर्वोक्तद्वयमुपसंहरति—तस्मा-

[ पा० ] १ ग तथैव च. २ [विष्णु चि० पा०] दृष्टारम्भोक्ति.

विद्याबुद्धिरविद्यायामज्ञानात्तात जायते ।
बालोऽग्निं किं न खद्योतमसुरेश्वर मन्यते ॥४०॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥४१॥
तदेतदवगम्याहमसारं सारमुत्तमम् ।
निशामय महाभाग प्रणिपत्य ब्रवीमि ते ॥४२॥

विष्णुचित्तीयम् ।

ऊतयः पुष्टयंभोकयः । तासां विस्तराः प्रपञ्चास्तैरलं ॥ ३९ ॥ अविद्यायां विद्याबुद्धिरज्ञानाज्जायते । खद्योतमग्निं किमु न मन्यते बालः ॥ ४० ॥ अपरं कर्म आयासाय । व्यर्थमित्यर्थः । शिल्पेषु नैपुणं शिल्पनैपुणं ॥ ४१ ॥ तदेतदसारमवगम्य साध्यं प्रयोजनं यत् ब्रवीमि तन्निशामयेत्यन्वयः ॥ ४२ ॥

श्रीधरीयम् ।

शोभने निष्कामे कर्मणि आत्मविद्यायां च ॥ ३९ ॥ ननु "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्या अष्टादशैव तु" इति स्मृतेः । दण्डनीत्यादिकमपि विद्येति अत्र कथम् अविद्यान्तर्गतैरित्युच्यते तत्राह—विद्याबुद्धिरिति । बालः खद्योतमग्निं किं न मन्यते अपि तु मन्यत एवेत्यर्थः तद्वत् ॥ ४० ॥ शोभने यत्नः कर्तव्य इति यदुक्तं तदेव शोभनं धर्मादिकमाह—तत्कर्मेति । अपरमर्थकामाद्यर्थं कर्म आयासाय श्रमार्थमेव । अन्या विद्या अर्थशास्त्रादिः । शिल्पनैपुणम् ऐन्द्रजालिकादि शिल्पविद्या च । कौशलमात्रमेव तुच्छत्वादित्यर्थः ॥ ४१ ॥ तदिति । तदेतद्राज्यादिसाध्यमसारं

विष्णुचित्तीयम् ।

समस्तशास्त्रविद्याविषये शास्त्रे ॥ ३९ ॥ नन्वर्थशास्त्रादे राज्याद्युपायज्ञापकत्वात्कथमविद्यास्थानत्वं तत्राह—विद्येति । अर्थशास्त्रादिजन्यविद्यायास्तु अल्पास्थिरफलसाधनत्वाद्विद्यात्वं नास्तीति भावः ॥ ४० ॥ का तर्हि विद्या तत्राह—तत्कर्मेति । या विमुक्तये सा विद्या । अर्थशास्त्रादिविद्या शिल्पनैपुणम् । यन्न बन्धाय अपि तु विद्याङ्गत्वेन मोक्षाय । अपरं कर्म प्रवृत्तिकर्म तत्कर्म ॥४१॥ कर्मनिरूपणं प्रासङ्गिकम्, राज्यादिदृष्टफलार्थिनापि तत्साधने धर्मे यतितव्यं न नीतिमात्रादापीत्याह—तदेतदित्यादिभिः । तदे-

सत्यव्रतीयम् ।

॥ ३९ ॥ ननु "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्याह्यष्टादशैव तु" इति स्मृते रर्थशास्त्ररूपदण्डनीतिरपि विद्येवेति कथमविद्यान्तर्गतैरित्युच्यत इत्यत आह—विद्याबुद्धिरिति । अल्पास्थिरफलसाधनत्वेन मुख्यविद्यात्वाभावेनाज्ञानान्नीतिशास्त्रे मुख्यविद्याबुद्धिर्जायते । तत्र दृष्टान्तमाह—बाल इति । बालः खद्योतमग्निं किं न मन्यते । अपितु मन्यत एव तद्वदित्यर्थः । स्मृतौ विद्यात्वोक्तिरमुख्यविद्यात्वाभिप्रायेण ॥ ४० ॥ शोभने यत्नः कर्तव्य इत्युक्तं तदेवाह—तत्कर्मेति । यद्बन्धाय न भवति बन्धकं न भवति तदेव कर्म । तच्च भगवत्प्रीतिसंपादकमेव । या विमुक्तये संसारान्मुक्तये हेतुभूता सैव मुख्या विद्या । सा च भगवज्ज्ञानसाधनभूता । "तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया" इति भागवतोक्तेः । अपरं अर्थकामार्थं कर्म आयासाय शरीरक्लेशायैव । अन्या विद्या अर्थशास्त्रादिरूपा शिल्पनैपुणं शिल्पविद्यावत् कौशलमात्रसाधनमित्यर्थः ॥ ४१ ॥ तदेतद्राज्यादिसाध्यमसारं

[ पा० ] १ क. गन्तव्यमसारं. २ क ग. शाश्वमुत्तमम् ३ घ. प्रणम्यप्रब्रवीमिवः.

न चिन्तयति को राज्यं को धनं नाभिवाञ्छति ।
तथाऽपि भाव्यमेवैतदुभयं प्राप्यते नरैः ॥ ४३ ॥
सर्व एव महाभाग महत्त्वं प्रति सोद्यमाः ।
तथाऽपि पुंसां भाग्यानि नोद्यमा भूतिहेतवः ४४
जडानामविवेकानामशूराणामपि प्रभो ।
भाग्यभोज्यानि राज्यानि सन्त्यनीतिमतामपि ॥
तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ।
यतितव्यं समत्वे च निर्वाणमपि चेच्छता ॥४६॥
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥४७॥
एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥४८॥
एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ॥ ४९ ॥

विष्णुचित्तीयम् ।

भाव्य भवितव्यम् ॥ ४३ ॥ तथाऽपि भाग्यानि विभूतिहेतवो नोद्यमाः ॥ ४४ ॥ जडानामलसाना

श्रीधरीयम् ।

पृच्छ ज्ञात्वा उत्तम साध्य यत्नकर्पेण ब्रवीमि तन्निशामयेत्यन्वयः ॥ ४२ ॥ किञ्च राज्यादेः प्रेष्ठफलत्वेऽपि तदर्थं पुण्ये यत्नः कार्यः न केवल दृष्टार्थोद्यममात्रे तस्य व्यभिचारादित्याह—नेत्यादित्रिभिः । नेति । भाव्य प्राक्तनपुण्यवशाद्भवितव्यम् । एतदुभय राज्य धन च प्राप्यते ॥ ४३ ॥ सर्वं एवेति । महत्त्व राज्यधनादिविभूतिं प्रति । भाग्यान्येव भूतिहेतवः राज्यादिश्रियो हेतवः न तूद्यमाः ॥ ४४ ॥ तैर्विनाऽपि राज्यादेर्दृश्यमानत्वादित्याह—जडानामिति । जडानामनुद्यमानाम् । अविवेकानाम् इष्टानिष्टविवेकशून्यानाञ्च राज्यादयः सन्ति ॥ ४५ ॥ ४६ ॥ समत्वदृशा निर्वाणमाह—देवा

विष्णुचित्तीयम् ।

तविति । तदेतत्प्रीतिशास्त्रादिजन्यज्ञानादि । निशामय शृणु ॥ ४२ ॥ नेति । भाव्य प्राक्कर्मतो भावि । उभय राज्य धन च ॥ ४३ ॥ सर्व एवेति । महत्त्वमैश्वर्यम् ॥ ४४ ॥ ४५ ॥ तस्मादिति । समत्वे भगवदात्मकत्वेन सर्वस्य समत्वबुद्धौ ॥ ४६ ॥ देवा इति । भिन्नमिव ततः पृथग्भूतमिव । अनन्त एव तत्तद्रूपेण स्थित इति ज्ञापनमेव सम्यक् "नेह नानास्ति किञ्चन, न तदस्ति विना" इति च ॥४७॥ एतदिति । आत्मवत् अन्तर्यामिणा परमात्मना युक्तम् । मनुजस्त्वेतत् । अत्र हेतुः यतोऽय विश्वरूप

दत्तात्रेयीयम् ।

पृच्छमेवावगम्य ज्ञात्वा उत्तम यत्साध्य ब्रवीमि तन्निशामयेत्यन्वयः ॥ ४२ ॥ राज्यादिफलार्थमपि पुण्ये यत्नः कर्तव्यः नतु दृष्टार्थोद्यममात्र व्यभिचारादित्याह—नचिन्तयतीत्यादिना । भाव्य प्राक्तनपुण्यवशाद्भवितव्यमेव तदुभय राज्य धनञ्च प्राप्यते ॥ ४३ ॥ महत्त्वमैश्वर्यं प्रति भाग्यानि पूर्वार्जितपुण्यान्येव भूतेरैश्वर्यस्य हेतवो नतूद्यमा इत्यर्थः ॥ ४४ ॥ उद्यमाभावेऽपि सम्पदो दृश्यमानत्वादित्याह—जडानामिति । जडानामनुद्यमाना सदसद्विवेकशून्याना भाग्येनैवोपभोग्यानि राज्यानि सन्ति ॥ ४५ ॥ पूर्वोक्तमुभयमुपसंहरति—तस्मादिति ॥ ४६ ॥ समबुद्धिमेवाह—देवा इति । अनन्तस्य विष्णोरसकाशाद्भिन्नमेतद्देवादिकरूपमवस्थित । नतु तत्स्वरूप । तथाच सर्वविष्ण्वधिष्ठानत्वबुद्धिरेव समत्वबुद्धिरित्युक्त भवति ॥ ४७ ॥ तदेव स्पष्टयति—एतदिति । आत्मवत्स्वर्यन द्रष्टव्य । आत्मवत्स्वर्यन मैत्री कार्येत्यर्थः । तत्र हेतुमाह—यतइति । अय विष्णुर्विश्वरूपधृक् विश्वेषु सर्वेषु रूप धत्त इति विश्वरूपधृक् । सर्वान्तर्यामीत्यर्थः ॥ ४८ ॥ समबुद्धेर्विष्णुप्रसादद्वारा मोक्षहेतुत्वमाह—एवमिति ॥ ४९ ॥

[ पा० ] १ [दत्ता० पा०] भिन्नमवस्थित २ ज ट ढ पुरुषोत्तम

श्रीपराशर उवाच ॥

एतच्छ्रुत्वा तु कोपेन समुत्थाय वरासनात् ।
हिरण्यकशिपुः पुत्रं पदा वक्षस्यताडयत् ॥ ५० ॥
उवाच च स कोपेन सामर्षः प्रज्वलन्निव ।
निष्पिष्य पाणिना पाणिं हन्तुकामो जगद्यथा ५१

हिरण्यकशिपुरुवाच ॥

हे विप्रचित्ते हे राहो हे बलैष महार्णवे ।
नागपाशैर्दृढैर्बद्ध्वा क्षिप्यतां मा विलम्ब्यताम् ५२
अन्यथा सकला लोकास्तथा दैतेयदानवाः ।
अनुयास्यन्ति मूढस्य मतमस्य दुरात्मनः ॥ ५३ ॥
बहुशो वारितोऽस्माभिरयं पापस्तथाप्यरेः ।
स्तुतिं करोति दुष्टानां वध एवोपकारकः ॥५४॥

श्रीपराशर उवाच ॥

ततस्ते सत्वरा दैत्या बद्ध्वा तं नागबन्धनैः ।
भर्तुराज्ञां पुरस्कृत्य चिक्षिपुः सलिलार्णवे ॥५५॥

ततश्चचाल चलता प्रह्लादेन महार्णवः ।
उद्वेलोऽभूत्परं क्षोभमुपेत्य च समन्ततः ॥ ५६ ॥
भूर्लोकमखिलं दृष्ट्वा प्लाव्यमानं महाम्भसा ।
हिरण्यकशिपुर्दैत्यानिदमाह महामते ॥ ५७ ॥

हिरण्यकशिपुरुवाच ॥

दैतेयाः सकलैः शैलैरत्रैव वरुणालये ।
निश्छिद्रैः सर्वशः सर्वैश्चीयतामेष दुर्मतिः ॥५८॥
नाग्निर्दहति नैवायं शस्त्रैश्छिन्नो न चोरगैः ।
क्षयं नीतो न वातेन न विषेण न कृत्यया ॥५९॥
न मायाभिर्न चैवोच्चात्पातितो न च दिग्गजैः ।
बालोऽतिदुष्टचित्तोऽयं नानेनार्थोऽस्ति जीवता ॥
तदेष तोयमध्ये [illegible] समाक्रान्तो महीधरैः ।
तिष्ठत्वब्दसहस्रान्तं प्राणान्हास्यति दुर्मतिः ६१॥
ततो दैत्या दानवाश्च पर्वतैस्तं महोदधौ ।
आक्रम्य चयनं चक्रुर्योजनानि सहस्रशः ॥ ६२ ॥

श्रीधरीयम् ।

इति ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ उवाचेति । सामर्षः असहमानः ॥ ५१ ॥ अथ नागसर्पैः पाशैर्न हन्तुं शक्यते । उपेक्षितश्चेत्सर्वः विष्णुभक्त्या नाशयेत् । अतो नागपाशैर्बद्ध्वा समुद्रे क्षिप्त्वा पर्वतैराक्रमणीयः । स च कालेन मरिष्यतीत्याशयेनाह—हे विप्रचित्त इति ॥ ५१ ॥ ५३ ॥ बहुश इति । दोषशान्तिहेतुत्वात् वधो दुष्टानामुपकारक एव । यद्वा दुष्टानां वधो अस्मदुपकारक एव भवति । अतो हन्तव्यः । दुष्टानां वध एवोपकारक इति पाठे दोषशान्तिहेतुत्वात् वधो दुष्टानामुपकारक एव ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ दैतेया इति । वरुणालये समुद्रे । निश्छिद्रैर्निरन्तरैः । पर्वतैश्चीयताम्

विष्णुचित्तीयम् ।

श्रुत्वेति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ तत इति । सलिलार्णवेऽर्णवसलिले

वृत्तार्थबोधीयम् ।

सामर्षः असहमानः ॥ ५१ ॥ ५२ ॥ ५३ ॥ अरेर्विष्णोः स्तुतिं करोति । दुष्टानां वध एव उपकारकः ॥ ५४ ॥ वरुणालये समुद्रे । निश्छिद्रैः निरन्तरैः । पर्वतैः चीयताम् उपर्युपरि निधीयताम् । शैलपर्वतयोः स्थूलसूक्ष्मभेदेन भेदो बोध्यः ॥ ५८ ॥ नाग्निर्दहति । कृत्याभिचारविशेषः ॥ ५९ ॥ अद्रि-

रत्नगर्भीयम् ।

द्रिति । च इत्युक्तेरिति सम्भावनाभावः ॥ ४६ ॥ दैत्यानां तत्क्षय आत्यन्तिको नाशः ॥ ४९ ॥ हे बलैष सुमहार्णवे अतिगम्भीरसमुद्रभागे । हे बलैषमहार्णव इति पाठे [illegible] ॥ सम्बोधनम्

[ पा० ] १ क. ख्यातोऽसि कोपेन २ ख ग० गुहार्णवे । [वि० पा०] कस्यमर्दतो ३ ग—प च छ दर वरा ४ ग म छ पौ । [वृत्ता० पा०] हरे ५ [श्रीध० पा०] वध एवोपकारक ६ म सर्वे ७ ग प ज ग—ट दर्शनं । क ख क—छ ग पर्वतैः ८ छ महोदधौ ९ क प ग—ट सैकपचप गता । ग ट थ छ ले मत्पार्श्वे गमा १० च छ अभिगतो

स चिंतः पर्वतैरन्तः समुद्रस्य महामतिः ।
तुष्टावाह्निकवेलायामेकाग्रमतिरच्युतम् ॥ ६३ ॥

प्रह्लाद उवाच ॥

नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम ।
नमस्ते सर्वलोकात्मन्नमस्ते तिग्मचक्रिणे ॥ ६४ ॥
[नमस्ते वासुदेवाय नमस्ते करुणाकर ॥
नमस्ते विश्वरूपाय नमस्ते सर्वमूर्तये ॥]
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ६५ ॥
ब्रह्मत्वे सृजते विश्वं स्थितौ पालयते पुनः ।
रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्तये ॥ ६६ ॥
देवा यक्षासुराः सिद्धा नागा गन्धर्वकिन्नराः ।
पिशाचा राक्षसाश्चैव मनुष्याः पशवस्तथा ॥६७॥
पक्षिणस्थावराश्चैव पिपीलिकसरीसृपाः ।
भूम्यापोऽग्निर्नभो वायुः शब्दः स्पर्शस्तथा रसः ६८
रूपं गन्धो मनो बुद्धिरात्मा कालस्तथा गुणाः ।
एतेषां परमार्थश्च सर्वमेतत्त्वमच्युत ॥ ६९ ॥

चित्सुखीयम् ।

॥ ४५ ॥ अमर्षोनाम परासुख्यमानात् कोपनिमित्ताज्जायमानः क्रोध एव ॥ ५१ ॥ आह्निकवेलाया मध्यन्दिनकृत्यसमये ॥ ६३ ॥ परमार्थः परमप्रयोजन । अथवा एतेषा त्वमेव परमार्थः । अथाधिरा-

श्रीधरीयम् ।

उपर्युपरि निक्षिप्तैराक्रम्यताम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ स इति । आह्निकवेलायां अहरहः कर्तव्यभजनादिसमये ॥ ६३ ॥ ६४ ॥ नम इति । ब्रह्मण्याना देवाय ॥ ६५ ॥ ६६ ॥ विश्वरूपत्वेन स्तौति—देवा इत्यादिसप्तभिः । देवा इत्यादीना सर्वं त्वमेवेति तृतीयेनान्वयः । यक्षाश्चा-सुराश्च ॥ ६७ ॥ ६८ ॥ रूपमिति । आत्माऽहङ्कारः । गुणाः सत्त्वादयः । एतेषा परमार्थश्च का-

विष्णुचित्तीयम् ।

॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ स इति । आह्निकवेलायाम् अहि-क्रियमाणाराधनवेलायाम् ॥ ६३ ॥ ६४ ॥ नम इति । ब्रह्मण्यदेवाय तपोवेदादिहिताय देवाय ॥६५॥ ब्रह्मत्व इति । स्थितौ स्वरूपेणावस्थितौ ॥ ६६ ॥ ६७ ॥ ६८ ॥ रूपमिति । आत्मा अहङ्कारः । प-

दत्ताख्येयम् ।

कवेलाया अहरहः कर्तव्यपूजावेलाया ॥ ६३ ॥ सर्वलोकात्मन् सर्वलोकान्तर्यामिन् ॥ ६४ ॥ ब्र-ह्मणः प्रियाः ब्रह्मण्याः । तैर्देवाय स्तुताय ब्रह्मण्यदेवाय ॥ ६५ ॥ ब्रह्मत्वे सर्वं सृजते स्रष्ट्रे । स्थितौ विष्णुस्वरूपेणावस्थितौ पालयते रक्षकाय । कल्पान्ते प्रलये रुद्ररूपाय । एवं त्रिमूर्तये तुभ्यं नमोनम इत्यन्वयः । ब्रह्मत्व रुद्ररूपत्व ब्रह्मरुद्रान्तर्गततन्नामकभगवद्रूपापेक्षया । "ब्रह्मणि ब्रह्मरूपोऽसौ शिव-रूपी शिवेस्थितः" इतिवचनात् ॥ ६६ ॥ यक्षाश्चासुराश्च यक्षासुराः ॥ ६७ ॥ अहङ्कारस्य तत्कार्यभू-तादिग्रहणेन गृहीतत्वादात्मेति महत्तत्त्व विवक्षित । गुणाः सत्त्वादयः । एतेषा देवादीना परमार्थः

रत्नगर्भीयम् ।

॥ ५२ ॥ उद्वेलो लङ्घिततीरः ॥ ५६ ॥ आह्निकवेलायां दिननिर्वर्त्यकृत्यसमये आवश्यकत्वात् । नात्म-त्राणार्थं तुष्टावेति भावः ॥ ६३ ॥ ब्रह्मण्याना देवाय श्रेष्ठाय । गावश्च हविराश्रयाः ब्राह्मणाश्च मन्त्राश्रया-स्तेषा हितायोपकर्त्रे ॥ ६५ ॥ विश्वरूपत्वेन स्तौति—देवा इत्यादिना ॥ सर्वमेतत्त्वमेवेति तृतीयेनान्वयः । यक्षाश्चासुराश्च ते । यक्षा इति सविसर्गपाठे देवा मेघाः । "देवो मेघे सुरे राज्ञि स्यान्नपुसकमिन्द्रिय"

[ पा० ] १ ट नामात्मन्नमस्ते २ ग ङ शङ्खचक्रिणे । झ दिव्यचक्रिणे ३ अयंश्लोक (ग) पुस्तके मात्रमधिक दृश्यते ४ ग—छ सर्वं ५ [रत्न० पा०] यक्षा सुरा ६ ग स्वधापर

विद्याविद्ये भवान्सत्यमसत्यं त्वं विषामृते ।
प्रवृत्तं च निवृत्तं च कर्म वेदोदितं भवान् ॥ ७० ॥
समस्तकर्मभोक्ता च कर्मोपकरणानि च ।
त्वमेव विष्णो सर्वाणि सर्वकर्मफलं च यत् ॥ ७१ ॥
मय्यन्यत्र तथान्येषु भूतेषु भुवनेषु च ।
तवैव व्याप्तिरैश्वर्यगुणसंसूचिकी प्रभो ॥ ७२ ॥
त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च याजकाः ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक् ॥ ७३ ॥
रूपं महत्ते स्थितमत्र विश्वं
ततश्च सूक्ष्मं जगदेतदीश ।
रूपाणि सर्वाणि च भूतभेदा-
स्तेष्वन्तरात्माख्यमतीव सूक्ष्मम् ॥ ७४ ॥

### विष्णुचित्तीयम् ।

स्त्वम् ॥ ६९ ॥ काम्यं कर्म प्रवृत्तं । तद्विपरीतं निवृत्तं ॥ ७० ॥ ऐश्वर्यमेव गुणः तस्य संसूचिकेति व्याप्तिः ॥ ७२ ॥ अत्र अस्मिन्महति रूपे प्रधानाख्ये विश्वं स्थितं । ततश्च कारणाद्विश्वं भवति । सूक्ष्मं जगत्तन्मात्रात्मकं । तन्महत्प्रधानं वै रूपं । सूक्ष्माणि च तन्मात्ररूपाणि ते रूपाणि । भूतभेदाः भूतविशेषाः पृथिव्यादयस्तेऽपि ते रूपाणि । तेषु च यत्सूक्ष्ममन्तरात्माख्यं वस्तु तदपि ते रूपं ॥ ७४ ॥

### श्रीधरीयम् ।

रूपम् ॥ ६९ ॥ ७० ॥ ७१ ॥ मयीति । ऐश्वर्यं सामर्थ्यातिशयं । गुणांश्च सत्यसङ्कल्पादीन्संसूचयतीति ऐश्वर्यगुणसंसूचिकी तवैव सर्वेषु व्याप्तिः ॥७२॥ अत एव त्वामिति । त्वामेव योगिनश्चिन्तयन्ति । त्वामेव याजका यजन्ति । पितृरूपस्वरूपधृक्त्वमेव कव्यभुक् । देवस्वरूपधृक्त्वमेव हव्यभुक् ॥ ७३ ॥ एवं मायाश्रितं रूपम् अपवर्गप्रदं शुद्धस्वरूपमाह—रूपमित्यादिद्वाभ्याम् । रूपमिति । विश्वं विश्वरूपं

### विष्णुचित्तीयम् ।

तेषां परमार्थः एतेषां सम्बन्धाविनाशित्वीयात्मा । एतद्रूपं भगवत्स्वम् ॥ ६९ ॥ ७० ॥ ७१ ॥ मयीति । ऐश्वर्यगुणसंसूचिकी । उपादाननिमित्तत्वलक्षणमैश्वर्यम् । गुणो ज्ञानशक्त्यादि । तयोः सूचिका ॥ ७२ ॥ ७३ ॥ न ह्यनीश्वरस्यागुणस्य च व्याप्तिः सम्भवति । अत्रभुक्त्वरूपनिदित्वार्थं गुभा-

### रत्नगर्भीयम् ।

स्वतन्त्रसत्ता । "स्वतन्त्रंपरमार्थरूपम्" इतिवचनात् । तस्मादेतत्सर्वं त्वदधीनं । "मदधीना यन्मया" इत्यादेः । अच्युतेरपुण्या सर्वात्मत्वमभवीति निवारयति । च्युताच्युतयोरभेदयोगात् ॥ ६९ ॥ विद्याविद्येत्यादावपि अयमेवार्थो बोध्यः ॥ ७० ॥ तव सर्वत्र व्याप्तिरेव ऐश्वर्यगुणसंसूचिकी । सर्वगतं स्वतन्त्रनियमनत्वलक्षणसामर्थ्यं गुणसंसूचिका । अनेनस्वरेण कालावस्थादीनां व्याप्तैश्वर्यसूचकत्वं व्यपदिश्यते । सर्वत्र भगवत्सान्निध्यात्र सर्वाभेददर्शनानिराकृता ॥ ७२ ॥ पितृदेवरूपधृक् पितृदेवेषु च रूपं धत्त इति तथा । पितृषु स्थित्वा कव्यभुक् । देवेषु स्थित्वा हव्यभुक् । त्वमेक एवेत्यर्थः । विष्णोर्मुखमभोक्तृत्वादिश्रुतिः ॥ ७३ ॥ जगदाकारकादिभगवद्रूपभेदान्निर्दिश्य भगवद्रूपमाह—रूपमित्यादिना । यत्र विश्वं तिष्ठति तादृशं जगदाश्रयं महद्रूपमन्तीत्यर्थः । अत एतत्सूक्ष्मरूपमाह

तस्माच्च सूक्ष्मादिविशेषणाना-
मगोचरे यत्परमात्मरूपम् ।
किमप्यचिन्त्यं तव रूपमस्ति
तस्मै नमस्ते पुरुषोत्तमाय ॥ ७५ ॥
सर्वभूतेषु सर्वात्मन्या शक्तिरपरा तव ।
गुणाश्रया नमस्तस्यै शाश्वतायै सुरेश्वर ॥ ७६ ॥

चित्सुखीयम् ।

तस्माच्च परं प्रधानाद्विलक्षणं । यदचिन्त्यं रूपं । सूक्ष्मादिविशेषणानामगोचरेऽविषये स्थितं । अचिन्त्यं मनसाऽप्यगम्यं किमपि योगिप्रत्यक्षगम्यं अस्ति रूपं तस्मै नमः ॥ ७५ ॥ शक्तिः प्रकृत्याख्या । गुणा-

श्रीधरीयम् ।

सावरणं ब्रह्माण्डम् । एतत्कृत्स्नब्रह्माण्डान्तर्वर्तिविराड्रूपम् । रूपं महच्चे स्थितमत्र विश्वमिति पाठे महद्रूपं विश्वं ब्रह्माण्डम् । अत्र स्थितं जगदेतत्ततश्च सूक्ष्मरूपमित्यन्वयः । ततो सूक्ष्माणि रूपाणि भूतभेदाः । जरायुजादिचतुर्विधाः देहाः तेष्वप्यन्तरात्माख्यं क्षेत्रज्ञसंज्ञमतीव सूक्ष्मं रूपम् ॥ ७४ ॥ तस्मादिति । तस्मादपि परं सूक्ष्मादिविशेषणानामगोचरे अविषये वर्तमानं यत्किमप्यचिन्त्यं रूपमस्ति तस्मै पुरुषोत्तमाख्याय ते रूपाय नमः । "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति स्मृतेः ॥ ७५ ॥ नन्वेवंभूतस्य कुतः स्थूलसूक्ष्माद्यनेकरूपत्वमित्याशङ्क्य तदुत्पादकं शक्तिद्वयं प्रणमति—सर्वभूतेष्वित्यादिद्वाभ्याम् । सर्वभूतेष्विति । अपरा जडशक्तिः

विष्णुचित्तीयम् ।

प्रयतया लक्ष्यमाणं दिव्यस्वरूपमाह—रूपमिति । ते महद्रूपमस्तीत्यनुषङ्गः । महत्त्वं स्वरूपतो गुणतश्च । एतद्विश्वं जगत्सूक्ष्मं यत्र तिष्ठति यतश्च भवति । यतश्च सूक्ष्ममिति च पाठः । रूपाणि सूक्ष्माणि अव्यक्तमहदादीनि । भूतभेदाः पृथिव्यादयः । अन्तरात्माख्यमात्मतत्त्वम् । एतानि च यतो यत्र । विश्वमिति संक्षेपोक्तिः । रूपाणीति विस्तरोक्तिः ॥ ७४ ॥ दिव्यात्मस्वरूपमाह—तस्मादिति । तस्मात्परमिति शेषः । परमार्थरूपं । परमप्रयोजनरूपं यत्परमात्मरूपमिति च पाठः । रूपं स्वरूपम् ॥ ७५ ॥ क्षेत्रज्ञरूपं मुक्तरूपं चाह—सर्वभूतेष्विति द्वाभ्याम्—सर्वभूतेष्विति । गुणाः सत्त्वादयः त आश्रयो

दत्तात्रेयीयम् ।

तादृशं परमपुरुषाख्यं जगतश्च सूक्ष्मं रूपं चाभ्यदर्शि । सूक्ष्माणि रूपाणि यानि मशकादिपदार्थस्वरूपाणि । येच भूतभेदाः पृथिव्यादयस्तेष्वन्तरात्माख्यमन्तर्यामिस्थाख्यं विष्णुनामकं अतीव सूक्ष्मरूपं चाभ्यदर्शि ॥ ७४ ॥ तस्मात्परमितिशेषः । सूक्ष्मादिविशेषणानामगोचर अविषयत्वेन वर्तमानं सूक्ष्मादिव्यवस्थारहितमिति यावत् । किमप्यलोकसिद्ध अचिन्त्यमवाङ्मनोगोचर परमात्मरूपं नारायणाख्यं महत्स्वरूपमस्ति तादृशरूपचतुष्टयोपेताय तस्मै पुरुषोत्तमाख्याय ते नम इति योज्यं । इदंच रूपचतुष्टयमुक्तं महातर्के । "यत्तस्य व्यापकं रूप परं नारायणाभिधं । शून्यं ब्रह्मेति तत्प्राहुः द्वितीयं सृष्टयेऽप्यतः । परमः पुरुषो नाम स्थितं तदेशतो विभोः । तृतीय वासुदेवाख्यं जगद्धारकं मितं । देशतो जगदाविष्टं तुरीयं विष्णुनामकं" इति । भगवद्रूपाणां परस्परमभिन्नत्वेऽपि परिच्छिन्नापरिच्छिन्नत्वादिकं तस्याचिन्त्यैश्वर्यादुपपन्नं । तदपि तत्रैवोक्तं । "परिच्छेदस्तथा व्यतिरेकरूपेऽपि युज्यते । तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च" इति ॥ ७५ ॥ परमात्मस्वरूपशक्तेः सर्वोत्तमत्वं वक्तुमवान्तरशक्तिमादौ प्रणमति—सर्वभूतेष्विति । अपरा वक्ष्यमाणस्वरूपशक्त्यपेक्षया परा । गुणाश्रया सृष्ट्याद्यर्थं सत्त्वादिगुणानाश्रयते उपादत्त इति गुणाश्रया । शाश्वत्वाच्छक्तिः । शक्तिशब्दवाच्यं रमारूपं तस्मै

[पा० ] १ घ ङ च छ ट ठ मार्गेरूपम् २ क ख सूक्ष्मं ३ ग—च परेश्वर

वाचामतीतगोचरा या मनसां चाविशेषणा ।
ज्ञानिज्ञानपरिच्छेद्या तां वन्दे स्वेश्वरीं पराम् ॥७७॥
ॐ नमो वासुदेवाय तस्मै भगवते सदा ।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः
नमस्तस्मै नमस्तस्मै नमस्तस्मै महात्मने ।
नाम रूपं न यस्यैको योऽस्तित्वेनोपलभ्यते ॥७९॥

चित्सुखीयम् ।

मया सत्त्वादिगुणात्मिका ॥ ७६ ॥ वाचां वाचा मनसां चातीतगोचरा अतीतः गोचरो यया सा अतीतगोचरा । अविशेषणा व्यावर्तकधर्मशून्या । ज्ञानिनो ज्ञानं ज्ञानिज्ञानं । साक्षात्काराख्यं तेन परिच्छेद्या अधिगम्या ॥ ७७ ॥ यस्य यस्मात् व्यतिरिक्तं नास्ति । कारणाव्यतिरेकात्कार्यस्य । अति-

श्रीधरीयम् ।

प्रवृत्त्याख्या ॥ ७६ ॥ वाचामतीतगोचरेति । वाचां मनसाञ्च याऽतीतगोचरा अतीतो अतिक्रान्तो गोचरो विषयो यया सा । यस्माद्विशेषणात्सत्त्वादिगुणादिविशेषणशून्या । ज्ञानिनां क्षेत्रज्ञानां यानि शब्दादि-विषयाणि मादेशिकानि ज्ञानानि तैस्तैः परिच्छेद्या सर्वतः प्रसरद्भिरिन्द्रियवृत्तिभिः सर्वतोऽपरिच्छिन्नत्वेना-धिगम्या । यद्वा ज्ञानी जीवः ज्ञानं बुद्धिः उभयमपि परिच्छेद्यं यावद्दीपप्रकाश्यं गम्याः सा गम्याः सर्वावभासकत्वात् । तामीश्वरीमीश्वरस्य तत्त्वभूताञ्च परां चिच्छक्तिं वन्दे "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः ॥ ७७ ॥ अतः एवम्भूतशक्तिद्वयेनाऽखिलशक्ति-सर्वैश्वर्यादियुक्तस्य स्थूलसूक्ष्मानेकात्मत्वञ्च सद्भाव एवेति द्वादशाक्षरमन्त्रप्रतिपाद्यत्वेन प्रणमति —ॐ नम इत्यादिश्लोकाभ्याम् ॥ ७८ ॥ नम इति । नमस्तस्मै इति त्रिभिः पुनरुक्त्या रूप महत्त्विति

विष्णुचित्तीयम् ।

यस्याः सा गुणाश्रया । अपरा गुणापेक्षया निकृष्टा ॥ ७६ ॥ वाचीतगोचरेति । ईश्वरी स्वतन्त्रा "न स्वराड् भवति" इति श्रुतेः । परामुत्कृष्टाम् । एवञ्चेदमिदं विष्णुशक्तिः परा प्रोक्तेत्यादिना पठ्यते । वन्दे चेश्वरीं परामिति च पाठः ॥ ७७ ॥ ॐ नम इति । ओमित्यादिगमत्रार्थः तृतीयान्तपदैर्वर्ण्यते । व्यतिरिक्तं न यस्यास्ति सर्वस्य तदात्मकत्वात् । व्यतिरिक्तोऽखिलस्य यः कार्यभूतात्पृथगीतो व्यतिरिक्तः । "अतो ज्यायान्, त्रिपादूर्ध्व उदैत्पुरुषः, पादोऽस्य सर्वा भूतानि" इति । व्यतिरिक्तमित्यादिना सगुणत्व-सामर्थ्यं उक्तः ॥ ७८ ॥ नम इति । आदरातिशयार्थावृत्तिः गरुडर्णादिपूर्वश्रिया वा । नाम रूपे न

दत्ताश्रेयीयम् ।

नम इत्यन्वयः । रमायाः शक्तिरूपत्वान्यत्वं योग्य मनुते । "शस्यपरमाध्वरयो विष्णोर्भावना रमा तथा । स्वप्रकाशिनः शक्तित्वान्नुरुक्तशक्तिर्हि सा यतः" इति ॥ ७६ ॥ वाचां मनसा च याऽतीतगो-चरा अतीत अतिक्रान्तं गोचरत्वं विषयत्वं यया सा तथा । अविशेषणा अविगुणादिविशेषशून्या-तीतेनार्थः । अतीतगोचरेत्युक्तं साम्यमनादमाह—ज्ञानीनि । ईश्वरीमीश्वरस्वरूपभूतां । परां पूर्वोक्तापर-पेक्षयोत्कृष्टां । तां शक्तिं वन्दे । "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः ॥ ७७ ॥ यस्य स्वरूपातिरिक्तं स्वातन्त्र्येण नास्ति ननु सर्वस्य तदात्मत्वे व्यतिरिक्तोऽखिलस्य च इत्यनेन विरोधात् ॥ ७८ ॥ नमस्तस्मा इत्यादिना आदरातिशयावृत्तिः । नामरूपे न यस्यैकोऽनेन

यस्यावताररूपाणि समर्चन्ति दिवौकसः ।
अपश्यन्तः परं रूपं नमस्तस्मै महात्मने ॥ ८० ॥
योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् ।
तं सर्वसाक्षिणं विश्वं नमस्ये परमेश्वरम् ॥ ८१ ॥
नमोऽस्तु विष्णवे तस्मै यस्याभिन्नमिदं जगत् ।
ध्येयः स जगतामाद्यः स प्रसीदतु मेऽव्ययः ॥ ८२ ॥

यत्रोतमेतत्प्रोतं च विश्वमक्षरमव्ययम् ।
[नमस्तस्मै नमस्तस्मै नमस्तस्मै पुनःपुनः ।]
आधारभूतः सर्वस्य स प्रसीदतु मे हरिः ॥ ८३ ॥

चित्सुखीयम् ।

त्वस्य अखिलात्मातिरिक्तो यः कार्यं विनापि कारणस्य प्रलये अवस्थानात् ॥ ७८ ॥ प्रोतं सामान्य-

श्रीधरीयम् ।

श्लोकोक्तचैतन्योपाधिभूतैर्विश्वरूपजगद्रूपभूतरूपैः प्रणामः । नामरूपं न यस्य तस्मै नम इत्यनुपलभ्यच्छु-द्धब्रह्मरूपेण । एको योऽस्तित्वेनोपलभ्यते तस्मै महात्मने नम इति ब्रह्मरूपेण प्रणमतीति द्रष्टव्यम् ॥ ७९ ॥ नन्वेवं केवलश्चेत्परमेश्वरः तर्हि तस्याविषयत्वादर्चनादिकं न घटत इत्याशङ्क्याह—यस्येति । ॥ ८० ॥ नन्वेवं परमेश्वर एव चेदर्चनीयस्तर्हि रुद्रादीनां पूज्यता कथमित्याशङ्क्य तेषामन्तर्यामीश्वर-रूपेणैव युज्यत इत्याशयेनाह—योऽन्तरिति ॥ ८१ ॥ जडस्यापि जगतः परमेश्वररूपेणोपास्यत्वमस्ति किं पुनर्देवतानामित्याशयेनाह—नमोऽस्त्विति । अभिन्नत्वे हेतुर्जगतामाद्यः कारणमिति ॥८२॥ तदुपपा-

विष्णुचित्तीयम् ।

यस्य जीवस्य कर्मकृतम् ॥७९॥८०॥८१॥ नमोऽस्त्विति । यस्याभिन्नं कार्यत्वात्तद्रूपत्वाच ॥८२॥ यत्रेति ।

रत्नगर्भीयम् ।

प्राकृतनामरूपनिषेधो नतु सर्वथा नामरूपनिषेधः । "अलौकिकार्थसम्भावादनन्तत्वाज्जनार्दनः । अन-न्तनामा परमः सुखज्ञानात्म रूपवान्"इति ब्रह्मतर्कविरोधात् । एको यः स्वातन्त्र्यादस्तित्वेनोपलभ्यते इतरेषां सत्त्वेनोपलब्धावपि पारतन्त्र्यादसत्त्वव्यवहार इति भावः । तदुक्तं ब्रह्मतर्के । "स्वाधीनं स-दिति प्रोक्तं पराधीनमसत्स्मृतम्"इति ॥ ७९ ॥ अवताररूपाणि रामकृष्णादिरूपाणि । परंरूपमपश्यन्तः अवतारापेक्षयाऽन्यस्योत्तमरूपस्याभावात् । "पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"इतिश्रुतेः । अवताररूपमूलरूपयोरभेदादितिभावः ॥ ८० ॥ नन्वेवमन्येषामपूज्य-त्वेन यत्पूजाप्रतिपादकानामवैयर्थ्यं स्यादित्याशङ्क्य तेषां तदधिष्ठानत्वेन तत्परिवारतया पूज्यत्वमित्य-भिप्रेत्याह—योऽन्तरिति ॥ ८१ ॥ यस्य येन । विभक्तिव्यत्ययः छान्दसः । इदं जगदभिन्नं पूर्णं "भिन्न-मल्पं विजानीयादभिन्नं पूर्णमुच्यते"इति शब्दनिर्णयवचनात् । अभिन्नशब्दस्य पूर्णत्वं बोद्धव्यं । जगत्प-रमात्मनोरभेदस्य बाधितत्वेन तदर्थत्वानुपपत्तेः । "तेनेदंपूर्णंपुरुषेणसर्वम्"इति पूर्णत्वस्य श्रुतिसिद्ध-त्वाच ॥ ८२ ॥ एतदेव स्पष्टयति—यत्रेति । अक्षरसंज्ञके यत्र परमात्मनि एतद्विश्वं ओतं प्रोतंच ।

रत्नगर्भीयम् ।

इति । आदरातिशयार्थं वा नमस्कारावृत्तिः । व्यूहनिदानरूपेण प्रणमति—नामेति ॥ ७९ ॥ तर्हि इन्द्रा-दीनां कथं पूज्यत्वं तत्राह—योऽन्तरिति ॥ वस्तुतस्तेष्वप्यन्तर्यामिण एव पूज्यत्वमिति भावः ॥ ८१ ॥

[ पा० ] १ ख. ग. ङ. च—झ ट ठ परात्मने. २ क—ज ज—ड. विष्णुं. ३ घ. ड. ध्येयो यो जग. ४ ग ट—ठ मक्षरसञ्ज्ञके । ख घ मक्षयसञ्ज्ञके । ञ. ट. मक्षयमव्यये. ५ इदमर्धं "घ" पुस्तके मात्रमधिकं वर्तते.

ॐ नमो विष्णवे तस्मै नमस्तस्मै पुनः पुनः ।
यत्र सर्वं यतः सर्वं यः सर्वं सर्वसंश्रयः ॥ ८४ ॥
सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥ ८५ ॥

चित्सुखीयम् ।

विशेषभावेनावस्थितं । अक्षयं प्रवाहरूपेणाविच्छेदात् ॥ ८३ ॥ यत्र सर्वं प्रलयकाले । यतःसर्वं उत्पत्तिसमये च । सर्वं कार्यकारणयोरभेदात् । सर्वसंश्रयः स्थितिकार्याणां कारणाधारत्वात् ॥ ८४ ॥ आ-

श्रीधरीयम् ।

द्ययमाह—यत्रेति । यत्र यस्मिन्नोतं विश्वं दीर्घतन्तुषु पटवद्ग्रथितं तिर्यक्तन्तुषु पटवदेवानुस्यूतम् । अक्षरसंज्ञके प्रधानमहदादिरूपे ॥ ८३ ॥ तदुक्तं सर्वात्मत्वं संक्षेपतः स्मरन्प्रणमति—ओमिति । यत्र सर्वं प्रलये तस्मै नमः । यतः सर्वं सृष्टौ तस्मै नमः । यः सर्वं स्थितौ पुनः तस्मै नमः । अत एव तस्य यः संश्रयः आधार आत्मा तस्मै नम इत्येवं नमस्यावस्थाभेदात् नमस्कारावृत्तिः ॥ ८४ ॥ एवं विष्णोर्महात्म्या सर्वात्मकत्वं भावयन् सर्वस्यापि मत्त्वाविर्भावेन तदभेदं पश्यन्नाह—सर्वगत्वा-

विष्णुचित्तीयम् ।

यथैतद्विश्वम् "ओतं कुण्ड इव प्रोतं सूत्रे मणिगणा इव । भ्रमन्ति विश्वाभूतानि नावीवान्तः समाहिताः । सूत्रे मणिगणा इव"इति च ॥ ८३ ॥ ओमिति । यत्र सर्वं स्थितं लीनमिति वा । यतः सर्वमुपादानभूतात्भवति । अत एव यः सर्वम् ॥ ८४ ॥ सर्वगत्वादिति । सर्वतः सर्वत्रात्मत्वेन यो वसति अनादिमध्यान्तमित्यादिविशेषणैरन्वितः जडाद्यो व्यावृत्तः सच्चिदानन्दस्वरूपः स एवाहमवस्थितइत्यन

रत्नगर्भीयम् ।

यथा कन्यापटाः दीर्घतन्तुषु मथिताः तिर्यक्तन्त्वाद्यनुस्यूताश्च तथेत्यर्थः । तदुक्तं स्कान्दे । "यथाकन्यापटास्सूत्र ओतप्रोताश्चसंस्थिताः । एवं विष्णाविदं सर्वमोतं प्रोतं च संस्थितम्"इति ॥ ८३ ॥ यत्र सर्वं संस्थितौ प्रलयेच तिष्ठतीति शेषः । यतः सर्वं सृष्टं अनेन स्रष्टृत्वमुक्तं । यः सर्वमित्यनेन सर्वस्य स्वरूपसत्ताप्रदत्वमुक्तं । तदुक्तं ब्रह्मतर्के "वत्प्रसत्तापि यत्सत्ता हरेर्यस्य इतीरिता । हरेर्विश्वं भिन्नमपि परमोऽसौ यतो विभुः"इति । सर्वतश्च य इति सर्वव्याप्तिरुच्यते ॥ ८४ ॥ सर्वत्र परमात्मनि स्थितिमनुसन्धाय भक्त सर्वान्तर्याम्यभेदमनुसन्धत्ते—सर्वगत्वादित्यादिना । स. एवाह सर्वव्याप्तो.ऽनन्त. यथाहं भवन्तर्याम्यवस्थितः । अहंशब्दस्यान्तर्यामिवाचित्वत्तु । "सर्वान्तर्यामिणि ह्यप्रसच्छब्दविमर्शः । युष्मच्छब्दगताश्चैव सर्वास्तच्छब्दगा अपि"इति नारायणश्रुत्या सिद्धं । एतादृशस्थलेऽहमादिशब्दानामन्तर्यामिवाचित्वानङ्गीकारे बाधकं चोक्तं महासंहितायां । "अन्तर्याम्यैक्यवाचीनि वचनानीह यानितु । तानिदुष्टा वदन्तीह दुरात्मानोऽल्पचेतसः । अस्वमित्यहंस्वात्मेत्यभिधागोचरोयतः । सर्वान्तरत्वात्पुरुषस्त्वन्तर्यामीति यं नयन् । अतोवै भ्रान्तिवचनैरसुरान्मोहतत्परैः । तन्मोहने परप्रीतिर्देवानां परमस्य च । अतो महान्धकारेषु पतन्त्यज्ञानमोहिताः"इत्यादि । एवमन्तःसर्वमित्यादावप्यसच्छब्दविभक्ती-

रत्नगर्भीयम् ।

संक्षेपतः सर्वात्मत्वं संस्मरन्प्रणमति—ओमस इति ॥ विष्णवे व्यापकत्वेन सर्वव्यापकाय । भक्त्यतिशयेन नमसः पौनरुक्त्यं । सर्वात्मकं विष्णुं स्वाभेदेन साक्षात्कुर्वन्नन्तरेवाभिलपति—यत्रेति सार्धद्वयेन

[ पा० ] १ इ—छ. सर्वतमग . ग. सर्वमयम .

अहमेवाक्षयो नित्यः परमात्मात्मसंश्रयः ।
ब्रह्मसंज्ञोऽहमेवाग्रे तथाऽन्ते च परः पुमान् ८६ ॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

स्तुवतः प्रह्लादस्य पुरतः श्रीविष्णोराविर्भावः ॥ १ ॥ भगवता प्रह्लादयाभीप्सितवरदानकथनम् ॥ २ ॥ पुनश्च कालान्तरे विष्णुद्वेषोद्रेकेणाविर्भोधाप्युतं तन्तुमुपते हिरण्यकशिपौ नृसिंहरूपेण भगवता तद्वधकथनम् ॥ ३ ॥ श्रीनरसिंहावतारचरित्रश्रवणफलकथनम् ॥ ४ ॥

श्रीपराशर उवाच ॥
एवं संचिन्तयन्विष्णुमभेदेनात्मनो द्विज ।
तन्मयत्वमवाप्याग्र्यं मेने चात्मानमच्युतम् ॥१॥

चित्सुखीयम् ।

त्मसंश्रयोऽनन्याधारः । अग्रे सृष्टेः प्राक् । अन्ते प्रलयोत्तरकाले ॥ ८६ ॥ इति श्रीचित्सुखमुनि० श्रीविष्णुपु०टिप्पण्यां प्रथमांशे एकोनविंशोऽध्यायः ॥ १९ ॥

परमार्थार्थः परमार्थवस्तुरूपः । क्षराक्षरः कार्यकारणरूपः । अथवा अक्षराक्षरेति पाठः । तदा

श्रीधरीयम् ।

नित्याविद्याभ्याम् ॥ ८५ ॥ अहमेवेति । अग्रे सृष्टेः पूर्वम् । अन्ते च प्रलयानन्तरम् ॥ ८६ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकोनविंशोऽध्यायः॥१९॥

विष्णुचित्तीयम् ।

अनन्तस्य सर्वनाशत्वं हेतुः ॥ ८५ ॥ अहमेवेति । स परमात्मा किमाश्रय इत्यत्राह—आत्मसंश्रय इति । न किंचिदाश्रितः स्वे महिम्नि प्रतिष्ठितः । ननु ब्रह्मणो जगदुत्पत्तिः श्रूयते "यतो वा इमानि" इत्यादिना । तत्कथं मत्त इत्युच्यते तत्राह—ब्रह्मसंज्ञोऽहमिति । ब्रह्मात्मकत्वादहमेव ब्रह्मसंज्ञः । अग्रे सृष्टेः प्राक् । अन्ते प्रलये ॥ ८६ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकोनविंशोऽध्यायः ॥ १९ ॥

विशदविशदतरविशदतमक्रमेण योगकाष्ठां प्राप्त इत्याह—एवमिति । आत्मनोऽभेदेन स्वशरीरकत्वेन ।

दत्तात्रेयीयम् ।

नामन्तर्यामित्वाचित्वं वोक्तं ॥ ८५ ॥ अव्ययः पूर्णः नित्यदेहत्वोऽपि भावरहितः । आत्मसंश्रयः स्वाधारः । "सभगवःकस्मिन्प्रतिष्ठित इति स्वेमहिम्नि"इतिश्रुतेः । अग्रेसृष्टेःप्राक् । अन्ते प्रलये ॥८६॥ इति श्रीदत्ता०सुबो०श्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकोनविंशोऽध्यायः ॥ १९ ॥

पूर्वोक्तानुवादपुरस्सरं विशदतरादिक्रमेण योगकाष्ठां प्राप्त इत्याह । विष्णुमात्मनः स्वान्तर्यामिणोऽभेदेन विचिन्तयन् अग्र्यमुत्कृष्टं तन्मयत्वं मनसस्तदेकाग्रत्वं रूपं तत्प्राचुर्यत्वमवाप्य । आत्मशब्दस्या-

रत्नगर्भीयम् ।

॥ ८४ ॥ इति श्रीरत्नग० विरचितश्रीविष्णुपु० व्याख्यासारे प्रथमांशे एकोनविंशोऽध्यायः ॥ १९ ॥

समाधिस्थस्य तस्याथ गते बन्धे घटेषु च । हरिराविर्बभौ दृत्वा गवो गिरा इतीर्यते ॥ १ ॥

[ पा० ] १ ग—ङ. व्यो. २ [विष्णु चि० पा०] प्यामे. घ. पार्व्यं.

विसस्मार तथाऽऽत्मानं नान्यत्किञ्चिदजानत ।
अहमेवाव्ययोऽनन्तः परमात्मेत्यचिन्तयत् ॥२॥
तस्य तद्भावनायोगात्क्षीणपापस्य वै क्रमात् ।
शुद्धेऽन्तःकरणे विष्णुस्तस्थौ ज्ञानमयोऽच्युतः ३॥

योगप्रभावात्प्रह्लादे जाते विष्णुमयेऽसुरे ।
चलत्युरगबन्धैस्तैर्मैत्रेय त्रुटितं क्षणात् ॥ ४ ॥
भ्रान्तग्राहगणः सोर्मिर्ययौ क्षोभं महार्णवः ।
चचाल च मही सर्वा सशैलवनकानना ॥ ५ ॥

चित्सुखीयम् ।

अक्षरमव्यक्तः तस्मादप्यक्षरं परं ब्रह्म "अक्षरात्परतःपरः" इति श्रुतेः । व्यक्तं महदादि । अव्यक्तं

श्रीधरीयम् ।

॥ १ ॥ विसस्मारेति । आत्मानं प्रह्लादोऽहमिति विस्मृतवान् ॥ २ ॥ तस्येति । क्षीणपापस्य ध्वस्तसमस्तकर्मवासनामलस्य ॥ ३ ॥ योगप्रभावादिति । त्रुटिताः छिन्नाः । भावे क्तः ॥ ४ ॥ भ्रान्त-

विष्णुचित्तीयम् ।

विष्णुशब्दः कारणवाची । आत्मशब्दः कार्यभूतस्वप्रकारकविशिष्टविष्णुवाची । तेनाप्यभेदः । तन्मयत्वं तत्प्राचुर्यम् । अत्यन्तमुत्कृष्टं । स्वस्य तदात्मकत्ववैशद्यमवाप । अत एवात्मानमच्युतं मेने । तन्मयत्वम-वाप्याग्रे इति च पाठः ॥ १ ॥ विसस्मारेति । अयोगदशायामात्मानमतदात्मकत्वेन भ्राम्यावासितं विसस्मार । स्वप्रकाशस्य योगदशायामाविर्भूतस्य च स्वरूपस्य विस्मरणायोगात् । स्वरूपविस्मृतौ तु वामदेवादेरहंमनुरभवमित्यादिवचनवन्मत्तः सर्वमित्यादिवचनं नस्यात् । तर्हि कथमचिन्तयत्तत्राह— अहमेवाव्यय इति ॥ २ ॥ ३ ॥ योगप्रभावादिति । विष्णुमये विष्णुप्रचुरे । योगात्मचलति सति । उर-गबन्धमिति नपुंसकत्वमार्षत्वात् भावेनिष्ठा । उरगबन्धैस्तैरिति वा पाठः । चलत्युरगबन्धमिति च

दत्तात्रेयीयम् ।

न्तर्यामिवाचित्वं पूर्वाध्यायोदाहृतप्रमाणादवगन्तव्यं । आत्मानं स्वात्मानं चाच्युतं दुःखाविच्युतिरहितं मेने । जीवन्मुक्तं ज्ञातवान् ॥ १ ॥ एवं संप्रज्ञातसमाध्यवस्थामुक्त्वा असंप्रज्ञातसमाध्यवस्थामाह— विसस्मारेत्यादिना । आत्मानं स्वात्मानं । अहमेव सदन्तर्यामीत्येव नान्यत् किञ्चिदजानत । विष्णुव्य-तिरेकेणान्यत् नज्ञातवान् ॥ २ ॥ तस्य प्रह्लादस्य तद्भावनायोगाद्विष्णुस्वान्तर्यामिणोरैक्यानुसन्धान-योगात् । क्षीणपापस्य । ननु "देवाद्यशापाभिभूतत्वात्प्रह्लादस्यानसूविरे" इति प्रमाणात्प्रह्लादस्य देवलोकेऽध अपरोक्षज्ञाननियमात् "नदेवपदवीं प्राप्ता ब्रह्मदर्शनवर्जिताः" इत्युक्तेः । अपरोक्षज्ञानोदयकाल एव सञ्चि-तपापानां नाशादपरोक्षज्ञानोत्तरकालीनानांच लयात् । प्रारब्धकर्मणांच भोगैकनाश्यत्वेन ज्ञाननाश्यत्वा-भावात्कथमिदानीं क्षीणपापत्वोक्तिरितिचेत्सत्यं । प्रारब्धानामेव येषाञ्चिज्ज्ञानातिशये न फलह्रासरूप-क्षयसंभवेन तदुक्त्युपपत्तेः । तदुक्तं भविष्यत्पर्वणि । "महत्ताकरणेनैव प्रारब्धान्यपि कानिचित् । कर्माणि क्षयमायान्ति अक्षरश्मितः क्वचित्" इति ॥ ३ ॥ विष्णुमये विष्णुप्रचुरमनस्के असुरे प्रह्लादे चलति सति ते उरगबन्धाः त्रुटिताः छिन्नाः । उरगबन्धैस्तैर्मैत्रेयत्रुटितमिति क्वचित्पाठः ॥ ४ ॥ भ्रान्तः प्राहगणो नक्रादिगणो यस्मिन्सः । सोर्मिः ऊर्मिभिः सहितः । काननमपारवनं । वनमल्पवनं

रत्नगर्भीयम् ।

एवं सर्वाभेदेन चिन्तयन्नच्युतमात्मानं मेनेऽप्यवयम् । तदेव तन्मयत्वं तदभेदमवाप । "ब्रह्मवेद्ब्रह्मैवभवति"-इतिश्रुतेः ॥ १ ॥ भावनायोगात् पूर्वकृतात् । क्षीणपापस्य ध्वस्तकर्मवासनामलस्य । ज्ञानमयोऽच्युतोऽन्तः-करणे ब्रह्माकारतया परिणतायां बुद्धौ ॥ ३ ॥ जीवात्मपरमात्मनोरैकीकरणं योगस्तत्प्रभावात् त्रुटितं

[पा०] १ ख. घ ङ. दचिन्तयत. २ ग. घ. च. छ. व्ययो नित्य . ३ [विष्णु चि० पा०] चन्यं तन्मैत्रेय [श्रीध० ।०] बन्धास्ते मैत्रेय त्रुटिता

स च तं शैलसंघातं दैत्यैर्न्यस्तमधोपरि ।
उत्क्षिप्य तस्मात्सलिलान्निश्चक्राम महामतिः ॥ ६ ॥
दृष्ट्वा च स जगद्भूयो गगनाद्युपलक्षणम् ।
प्रह्लादोऽस्मीति सस्मार पुनरात्मानमात्मनि ॥ ७ ॥
तुष्टाव च पुनर्धीमाननादिं पुरुषोत्तमम् ।
एकाग्रमतिरव्यग्रो यतवाक्कायमानसः ॥ ८ ॥

प्रह्लाद उवाच ॥

ॐ नमः परमार्थार्थ स्थूल सूक्ष्म क्षराक्षर ।
व्यक्ताव्यक्त कलातीत सकलेश निरञ्जन ॥ ९ ॥
गुणाञ्जन गुणाधार निर्गुणात्मन्गुणस्थित ।
मूर्तामूर्त महामूर्ते सूक्ष्ममूर्ते स्फुटास्फुट ॥ १० ॥

चित्सुखीयम् ।

प्रधान । कलातीत निरवधिकमिति यावत् । निरञ्जन असङ्ग ॥ ९ ॥ गुणानामाधारः गुणेषु स्थितः ।

श्रीधरीयम् ।

माहेति । भ्रान्तो ग्राहगणो यस्मिन् । सोर्मिः ऊर्मिभिस्सह वर्तमानः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ॐ नम इति । हे परमार्थज्ञानरूप हे अर्थदृश्यरूप । "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्" । इत्युक्तत्वात् । स्थूल जाग्रद्दृश्यरूप । सूक्ष्म स्वाप्नदृश्यरूप । क्षराक्षर कार्यकारणरूप । अक्षरात्परेति पाठान्तरे अक्षरं प्रधानं तस्मादपि परं यदन्नाधारं ब्रह्म तद्रूप । "अक्षरात्परतःपरः" इति श्रुतेः । व्यक्ताव्यक्त दृश्यादृश्यरूप । कलातीत निरवयव । सकल सावयव । ईश नियामक । निरञ्जन निर्लेप ॥ ९ ॥ गुणाञ्जनेति । गुणाननक्ति स्वसत्ताप्रकाशाभ्यामनुरञ्जयतीति

विष्णुचित्तीयम् ।

पाठः ॥ ४ ॥ ५ ॥ ६ ॥ दृष्ट्वेति । प्रह्लादोऽस्मीति लोकदृष्ट्या केवलमौपाधिकरूपावच्छिन्नमात्मानं सस्मार । न तु परमात्मरूपतया ॥ ७ ॥ ८ ॥ ओनम इति । परमार्थाय अविनाशी परमार्थः । परमार्थार्थेति पाठे अर्थशब्दः प्रयोजनवाची । स्थूलेत्यादि । सूक्ष्ममक्षरमव्यक्तं कारणरूपं । स्थूलं क्षरं व्यक्तं कार्यरूपम् । कलातीत पञ्चेन्द्रियाणि पञ्च विषयाः पञ्च भूतानि च कलाः । कलातीत मुक्तरूप । निरञ्जन इद न मुक्तरूपम् । "निरञ्जनः परमं साम्यमुपैति" इति श्रुतेः ॥ ९ ॥ गुणाञ्जनेति । गुणा-

दत्तात्रेयीयम् ।

॥ ५ ॥ असम्प्रज्ञातसमाध्युपरतिमाह—सचेत्यादिना ॥ ६ ॥ ॐ पालकाय "अवनाद्योगीति स्मृतम्" इतिवचनात् । परमार्थाय स्वतन्त्राय । अविनाशिने इतिवा । परमार्थार्थेति पाठे अर्थप्रयोजनरूप । "एकान्तानां नकस्यचित् । अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्" इति वचनात् । अथवा सर्ववेदाभिधेय । मुमुक्षुप्रत्यक्षाविषयेति वा । स्थूलसूक्ष्मविग्रहरूपादिना स्थूलजीवाद्यन्तर्गतरूपादिना सूक्ष्म । क्षराक्षर क्षरशब्दवाच्य सर्वभूतानामक्षरशब्दवाच्य लक्ष्म्याश्च नियामक । "यदधीनायस्यसत्ता" इत्यादेः । "ब्रह्मादिजीवास्सर्वेऽपि शरीरक्षरणात्क्षराः । लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः" इतिश्रुतेः । क्षराक्षरशब्दयोरुक्त एवार्थः । अक्षरात्परेति पाठे लक्ष्म्या अप्युत्तम इत्यर्थः । "अक्षरात्परतःपरः" इतिश्रुतेः । व्यक्ताव्यक्त भक्तानां व्यक्त । अभक्तानामव्यक्त । कलातीत प्राणादिपञ्चदशकलातीत तत्तोऽप्युत्तम । "कलापञ्चदशोत्युक्ता श्वेतद्वीपनिवासिनाम्" इत्यादिना प्राणादीनां कलात्वप्रसिद्धेः । सकलेश सकलस्वामिन् । निरञ्जन निर्दोष ॥ ९ ॥ गुणाञ्जन गुणान् रूपादीननक्ति सत्ताप्रकाशाभ्यामनुरञ्जयतीति

रत्नगर्भीयम् ।

छिन्न ॥ ४ ॥ जगद्दृष्ट्वेति आरब्धकर्मवशादित्यर्थः ॥ ७ ॥ निर्गुणात्मन्निरस्त हेतुगर्भसंबोधनं । परास्थित

[ पा० ] १ ख समारं शैलं २ ङ सपात ३ ग लक्षितं ४ क—ङ मात्मना ५ क ग ङ च छ ज ट परमार्थार्थ ६ ठ सूक्ष्माक्षराक्षर । [श्रीध० पा०] सूक्ष्माक्षरात्पर. ७ ग ङ गुणस्थिर । [वि० पा०] परास्थित

करालसौम्यरूपात्मन्विद्याविद्यामयाच्युत । सदसद्रूपसद्भाव सदसद्भावभावन ॥ ११ ॥
नित्यानित्यप्रपञ्चात्मन्निष्प्रपञ्चामलाश्रित । एकानेक नमस्तुभ्यं वासुदेवादिकारण ॥ १२ ॥

चित्सुखीयम् ।

परस्थितः कार्यकारणेभ्यः परतः स्थितः । मूर्तं पृथिव्यप्तेजोरूपं भूतत्रयं । अमूर्तं वाय्वाकाशरूपं भूतद्वयं तदात्मक । विदुषां सुगमम् अविदुषामस्फुटं ॥ १० ॥ सत्परार्थं असत्परोक्षं तयोः सदसद्रूपयोः सद्भावः परमार्थः । तयोरेव सदसद्भावयोः उत्पादक ॥ ११ ॥ अमलैः शुद्धान्तःकरणैः आ-

श्रीधरीयम् ।

तथा । गुणानामाधार गुणेषु स्थित । परस्थितेति पाठे परमव्यक्तं तत्र स्थितेत्यर्थः । भक्तानां स्फुट अन्येषामस्फुट ॥ १० ॥ करालेति । करालसौम्यरूपाणामात्मन् सदसद्रूपयोः कार्यकारणयोः सद्भाव उत्पत्तिर्यस्मात्तथैव सदसद्भावौ भावयति पालयतीति तथा ॥ ११ ॥ नित्येति । अमलैर्ज्ञानिभिराश्रितः तस्य संबुद्धिः । परमार्थेत्यादिष्वादिकारणेत्यन्तेषु षड्विंशत्सम्बोधनेषु तुभ्यं नम इत्यनुषङ्गेण मन्त्रैकं

विष्णुचित्तीयम् ।

धाम गुणाधारेति समष्टिरूपं । यथेदं धार्यते जगदिति । निर्गुणात्मन् "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति । गुणस्थित समस्तकल्याणगुणात्मकोऽसावितिं । मूर्तोऽमूर्त स्थूलसूक्ष्मप्रपञ्चरूप । महामूर्ते विश्वरूपाध्यायोक्तमहामूर्तिः । वैश्वानरमूर्तिर्वा । सूक्ष्ममूर्तिर्व्यूहः । स्फुटो विभवः अस्फुटं पररूपम् ॥ १० ॥ करालेति । करालत्वं संहारादिषु । सौम्यात्मत्वं स्वतः । अविद्या कर्म । अभिमानं वा । सदसद्रूप भावाभावरूप । सद्भाव सत्पदार्थ । "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । सद्भावे साधुभावे च सत्" इति । वस्तूनां सदसद्भावौ करोति जानातीति वा । सदसद्भावभावन ॥ ११ ॥ नित्यानित्येति । अनित्यं घटादि । तदपेक्षया नित्यं गगनादि । निष्प्रपञ्च प्रपञ्चाभिर्गत । प्रपञ्चोत्तीर्ण-

दत्तात्रेयीयम् ।

तथा । गुणानां ज्ञानानन्दादिकल्याणानामाधार । निर्गुणात्मन् सत्त्वादिगुणरहितस्वरूप । गुणस्थित गुणेषु स्थित्वा तन्नियामक । परस्थितेति पाठे परमव्यक्तं तन्नियामकत्वेन तत्र स्थित । मूर्तामूर्त परिच्छिन्नापरिच्छिन्नस्वरूप । मूर्तामूर्तपदार्थनियामकेतिवा । महामूर्ते महत् ब्रह्माण्डादिकं मूर्तिः प्रतिमा यस्य स तथा । सूक्ष्ममूर्ते सूक्ष्मं परमाण्वादिकं मूर्तिः प्रतिमा यस्य स तथा । स्फुटास्फुट अवतारमूलरूपाभ्यां ॥ १० ॥ करालरूप नृसिंहादिरूप । सौम्यात्मन् व्यासादिसौम्यरूप । विद्याविद्यामय विद्या श्रीः अविद्या दुर्गा तयोः प्रधान । तदुक्तं वैभवे । "श्रीस्तु विद्या समुद्दिष्टा दुर्गाऽविद्या प्रकीर्तिता । सेत्यनादी हरेरिच्छावशगे सर्वदैव तु" इति । सदसद्रूपसद्भाव सदसद्रूपयोः कार्यकारणयोः सद्भाव उत्पत्तिर्यस्मात्तयोरवस्थानं यस्मेतिवा । सदसद्भावभावन सदसद्भावौ भावयति करोति पालयतीति वा तथा ॥ ११ ॥ नित्यानित्यप्रपञ्चात्मन् नित्यप्रपञ्चो गगनादिः । अनित्यप्रपञ्चो घटादिः । तदात्मन् तदन्तर्यामिन् । निष्प्रपञ्च उभयविधप्रपञ्चोत्तीर्ण । अमलाश्रय अमलानां मुक्तानामा-

रत्नगर्भीयम् ।

गुणेभ्यः परतः स्थितेति ॥ १० ॥ विद्याविद्यामय सत्यमिथ्याज्ञानरूप तथाऽपि अच्युत वस्तुतो नित्य

[ पा० ] १ क. विद्यात्म्याच्युत. २ क—घ. छ. मलाश्रय । ख. स्थिताश्रय.

यः स्थूलसूक्ष्मः प्रकटः प्रकाशो
यः सर्वभूतो न च सर्वभूतः ।
विश्वं यतश्चैतदविश्वहेतो
नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ १३ ॥

पराशर उवाच ॥

तस्य तच्चेतसो देवः स्तुतिमित्थं प्रकुर्वतः ।
आविर्बभूव भगवान्पीताम्बरधरो हरिः ॥ १४ ॥
ससम्भ्रमस्तमालोक्य समुत्थायाकुलाक्षरम् ।
नमोऽस्तु विष्णवेत्येतद्व्याजहारासकृद्द्विज ॥ १५ ॥

प्रह्लाद उवाच ॥

देव प्रपन्नार्तिहर प्रसादं कुरु केशव ।
अवलोकनदानेन भूयो मां पावयाच्युत ॥ १६ ॥

श्रीभगवानुवाच ॥

कुर्वतस्ते प्रसन्नोऽहं भक्तिमव्यभिचारिणीम् ।
यथाभिलषितो मत्तः प्रह्लाद व्रियतां वरः ॥ १७ ॥

प्रह्लाद उवाच ॥

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युताभक्तिरच्युतास्तु सदा त्वयि १८॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मोपसर्पतु ॥ १९ ॥

चित्सुखीयम् ।

थितः सेवितः ॥ १२ ॥ प्रकटः प्रकाशो यस्य स तथा । न च सर्वभूतः परमार्थगत्या । अविश्वहेतो- र्वस्तुवृत्त्या ॥ १३ ॥ सा तत्सदृशी प्रीतिः हृदयान्नैवापसर्पतु । स्थिरा भवत्विति यावत् ॥ १९ ॥

श्रीधरीयम् ।

प्रत्येकं वाक्यसमाप्तिः कर्तव्या ॥ १२ ॥ य इति । सर्वेषां भूतानां यः प्रकटप्रकाशस्त्रिकालसत्यात् । अविश्वहेतो सर्वकारणव्यतिरिक्त ॥ १३ ॥ १४ ॥ ससम्भ्रम इति । विष्णवेति सन्धिरार्षः ॥ १५ ॥ देवेति । अवलोकन प्रत्यक्षदर्शनं तस्य दानेन ॥ १६ ॥ १७ ॥ नाथेति । हे अच्युत त्वयि मे अ- च्युता एकान्तिका भक्तिरस्तु ॥ १८ ॥ एकान्तभक्तिः परमप्रीत्यधीनेति तां प्रीतिं प्रार्थयते—येति ।

विष्णुचित्तीयम् ।

सर्वैः । एकानेक कारणरूपेणैक । कार्यरूपैरनेक ॥ १२ ॥ उपसंहरति—य इति । स्थूलत्वात्प्रकटः । सूक्ष्म- त्वादप्रकाशः । यः स्थूलसूक्ष्मप्रकटाप्रकाश इति च पाठः । सर्वभूतः स्वेतरसर्ववस्तुशरीरः । न च सर्वभूतः स्वेतरसमस्तवस्तुविलक्षणः । अविश्वहेतुः तद्व्यकर्मसापेक्षत्वात् स्वतोविषमसृष्टेरहेतुः ॥ १३ ॥

दत्तात्रेयीयम् ।

अच । एकानेक मूलरूपेणैक । अवतारूपेणानेक ॥ १२ ॥ स्तुतिमुपसंहरति—य इति । स्थूलसू- क्ष्माणां पदार्थानां प्रकटः स्पष्टः प्रकाशो यस्मात्स तथा । "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । सर्वभूतः सर्वान्तर्यामितया सर्वेषु पदार्थेषु भूतो विद्यमानः । न तु सर्वपदार्थैः ते स्वरूपभूतः । अविश्वहेतोः सर्वकारणव्यतिरिक्तादेतद्विश्वं भवति ॥ १३ ॥ तच्चेतसः तन्मयिन्यिणी चेतो यस्य तस्य ॥ १४ ॥ आकुलाक्षरमिति क्रियाविशेषणं । विष्णवेत्येतत्सन्धिरार्षः ॥ १५ ॥ यथाभिलषितः यथेष्टः ॥ १७ ॥ अच्युता ह्रासरहिता ॥ १८ ॥ ह्रासरहिता भक्तिः परमप्रीत्यधीनेति तां प्रार्थयति—येति ।

रत्नगर्भीयम् ।

॥ ११ ॥ स्थूलं पृथिव्यादि । सूक्ष्मं तन्मात्रादि । तत्स्वरूपो जडरूप इति यावत् । प्रकटाप्रकाश इति पाठे योगिनां प्रकटः संसारिणामप्रकाशः ॥ १३ ॥ अतितेजस्वित्वाद्भिरिष्यापश्यन्प्रार्थयते । ध्याना- दन्यः पवित्रमपि मां भूयः पुनः पावय ॥ १६ ॥ आत्मानं प्रदर्शयाह—कुर्वत इति ॥ १७ ॥ नाप-

[पा०] १ [विष्णु० चि० पा०] सूक्ष्मप्रकटाप्रकाशो । [दत्ता० पा०]—सूक्ष्मप्रकटप्रकाशो २ [दत्ता० चि० पा०] दविश्वहेतो. ३. ग अहारासकृद्द्विज ४ अ. ग. ठ. पावयाव्यय । ५. स च—ज. पावयाव्यय. ६ ठ. स्वपसर्पतु.

श्रीभगवानुवाच ॥

मयि भक्तिस्तवास्त्येव भूयोऽप्येवं भविष्यति ।
वरस्तु मत्तः प्रह्लाद व्रियतां यस्त्वयेप्सितः ॥ २० ॥

प्रह्लाद उवाच ॥

मयि द्वेषानुबन्धोऽभूत्संस्तुतावुद्यते तव ।
मत्पितुस्तत्कृतं पापं देव तस्य प्रणश्यतु ॥ २१ ॥
शस्त्राणि पातितान्यङ्गे क्षिप्तो यच्चाग्निसंहतौ ।
दंशितश्चोरगैर्दत्तं यद्विषं मम भोजने ॥ २२ ॥
बद्ध्वा समुद्रे यत्क्षिप्तो यच्चितोऽस्मि शिलोच्चयैः ।
अन्यानि चाप्यसाधूनि यानि पित्रा कृतानि मे ॥
त्वयि भक्तिमतो द्वेषादघं तत्संभवं च यत् ।
त्वत्प्रसादात्प्रभो सद्यस्तेन मुच्यतु मे पिता २४ ॥

श्रीभगवानुवाच ॥

प्रह्लाद सर्वमेतत्ते मत्प्रसादाद्भविष्यति ।
अन्यं च ते वरं दद्मि व्रियतामसुरात्मज ॥ २५ ॥

---

श्रीधरीया ।

या यादृशी प्रीतिर्विषयेषु तदासक्तानां सा तादृशी प्रीतिर्मे हृदयान्मापसर्पतु मापयातु । हृदये सदा तिष्ठत्वित्यर्थः । यद्वा हे नाथ लक्ष्मीपते सा विषयप्रीतिस्त्वामनुस्मरतो मे हृदयात् सर्पतु निर्गच्छतु । तत्प्रीतौ सत्यां त्वदनुस्मरणायोगादित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ बध्वेति । शिलोच्चयैः पर्वतैश्चितोऽस्म्याक्रान्तोऽस्मि । अन्यानीति । तेन पापेन मे पिता मुच्येत ॥ २३ ॥ २४ ॥ २५ ॥

विष्णुचित्तीयम् ।

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ मयीति । मयि द्वेषानुबन्ध इत्यसाक्षोपचारः । मत्पितुरिति क्षमाहेतुः ॥ २१ ॥ २२ ॥ २३ ॥ त्वयीति । त्वयि भक्तिमतो द्वेषादित्यस्य शस्त्राणि पातितानीत्यादिना सम्बन्धः । तत्संभवं शस्त्रपातादिना संभवम् । अयं भागवतापचारः ॥ २२ ॥ २३ ॥

वृत्ताग्नेयीयम् ।

अविवेकानां विषमासक्तानां या यादृशी सा तादृशी विषयासक्तानां विषयेषु प्रीतिवत् त्वद्विषयप्रीतिर्मम हृदयान्न निर्गच्छत्वित्यर्थः । हे नाथ हरे ते सा संस्काररूपा विषयप्रीतिर्मे सम हृदयान्मनसः सर्पतु यातु । त्वत्स्मरणपरिपन्थित्वादिति भावः ॥ १९ ॥ मयि त्वत्संस्तुतावुद्यते सति मत्पितुस्त्वद्विषयद्वेषानुबन्धोऽभूत् । "अनुबन्धस्तु भविः स्याद्बन्धः कोऽद् उदाहृतः" इति प्रयासमंदितानवचनात् । हिरण्यकस्य द्वेषयुक्ता मतिश्चोक्ता पाद्मे "अतो हिरण्यकादीनां भक्तिरस्त्येव केशवे । असुरावेशतस्त्वस्मान्हरिणोर्तृद्विषन्त्यिप" इति । तदुक्तं द्वयम् । अत्र हिरण्यकशरीरे सदसज्जीवद्वयपक्षेः । तत्र सज्जीवस्य द्वेषयुक्ताशक्तिः तस्यैव द्वेषस्य तत्पापस्य नाशः प्रार्थ्यते । उत्तरत्र भगवता क्रियमाणपापप्रणाशार्थंदानेष तद्विषय एव । असज्जीवस्तु शुद्धद्वेषित्वेन भक्तिलेशाभावान्नियमेनान्धंतमःप्राप्स्यतीति द्रष्टव्यं । तदुक्तं गारुडे । "पूतनाकंसनरकशिशुपालादिषु द्विधा । जीवास्सन्तस्त्वसन्तश्च तत्र बन्धादिरूपिणः । विष्णोरनन्त इति ज्ञेया असन्तश्चासुररूपिणः । शुभजीवप्रवासेन कदाचिच्छुभमुद्भवः । विपर्ययेऽन्धयाप स्वरूपास्तत्र हरि ययुः । असुरास्तु तमो घोरम्" इत्यादि । शिशुपालादिष्वित्यादिपदेन हिरण्यकादीनां ग्रहणं ॥ २१ ॥ शिलोच्चयैः पर्वतैश्चित आक्रान्तोऽस्मि । त्वयि भक्तिमतो मे द्वेषादन्यान्यप्यसाधूनि कृतानि ।

रत्नगर्भीयम् ।

सर्पत्विति वा पाठः ॥ १९ ॥ सात्त्वतपञ्चरात्रानां तत्संभवमित्यनेनान्वयः । मुच्यत्विति पाठे परस्मै-

[ पा० ] १ ग भविष्यति २ ट यच्चान्येऽदर्द दत्ति यत्परो १ ख ट ड त्वत्प्रसादात्प्रभो ४ ड मुच्येत

## संस्कृतनूतनपुस्तकानि ।

श्रीलौगाक्षिभास्करप्रणीतः

# अर्थसंग्रहः ।

श्रीमत्परमहंसरामेश्वरशिष्ययोगिभिक्षुप्रणीत मीमांसार्थ संग्रहकौमुदीव्याख्यायुतः ।

मूल्यं १२ आणकाः मार्गव्ययः २ आणकौः

अयं ग्रन्थो निखिलमीमांसापदार्थनिरूपणपरत्वेन जैमिनीयतन्त्रप्रविविक्षूणां सर्वेषामत्यन्तोपकारकः सर्वान्मीमांसाप्रकरणग्रन्थानतिशेते । अयमनेकवारमङ्कितोऽप्यशुद्धिबाहुल्यादनुचितसंदर्भ आसीत्सोऽस्माभिर्महता यत्नेन संशोध्य टिप्पणादिभिरलंकृत्य मुद्रितोऽस्ति ।

---

# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## मूलमात्रं, सटिप्पणम् ।

मूल्यं २ रु. मार्ग. ४ आ.

श्रीमद्भगवत्पादाचार्यप्रणीतोऽयं ग्रन्थोऽद्वैतवेदान्तशास्त्रमूर्धन्यत्वेन समुल्लसतीति नापेक्षास्त्येतदीयप्रौढिवादस्य । अयं च पाठप्रवचनाद्यध्यापकान्तेवासिवर्गग्रहणक्षमः स्वक्षरोऽल्पायामपरिणाहोऽत्यन्तमनोहरोऽपि स्वल्पमूल्य इदानीमस्माभिर्टीकामहान्मुद्रितोऽस्ति । स्थलविशेषे व्याख्यासाहाय्यमन्तरापि निर्वाहपर्याप्तविशदटिप्पणयोजनं विहितमस्त्यत्र महतायासेन.

---

एतान्यन्यान्यपि च पुस्तकानि ग्रहीतुकामास्तानि मूल्यप्रेषणेन, व्ही. पी. द्वारा प्रेषणावेदनेन वा निर्णयसागरयन्त्रालयाद्ग्रहीरन् । अत्रानिर्दिष्टानि पुस्तकानि जिघृक्षवश्च सूचीपत्रं पत्रप्रेषणमात्रेण लभेरन्निति विज्ञापयति—

निर्णयसागरयन्त्रालयाधिपतिः
तुकाराम जावजी,
काळबादेवीरोड, मुंबई.

| | Price. Rs. As. | Postage. Rs. As. |
|---|---|---|
| **Saptas'ati ( Chandî pâtha )** with **Devi sûkta** and the three Rahasyas (Large type, silk binding) ... | 0 11 | 0 2½ |
| Do. with Prayogas (Small type, silk binding) .. | 0 5 | 0 1 |
| Do. Do (Large type, Pothi form) ... | 0 8 | 0 2½ |
| Do Do (Medium type, paper binding) ... | 0 5½ | 0 2½ |
| Do. Do. ( " silk binding ) ... | 0 7 | 0 1 |
| Do Do (Smallest type, smallest form, silk binding) ... | 0 2½ | 0 ½ |
| **Sarva-pûjâ** ... | 0 1 | 0 ¼ |
| **S'iva-sahasra-nâmâvali** ... | 0 1½ | 0 ¼ |
| **Sûrya-sahasra nâmâvali** ... | 0 1½ | 0 ¼ |
| **Trikâla Sandhyâ** Rigvediyâ... | 0 ¾ | 0 ¼ |
| Do Hiranyakes'iyâ ... | 0 ¾ | 0 ¼ |
| Do Yajurvediyâ ... | 0 ½ | 0 ¼ |
| **Trisuparna** ... | 0 ½ | 0 ¼ |
| **Utsarjanopâkarana vidhi** (Rigvedi S'râvani) ... | 0 2 | 0 ½ |
| **Vais'vadeva** (With Bahbarana Mandala) .. | 0 ¾ | 0 ¼ |
| **Vishnu sahasra-nâmâvali** ... | 0 1½ | 0 ½ |
| **Vivâha paddhati** ( Yajurvediyâ ) ... | 0 4 | 0 1 |

## PURANIC & HISTORICAL.

| | Price. Rs. As. | Postage. Rs. As. |
|---|---|---|
| **Adhyâtma râmâyana** (Silk binding) ... | 0 10 | 0 1½ |
| **Bhâgavata** (Text) (Small type, Silk binding) ... | 1 4 | 0 3½ |
| **Bhâgavata** (Small type) (10th Skandha) with the commentary (Toshanisâra) which is an Abridgement of the Brihat-toshani by Kâs'inâthopâdhyâya, author of Dharmasindhu Moreover the meanings of the several Maxims have been fully explained by the help of several commentaries so as to make the work in every way useful to the preacher ... | 3 0 | 0 7 |

## BHÂGAVATA

WITH THE COMMENTARY

### CHURNIKA

| | Price. Rs. As. | Postage. Rs. As. |
|---|---|---|
| (Glaze paper) ... | 6 0 | 1 0 |
| (Rough paper) ... | 5 0 | 1 0 |

## BHÂGAVATA

WITH THE COMMENTARY

### (SHRIDHARI) of SHRIDHARA

Second Edition.

The peculiarity of the additional notes is that the hidden meanings of the different narrations have been brought out and fully explained by them with the help of other commentaries, and the different readings too have been given, at the head of each of the chapters an abstract has been given to facilitate ready reference and pictures have been embodied.

| | Price. Rs. As. | Postage. Rs. As. |
|---|---|---|
| Râmâyaṇa of Vâlmiki, with the commentary (Tilakâ) of Râma (Book form) .. | 7 0 | 0 14 |
| Do. Text only. (Silk binding) ... | 5 0 | 0 8 |
| Do. Sundarakâṇḍa, Text only. (Silkbinding) ... | 0 12 | 0 2 |
| Satya Nârâyana Kathâ (Text only) ... | 0 1 | 0 ½ |
| Vidura-niti with notes ... | 0 6 | 0 ½ |
| Vinâyaka Mâhâtmya (text only) ... | 0 8 | 0 2 |

## VEDANTIC.

| | | |
|---|---|---|
| Anubhûti prakâsa of Vidyâranya-Swâmi... | 1 0 | 0 1½ |
| As'tottarshatopanis ads—containing the wellknown 108 Upanis'ads together with four others making 112 in all. This volume has been prepared from an old MS. which was lent to us by the celebrated Shastri Jatâshankar Jayakrishna, and with the help of several printed editions of the different Upanis ads the *varia lectiones* have been given in the foot notes. This collection being the very essence of the Veda it is much prized—we have, therefore, brought out the volume in a very handy and portable book form with silk binding ... | 2 0 | 0 4 |
| Ashtâvims'ati Upanishads —Comprising —(1) Îs'a, (2) Kena, (3) Katha, (4) Pras'na, (5) Mundaka, (6) Mândûkya, (7) Taittiriya, (8) Aitareya, (9) Chhândogya, (10) Brihadaranyaka, (11) S'vetâs'vatara, (12) Kaivalya, (13) Jâbâla, (14) Garbha, (15) Nârâyanâtharva, (16) Nârâyana, (17) Brihad-Jâbâla, (18) Kaushitaki, (19) Sûrya, (20) Krishna, (21) Hayagriva, (22) Dattâtreya, (23) Rudrâksha, (24) Mahâvâkya, (25) Kali-santarana, (26) Jâbâli, (27) Bahvricha, and (28) Muktika. ... | 0 12 | 0 2 |

# THE BRAHMASÛTRA-BHÂSHYA

WITH THE COMMENTARIES

## RATNAPRABHÂ, BHÂMATÎ, and NYÂYANIRNAYA.

The importance of Shri Shankarâchârya's Bhâshya of *Brahmasûtras* is too well known to the Sanskrit-knowing public. Although several editions of the Bhâshya have been before the public for many years, each of them contained only one of the above named three commentaries. They were beyond the reach of men of ordinary means, as the price of each of them was much higher than that of the present edition with its three commentaries. To one wishing to possess all the three commentaries, the other editions together will cost about Rs. 30, while our edition costs a little over one-third the amount.

The paper, type, and the general get up of our edition are excellent. It is bound in cloth and consists of more than 900 pages of super-royal octavo size. It has been edited by two learned shâstrees.

It contains :—

- I Brahmasûtras of Shri Vyâsa.
- II The Adhikarana verses of Shri Bhârati Tirtha.
- III The Bhâshya of Shri Shankarâchârya.
- IV The Ratna Prabhâ commentary by Shri Govindânanda.
- V The Bhâmati commentary by Shri Vâchaspati Mishra.
- VI The Nyâyanirnaya commentary by Shri Ânandagiri.
- VII A table of the Adhikaranas.
- VIII An alphabetical index of the Sûtras.

The learned editors have added notes to elucidate the Chatus-sûtri. They have noted also the original places of quotations from Upanishads for convenience of reference. In short, no pains have been spared to make the work acceptable in every respect.

**Price Rs. 8-0; Postage annas 10.**

# SRIMAD-VISHNU-PURĀNAM

The First, Complete, Critical and Variorum Edition






## PURVA-BHĀGA

With the commentaries of the Three Schools of Hindu Philosophy—Adwaita, Visishtadwaita and Dwaita,—and Readings.



AMSHA 2.


Edited and Published
by
**T. R. VYASACHARYA,**
Proprietor, Sri Venkatêsh Bhavan Book Depôt, Kumbakonam
Formerly Editor of Mahabharata, Ramayana &c &c. Sanskrit works.



Printed by Ramchandra Yesu Shedge,
*at the "Nirnaya-sagar" Press, 23, Kolbhat Lane,*
**BOMBAY.**

1915.

॥ श्रीः ॥

# श्रीमद्विष्णुपुराणम् ।



## पूर्वभागः ।

द्वैताद्वैतविशिष्टाद्वैतपरैः पञ्चभिर्व्याख्यानरत्नैः समलङ्कृतः ।



## द्वितीयांशः २.

---

श्रीकुम्भघोणनगरनिवासिना श्रीवेङ्कटेशभवनपुस्तकालयाधिपतिना
पूर्वं महाभारतरामायणाद्यनेकग्रन्थानां प्रकाशकर्त्रा

**टी. आर्. व्यासाचार्येण**

अनेकेषां विदुषां साहाय्येन नानादेशोपलब्धापूर्वकोशानुसारेण
संशोध्य

मुम्बापुर्यां
तुकाराम जावजी इत्येतेषां सुप्रसिद्ध "निर्णयसागर" मुद्रणयन्त्रे
मुद्रयित्वा प्रकाशितम् ।

---

शाके १८१७ राक्षसनामसंवत्सरे ।

प्रह्लाद उवाच ॥

कृतकृत्योऽस्मि भगवन्वरेणानेन यत्त्वयि ।
भवित्री त्वत्प्रसादेन भक्तिरव्यभिचारिणी २६ ॥
धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि २७॥

श्रीभगवानुवाच ॥

यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणं परमाप्स्यसि ॥२८॥

श्रीपराशर उवाच ॥

इत्युक्त्वाऽन्तर्दधे विष्णुस्तस्य मैत्रेय पश्यतः ।
स चापि पुनरागम्य ववन्दे चरणौ पितुः ॥ २९ ॥
तं पिता मूर्ध्न्युपाघ्राय परिष्वज्य च पीडितम् ।
जीवसीत्याह वत्सेति बाष्पार्द्रनयनो द्विज ३० ॥
प्रीतिमांश्चाऽभवत्तस्मिन्ननुतापी महासुरः ।
गुरुपित्रोश्चकारैवं शुश्रूषां सोऽपि धर्मवित् ॥३१॥
पितर्युपरतिं नीते नरसिंहस्वरूपिणा ।
विष्णुना सोऽपि दैत्यानां मैत्रेयाभूत्पतिस्ततः ३२
ततो राज्यद्युतिं प्राप्य कर्मशुद्धिकरीं द्विज ।
पुत्रपौत्रांश्च सुबहूनवाप्यैश्वर्यमेव च ॥ ३३ ॥
क्षीणाधिकारः स यदा पुण्यपापविवर्जितः ।
तदा स भगवद्ध्यानात्परं निर्वाणमाप्तवान् ३४ ॥
एवंप्रभावो दैत्योऽसौ मैत्रेयासीन्महामतिः ।
प्रह्लादो भगवद्भक्तो यं त्वं मामनुपृच्छसि ॥३५॥
यस्त्वेतच्चरितं तस्य प्रह्लादस्य महात्मनः ।
शृणोति तस्य पापानि सद्यो गच्छन्ति संक्षयम् ॥
अहोरात्रकृतं पापं प्रह्लादचरितं नरः ।
शृण्वन्पठंश्च मैत्रेय व्यपोहति न संशयः ॥ ३७ ॥

श्रीधरीयम् ।

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ प्रीतिमानिति ॥ वैष्णवानुभावदर्शनात्प्रीतिमांश्च तदा वत्सि-प्रभवत् ॥ ३१ ॥ पितरीति । पुनश्च कालान्तरे ब्रह्मशापवशात्तद्विक्षोभेन तं हन्तुमुद्यते तस्मिन्पितरि नृसिंहरूपेण विष्णुना उपरतिं नीते सति प्रह्लादो दैत्यानां पतिरभूत् ॥ ३२ ॥ तत इति । राज्यभूतिं राज्यलक्ष्मीं । कर्मशुद्धिकरीं भोगैः प्रारब्धक्षयकरीं प्राप्य ॥ ३३ ॥ क्षीणाधिकार इति । क्षीणाधिकारः क्षीणप्रारब्धकर्मा । ज्ञानात्पूर्वोत्तरैः पुण्यपापैश्च वर्जितः । "पूर्वसर्वकर्मणां विनाशादश्लेषाश्चोत्तरेषां तत्सुकृतदुष्कृते विधूनुतः" इत्यादिश्रुतेः । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति न्यायाच्च ॥ ३४ ॥ ३५ ॥ ३६ ॥ अहोरात्रकृतमिति । अहोरात्रे निरन्तरं यत्कृतं पापं तत्सकृच्छ्रृण्वन्नेव पठन्नेव वा विशेषेण सवासनमपोहति निरस्यति । न तु संपूर्णं पठित्वा श्रुत्वा चेत्येकदेशश्रवणपाठफलोक्तिः

विष्णुचित्तीयम् ।

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

वृत्तान्तेयीयम् ।

तत्संभवं द्वेपसम्भवं यदघं ततोऽघान्मे पिता मुच्येत ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ पीडितं गाढं यथा भवति तथा ॥ ३० ॥ उपरतिं नाशं । सोऽपि प्रह्लादोऽपि ॥ ३२ ॥ कर्मशुद्धिकरीं । प्रारब्धकर्मक्षयकरीं ॥ ३३ ॥ क्षीणाधिकारः क्षीणप्रारब्धकर्मा । पुण्यपापविवर्जितः पुण्यं बन्धकं ।

रत्नगर्भीयम् ।

पदमार्थं ॥ २४ ॥ "भक्त्या मामभिजानाति, तमेवविदित्वातिमृत्युमेति" इत्यतो भक्त्यैव कृतार्थोऽस्मि । किमन्येन त्रिवर्गेणेत्यत आह—धर्मेति ॥ २७ ॥ निर्वाणं विदेहकैवल्यं ॥ २८ ॥ विष्णुप्रसादक्षीणपापस्य

[ पा० ] १ घ स्थिता. २ क. देवस्तस्य. ३ घ. मदनो. ४ घ च. ततो राज्यश्रियं । ख. ग. ङ. तद्राज्यभूति मप्राप्य । [वि० पा०] ततो राज्यद्युतिं प्राप्य.

पौर्णमास्याममावास्यामष्टम्यामथ वा पठन् ।
द्वादश्यां वा तदाप्नोति गोप्रदानफलं द्विज ॥३८॥
प्रह्लादं सकलापत्सु यथा रक्षितवान्हरिः ।
तथा रक्षति यस्तस्य शृणोति चरितं सदा ॥ ३९ ॥
इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

*प्रह्लादवंशविस्तरकथने पौलोमकालकेयनिवातकवचमरीचवदाचायपीडलादीनामुत्पत्तिकथनम् ॥ १ ॥*
*इन्द्रकृतदितिगर्भच्छेदनेन एकोनपञ्चाशन्मरुतामुत्पत्तिवर्णनम् ॥ २ ॥*

प्रह्लादपुत्र आयुष्मान्शिबिर्बाष्कल एव च ।
विरोचनस्तु प्राह्लादिर्बलिर्जज्ञे विरोचनात् ॥ १ ॥
बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं महामुने ।
हिरण्याक्षसुताश्चासन्सर्व एव महाबलाः ॥ २ ॥
झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा ।
महानाभो महाबाहुः कालनाभस्तथापरः ॥ ३ ॥

चित्सुखीयम् ।

राजश्रियं राजशोभां । कर्मशुद्धिकरीं भोगेन कर्ममलप्रक्षालनकरीं । क्षीणाधिकारः विगतभोगसाधनसंबन्धः ॥ ३४ ॥ इति श्रीचित्सुखमुनिवि० श्रीविष्णुपु०टिप्पण्यां प्रथमांशे विंशोऽध्यायः ॥ २० ॥

प्राह्लादिः प्रह्लादपुत्रः ॥ १ ॥ एव इति वक्ष्यमाणझर्झरशकुनिरित्यादयः परामृश्यन्ते । एवमग्रिमे

श्रीधरीयम् ।

॥ ३७ ॥ पौर्णमास्यामिति । अमावास्याम् अमावास्यायामित्यर्थः । गोः प्रदानं प्रकर्षेण दानं । कुरुक्षेत्रे सूर्यग्रहणे उभयतो मुख्यां सुवर्णशृङ्गादिसंपूर्णदक्षिणादिसत्पात्रादिसकलाङ्गकल्पेन यत्फलं तत्फलं एतच्चरितं पठन्प्राप्नोतीत्यर्थः ॥ ३८ ॥ सदाश्रवणस्य फलमाह—प्रह्लादमिति । "कवचं चरणानन्ते वारणं पितरि त्रुटि (प्रणतद्रुति) । प्रह्लादवरदं वन्दे नृसिंहं घृणिभीषणम्" श्रीधरीयोऽयं श्लोकः ॥ ३९ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे विंशोऽध्यायः ॥ २० ॥

प्रह्लादपुत्र इति । प्राह्लादिः प्रह्लादपुत्रः ॥ १ ॥ बलेरिति । बाणो ज्येष्ठो यस्मिन्तत् ॥ २ ॥ एवं

विष्णुचित्तीयम् ।

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे विंशोऽध्यायः ॥ २० ॥

दत्तश्रेयीयम् ।

निर्वाणं मोक्षं ॥ ३४ ॥ अमावास्यां अमावास्यायामित्यर्थः । गोप्रदानं गोः प्रकर्षेण दानं । प्रकर्षश्च देशकालपात्रदक्षिणादिकृतः ॥ ३८ ॥ सकृच्छ्रवणफलमुक्त्वा निरन्तरश्रवणफलमाह—प्रह्लादमिति ॥ ३९ ॥ इति श्रीदत्ता०सुबो०श्रीविष्णुपुराणव्याख्यायां प्रथमांशे विंशोऽध्यायः ॥ २० ॥

प्राह्लादिः प्रह्लादपुत्रः ॥ १ ॥ बाणज्येष्ठं बाणासुरो ज्येष्ठो यस्य तत्तथा । हिरण्यकस्य वंशमुक्त्वा

रत्नगर्भीयम् ।

पुनस्तेऽनुतापो ॥ ३१ ॥ नकेवलं पापं निरस्यति अभ्युदयं चाप्नोतीत्याह—पौर्णमास्यामिति ॥ ३८ ॥ सर्वदाश्रवणस्य फलमाह—प्रह्लादमिति ॥ सापेक्षया स्वभक्तेषु द्रोहासहिष्णुता । वरं दत्त्वाऽपि हरिणा प्रह्लादारिर्निपातितः॥३९॥इति श्रीरत्नग०विरचितश्रीविष्णुपु० व्याख्यासारे प्रथमांशे विंशोऽध्यायः॥२०॥

एकविंशे पुनर्वंशः कश्यपस्य निरूपितः । यत्र मातुः शुचित्वेन मरुतः सुरतां गताः ॥ १ ॥ आयु-

[ पा० ] १ ग मर . २ ज—ज. ट ड. प्राह्लादपुत्र. ३ ख. ट. ट. मराविपात् । ख. ड. बलाधिकं. ४ ग्र. घ. भूर्भुरः । ज, ट—ड. असुर . ५ म. महामनोर्महाबाहुस्ताश्चमहाबल .

अभवन्दनुपुत्राश्च द्विमूर्धा शंबरस्तथा ।
अयोमुखः शङ्कुशिराः कपिलः शङ्करस्तथा ॥ ४ ॥
एकचक्रो महाबाहुस्तारकश्च महाबलः ।
स्वर्भानुर्वृषपर्वा च पुलोमा च महाबलः ॥ ५ ॥
एते दनोः सुताः ख्याता विप्रचित्तिश्च वीर्यवान् ॥
स्वर्भानोस्तु प्रभा कन्या शर्मिष्ठा वार्षपर्वणी ।
उपदानवी हयशिराः प्रख्याता वरकन्यकाः ॥७॥
वैश्वानरसुते चोभे पुलोमा कालका तथा ।
उभे सुते महाभागे मारीचेस्तु परिग्रहः ॥ ८ ॥
ताभ्यां पुत्रसहस्राणि षष्टिर्दानवसत्तमाः ।
पौलोमाः कालकेयाश्च मारीचतनयाः स्मृताः ९॥
ततोऽपरे महावीर्या दारुणास्त्वतिनिर्घृणाः ।
सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा १०

चित्सुखीयम् ।

दितेर्वंशावभिधाय इदानीं दनोर्वंशमाह—अभवन्निति ॥ ४ ॥ वार्षपर्वणी वृषपर्वदुहिता । उपदानवी हयशिरा इति तस्यैव कन्ये ॥ ७ ॥ इदानीं दानवविशेषविवक्षयाऽऽह—वैश्वानरेति । वैश्वानरो भूतसन्तापनः हिरण्याक्षसूनुः तस्य सुते । मारीचेः कश्यपस्य ॥ ८ ॥ सिंहिका हिरण्यकशिपोर्भगिनी ।

श्रीधरीयम् ।

तानदितेरदितेश्च वंशा उक्ताः । इदानीं क्रमप्राप्तानाम् अन्यासां काश्यपभार्याणां वंशानन्यक्ष्यन्दनोर्वंशमाह—अभवन्निति सार्धैर्नवभिः ॥ ३ ॥ ४ ॥ ५ ॥ एत इति । एते प्रख्याता इति विशेषणेन हरिवंशमात्स्यादिषु दनोः सुतशते गणिते वैश्वानरादयश्च सूचिताः ॥ ६ ॥ स्वर्भानोरिति । शर्मिष्ठा वृषपर्वणः कन्या । उपदानवी च हयशिराश्च तस्यैव कन्ये इति केचित् । अन्यदीये इति अन्ये । "वैश्वानरसुतायास्तु चतस्रश्चारुदर्शनाः । उपदानवी हयशिरा, पुलोमा कालका तथा" । इति भागवतायुक्तेः ॥ ७ ॥ ८ ॥ ९ ॥ तत इति । सिंहिकाया हिरण्यकशिपोर्भगिन्याः । विप्रचित्तेः दनुसुतात् ॥ १० ॥

विष्णुचित्तीयम् ।

॥ १ ॥ २ ॥ ३ ॥ दितिदानां काश्यपपत्नीनां वंशानाह—अभवन्निति ॥ ४ ॥ ५ ॥ ६ ॥ स्वर्भानोरिति । श्रीहरिवंशे दनुपुत्रशते उपदानववैश्वानरावुक्तौ । हयशिरा इति उपदानव्या उपदानवदुहितुर्नाम । हस्तिशिरा इति च पाठः । उपदानवीत्यत्र गुरुलाभावश्छान्दसः ॥ ७ ॥ वैश्वानर इति ।

दत्तात्रेयीयम् ।

तदनुजस्य हिरण्याक्षस्य वंशमाह—हिरण्याक्षेत्यादिना ॥ २ ॥ एते प्रख्याता इति विशेषणेन हरिवंशमत्स्यादिषु दनोः सुतशतगणनायां गणिताः । अन्येऽपि वैश्वानरादयः सूचिताः ॥ ६ ॥ वार्षपर्वणी वृषपर्वणः कन्या शर्मिष्ठा । उपदानवी हयशिरा इत्यत्रापि वैश्वानरसुते इत्येतन्नाकर्षणीयं । वरकन्यकाः प्रभादयः प्रख्याताः । पुलोमा कालिकान्येत्यन्ये वैश्वानरसुते उभे । "वैश्वानरसुतायास्तु चतस्रश्चारुदर्शनाः । उपदानवीहयशिरा पुलोमाकालिकातथा" इतिभागवतोक्तेः । उपदानवी हयशिराश्च वृषपर्वण एव कन्ये इति व्याचक्षते । तन्नातिश्लिष्टमिति पश्यामः । भागवतविरोधाच्च ॥ ७ ॥ ते उभे पुलोमाकालिकाख्ये मारीचेः कश्यपस्य परिग्रहः भार्ये । मारीचिर्दानवविशेष इति केचित् । तदनुपपन्नं । "पुलोमा कालिका चैव वैश्वानरसुता नृप । उपयेमे समगवान्कश्यपो ब्रह्मचोदितः" इति भागवतविरोधात् । ब्रह्मचोदित इत्युक्त्या सपुत्रवैश्वानरकन्यापरिग्रहः कश्यपस्य नदोषावह इति दर्शित ॥ ८ ॥

स्वधर्मीयम् ।

ष्मान् नाम्ना । प्राह्लादिः प्रह्लादपुत्र ॥ १ ॥ नराणां प्रजानामधिपादिति बलेर्विशेषणम् ॥ २ ॥ प्रख्याता

[ पा० ] १ म अभूवन्दनुपुत्राश्च २ ■ ग एकचक्रो ३ म महाबल ४ ट—छ हस्तिशिरा, ५ क ध—च मरीचस्तु ६ ज ग ट ठ कालकाश्च ७ ठ ज ठ दानवसत्तमा.

व्यंशः शलभश्च पलशाभश्चैव महाबलः ।
वातापी नमुचिश्चैव इल्वलः खसृमस्तथा ॥ ११ ॥
अन्धको नरकश्चैव कालनामस्तथैव च ।
स्वर्भानुश्च महावीर्यो वक्त्रयोधी महासुरः ॥ १२ ॥
एते वै दानवाः श्रेष्ठा दनुवंशविवर्धनाः ।
एतेषां पुत्रपौत्राश्च शतशोऽथ सहस्रशः ॥ १३ ॥
प्रह्लादस्य तु दैत्यस्य निवातकवचाः कुले ।
समुत्पन्नाः सुमहता तपसा भावितात्मनः ॥ १४ ॥
षट्सुताः सुमहासत्त्वास्ताम्रायाः परिकीर्तिताः ।
शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका ॥ १५ ॥
शुकी शुकानजनयदुलूकप्रत्युलूककान् ।
श्येनी श्येनांस्तथा भासी
भासान्गृध्रांश्च गृध्र्यपि ॥ १६ ॥
शुच्यौदकान्पक्षिगणान्सुग्रीवी तु व्यजायत ।
अश्वानुष्ट्रान्गर्दभांश्च ताम्रावंशः प्रकीर्तितः १७ ॥
विनतायास्तु द्वौ पुत्रौ विख्यातौ गरुडारुणौ ।
सुपर्णः पततां श्रेष्ठो दारुणः पन्नगाशनः ॥ १८ ॥

विष्णुचित्तीयम् ।

विप्रचित्तिर्दनुसुतः ॥ १० ॥ सुमहतेत्यादिमहात्मस्य विशेषणं ॥ १४ ॥ इदानीं दनोरनन्तरनिर्दिष्टायास्ताम्राया वंशमाह—षट्सुता इति ॥ शुचिश्च गृध्रिका च शुचिगृध्रिकेति द्वन्द्वैकवद्भावः । शुचिगृध्रिके इति वा पाठः ॥ १५ ॥ सैव शुकी शुकानजनयत् । प्रत्युलूककांश्च । उलूकी प्रकृतिभूतान् तत्सदृशान्

श्रीधरीयम् ।

॥ ११ ॥ १२ ॥ १३ ॥ सिंहावलोकनेन पुनराह प्रह्लादस्येति । भावितात्मनः प्रह्लादस्येत्यन्वयः ॥ १४ ॥ ताम्राया वंशमाह—षडित्यादिभिः । षडिति । सुताः कन्याः वा एवाह—शुकीति । सुग्रीवी च शुचिश्च गृध्रिका च ताः ॥ १५ ॥ शुकीति । उलूकप्रत्युलूककान् उलूकान्प्रत्युलूकान् तत्प्रतिपक्षांश्च काकांश्च । उलूकीति वा पाठः । उलूकान् प्रत्युलूकांश्च सैवाजनयदित्यर्थः । न पुनरुलूकी संज्ञाऽन्या । तस्या अनिर्दिष्टत्वात् "शुकी शुकानजनयदुलूकी प्रत्युलूककान्" इति मात्स्योक्तेः ॥ १६ ॥ शुचीति । शुच्यौदकान् शुचिरेव शुची सा औदकान्पक्षिगणानजायत । सुग्रीवी त्वश्वादीनजायत इत्यर्थः । ताम्राया वंशः प्रकीर्तित इत्युपसंहारः ॥ १७ ॥ विनताया इति । गरुडं विशिनष्टि—सुपर्ण इति । पतता

विष्णुचित्तीयम् ।

मरीचिः काश्यपो दानवविशेषो वा ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

सत्यव्रतीयम् ।

मारीचतनयाः कश्यपतनयाः ॥ ९ ॥ सिंहिकाया हिरण्यकशिपुभगिन्याः । विप्रचित्तेः दनुसुतात् ॥ १२ ॥ सिंहावलोकनन्यायेन पुनः प्रह्लादवंशमाह—प्रह्लादस्येति । भावितात्मनः शुद्धान्तःकरणस्य प्रह्लादस्य ॥ १४ ॥ कश्यपभार्यायास्ताम्राया वंशमाह—षट्सुता इत्यादिना । सुताः कन्यकाः ॥ १५ ॥ तासां नामान्याह—शुकीति । उलूकः कौशिकः । प्रत्युलूकः काकः । उलूकान्प्रत्युलूकांश्च सैवाजनयत् । न पुनः उलूकीसंज्ञाऽपरा अनुक्तत्वात् ॥ १६ ॥ शुची औदकान् जलस्थान् पक्षिगणान् व्यजायत । सुग्रीवी अश्वादीन् व्यजायत । ताम्रावंशः प्रकीर्तित इत्युपसंहारः ॥ १७ ॥ गरुडं विशिनष्टि—सुपर्ण इति ।

रत्नगर्भीयम् ।

धरकन्यका इति सर्वासां विशेषणम् ॥ ७ ॥ ताभ्यां पुलोमाकालकाभ्यां ॥ ९ ॥ शुचिसहिता गृध्रिका

[ पा० ] १ क—ढ व्यंश २ ख दल्वलाश्च समस्तथा ३ घ च ज. झ ढ—ढ अजको । ग अन्धको ४ क गृध्रिकाशुच . ५ ग—च शुकी तु जनयामास उलूकप्रत्युलूककान् । ढ शुकीशुकानजनयदुलूकीप्रत्युलूककान ६ ग गृध्री ७ ढ च शुचिर्यौदान्पक्षि ८ क ढ—ढ ताम्रावंशा

एते कश्यपदायादाः कीर्तिताः स्थाणुजङ्गमाः ।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥२६॥
एष मन्वन्तरे सर्गो ब्रह्मन्स्वारोचिषे स्मृतः ॥२७॥
वैवस्वते च महति वारुणे वितते क्रतौ ।
जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते ॥ २८ ॥

पूर्वं यत्र [illegible] सप्तर्षीनुत्पन्नान्सप्तमानसान् ।
पुत्रत्वे कल्पयामास स्वयमेव पितामहः ।
गन्धर्वभोगिदेवानां दानवानां च सत्तम ॥ २९ ॥
दितिर्विनष्टपुत्रा वै तोषयामास काश्यपम् ।
तया चाराधितः सम्यक्काश्यपस्तपतां वरः ॥ ३० ॥

चित्सुखीयम् ।

पत्नी अप्सरसो जनयामास ॥ २५ ॥ वैवस्वते मन्वन्तरे ॥२८॥ मानसान्सप्तर्षीन् नरपित्वेन नान्यान् । वारुणक्रतौ पुनः पुत्रत्वे कल्पयामास । गन्धर्वादीनां पितामह इत्यन्वयः ॥ २९ ॥ विनष्टपुत्रा हिरण्याक्ष-

श्रीधरीयम् ।

॥ २६ ॥ २७ ॥ वैवस्वत इति । वैवस्वते त्विह मन्वन्तरे वारुणे वरुणकर्तृके महति विवते क्रतौ जुह्वानस्य होतृत्वेन वर्तमानस्य ब्रह्मणः प्रजासर्गः अन्यथोच्यते ॥ २८ ॥ तमेवाह—पूर्वमिति । यत्र वैवस्वते मन्वन्तरे पूर्वमन्वन्तरोत्पन्नानेव सप्त ऋषीन्गन्धर्वादीनां पितामहो ब्रह्मा पुत्रत्वे प्रजासर्गाधिकारे कल्पयामास । न त्वन्यान्ससर्ज । स्वयं तदाक्षेप्याप्तृत्वात् । पितृत्वे कल्पयामासेति पाठे गन्धर्वादीनां पितृत्वे तत्सृष्टौ न्ययुङ्क्तेत्यर्थः ॥ २९ ॥ अतः काश्यपादिभ्यो देवदानवादयः पूर्वं जाताः । वैवस्वतमन्वन्तरे सप्तर्षिभ्यो जाता इत्युक्तं भवति । एकोनपंचाशन्मरुतो देवा अपि दितेः पुत्रा बभूवुरिति

विष्णुचित्तीयम् ।

मास्योक्तेश्च ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अथ वैवस्वतमन्वन्तरे प्रजासर्ग उच्यत इत्याह—वैवस्वत इति ॥ २८ ॥ पूर्वमित्यादि । गन्धर्वादीनां पूर्वमुत्पन्नान् प्राङ्मन्वन्तरस्थान्सप्तर्षीनेव वर्तमानवारुणयज्ञाविच्छेदाय यत्र मन्वन्तरे प्रजासर्गार्थं पुत्रत्वे कल्पयामास । तत्र प्रजासर्ग उच्यत इति पूर्वेणान्वयः । पितृत्वे कल्पयामास इति पाठे गन्धर्वादीनां पितृत्वे स्रष्टृत्व इत्यर्थः ॥ २९ ॥ ३० ॥

वत्सत्रेयीयम् ।

स्त्रीणां वंशानाह—शाखिलादिना ॥ २४ ॥ २५ ॥ कश्यपवंशमुपसंहरति—एत इति ॥ २६ ॥ एषः प्रागुक्तः सर्गः स्वारोचिषे स्वारोचिषमन्वन्तरे स्मृतः ॥ २७ ॥ वैवस्वते वारुणे वरुणकर्तृके महति क्रतौ जुह्वानस्य होतृत्वे वर्तमानस्य ब्रह्मणः प्रजासर्ग उच्यते ॥ २८ ॥ यत्र वैवस्वतमन्वन्तरे उत्पन्नान्मानसान्सप्त ऋषीन् गन्धर्वादीनां पितामहो ब्रह्मा पुत्रत्वे प्रजासर्गाधिकारे स्वयं कल्पयामास । तदन्यान्ससर्ज । पितृत्व इति पाठे गन्धर्वादीनां पितृत्वे तत्सृष्टौ न्ययुङ्क्तेत्यर्थः तस्य वारुणयज्ञस्थितत्वेन तत्सृष्टिव्यापारासंभवात् । अतः काश्यपादिभ्यो देवदानवादयः पूर्वंजाताः वैवस्वतमन्वन्तरे तु सप्तर्षिभ्यो जाता इत्युक्तं भवति ॥ २९ ॥ दितेः कश्यपादेकोनपञ्चाशन्मरुतां जन्म यथा-

रत्नगर्भीयम् ।

शुचिगृध्रिका । उलूक्या अपरिसङ्ख्यानान्उलूक्येव उलूकी ॥ १५ ॥ १६ ॥ जुह्वानस्य होमं कुर्वतो ब्रह्मणो यः प्रजासर्ग उच्यते पुराणान्तरेषु स इह वर्तमाने वैवस्वतमन्वन्तरे स्मृत इत्यन्वयः ॥ २८ ॥ एवं कथा तत्र—क्रतौ व्याहृते ब्रह्मणा देवकन्यादर्शनात्स्कन्ने स्वरेतसि अग्नौ हुते जाताः सप्तर्षयः पुत्रत्वेनकल्पिता इति ॥ गन्धर्वभोगिदेवादीनां विरोध इति शेषः । "ततो विरोधे देवानां दानवानां च भो द्विजाः । दितिर्विनष्टपुत्रा वै तोषयामास कश्यपं" इति ब्रह्मपुराणानुरोधात् । गन्धर्वभोगिदेवानां पि-

[ पा० ] १ ग. तुपन्नानेप्यमानवान्. २ [विष्णु चि० पा०] पितृत्वे.

वरेण च्छन्दयामास सा च वव्रे ततो वरम् ।
पुत्रमिन्द्रवधार्थाय समर्थममितौजसम् ॥ ३१ ॥
स च तस्मै वरं प्रादात्प्रार्थितं मुनिसत्तमः ।
दत्त्वा च वरमत्युग्रं कश्यपस्तामुवाच ह ॥ ३२ ॥
शक्रं पुत्रो निहन्ता ते यदि गर्भं शरच्छतम् ।
समाहिताऽतिप्रयता शौचिनी धारयिष्यसि ३३
इत्येवमुक्त्वा तां देवीं सङ्गतः कश्यपो मुनिः ।
दधार सा च तं गर्भं सम्यक्छौचसमन्विता ३४ ॥

गर्भमात्मवधार्थाय ज्ञात्वा तं मघवानपि ।
शुश्रूषुस्तामथागच्छद्विनयादमराधिपः ॥ ३५ ॥
तस्याश्चैवान्तरप्रेप्सुरतिष्ठत्पाकशासनः ।
ऊने वर्षशते चास्या ददर्शान्तरमात्मना ॥ ३६ ॥
अकृत्वा पादयोः शौचं दितिः शयनमाविशत् ।
निद्रां चाहारयामास तस्याः कुक्षिं प्रविश्य सः ३७
वज्रपाणिर्महागर्भं चिच्छेदाथ स सप्तधा ।
सम्पीड्यमानो वज्रेण स रुरोदातिदारुणम् ३८ ॥

**विष्णुसूत्रीयम् ।**

हिरण्यकशिपुवधात् ॥ ३० ॥ छन्दयामास लोभयामास ॥ ३१ ॥ मनसा समाहिता । प्रयता कायेन

**श्रीधरीयम् ।**

कथापूर्वकमाह—दितिरित्यादि यावत्समाप्ति ॥ ३० ॥ वरेणेति । छन्दयामास प्रलोभितवान् ॥ ३१ ॥ ॥ ३२ ॥ शक्रमिति । समाहिता श्रीविष्णुध्यानपरा । शुचिनी शौचवती सती । शरच्छतं वर्षशतं यदि गर्भं धारयिष्यसि तर्हि तव पुत्रः शक्रं निहनिष्यति । शौचादिनियमवैकल्ये तु विष्णुध्यानशुद्धचित्ताया देवबन्धुरमरः पुत्रो भविष्यतीति गूढाभिप्रायः । शौचादिनियमाश्च मात्स्ये प्रोक्ताः "सन्ध्यायां (सन्ध्ययोः) नैव भोक्तव्यं गर्भिण्या वरवर्णिनि । न स्थातव्यं न गन्तव्यं (भोक्तव्यं) वृक्षमूलेषु सर्वदा । वर्जयेत्कलहं लोके गात्रभङ्गं तथैव च । नोन्मुक्तकेशी तिष्ठेच्च नाशुचिः स्यात्कदाचन" इत्याद्याः । श्रीमद्भागवते च "न हिंस्यात्सर्वभूतानि न शपेन्नानृतं वदेत्" इत्याद्याः ॥ ३३ ॥ ३४ ॥ ३५ ॥ तस्याश्चेति । अन्तरं प्रेप्सुरशौचादिकालं दिदृक्षुः ॥ ३६ ॥ अन्तरमेवाह—अकृत्वेति । आहारयामास नीतवती ॥ ३७ ॥

**विष्णुचित्तीयम् ।**

वरेणेत्यादि । वरं ददामीत्याश्वासितवान् ॥ ३१ ॥ ३२ ॥ शक्रमिति । शौचिनी मात्स्योक्तशौचवती । तत्र सूक्तम् "सन्ध्यायां नैव भोक्तव्यं गर्भिण्यावरवर्णिनि । न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा । वर्जयेत्कलहं लोके गात्रभङ्गं तथैव च । नोन्मुक्तकेशी तिष्ठेच्च नाशुचिः स्यात्कदाचन" इति । शुचिनी धारयिष्यसि इति च पाठः ॥ ३३ ॥ ३४ ॥ ३५ ॥ तस्याश्चेति ॥ ऊने असमाप्तकाले ॥ ३६ ॥ ३७ ॥

**दत्तात्रेयीयम् ।**

पूर्वकमाह—दितिरित्यादिना ॥ ३० ॥ छन्दयामास प्रलोभयामास ॥ ३१ ॥ समाहिता भगवद्ध्यानपरा । शुचिनी शौचवती सती शरच्छतं वर्षशतं यदि गर्भं धारयिष्यसि तर्हि तव पुत्रः शक्रनिहन्ता भविष्यति । शौचादिनियमास्तु भागवतोक्ताः । "नहिंस्याद्भूतजातानि नशपेन्नानृतं वदेत्"इत्यादिना । मात्स्येचोक्ताः "सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि । नस्नातव्यं नभोक्तव्यं वृक्षमूलेषु सर्वदा । वर्जयेत्कलहं लोके गात्रभङ्गं तथैवच । नामुक्तकेशी तिष्ठेच्च नाशुचिः स्यात्कदाचन"इत्यादिना ॥ ३३ ॥ अन्तरं प्रेप्सुरशौचावकाशं दिदृक्षुः ॥ ३६ ॥ छिद्रमेवाह—अकृत्वेति । निद्रां आहरयामास

**रत्नगर्भीयम् ।**

तामह इति वाऽन्वयः । यद्वा गन्धर्वादीनां मध्ये नष्टौ पुत्रौ यस्याः सा दितिः कश्यपं तोषयामासेत्य-

[ पा० ] १ क—ष. च छ. ज मध्यम २ छ. शुचिस्त्वं धार । [श्रीध० पा०] शुचिनी. ३ ड छ ग गतः कश्यपो वनं ४ ड. विनाशाय. ५ ग—छ म. मात्मवान् ६ ख—ञ ड. सपाद्यमानो.

मा रोदीरिति तं शक्रः पुनःपुनरभाषत ।
सोऽभवत्सप्तधा गर्भस्तमिन्द्रः कुपितः पुनः ३९ ॥
एकैकं सप्तधा चक्रे वज्रेणारिविदारिणा ।
मरुतो नाम देवास्ते बभूवुरतिवेगिनः ॥ ४० ॥
यदुक्तं वै भगवता तेनैव मरुतोऽभवन् ।
देवा एकोनपञ्चाशत्सहाया वज्रपाणिनः ॥४१॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे
प्रथमांशे एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

एवंसृष्टदेवादिसकलप्रपञ्चसृष्टेः तत्तदधिपतिविधानमुखेन विष्णोर्विभूतिवर्णनम् ॥ १ ॥ विष्णोश्चतुष्प्रकारत्वकथनम् ॥ २ ॥ विष्णोर्भूषणास्त्रस्वरूपविवरणम् ॥ ३ ॥ प्रथमांशश्रवणफलकथनम् ॥ ४ ॥

श्रीपराशर उवाच ॥
यदाऽभिषिक्तः स पृथुः पूर्वं राज्ये महर्षिभिः ।
ततः क्रमेण राज्यानि ददौ लोकपितामहः ॥१॥
नक्षत्रग्रहविप्राणां वीरुधां चाप्यशेषतः ।
सोमं राज्ये न्ययुङ्क्त यज्ञानां तपसामपि ॥२॥

विष्णुचित्तीयम् ।

॥ ३३ ॥ अन्तरमेप्सुश्छिद्रान्वेषी स देवः दितिं निद्रामाहारयामास ॥ ३७ ॥ पाट्यमानः भिद्यमानः ॥ ३८ ॥ इति श्रीविष्णुचित्तमुनि विर० श्रीविष्णुपु० टिप्पण्यां प्रथमांशे एकविंशोऽध्यायः ॥ २१ ॥

एवं देवादीनां सृष्टिमभिधाय तत्तद्वर्गाधिपतीन् दर्शयितुमाह—यदेत्यादिना ॥ १ ॥ वीरुधामोष-

श्रीधरीयम् ।

स इति । पाट्यमानः भिद्यमानः ॥ ३८ ॥ ३९ ॥ मरुत इति । यदुक्तं मारोदीरिति तेन मरुतोऽभवन्नित्यक्षरसाम्यान्निरुक्तिः ॥४०॥ वज्रोपलक्षितः पाणिः वज्रपाणिः । सोऽस्यास्तीति वज्रपाणी तस्य । व्रीह्यादिभ्यश्चेति इनिप्रत्ययः ॥ ४१ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकविंशोऽध्यायः ॥ २१ ॥

एवं तावद्देवादीनां सृष्टिमुक्त्वा इदानीं तत्तदधिपतिकथनमुखेन विष्णोर्विभूतिं प्रपञ्चयन्नाह—यदेत्या-

विष्णुचित्तीयम् ।

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकविंशोऽध्यायः ॥ २१ ॥

अथ पितामहः पृथोरभिषेकोत्तरं पूर्वसृष्टानामाधिपत्यविभागं तत्तन्मर्यादास्थापनार्थमकरोदित्याह—

रत्नगर्भीयम् ।

निद्रां प्राप्ता ॥ ३७ ॥ पाट्यमानः छिद्यमानः ॥ ३८ ॥ यदुक्तं भगवता मारोदीरिति तेन मरुतोऽभवन्नित्यक्षरसाम्यान्निरुक्तिः । वज्रपाणिन इति छान्दसो नुगागमः । वज्रोपलक्षितः पाणिर्वज्रपाणिः सोऽस्यास्तीति वज्रपाणी तस्य । व्रीह्यादिभ्यश्चेति इनिप्रत्यय इत्यन्ये ॥ ४१ ॥ इति श्रीरत्न०गर्भ० श्रीविष्णुपुराणव्याख्यायां प्रथमांशे एकविंशोऽध्यायः ॥ २१ ॥

एवं देवादीनां सृष्टिमुक्त्वा इदानीं तेषां तत्तदाधिपत्यकथनमुखेन विष्णोर्विभूतिं प्रपञ्चयन्नाह—यदेत्यादिना ।

सत्यभीयम् ।

न्वयः । तेनोनपञ्चाशन्मरुतो देवा अपि दितेरेव पुत्रा इत्युक्तं भवति ॥ २९ ॥ ३० ॥ इति श्रीसत्य०विरचितश्रीविष्णुपु०व्याख्यायामादौ प्रथमांशे एकविंशोऽध्यायः ॥ २१ ॥

सृष्टेषु सङ्क्षेपेणाधीशाः पृथुप्रभृतयः कृताः । विभूतयो भगवतो द्वाविंशेऽत्र तथोदिताः ॥ १ ॥ अ-

[ पा० ] १. घ. ञारिविदारिणा २ क—ङ यत्पराः ३ ङ अ तत्सर्वं ४ ङ उक्तम् । (अ० पा०) ...

राज्ञां वैश्रवणं राज्ये जलानां वरुणं तथा ।
आदित्यानां पतिं विष्णुं वसूनामथ पावकम् ॥३॥
प्रजापतीनां दक्षं तु वासवं मरुतामपि ।
दैत्यानां दानवानां च प्रह्लादमधिपं ददौ ॥ ४ ॥
पितॄणां धर्मराजानं यमं राज्येऽभ्यषेचयत् ।
ऐरावतं गजेन्द्राणामशेषाणां पतिं ददौ ॥ ५ ॥
पतत्रिणां तु गरुडं देवानामपि वासवम् ।
उच्चैःश्रवसमश्वानां वृषभं तु गवामपि ॥ ६ ॥
मृगाणां चैव सर्वेषां राज्ये सिंहं ददौ प्रभुः ।
शेषं तु दन्दशूकानामकरोत्पतिमव्ययः ॥ ७ ॥
हिमालयं स्थावराणां मुनीनां कपिलं मुनिम् ।
नखिनां दंष्ट्रिणां चैव मृगाणां व्याघ्रमीश्वरम् ८ ॥
वनस्पतीनां राजानं प्लक्षमेवाभ्यषेचयत् ।
एवमेवान्यजातीनां प्राधान्येनाकरोत्प्रभून् ॥९॥
एवं विभज्य राज्यानि दिशां पालाननन्तरम् ।
प्रजापतिपतिर्ब्रह्मा स्थापयामास सर्वतः ॥ १० ॥
पूर्वस्यां दिशि राजानं वैराजस्य प्रजापतेः ।
दिशापालं सुधन्वानं सुतं वै सोऽभ्यषेचयत् ११ ॥
दक्षिणस्यां दिशि तथा कर्दमस्य प्रजापतेः ।
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् ॥ १२ ॥
पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम् ।
केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् १३ ॥

श्रीधरीयम् ।

दिना यावत्समाप्ति ॥ १ ॥ नक्षत्रेति । नक्षत्रादीनां तपोन्तानां राज्ये सोमं ददौ । नक्षत्रादीनां तपोन्तानां राज्ये सोमं पतिमकरोदित्यर्थः ॥ २ ॥ राज्ञामिति । राज्ञां राज्ये वैश्रवणं कुबेरं न्यधादित्यनुषङ्गः ॥ ३ ॥ प्रजापतीनामिति । मरुतामदितिपुत्राणां वासवमप्यधिपतिं ददौ ॥ ४ ॥ ५ ॥ ६ ॥ मृगाणामिति । मृगाणां सिंहमीश्वरं पतिं । शेषं तु नागराजानं । मृगाणां सिंहमीश्वरमिति च पाठः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ एवमिति । दिशापालान् दिक्पालान् ॥ ११ ॥ १२ ॥ पश्चिमायामिति ।

विष्णुचित्तीयम् ।

यदेति । ततः कालादारभ्य ॥ १ ॥ नक्षत्रेति । राज्ये आधिपत्ये ॥ २ ॥ राज्ञामिति । विष्णुम् इन्द्रा-

वृत्ताभेधीयम् ।

पूर्वं स्वायम्भुवमन्वन्तरे । ततः पृथोरभिषेकानन्तरं ॥ १ ॥ नक्षत्रादीनां तपोन्तानां राज्ये आधिपत्ये सोममदधात्स्थापयामास ॥ २ ॥ राज्ञां यक्षाणां राज्ये वैश्रवणं कुबेरमदधादित्यनुषङ्गः । तथा जलानां राज्ये वरुणमदधादित्यनुषङ्गः । पावकं प्रधानाग्निं ॥ ३ ॥ मरुतां दितिपुत्राणामेकोनपञ्चाशतां । "प्रतिमन्वन्तरं प्रायः प्रह्लादाद्या बभूविरे" इति ब्रह्मपुराणवचनात् प्रह्लादस्य स्वायम्भुवमन्वन्तरे पृथुप्रवर्तितकालेऽपि सत्त्वात्तस्याधिपत्यप्रधानोक्तिर्युज्यते । तेन वैवस्वतमन्वन्तरे हिरण्यकशिपुपुत्रस्य प्रह्लादस्य कथं स्वायम्भुवमन्वन्तरे आधिपत्यदानमिति शङ्कानवकाशः ॥ ४ ॥ धर्मराजानं धर्माधिपतिं ॥५॥ वृषभं नन्दिकेश्वरं । "चतुष्पदानां सर्वेषां वाहनानां च सर्वशः । महेश्वरध्वजः श्रीमान्गोवृषोऽधिपतिः कृतः" इति हरिवंशवचनात् ॥ ६ ॥ सिंहमीश्वरमधिपतिं ॥ ७ ॥ प्लक्षं पर्कटिं ॥ ९ ॥ वैराजस्य प्रजा-

रत्नगर्भीयम् ।

दधादिति पाठे दधातेरर्थः ॥ २ ॥ राज्ञां राज्ये वैश्रवणं कुबेरं । विष्णुं वामनं ॥ ३ ॥ वैराजस्य प्रजासूनोः पुत्रमिति शेषः । राजानं दीप्तिमन्तं सुधन्वानं राजानं क्षत्रियाणां । तनयमिति पाठो वा ॥ ११ ॥

[ पा० ] १ प. न्यधात्. २ स—ह. नागानामपि चाशुगि. ३ अयमर्थः "म. ट. ठ" पुस्तकेषु नास्ति. ४ म. ट. ठ. शेषं तु नागराजानं मृगाणां सिंहमीश्वरम्. ५ अयं श्लोकः "म. ठ." पुस्तकयोर्मात्रं दृश्यते.

तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः ।
उदीच्यां दिशि दुर्धर्षं राजानमभ्यषेचयत् ॥१४॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मतः परिपाल्यते ॥ १५ ॥
एते सर्वे प्रवृत्तस्य स्थितौ विष्णोर्महात्मनः ।
विभूतिभूता राजानो ये चान्ये मुनिसत्तम ॥१६॥
ये भविष्यन्ति ये भूताः सर्वे भूतेश्वरा द्विज ।
ते सर्वे सर्वभूतस्य विष्णोरंशा द्विजोत्तम ॥ १७ ॥
ये तु देवाधिपतयो ये च दैत्याधिपास्तथा ।
दानवानां च ये नाथा ये नाथाः पिशिताशिनाम् ।
पशूनां ये च पतयः पतयो ये च पक्षिणाम् ।
मनुष्याणां च सर्पाणां नागानामधिपाश्च ये १९॥
वृक्षाणां पर्वतानां च ग्रहाणां चापि येऽधिपाः ।
अतीता वर्तमानाश्च ये भविष्यन्ति चापरे ।
ते सर्वे सर्वभूतस्य विष्णोरंशसमुद्भवाः २० ॥
न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् ।
स्थितं स्थितौ महाप्राज्ञ भवत्यन्यस्य कस्यचित् २१
सृजत्येष जगत्सृष्टौ स्थितौ पाति सनातनः ।
हन्ति चैवान्तकत्वेन रजःसत्त्वादिसंश्रयः ॥२२॥

विष्णुचित्तीयम् ।

धीनां ॥ २ ॥ पर्जन्यस्य प्रजापतेः पुत्रमिति शेषः ॥ १४ ॥ यथाप्रदेशं स्वप्रदेशानतिक्रमेण ॥ १५ ॥ स्थितौ प्रवृत्तस्येत्यन्वयः ॥ १६ ॥ स्थितौ स्थितं हरिमृते पालनसामर्थ्यमन्यस्य नहि भवतीत्यन्वयः

श्रीधरीयम् ।

अच्युतमिति केतुमतो विशेषणम् ॥ १३ ॥ तथेति । पर्जन्यस्य प्रजापतेः पुत्रमित्यनुषङ्गः ॥ १४ ॥ ॥ १५ ॥ उक्तानामनुक्तानां च तत्तत्पतीनां भगवद्विभूतित्वमाह—एत इत्यादिसार्धैः पञ्चभिः ॥१६॥ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ नहीति । नहिलोप एव मुख्य इत्यर्थः ॥ २१ ॥ सृष्ट्यादिकर्ता [illegible]

विष्णुचित्तीयम् ।

भुजम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ एत इति । ये चान्ये कश्यपाद्याः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ नहीति । पालनसामर्थ्ये सर्वेश्वरत्वं हेतुः ॥ २१ ॥ पालनवत्सृष्टिसंहारयोरपि तस्यैव सामर्थ्यमित्याह—सृजतीति ॥ २२ ॥

दत्तात्रेयीयम् ।

पुत्रस्य प्रजापतेरात्मजमिति शेषः ॥ १० ॥ अच्युतमिति केतुमतो विशेषणं ॥ १३ ॥ पर्जन्यस्य प्रजापतेः पुत्रमित्यनुषङ्गः ॥ १४ ॥ एवमुक्तानामनुक्तानां च तत्तदधिपतीनां भगवद्विभूतित्वमाह—एत इत्यादिना । स्थितौ प्रवृत्तस्य विष्णोरेते राजानो येचान्ये ब्रह्मकश्यपाद्याः ते सर्वे विभूतयः । विष्णोर्विशेषाभिव्यक्तिस्थानभूताः । तदुक्तं तत्त्वनिर्णये । "विशेषव्यक्तिपात्रत्वाद्ब्रह्माद्याश्च विभूतयः । तदन्तर्यामिणश्चैव मत्स्याद्या विभवा इति" इति । सर्वभूतस्य सर्वेषु भूतस्य सर्वान्तर्यामिणः । अंशाः विष्णोर्भिन्नत्वेन प्रतिबिम्बांशाः । तदुक्तं वाराहे । "द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च । प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः । प्रतिबिम्बेऽल्पसाम्यं स्वरूपाण्यन्तराणि च" इति ॥ १६ ॥ उक्तानामेषां विशिष्य नामकीर्तनपूर्वकमंशत्वोक्तया प्रागस्वरूपांशत्वशङ्कां निवारयन्नाह—येचेत्यादिना ॥ १८ ॥ विष्णोरंशसमुद्भवाः । विष्णोःस्वरूपांशेऽन्तराः ॥ २० ॥ स्थितौ स्थितं हरिमृते अन्यस्य कस्यचित्पालनसामर्थ्यं नहिभवति । अतस्तेषु स्थित्वा मुख्यपालको विष्णुरेव तेषां तत्सन्निधियुक्तत्वात्पालक इति भावः ॥ २१ ॥ नकेवलं पालनमात्रे हरेः स्वातन्त्र्यं सृष्ट्यादि-

रङ्गनाथीयम् ।

अत एव मुख्यः सृष्ट्यादिकर्ता स एवेत्याह—सृजत्येष इति ॥ सृष्टौ सृष्टिकाले । स्थितौ स्थितिकाले ।

[पा०] १ ग—ङ स. सनातना. २ ख. ग. च छ. झ. ट. ठ. येऽतीता. सर्वे । म. ये आता. ३ ग. सतसुद्भवा.
४ ड. सर्वेषा । ग. प. च. पतय.. ५ झ. गन्धर्वाणां कर्तारो च. ६ ग. जनार्दन .

चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ ।
प्रलयं च करोत्यन्ते चतुर्भेदो जनार्दनः ॥ २३ ॥
एकेनांशेन ब्रह्माऽसौ भवत्यव्यक्तमूर्तिमान् ।
मरीचिमिश्राः पतयः प्रजानां चान्यभागशः २४
कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः ।
इत्थं चतुर्धा संसृष्टौ वर्ततेऽसौ रजोगुणः ॥ २५ ॥
एकांशेनास्थितो विष्णुः करोति प्रतिपालनम् ।
मन्वादिरूपी चान्येन कालरूपोऽपरेण च ॥२६॥
सर्वभूतेषु चान्येन संस्थितः कुरुते स्थितिम् ।
सत्त्वं गुणं समाश्रित्य जगतः पुरुषोत्तमः ॥ २७॥
आश्रित्य तमसो वृत्तिमन्तकाले तथा पुनः ।
रुद्रस्वरूपो भगवानेकांशेन भवत्यजः ॥ २८ ॥
अग्न्यन्तकादिरूपेण भागेनान्येन वर्तते ।
कालस्वरूपो भागो यस्सर्वभूतानि चापरः ॥२९॥
विनाशं कुर्वतस्तस्य चतुर्धैवं महात्मनः ।
विभागकल्पना ब्रह्मन्कथ्यते सार्वकालिकी ३०॥
ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥ ३१ ॥

श्रीधरीयम् ।

पयेत्याह—सृजत्येष इति ॥२२॥ तदेव सृष्ट्यादिवर्तनं चतुर्धा विभजति । चतुर्विभाग इत्यादिभिः—चतुर्विभाग इति । संसृष्टौ सम्यक् सृष्टौ । चतुर्विभागः सन्निति क्वचित्पाठः ॥ २३ ॥ २४ ॥ काल इति । रज एव गुणो यस्य स रजोगुणः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ विनाशमिति । सार्वकालिकी सर्वकल्पगता ॥ ३० ॥ एते ब्रह्मादयो देवविभूतय इत्याह—ब्रह्मेत्यादिभिः

विष्णुचित्तीयम् ।

॥ २३ ॥ एकेनेति । अव्यक्तमूर्तिमान् अव्यक्तस्वरूपः । मरीचिमिश्राः मरीचिसहिताः ॥ २४ ॥ काल इति । रजो गुणो यस्य स रजोगुणः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ विनाशमिति ।

रत्नगर्भीयम् ।

त्रिष्वपि तस्यैव मुख्यसामर्थ्यमित्याह—सृजतीत्यादिना । रजस्सत्त्वादीनां संश्रय आधारः । सृष्ट्याद्यर्थं रजआदीनामुपादानत्वात् ॥ २२ ॥ सृष्ट्यादिकर्तृत्वं चतुर्धा विभजन्नाह—चतुर्विभाग इत्यादिना ॥ २३ ॥ एकेनांशेनासौ विष्णुर्ब्रह्मा भवति । ब्रह्मरूपेणाविर्भवति । सचाव्यक्तमूर्तिमान् । चतुर्मुखे प्रविष्टत्वेनाप्रकाशमूर्तिमान् । "ब्रह्मणि ब्रह्मरूपोऽसौ" इत्याद्युक्तेः । अन्यभागतः अन्येन भागेनांशेन । प्रजानां पतयो मरीचिमिश्राः मरीचिमुख्याः । मरीच्यादिषु संस्थित्वा सृष्टिं करोतीत्यर्थः ॥ २४ ॥ कालः सृष्टिकालः तत्राधिष्ठितः । सर्वभूतानि मातृपित्रादिरूपाणि । अपरः अंशान्तराधिष्ठितस्मात् । रज एव गुणो यस्य स तथा ॥ २५ ॥ स्थितौ एकांशेन विष्णुर्मूर्त्या पालनं करोति । मन्वादिषु रूपमस्यास्तीति मन्वादिरूपीकालरूपः । काले स्थितिकाले रूपं यस्य स तथा ॥ २६ ॥ सर्वभूतेष्वन्येन रूपान्तरेण । सर्वभूतेष्विति भूतानां भगवद्रूपाधिष्ठानत्वोक्त्या पूर्वोक्तानां ब्रह्मादीनामपि तदधिष्ठानत्वमेवेति दर्शितं । समाश्रित्योपादाय । पुरुषोत्तम इत्युक्त्या सर्वेषु स्थित्वा तत्तच्छक्तिप्रदानसामर्थ्यं दर्शितं ॥ २७ ॥ तमसः तमोगुणस्य । वृत्तिं व्यापारमाश्रित्यानुसृत्य रुद्रस्वरूपः सन् रुद्रे प्रविष्टः ॥ २८ ॥ सार्वकालिकी सर्वसङ्कल्पसाधारणी ॥ ३० ॥ ब्रह्मादीनां भगवद्रूपत्वोक्तिर्नसन्निधिमात्रेण तस्य सर्वसाधारणत्वात् । किन्तु

सत्यव्रतीयम् ।

अन्तकत्वे तद्दशायाम् ॥ २२ ॥ अपरेणांशेन जगतः स्थितिमित्यन्वयः ॥ २६ ॥ सार्वकालिकी सर्वस-

[ पा० ] १ [श्रीध० पा०] विभागस्संसृष्टौ २ क—छ झ ञ परिपालनं ३ ख—छ झ—ठ प्रभु ४ ख. ग छ रूपी भागोऽन्यस्सर्वं

विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ ३२ ॥
रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥ ३३ ॥
जगदादौ तथा मध्ये सृष्टिराप्रलयाद् द्विज ।
धाता मरीचिमिश्राश्च क्रियते जन्तुभिस्तथा ॥ ३४ ॥
ब्रह्मा सृजत्यादिकाले मरीचिप्रमुखास्ततः ।
उत्पादयन्त्यपत्यानि जन्तवश्च प्रतिक्षणम् ॥ ३५ ॥
कालेन न विना ब्रह्मा सृष्टिनिष्पादको द्विज ।
न प्रजापतयः सर्वे न चैवाखिलजन्तवः ॥ ३६ ॥
एवमेव विभागोऽयं स्थितावप्युपदिश्यते ।
चतुर्धा तस्य देवस्य मैत्रेय प्रलये तथा ॥ ३७ ॥
यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज ।
तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः ॥ ३८ ॥
हन्ति यावच्च यत्किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
जनार्दनस्य तद्रौद्रं मैत्रेयान्तकरं वपुः ॥ ३९ ॥
एवमेष जगत्स्रष्टा जगत्पाता तथा जगत् ।
जगद्भक्षयिता देवः समस्तस्य जनार्दनः ॥ ४० ॥
सृष्टिस्थित्यन्तकालेषु त्रिधैवं संप्रवर्तते ।
गुणप्रवृत्त्या परमं पदं तस्यागुणं महत् ॥ ४१ ॥

विष्णुचित्तीयम् ।

॥ ३१ ॥ तमेवार्थं पुनः संक्षिप्याह—ब्रह्मेत्यादिना ॥ ३१ ॥ अप्युगमपि तस्य पदं गुणागुणाधि-

श्रीधरीयम् ।

॥ ३१ ॥ ३२ ॥ ३३ ॥ ब्रह्मादिभगवद्विभूतीनां चातुर्भेदेन सप्तृत्वमाह—जगदादावित्यादिद्वाभ्याम् ॥ ३४ ॥ ३५ ॥ कालस्यापि विभूतेषु मध्ये सृष्टिनिमित्तत्वमाह—कालेनेति ॥ ३६ ॥ एवमेव स्थितिप्रलययोरप्यतिदिशति—एवमेवेति ॥३७॥ उत्पादयन्त्यपत्यानीत्यत्रोक्तमर्थं स्पष्टयति तस्यापीति दर्शयन्नाह—यत्किञ्चिदिति । सत्त्वजातेन प्राणिमात्रेण । चान्येऽप्येतदनुसन्धेयम् ॥ ३८ ॥ ३९ ॥ सर्वं ब्रह्मादीनां विष्णुविभूतित्वमुपसंहरन्नाह—एवमित्यादिद्वाभ्याम् ॥ ४० ॥ सर्वेति । गुणप्रवृत्त्या गुणानां

विष्णुचित्तीयम् ।

सार्वकालिकी प्रतिपत्त्यभावविनाशकत्वे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ एतदुक्तं भवतीत्याह—यत्किञ्चिदिति । सम्भूतावित्ति निमित्तसप्तमी । कार्योत्पत्तिनिमित्तं हि कालाधि-ष्ठानेन हरेस्तनुस्तत्वम् ॥ ३८ ॥ ३९ ॥ एवमिति । समस्तस्य देवो जनार्दन इत्यन्वयः ॥ ४० ॥ त्रिगु-

तच्च ज्ञानमयं व्यापि स्वसंवेद्यमनौपमम् ।
चतुष्प्रकारं तदपि स्वरूपं परमात्मनः ॥ ४२ ॥
श्रीमैत्रेय उवाच ॥
चतुष्प्रकारतां तस्य ब्रह्मभूतस्य हे मुने ।
ममाचक्ष्व यथान्यायं यदुक्तं परमं पदम् ॥४३॥
श्रीपराशर उवाच ॥
मैत्रेय कारणं प्रोक्तं साधनं सर्ववस्तुषु ।
साध्यं च वस्त्वभिमतं यत्साधयितुमात्मनः ॥४४॥

चित्सुखीयम् ।

भूतानां सत्त्वादीनां चेष्टया त्रिधा ब्रह्मादिरूपेण प्रवर्तते ॥ ४१ ॥ तच्च पदं ज्ञानमयं ॥ ४२ ॥

श्रीधरीयम् ।

क्षोभेण त्रिविधं ब्रह्मादिरूपं सृष्ट्यादौ संप्रवर्तते । तस्य तु परमं पदमगुणं ततो महत्पूर्णम् ॥ ४१ ॥ स्वरूपप्रकारोपदेशार्थं चातुर्विध्यमुपक्षिपति—तच्चेति ॥ ४२ ॥ अगुणस्य ज्ञानमयस्य च निर्भेदस्य कथं चातुर्विध्यमित्याशङ्क्य पृच्छति मैत्रेयः—चतुष्प्रकारतामिति ॥ ४३ ॥ निर्गुणब्रह्मप्राप्तेः प्रागेव तस्या-स्युपायभूतसाधनाद्यालम्बनमनुष्ठेयमित्यज्ञानस्याभेदात् ज्ञानस्य चातुर्विध्यं न स्वरूपेणेति च तदाह—

विष्णुचित्तीयम् ।

एतद्द्वयं रूपं निगमयति—सृष्टिस्थितीत्यारभ्य गुणप्रवृत्त्येत्यन्तेन । सृष्टीति । सृष्ट्यादिकालेषु गुणप्रवृत्त्या त्रिधाभूतः एवमुक्तप्रकारेण चातुर्भेदो वर्तते । परममित्यादि । परमं विरिञ्चादिपदात् । अगुणं गुणमयप्रकृतिवियुक्तं । महत् अव्यक्तम् । सर्गस्थित्यन्तकालेष्विति च पाठः ॥ ४१ ॥ तच्चेति । ज्ञानमयं ज्ञानप्रचुरम् । व्यापि ज्ञानेन । स्वसंवेद्यं स्वयंप्रकाशं । एवंभूतं यत्पदं पद्यत इति पदं मुक्त-स्वरूपं । तच्च चतुष्प्रकारम् । तदपि तस्य परमात्मनः स्वरूपमित्यन्वयः । अत्र स्वरूपशब्दो रूपवचनः । स्वं रूपं हि स्वरूपम् ॥ ४२ ॥ ४३ तस्य चातुर्विध्यं दर्शयितुमुपक्रमते—मैत्रेयेत्यादिभिः । मैत्रे-

दत्तात्रेयीयम् ।

प्रवर्तते । गुणप्रवृत्त्या त्रैविध्यकथनेन प्राप्तां गुणसम्बन्धत्वशङ्कां निवारयितुं विष्णोः स्वरूपमाह—परमं पदमित्यादिना । तस्य विष्णोः पदं पद्यत इति पदं स्वरूपं परमं सर्वोत्कृष्टं । तत्र हेतुः महत् सर्वाधिकं बलज्ञानादिना पूर्णं । अगुणं सत्त्वादिगुणवर्जितं । सत्त्वादिगुणकृतबन्धाभावेऽपि कुलालो मृदादिक-मिव गुणान् गृहीत्वा सृष्ट्यादिकं क्रियत इति भावः । तदुक्तं तत्त्वभागवते "कुलालेन यथा मृदा घटाः निर्मी-यन्ते घटादयः । विष्णुनैवं प्रकृत्यैव निर्मीयते जगदीदृशं" इति ॥ ४१ ॥ गुणत्वे हेतुमाह—तच्चेति । ज्ञानमयं ज्ञानस्वरूपं । व्यापि व्याप्तं । अनेन जीववैलक्षण्यं दर्शितं । जीवानामणुत्वात् । स्वसंवेद्यं स्वप्रकाशं । अनौपमं असदृशं । मुमुक्षूपयोगितया ब्रह्मज्ञानान्तर्गतत्वेन चतूरूपत्वमुक्तं । इदानीं मुमुक्षू-पयोगितया प्रकारान्तरेण चातुर्विध्योपदेशार्थं उपक्षिपति—चतुष्प्रकारमिति । तत्परमात्मनः स्वरूपं प्रकारान्तरेणापि चतुष्प्रकारं ॥ ४२ ॥ प्रकारान्तरेण चतुष्प्रकारतां ज्ञातुं पृच्छति—चतुष्प्रकारता-मिति । यत्परमं पदमुक्तं ब्रह्मभूतस्य तस्य स्वरूपस्य चतुष्प्रकारतां प्रकारान्तरेण चतुष्प्रकारतां यथान्यायं यथोपपन्नं भवति तथा ममाचक्ष्वेत्यन्वयः ॥ ४३ ॥ मुमुक्षूपयोगिभावनसाध्यादिज्ञानभेदचतुष्टय-त्वेन ज्ञानात्मकस्य भगवद्रूपस्य चातुर्विध्यं वक्तुं साधनादिस्वरूपं तावदाह—मैत्रेयेत्यादिना । सर्व-वस्तुषु यत्कारणं तत्साधनं प्रोक्तं । यदात्मनः साधयितुमभिमतं वस्तु तत्साध्यं प्रोक्तमित्यन्वयः ॥ ४४ ॥

[ पा० ] १ ट. तत्त्वज्ञानमयं. २ क. ग—ङ. म ज्ञानभूतस्य वै मुने.

योगिनो मुक्तिकामस्य प्राणायामादिसाधनम् ।
साध्यं च परमं ब्रह्म पुनर्नावर्तते यतः ॥ ४५ ॥
साधनालम्बनं ज्ञानं मुक्तये योगिनां हि यत् ।
स भेदः प्रथमस्तस्य ब्रह्मभूतस्य वै मुने ॥ ४६ ॥
युञ्जतः क्लेशमुक्त्यर्थं साध्यं यद्ब्रह्म योगिनः ।
तदालम्बनविज्ञानं द्वितीयोंऽशो महामुने ॥ ४७ ॥
उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् ।
विज्ञानमद्वैतमयं तद्भागोऽन्यो मयोदितः ॥ ४८ ॥

विष्णुचित्तीयम् ।

प्राणायामादिसाधनविषयं यत् ज्ञानं तज्ज्ञानं प्रथमांशः ॥ ४५–४६ ॥ साध्यब्रह्मावलम्बनं यज्ज्ञानं तद्द्वितीयांशः ॥ ४७ ॥ एतयोरेव साध्यसाधनयोः परस्पराभेदज्ञानं तत्तृतीयांशः ॥ ४८ ॥

श्रीधरीयम् ।

मैत्रेयेत्याद्यष्टभिः । मैत्रेयेति । सर्वेष्वपि वस्तुषु यत्कारणं तत्साधनं प्रोक्तं । यदात्मनस्साधयितुमभिमतं वस्तु तत्साध्यं मोक्षमित्यन्वयः ॥ ४४ ॥ योगिन इति । प्रस्तुतमुक्तिकामस्य योगिनो मुक्तेः प्राणायामादिसाधनं प्राणायाम आदिः चित्तैकाग्र्यद्वारेण कारणं यस्य देहात्मविवेकस्य तत्प्राणायामादिमुक्तिसाधनं देहात्मविवेकरूपत्वं पदार्थशुद्धिं विना मलक्लेशसम्भवात् साध्यश्च तत्पदलक्ष्यं परब्रह्म । नित्यसुखात्मकत्वात् ॥ ४५ ॥ ततः किमत आह—साधनेति । साधनं देहाद्यात्मविवेकत्वं पदार्थशुद्धिः तदालम्बनं शुद्धत्वं पदार्थविषयं यज्ज्ञानं स एव चतुर्भेदज्ञानभूतस्य ब्रह्मणः प्रथमो भेदः ॥ ४६ ॥ युञ्जत इति । क्लेशमुक्त्यर्थं युञ्जतो योगमभ्यस्यतो योगिनो यत्साध्यं ब्रह्म तद्विषयं सच्चिदानन्दब्रह्मेति तत्पदलक्ष्यार्थः । विशेषेण ज्ञानं विज्ञानं द्वितीयोंशः ॥ ४७ ॥ उभयोरिति । उभयोस्त्वविभागेन परस्परैक्येन ब्रह्मैवाहमहमेव ब्रह्मेति विशेषं यद्विज्ञानं सोऽन्यस्तृतीयो भागो मयोदितः ॥ ४८ ॥

विष्णुचित्तीयम् ।

चेति । यत्कारणं तत्साधनं । यत्साधयितुमभिमतं तत्साध्यम् ॥ ४४ ॥ योगिन इति । परमं ब्रह्म मुक्तस्वरूपं । "सर्वब्रह्ममयो हरिः" इति वचनात् प्रकृतिपुरुषयोरपि ब्रह्मत्वम् । तदपेक्षया मुक्तस्वरूपस्य परमब्रह्मत्वम् ॥ ४५ ॥ साधनालम्बनमिति । साधनालम्बनं ज्ञानं योगशास्त्रजन्यम् । प्राणायामादिसाधनविषयं ज्ञानं स प्रथमो भेदः ॥ ४६ ॥ युञ्जत इति । तदालम्बनविज्ञानं शास्त्रजन्यं प्रकृतिविविक्तात्मविषयं विशिष्टज्ञानम् ॥ ४७ ॥ उभयोरित्यादि । अविभागेन संयोगेन साध्यसाधनमानमनन्येन । अद्वैतमयं देवमनुष्यादिद्वैतरहितात्मविषयतया तत्सदृशं विज्ञानं ध्यानम् ॥ ४८ ॥

दत्तात्रेयीयम् ।

प्रकृते मुक्तिकामस्य किन्तदुभयमित्यत आह—योगिन इति । मुक्तिकामस्य योगिनः प्राणायामादिसाधनं यतः पुनर्नावर्तते तत्परमं ब्रह्म साध्यं । ब्रह्मणः स्वरूपेण सिद्धत्वेऽपि प्राप्यत्वेन साध्यत्वमुच्यते ॥ ४५ ॥ ततः किमित्यत आह—साधनेति । साधनं प्राणायामादिकं आलम्बनं विषयो यस्य तत्तथा । तादृशं योगिनां मुक्तये यत् ज्ञानं सः ज्ञानभूतस्य परमात्मस्वरूपस्य प्रथमोभेदः प्रथमोंशः ॥ ४६ ॥ क्लेशमुक्त्यर्थं युञ्जतो योगमभ्यस्यतो योगिनो यत्साध्यं ब्रह्म तदालम्बनं विज्ञानं तद्विषयकं ज्ञानं द्वितीयोंशः ॥ ४७ ॥ उभयोः साध्यसाधनयोरविभागेन संयोगेन साध्यसाधनभावेन द्वैतमेकं विज्ञानं अयमन्यस्तृतीयस्तस्य परमात्मनो भागोंशः । साध्यसाधनभावेन तदुभयविषयकमेकं विशिष्टज्ञानं तृतीयो-

रत्नगर्भीयम् ।

प्राणानामायामादयः शोधकाः सन्ति यस्य तच्छोधकरूपं । प्रीयादित्यादिभिः ॥ ४५ ॥ अतिशयेन निरुद्धायाम-

ज्ञानत्रयस्य वै तस्य विशेषो यो महामुने ।
तन्निराकरणद्वारा दर्शितात्मस्वरूपवत् ॥ ४९ ॥

निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ।
आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥५०॥

चित्सुखीयम् ।

एतस्य साध्यसाधनशब्दभेदालम्बनस्य विशेषो भेदः । तन्निराकरणद्वारदर्शितात्मस्वरूपवत् तस्य भेदस्य निराकरणात् तन्निराकरणं तदेव द्वारमुपायः । तेन तन्निराकरणद्वारेण दर्शितमात्मस्वरूपं तन्निराकरणद्वारदर्शितात्मस्वरूपं तद्वत् ॥ ४९ ॥ तच्च निर्व्यापारं चलत्वाकारधारि । अनाख्येयं वाचामगोचरं । मात्र-

श्रीधरीयम् ।

ज्ञानत्रयस्येति । एतस्य तत्त्वं पदार्थतदैक्यविषयस्य ज्ञानत्रयस्य यो विशेषो देहादिविलक्षणोऽहमिति सच्चिदानन्दरूपं ब्रह्मेति ब्रह्माहमिति च यस्तत्र विशेषांशः तस्य निराकरणं परित्यागस्तद्द्वारेण दर्शितं यन्निर्विशेषमात्मस्वरूपं तद्वत्तदेकाकारसमाध्यवस्थं विष्णोर्ज्ञानमयस्य परमपदाख्यं ज्ञानं चतुर्थमुक्तमिति तृतीयेनान्वयः ॥ ४९ ॥ तदेव द्वादशभिः पदैर्विशिनष्टि—निर्व्यापारमिति । निर्व्यापारं ध्यानादिसर्वव्यापारशून्यम् । अत एवानाख्येयं निर्देष्टुमशक्यं । किन्तु व्याप्तिमात्रं मनसो ब्रह्माकारतामात्ररूपम् । अनूपमं निरुपमं । सर्वज्ञानविलक्षणत्वात्तदेवाह—आत्मनः सम्बोधः प्रकाशस्तद्विषयं स्वप्रकाशमित्यर्थः । स-

विष्णुचित्तीयम् ।

ज्ञानत्रयस्येति । उक्तस्य ज्ञानत्रयस्य साधनज्ञानत्वादिरूपो यो विशेषस्तस्य निराकरणम् अपरामर्शः यस्य द्वारं दर्शितात्मस्वरूपवत् । तत् आत्मावलोकनरूपज्ञानं चतुर्थो भाग इत्यनुषङ्गः ॥४९॥ विनिष्पन्नसमाधेरितरपरामर्शस्यात्मावलोकनविरोधित्वात्तन्निराकरणं द्वारमित्युक्तम् । दर्शितात्मस्वरूपवदित्युक्तस्यात्मावलोकनस्य विषयमात्मस्वरूपं दर्शयति—निर्व्यापारमित्यादि । निर्व्यापारं साधनानुष्ठानरहितम् । अनाख्येयं रूपवर्णादीनामगोचरस्वरूपं । व्याप्तिमात्रं मात्रशब्दोऽवधारणे । व्याप्तमेव असङ्कुचितमित्यर्थः ।

दत्तात्रेयीयम् ।

ज्ञो मयोदित इत्यर्थः ॥ ४८ ॥ एतस्योक्तस्य ज्ञानत्रयस्य यो विशेषः साधनज्ञानत्वादिरूपः तस्य निराकरणमपरामर्शो द्वारं यस्य स तथा । दर्शितात्मस्वरूपवत् । दर्शितात्मस्वरूपमस्यास्तीति तथा परमात्मसाक्षात्काररूपं ज्ञानमिति यावत् । अत्रमत्वर्थीयस्त्यपश्छान्दसः । अयं चतुर्थो भाग इत्यनुषङ्गः । विनिष्पन्नसमाधेरितरपरामर्शस्य परमात्मसाक्षात्कारविरोधित्वात्तन्निराकरणे द्वारमित्युक्तं । तन्निराकरणद्वारदर्शितेतिपाठे तन्निराकरणरूपद्वारेण दर्शितेत्यर्थः । अत्रोक्तस्य साधनादिज्ञानचतुष्टयस्य ज्ञानात्मकभगवदंशत्वोक्तिर्नस्वरूपांशत्वाभिप्रायेण तस्य मनोवृत्तिरूपत्वेन जडत्वाज्ज्ञानत्वाच्च । किंतु भगवद्रूपविशेषाधिष्ठानतया भिन्नांशत्वाभिप्रायेणेति द्रष्टव्यं । अमुमेवार्थं दर्शयितुं दर्शितात्मस्वरूपवदित्युक्तं ॥ ४९ ॥ परमात्मसाक्षात्कारस्य विषयभूतमात्मस्वरूपं दर्शयति—निर्व्यापारमित्यादिना । निर्व्यापारं पूर्णत्वात्साधनानुष्ठानरूपव्यापाररहितं । नितरां जगत्सृष्ट्यादिविषये व्यापारो यस्येति वा । अनाख्येयं साकल्येनाख्यातुमशक्यं । "यतो वाचो निवर्तन्ते" इति श्रुतेः । व्याप्तिमात्रं स्वव्याप्त्या सर्वं मिनोति जानातीति त्राति रक्षतीति व्याप्तिमात्रं । माङ्माने । त्रैङ्पालने इति धातुद्वयं । "विष्णोरिच्छावशत्वाच्च मायामात्रमिति स्फुटं" इति प्रमाणानुसारेण मायामात्रमित्यत्र माया मानत्राणकर्त्री यस्येत्याचार्यैर्व्याख्यात-

रत्नगर्भीयम् ।

व्यवहितवर्तिन्याभखण्डात्मविषयबुद्धिवृत्तौ प्रतिफलितं यत्स्वरूपचैतन्यं तद्विष्णोः परमंपदमित्यर्थः ॥४९॥

[पा० ] १ म. द्वारदर्शितात्म । [दत्ता० पा०] द्वारं दर्शितात्म. २ [दत्ता० पा०] मनौपमं.

प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रयम् ।
विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥५१॥
तत्रै ज्ञाननिरोधेन योगिनो यान्ति ये लयम् ।
संसारकर्षणोप्तौ ते यान्ति निर्बीजतां द्विज ॥५२॥

विष्णुचित्तीयम् ।

शब्देन विशेषरूपता व्यावर्त्यते । आत्मस्वरूपसम्बोध आत्मसम्बोध तद्विषयं । सत्तामात्रं मात्रशब्देन रूपान्तरं व्यावर्त्यते । अलक्षणमिति । लक्षणं लिङ्गं तद्रहितमनुमानागोचरमित्यर्थं ॥ ५० ॥ प्रशान्तं रागादिरहितं । दुःखेन विभाव्यत इति दुर्विभाव्यं । अत्यन्तैकाग्रबुद्धिगम्यमित्यर्थं ॥ ५१ ॥ तत्र चतुर्थज्ञानविषये ये लयं यान्ति ते । संसारकर्षणोप्तौ कर्षणमुपर्यधोनयनं । उप्तिरावापः । कर्षणपूर्विका

श्रीधरीयम् ।

नापि सत्तामात्रमात्मस्वरूपभूतसत्यज्ञानानन्दादिविशेषशून्यं । तत्र हेतुरलक्षणं लक्ष्यतेनेनेति लक्षणं मनोवृत्तिस्तद्रहितं । तदुक्तं योगप्रदीपे "मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः । या सम्प्रज्ञातनामाऽसौ समाधिरभिधीयते" इति ॥ ५० ॥ प्रशान्तमिति । मनोवृत्त्यभावादेव प्रशान्तं रागादिशून्यमत एवाभयं द्वैतास्फूर्तेः । शुद्धं निर्विषयमत एव दुर्विभाव्यमवितर्क्यं । निर्विषयत्वादेवासंश्रयमाश्रयशून्यम् । असंश्रितमितिपाठेऽपि स एवार्थः । वृत्तिप्रतियोगित्वाद्वाश्रयविषययो । तदुक्तं कापिलयोगे "मुक्ताश्रयं यदि हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथार्चिः (यथाऽर्चिः)। आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहम्" इति ॥ ५१ ॥ एवम्भूतज्ञानस्वरूपे लीनाः कृतार्था भवन्तीत्याह—तत्रेति । तत्र चतुर्थज्ञानस्वरूपे ब्रह्मणि अज्ञाननिरोधेनाविद्यानाशेन ये लयमैक्यं यान्ति । तत्रान्यज्ञानरोधेति पाठे पूर्वोक्तज्ञानत्रयविक्षेपतिरस्कारेणेत्यर्थः । संसारकर्षणोप्तौ संसार एव कृष्यत

विष्णुचित्तीयम् ।

अनुपममेवानूपमम् । अनौपममिति च पाठः । आत्मसम्बोधविषयं स्वज्ञानगम्यं । सत्तामात्रम् अपक्षयादिरहितं सर्वैकगुणकम् । अलक्षणं क्लीवादिरहितं । लिङ्गजन्यज्ञानागम्यमिति वा ॥ ५० ॥ प्रशान्तमिति । प्रशान्तम् अशनायादिषडूर्मिरहितं । शुद्धं कर्मरहितं । दुर्विभाव्यम् अरूपादिमत्त्वात् । अतर्क्यमिति वा । विष्णो रूपं ब्रह्मसंज्ञितं तज्ज्ञानमेवमुक्तम् । एवमुक्तमात्मयोगिनामन्तिमप्रत्ययेनावश्यं भाव्यम् ॥ ५१ ॥ अन्यथा पुनरावृत्तिरित्याह—तत्रेति । तत्र निर्व्यापारमित्यादिनोक्ते निजस्वरूपे

दत्तात्रेयीयम् ।

स्यात् । अनौपमं अनुपममेवानौपमं । आत्मसम्बोधविषयं आत्मरूपो यः सम्बोधः सम्यक् ज्ञानं तद्विषयं स्वप्रकाशमित्यर्थं । सत्तामात्रमानन्दमानं । तदुक्तं पैङ्गिश्रुतौ । "अथकस्मादुच्यतेसत्येति सन्दिनन्दयति च" इति । मात्रशब्देन प्राकृतदेहादिकं व्यावर्त्यते । अलक्षणं लिङ्गागम्यं । "नेन्द्रियाणि नानुमानं" इति श्रुतेः ॥ ५० ॥ प्रशान्तं अशनादिषडूर्मिरहितं । अभयं भयरहितं । न विद्यते भयं यस्मादिति येषामितिवा । शुद्धं पुण्यपापादिकर्मरहितं सत्त्वादिगुणरहितंवा । दुर्विभाव्यं इदमित्थमिति विशिष्य ज्ञातुमशक्यं । असंश्रयं स्वातिरिक्ताश्रयरहितं । "सभगवः कस्मिन्प्रतिष्ठित इति स्वेमहिम्नि" इति श्रुतेः । तत् ज्ञानं । ज्ञानमयस्य ज्ञानात्मकस्य विष्णोः परमं पदं स्वरूपमुक्तमितिसम्बन्धः । तद्रूपं ब्रह्मसंज्ञितमिति पाठे विष्णोर्ब्रह्मसंज्ञितं रूपं तत् उक्तप्रकारं ज्ञानमुक्तमित्यर्थं ॥ ५१ ॥ इदमेव मुक्तप्राप्यमित्याह—तत्रेति । तत्रनिर्व्यापारमित्यादिनोक्ते भगवत्स्वरूपे अज्ञाननिरोधेन अज्ञाननाशेन । अन्यज्ञाननिरोधे

[ पा० ] १ प नित्य २ [श्रीध० पा०] श्रित ३ [दत्ता० पा०] तद्रूप ४ क ख ग—ङ परमं पदं ५ [श्रीध० पा०] तत्रान्यज्ञानरोधेन । [रत्न० पा०] तत्राविद्यानिरोधेन [दत्ता० पा०] तत्राज्ञाननिरोधेन । अन्यज्ञाननिरोधेन

एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥ ५३ ॥
तद्ब्रह्म परमं योगी यतो नावर्तते पुनः ।
श्रयत्यपुण्योपरमे क्षीणक्लेशोऽतिनिर्मले ॥ ५४ ॥
द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥ ५५ ॥

चित्सुखीयम् ।

वह्निः कर्षणोग्निः । पुनर्जन्मने क्षेत्रतापः । तत्र निर्बीजता निरस्तबीजतां यान्तीतिभावः ॥ ५२ ॥

श्रीधरीयम् ।

इति कर्षण क्षेत्र तस्मिन्नुग्निः बीजतापः कर्मकरण तस्मिन् निर्बीजतां निर्वासनतां यान्ति । निरहङ्कारैः ज्ञानोत्तरपालीनैः कर्मभिर्न्यामैश्च न संसरन्तीत्यर्थः ॥ ५२ ॥ तर्हि योगी किम्भवतीत्यत आह —एवमित्यादिद्वाभ्याम्—एवमिति ॥ एव प्रकार परम ब्रह्मैव योगी प्राप्नोतीति शेषः ॥ ५३ ॥ ५४ ॥ तत्प्राप्तिसाधनभूतोपासनार्थमाह—द्वे रूपे इति ॥ मूर्तामूर्ते एव दर्शयन्नाह—क्षराक्षरस्वरूपे इति

विष्णुचित्तीयम् ।

अन्यज्ञाननिरोधेन अन्तिमप्रलयप्रसङ्गे लयमुपाधिवियोगं यान्ति आविर्भूतस्वरूपा भवन्तीत्यर्थः । कृष्यत इति कर्षणं केदारः । संसारकेदारे उभौ मल्लावापे विनुष्टाविवदबीजता यान्ति ॥ ५२ ॥ एव तावद्भगवतो रूपद्वयमुपास्यरूपमाह एवमित्यादिना—एवमिति ॥ मुक्तस्यैव निर्व्यापारस्वगतिर्दिश्यते "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतेः । अस्य नित्यशुद्धत्वसर्वात्मत्वपूर्णत्वहेयरहित्यानि प्रकृतिपञ्चभूतेभ्यो विशेषः ॥ ५३ ॥ तद्ब्रह्मेति ॥ योगी भगवद्योगी । अस्याप्यन्तिमप्रलयबलेन भगवति लीनस्यापुनरावृत्तिर्द्रष्टव्या ॥ ५४ ॥ ब्रह्मणः पूर्वोक्त रूपद्वय प्रपञ्चयति—द्वे रूपे इति ॥ मूर्तं सशरीर

रत्नगर्भीयम् ।

नेति पाठे पूर्वोक्तमोक्षोपयोगिज्ञानचतुष्टयव्यतिरिक्तज्ञानतिरस्कारेण ये योगिनो लयं यान्ति ते संसारकर्षणोऽग्नौ संसार एव कृष्यत इति कर्षणं क्षेत्र तस्मिन्नुग्निर्बीजतापः कर्मकरण तद्विषये निर्बीजता सर्वकर्मसंताशात्मसारबीजभूत कर्मराहित्य यान्ति ॥ ५२ ॥ मुक्तप्राप्यत्वादिधर्मेण पर ब्रह्मेत्याह—एवमिति ॥ एवप्रकार उक्तनिर्व्यापारत्वादिप्रकारयुक्त अमल मुमुक्षुप्राप्य । शुद्धानन्देत्यादितत्पदप्रकाशितपदव्याख्यानावसरे अमलपदस्य अज्ञानरहिताः मुमुक्षवस्तैरुपासनीयत्व इति अमल । ला आदाने इति धातोरिति व्याख्यातत्वात् । अक्षय ह्रासरहित । समस्तहेयरहित अशेषदोषदूर । यद्विष्ण्वाख्य परम पद ॥ ५३ ॥ तत्परम ब्रह्म । अपुण्यपुण्योपरमे पापपुण्यक्षये सति । पुण्य यस्मात् । यतो ब्रह्मणो योगी पुनर्नावर्तते । पुनरावृत्तिशून्यः सन्नत्र तिष्ठतीत्यर्थः ॥ ५४ ॥ जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावावसरेण एकदेहस्थितत्वात् । जीवात्मा ब्रह्मणोऽशत्वात् उपपद्यत इति दर्शयितु जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावमाह—द्वेरूप इत्यादिना । तस्य ब्रह्मणो मूर्तं चामूर्तं चेति द्वे रूपे । मूर्तं ब्रह्मादिजीवजात प्रतिबिम्बभूत रूप । नतु साक्षाद्रूप । तस्य क्षरत्वायोगात् । जीवानामणुत्वेन परिच्छिन्नत्वात् । अमूर्तं बिम्बभूतपरमात्मस्वरूप । तयोः स्वरूपमाह—क्षराक्षरेति । मूर्तं क्षरस्वरूप । अमूर्तमक्षरस्वरूप । मूर्तस्य जीवजातस्य स्वरूपेणाक्षरत्वेऽपि शरीरनाशविवक्षया क्षरत्वोक्तिः । तथाच परश्रुतिः "ब्रह्मादयः सुराश्च शरीरक्षरणात्क्षराः" इति । अमूर्तमक्षरस्वरूप । सर्वमूर्तेषु अवस्थिते पृथिव्यादिसर्वभू-

रत्नगर्भीयम् ।

चतुर्थज्ञानस्वरूपे अन्यज्ञान ब्रह्मविज्ञानस्वरूप तस्य निरोधेन दग्धेन्धनानलवदुपरमेण ॥ ५२ ॥

[ पा० ] १ ग ज झ ट ड भवति । २ ड स्था । ३ क—घ झ—ड अपुण्यपुण्योपरमे ४ क—घ च छ झ—ट क्षीणोऽतिनिर्मले ।

अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेर्ज्योत्स्ना[1] विस्तारिणी यथा ।
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ ५६ ॥
तत्राप्यासन्नदूरत्वाद्बहुत्वस्वल्पतामयः ।
ज्योत्स्नाभेदोऽस्ति तच्छक्तेस्तद्वन्मैत्रेय विद्यते ५७

चित्सुखीयम् ।

मूर्तामूर्तरूपे एव दर्शयति—क्षराक्षरेति ॥ ५५ ॥ इदानीं तस्यैवाक्षरस्य स्वशक्तिद्वारेण सर्वत्र तारत-

श्रीधरीयम् ।

॥ ५५ ॥ क्षराक्षरे एव रूपे व्याचष्टे—अक्षरमिति ॥ क्षरं सर्वमिदं चेतनाचेतनात्मकं जगत् । वक्ष्यति हि "आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः । भूप (रूपं) मूर्तममूर्तं च परं चापरमेव च" इति । नन्व-क्षरस्य परब्रह्मणस्तद्विलक्षणं क्षरं रूपं कथं स्यादित्याशङ्क्य दृष्टान्तेनोपपादयति—एकदेशेति ॥ प्रादेशिक-स्याप्यग्नेर्दीपादेर्गेहव्यापि तद्विलक्षणा ज्योत्स्ना प्रभा यथा तत्प्रकाशशक्तिविस्तारः तथा ब्रह्मशक्तिकृतो विस्तारः । इदमखिलं ब्रह्मादिरूपं जगत् ॥ ५६ ॥ अग्निदृष्टान्तेनैव ब्रह्मादिजीवतारतम्यमपि सङ्ग-च्छत इत्याह—तत्रापीति ॥ तत्रापि दृष्टान्तभूतेऽग्नाविव आसन्नत्वाद्बहुलं दूरत्वादल्पमित्येवंरूपो यथा ज्योत्स्नाया भेदोऽस्ति तथा ब्रह्मशक्तेरपि क्षेत्रज्ञरूपाया ब्रह्मादिस्थावरान्तेषु क्षेत्रेष्वविद्यावरणस्या-ल्पत्वबहुत्ववशात्तारतम्यं विद्यत इत्यर्थः । वक्ष्यति च "यया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।

विष्णुचित्तीयम् ।

ब्रह्मादिजीवजातम् । अमूर्तम् अशरीरं मुक्तस्वरूपम् । अत एवाक्षरं । सर्वभूतेष्ववस्थितम् "ज्ञानाग्निः स चानन्त्याय कल्पते" इत्यादेः ॥ ५५ ॥ अक्षरमिति ॥ इदं रूपद्वयं परब्रह्मणः शक्तिरिति चो-च्यत इत्याह—एकदेशेति ॥ अत्र एकदेशस्थितस्य विस्तारिणीति पदद्वयेन प्रभाप्रभावतोर्वैलक्षण्यं दर्शि-तम् । अनेन प्रभारूपस्य जगतः परब्रह्मणो वैलक्षण्यं सूचितम् । भाष्यकारेण "प्रकाशादिवत्तु नैवं परः" इत्यस्मिन्सूत्रे प्रभाप्रभावतोरर्थान्तरत्वं समर्थितम् । अत्र जगच्छब्देनाचिद्विशिष्टस्य जीवस्य मुक्तस्य च ग्रहणम् ॥ ५६ ॥ शक्तिभूतस्य ब्रह्मादिस्थावरान्तस्य जगतो ज्ञानादिषु तारतम्यमस्तीत्याह—तत्रेति ॥ तत्र दृष्टान्तेऽग्नौ । तच्छक्तेः ब्रह्मशक्तेर्जगतः ज्ञानादेर्बहुत्वस्वल्पत्वात्मको भेदो विद्यत इत्यर्थः ॥ ५७ ॥

दत्तात्रेयीयम् ।

तात्मके अवस्थितत्वात् ॥ ५५ ॥ क्षराक्षरे प्राधान्यक्रमेण निर्दिशति—अक्षरमिति ॥ जगच्छब्देन जीवजातं विवक्षितं । तस्यैव मूर्तत्वसर्वभूतस्थितत्वादेरुपपन्नत्वात् । जीवात्मा प्रतिबिम्बत्वात् तदधीनत्वे सति सत्त्वसदृशत्वं । तत्र तदधीनत्वमुपपादयितुं दृष्टान्तमुखेन भगवच्छक्तिविषयत्वमाह—एकदेशेति ॥ दीपादिरूपेण एकदेशस्थितस्याग्नेः ज्योत्स्ना प्रभा यथा विस्तारिणी बहुप्रदेशव्यापिनी तथा परस्य ब्रह्मणः शक्तिरिदमखिलं जगत् । भगवच्छक्त्यधीनमखिलं जगदित्यर्थः । राजा राष्ट्रमितिवत् शक्तिर्जगदिति सामानाधिकरण्योपपत्तिः । एकदेशस्थितत्वविशेषणेन तत्तद्देहस्थितस्य परमात्मनः शक्तेः कथं सर्ववि-षयत्वमिति शङ्का निराकृता । अनेन तदधीनत्वमुपपादितं । सादृश्यं च चिदानन्दरूपत्वेन द्रष्टव्यमिति भावः ॥ ५६ ॥ अग्निदृष्टान्तेनैव प्रतिबिम्बभूतब्रह्मादिजीवतारतम्यमपि सङ्गच्छत इत्याह—तत्रेति ॥ तत्राप्यग्नावपि आसन्नदूरत्वाद्बहुत्वस्वल्पतामयः । आसन्नत्वाद्बहुत्वं दूरत्वादल्पत्वमित्येवंरूपो ज्योत्स्नाया भेदोऽस्ति तद्वत् तच्छक्तेर्भगवच्छक्तिविषयस्य ब्रह्मादिजीवजातस्य तारतम्यं विद्यत इत्यर्थः ॥ ५७ ॥

[ पा० ] 1 (रत्न० पा०) सौन्दोज्ज्योत्स्ना.

ब्रह्मविष्णुशिवा ब्रह्मन्प्रधाना ब्रह्मशक्तयः ।
ततश्च देवा मैत्रेय न्यूना दक्षादयस्ततः ॥ ५८ ॥
ततो मनुष्याः पशवो मृगपक्षिसरीसृपाः ।
न्यूना न्यूनतराश्चैव वृक्षगुल्मादयस्तथा ॥ ५९ ॥
तदेतदक्षरं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ ६० ॥
सर्वशक्तिमयो विष्णुः स्वरूपं ब्रह्मणः परम् ।
मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यते ॥ ६१ ॥

चित्सुखीयम् ।

म्येनावस्थानं दर्शयितुमाह—एकदेशेति । ज्योत्स्ना प्रभा ॥ ५६ ॥ तारतम्यमेवाह—ब्रह्मेति ॥ ५८ ॥ एवं ततस्ततो ज्ञानशक्त्यादीनां कार्यादेवादेर्जगतोऽत्यन्तभेद एव ब्रह्मणः स्यादित्यत आह—तदेतदिति ॥ आविर्भावतिरोभावजन्मनाशविकल्पवदखिलमेतत् जगत् ब्रह्म अक्षयति नित्यं तत्रैवेत्यर्थः । आविर्भावतिरोभावौ जन्मनाशौ तावेव विकल्पः तद्वत् विशिष्टं जगत् ॥ ६० ॥ इदानीं विष्णोर्मूर्तरूपस्येतर

श्रीधरीयम् ।

सर्वभूतेषु भूपाल तारतम्येन लक्ष्यते" इति ॥ ५७ ॥ तदेवाह—ब्रह्मेत्यादिद्वाभ्याम् ॥ ५८ ॥ ५९ ॥ अस्य च तारतम्यस्यौपाधिकत्वात् सर्वमिदं जगद्ब्रह्मरूपेणोपासितव्यमित्याह—तदेतदिति ॥ आविर्भावतिरोभावावाधिक्यन्यूनभावौ जन्मनाशौ च उपाधिवशादेवम्भूतविकल्पवदपि जगद्वस्तुतोऽक्षरं न्यूनाधिक्यशून्यं नित्यं च ब्रह्मैवेत्यर्थः ॥ ६० ॥ तदेवं स्थूलविभरूपोपासनया शुद्धचित्तस्य तत्कारणभूतपरमेश्वरोपासनं प्रस्तौति—सर्वशक्तिमय इति ॥ सूक्ष्मादिसर्वस्याश्रयो विष्णुः मूर्तं । विशुद्धोर्जितसत्त्वात्मकं

विष्णुचित्तीयम् ।

ब्रह्मेति ॥ ब्रह्मशिवयोः शरीरत्वेन शक्तित्वं । विष्णोः स्वांशावतारवत्स्वरूपेणैव । ततस्तेभ्यो देवा ज्ञानशक्त्यादिना न्यूनाः । एषामेवज्ञानादेस्तारतम्यं कर्मरूपावरणाल्पत्वबहुत्वकृतं । न तु स्वरूपकृतम् ॥ ५८ ॥ ५९ ॥ उक्तं जगद्रूपं निगमयति—तदेतदिति ॥ तदेतदक्षयमिति च पाठः । अक्षयं "अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते" इति जीवानामसङ्ख्येयत्वं वक्ष्यति । अतः प्रतिसर्गमन्यूनं । नित्यं सत्कार्यत्वात् "अविच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इति वचनात् प्रवाहरूपेण च नित्यं । आविर्भावतिरोभावौ सङ्कोचविकासौ तावेव जन्मनाशौ ॥ ६० ॥ अथ विलक्षणं रूपान्तरं वक्तुं मूर्तामूर्तभेदेनोक्तं शक्तिशब्दवाच्यं रूपद्वयमुपसंहरति—सर्वशक्तिमयो विष्णुरिति ॥ तदेव रूपान्तरमाह—

वृत्ताभ्रेयीयम् ।

तदेवंदर्शयति—ब्रह्मेति ॥ अत्र ब्रह्मशिवयोः भगवच्छक्तिविषयत्वाच्छक्तित्वं विष्णोस्तु शक्तिस्वरूपत्वात् । तदुक्तं ब्रह्मतर्के । "शक्यत्वाच्छक्तयो विष्णोर्महदाद्या रमा यथा । स्वरूपशक्तेश्शक्तित्वान्नुत्यशक्तिर्हिसायतः" इति । प्रधाना उत्तमाः । ब्रह्मशिवापेक्षया विष्णोराधिक्यं । शिवापेक्षया ब्रह्मणश्चेति द्रष्टव्यं । ततश्च तेभ्यो ब्रह्मादिभ्यो देवाः इन्द्रादयो न्यूनाः ॥ ५८ ॥ उक्तरूपद्वयस्यापि भगवदभिमतत्वशङ्कानिवारणार्थं रूपद्वयं विवेचयन्नुपसंहरति—तदेतदित्यादिना ॥ अक्षयं "अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते" इति जीवानामसङ्ख्येयत्वस्य वक्ष्यमाणत्वात्प्रतिसर्गह्रासवर्जितं । नित्यं देहनाशेऽपि प्रवाहतो नित्यं । आविर्भावतिरोभावौ स्वरूपस्वव्यक्तत्व्यक्ती । मुक्तिसंसारयोः जन्मनाशौ देहापेक्षया । एवंभूतविकल्पवत् यदखिलं जगत्तदेतद्ब्रह्मणः परब्रह्मणो मूर्तान्यमपरं निकृष्टस्वरूपं । निकृष्टत्वे जन्मनाशादिकं हेतुः ॥ ६० ॥ सर्वशक्तिमयः सर्वशक्तिपूर्णो विष्णुरमूर्तं स्वरूपभूतं रूपमिति शेषोक्त्या योज्यं । स्वरूपभूतस्य मूर्तरूपस्य सर्वोत्कृष्टत्वमाह—यदित्यादिना यत् योगिभिर्योगारं-

[ पा० ] १ ड ग. वृक्षगुल्मादयः. २ [विष्णु चि० पा०] तदक्षय. ३ ग. नास्त्यस्ति.

सालम्बनो महायोगः सबीजो यत्र संस्थितः ।
मनस्यव्याहते सम्यग्युञ्जतां जायते मुने ॥ ६२ ॥
स परः परशक्तीनां ब्रह्मणः समनन्तरम् ।
मूर्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिः ॥ ६३ ॥
यत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् ।
ततो जगज्जगत्यस्मिन्स जगच्चाखिलं मुने ॥ ६४ ॥

चित्सुखीयम् ।

मूर्तिभ्योऽतिशयं दर्शयितुमाह—सर्वशक्तीति ॥ ६१ ॥ पूर्वं निरालम्बनसमाधियोग्यतायाः प्राक् सालम्बनो महायोगः स एव सबीजो यत्राव्याहते मनसि सति संस्थितः स्थिरोऽजायत इत्यन्वयः ॥६२॥ सपरः सर्वशक्तीनामिति ॥ स मूर्तरूपो विष्णुः सर्वशक्तीनां ब्रह्मसम्बन्धिनीनां हिरण्यगर्भादीनां मध्ये परः सर्वाधिक इति यावत् । ब्रह्मणः समनन्तरः अव्यवहितः नातिभेदवानिति यावत् । ब्रह्मणश्चतुर्मुखस्य अव्यवहितपूर्व इति यावत् । सर्वब्रह्ममयः कृत्स्नं ब्रह्मस्वभावः ॥ ६३ ॥ यत्र द्विप्रकारे विष्णौ

श्रीधरीयम् ।

ब्रह्मण एव । परं न विद्यते यस्मात्तत्परं श्रेष्ठं रूपं । तदेवाह—यद्योगिभिः समाधेः पूर्वं योगारम्भेषु चिन्त्यते ॥ ६१ ॥ तच्चिन्ताप्रयोजनमाह—सालम्बन इति ॥ यस्मिन्मनस्यव्याहते एकाग्रे सति सालम्बनो वैष्णवसबीजो मन्त्रजपादिसहितो महायोगो युञ्जतां योगिनां संस्थितः सुस्थिरसमाधिपर्यन्तो जायत इत्यन्वयः ॥ ६२ ॥ यत्रेत्यनेन यच्छब्दोक्तस्य हरेः सर्वश्रेष्ठत्वमाह—स पर इत्यादिद्वाभ्याम्—स पर इति ॥ ब्रह्मणः सर्वशक्तीनां ब्रह्मादीनां मध्ये स परः श्रेष्ठः । यतः समनन्तरः अतिनिकटः । यतो मूर्तेष्वाविर्भूतं ब्रह्मैव सः । तत्र हेतुः सर्वब्रह्ममयः कृत्स्नब्रह्मरूपः न तु ब्रह्मादिवत्तदंशः ॥ ६३ ॥ तत्र हेतुमाह—यत्रेति ॥ यस्मिन्नखिलं जगदोतं प्रोतं च तन्तुषु पटवत्सर्वतोऽनुस्यूतं । कुत इत्यत आह—

विष्णुचित्तीयम् ।

स्वरूपमित्यारभ्य जायते मुन इत्यन्तेन । स्वरूपं रूपं । योगारम्भेषु समाध्युपक्रमभूतासु चतुर्विधासु धारणासु ध्याने च ॥ ६१ ॥ सालम्बन इति ॥ सालम्बनो मूर्तविषयत्वात् । महायोगः अस्त्रभूषणाङ्गविशिष्टदिव्यरूपविषयं चतुर्विधधारणाजन्यं ध्यानं । सबीजः सामग्र्यानुसन्धानः । स च निर्बीजयोगाख्यसमाधेरनन्तरः । यत्र रूपे ॥ ६२ ॥ स पर इति ॥ स विष्णुः सर्वासां रूपत्वेनोक्तानां शक्तीनां परः उत्कृष्टः । यदेतत्स्वरूपं ब्रह्मणः परमित्युक्तं ब्रह्मशब्दवाच्यं तद्ब्रह्मणः विष्णोः समनन्तरम् । अन्तरङ्गमित्याह—ब्रह्मणः समनन्तरमिति ॥ एतानि त्रीण्यपि रूपाणि ब्रह्मशब्दवाच्यानि । तन्मयो हरिरित्याह—सर्वब्रह्ममयो हरिरिति ॥ ६३ ॥ यत्रेति ॥ यत्र हरौ तत्र सर्वमिति च पाठः । शिष्टं स्पष्टम्

दत्तात्रेयीयम् ।

भेषु समाधेः पूर्वं चिन्त्यते ॥ ६१ ॥ चिन्तायाः फलमाह—सालम्बन इति ॥ यत्र यस्मिन् भगवत्स्वरूपे सम्यक् मनस्यव्याहते एकाग्रे सति सालम्बनः पादादिभगवदवयवध्यानालम्बनसहितः सबीजो वैष्णवो महायोगः युञ्जतां योगिनां संस्थितः सुस्थिर समाधिपर्यन्तो जायते ॥ ६२ ॥ सोऽमूर्तस्वरूपी विष्णुः ब्रह्मणः सर्वशक्तीनां ब्रह्मादीनां समानानां परः श्रेष्ठः । मूर्तं ब्रह्म जीवमात्रं । "ब्रह्माणि जीवास्सर्वेऽपि" इत्युक्तेः समनन्तरं अमूर्तरूपापेक्षया निकृष्टं । तत्र हेतुमाह—सर्वेति ॥ सर्वब्रह्मगतः सर्वजीवप्रधानः ॥ ६३ ॥ तदेवोपपादयति—यत्रेति यत्र हरौ । ततो जगदिति जगद्धेतुत्व । तस्मि-

रत्नगर्भीयम् ।

तच्चिन्तनप्रयोजनमाह—सालम्बन इति ॥ यत्रचिन्तनेऽव्याहते विक्षेपरहिते सति सालम्बनो ध्येयसहितः

[ पा० ] १ ख—ग—ट सर्वशक्तीनां २ [श्रीध० पा०] समनन्तर ३ [विष्णु चि० पा०] तत्र सर्वमिदं. ४ ग. ततो जात जगत्यस्मिन् । ज ट. ढ. ततोऽभवज्जगत्यस्मि(न्)

क्षराक्षरमयो विष्णुर्बिभर्त्यखिलमीश्वरः ।
पुरुषाव्याकृतमयं भूषणास्त्रस्वरूपवत् ॥ ६५ ॥

श्रीमैत्रेय उवाच ॥

भूषणास्त्रस्वरूपस्थं यच्चैतदखिलं जगत् ।
बिभर्ति भगवान्विष्णुस्तन्ममाख्यातुमर्हसि ६६॥

श्रीपराशर उवाच ॥

नमस्कृत्वाऽप्रमेयाय विष्णवे प्रभविष्णवे ।
कथयामि यथाख्यातं वसिष्ठेन ममाभवत् ॥६७॥

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्ति कौस्तुभमणिस्वरूपं भगवान्हरिः ॥६८॥

चित्सुखीयम् ।

ओतं प्रोतं सामान्यविशेषभावेन स्थितं । ततो जगत्प्रभवति । जगच्च तस्मिंस्तिष्ठति । स एवचाखिलं जगत् ॥ ६४ ॥ पुरुषाव्याकृतमयं जगत् । भूषणरूपेण अस्त्रस्वरूपेणावस्थितं बिभर्ति ६५ ॥

श्रीधरीयम् ।

जगज्जातं ततो जगत्तस्मिंस्तिष्ठति जगच्चाखिलं स एव कारणात्मकत्वात्कार्यस्य ॥ ६४ ॥ तदेवं दूरे ध्येयमुक्त्वा इदानीं तदुपासनप्रकारमुपदिशति—क्षराक्षरमय इति ॥ कार्यकारणात्मको विष्णुः पुरुषाव्याकृतमयं पुरुषप्रकृत्यात्मकमिदं जगद्भूषणास्त्रस्वरूपेण बिभर्ति ॥ ६५ ॥ अतिरहस्यत्वान्मैत्रेय विशेषतो बुभुत्सुः प्रच्छति—भूषणेति ॥ ६६ ॥ नमस्कृत्वेति ॥ प्रभविष्णवे प्रभवनशीलाय सकृत्स्मरणमात्रेण सर्वपुरुषार्थदानसमर्थायेत्यर्थः । यथा मम वसिष्ठेनाख्यातमभवत्तथा कथयिष्यामि ॥ ६७ ॥

विष्णुचित्तीयम् ।

॥ ६४ ॥ क्षराक्षरमय इति ॥ क्षराक्षररूपे पूर्वमुक्ते । भूषणास्त्रस्वरूपवदिति भूषणास्त्रस्वरूपेण युक्तम् । सूक्ष्मरूपेण तत्तदभिदेवताभूतभूषणास्त्रस्वरूपस्थं । पुरुषाव्याकृतमयम् अखिलं बिभर्तीत्यर्थः ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ प्रथममात्मनोऽभिमानिदैवतमाह—आत्मानमिति ॥ "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः" इत्यादिश्लोकेनात्मनो मणिसाम्यमुक्तम् । सूत्रकारेणापि "गुणाद्वा लोकवत्" इत्युक्तम् । तेन तद्रूपेण तद्धारणं युक्तम् । आत्मानमित्येकवचनं जात्यभिप्रायं रामक्षभिप्रायं वा ॥ ६८ ॥

दत्तात्रयीयम् ।

त्रिवि तदाधारत्वं । स जगदिति तन्नियामकत्वं ॥ ६४ ॥ प्रकारान्तरेण भगवदुपासनां वक्तुमुपक्षिपति—क्षराक्षरमयइति ॥ प्रागुक्तरूपद्वयानुवादः पुरुषाव्याकृतमयं । पुरुषो हिरण्यगर्भः । अव्याकृतं प्रकृतिः । तन्मयं तदात्मकं । अखिलं जगत् भूषणास्त्रस्वरूपवत् । भूषणास्त्रस्वरूपेण बिभर्ति । पुरुषाद्याकृतिमयमितिपाठे आदिपदेन प्रधानादिकं गृह्यते ॥ ६५ ॥ विशेषतो जिज्ञासुः पृच्छति—भूषणेति ॥ भूषणास्त्रस्वरूपस्थं भूषणास्त्रस्वरूपेणविद्यमानं ॥ ६६ ॥ प्रभविष्णवे प्रभवनशीलाय । सकृच्चिन्तनमात्रेण सकलपुरुषार्थदानसमर्थायेत्यर्थः । वसिष्ठेन मम यथाऽऽख्यातमभवत् तथा तव कथयामि ॥ ६७ ॥ भगवान्हरिः । निर्लेपं पापरहितं । अगुणामलं तु त्यादिहेयरहितत्वादगुणं । रागादिदोषरहितत्वादमलं । अस्य जगत । आत्मानं स्वामिनं महान्तं कौस्तुभमणिस्वरूपं बिभर्ति । "सच

रत्नगर्भीयम् ।

सबीजं ओङ्कारादिमन्त्रजपसहितश्च मनसि संस्थितं कापायनो महायोगः समाधिरूपो जायते इत्यन्वयः ॥ ६२ ॥ अस्य जगत आत्मानं पुरुषं । निर्लेपं धर्माधर्मरहितं अगुणं । च तत् अमलं । रागादि-

[ पा० ] १ [दत्ता० पा०] पुरुषाद्याकृतिमयं २ क ०मकम्

श्रीवत्ससंस्थानधरमनन्तेन समाश्रितम् ।
प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥ ६९ ॥
भूतादिमिन्द्रियादिं च द्विधाऽहङ्कारमीश्वरः ।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥७०॥

चलत्स्वरूपमत्यन्तं जवेनान्तरितानिलम् ।
चक्रस्वरूपं च मनो धत्ते विष्णुकरे स्थितम् ॥७१॥
पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।
सा भूतहेतुसङ्घाता भूतमाला च वै द्विज ॥ ७२ ॥

चित्सुखीयम् ।

प्रधानंच श्रीवत्ससंस्थानधरमनन्ते समाश्रितमित्यन्वयः ॥ ६९ ॥ जवेन वेगेन अन्तरितः पश्चात्कृतोऽनिलो येन तज्जवेनान्तरितानिलं ॥ ७१ ॥ भूतहेतवस्तन्मात्राणि तेषां सङ्घातः । सा माला भूतमालाप

श्रीधरीयम् ।

आत्मानमिति ॥ अस्य जगतः आत्मानं पुरुषं शुद्धं क्षेत्रज्ञम् ॥ ६८ ॥ श्रीवत्सेति ॥ प्रधानं च श्रीवत्ससंस्थानं सदैवानन्तेन समाश्रितं तस्मिन्नध्यास्त इत्यन्वयः । श्रीवत्सस्वरूपं च गारुडपुराणे प्रोक्तम् । "प्रदक्षिणावर्तमिश्रितरोमश्रीवत्ससङ्गिन्यविभूषितान्तं । वक्षोविचिन्त्यम्" इति । बुद्धिर्महत्तत्वं गदारूपेण अध्यास्ते ॥ ६९ ॥ भूतादिमिति ॥ भूतादिं तामसमिन्द्रियादिं राजसं च द्विविधाऽहङ्कारं यथाक्रमं शङ्खरूपेण शार्ङ्गरूपेण च स्थितं बिभर्ति ॥ ७० ॥ चलत्स्वरूपमिति ॥ चलत्स्वरूपमत्यन्तमतिशीघ्रमत एव जवेनान्तरितः अतिक्रान्तोऽनिलः येन तत् । मनस्सात्विकाहङ्कारात्मकं चक्रस्वरूपं धत्ते ॥ ७१ ॥ पञ्चरूपेति ॥ पञ्चरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णा हरेर्या वैजयन्त्याख्या माला भूतानां पञ्चतन्मात्राणां सङ्घातः पङ्क्तिः । भूतमाला च महाभूतपंक्तिश्च सूक्ष्मस्थूलमयीत्यर्थः । पाठा-

विष्णुचित्तीयम् ।

श्रीवत्सेति ॥ श्रीवत्सो रोमावर्तविशेषः । "श्रीवत्सेनोरसि श्रीमान् रोमावर्तेन राजते" इति हरिवंशोक्तेः । स च लक्ष्मीनिवासस्थानम् । अमृतमयत्वात्सर्वप्ररोहहेतुः । प्रधानं प्रधानाभिमानी । गदाबुद्ध्योः स्थिरत्वेन साम्यम् ॥ ६९ ॥ भूतादिमिति ॥ शब्दगुणहेतुः शङ्खः अब्धादिरूपभूतकारणाहङ्काराभिमानी ॥ ७० ॥ चलत्स्वरूपमिति ॥ मनसोऽपि शीघ्रतरत्वात्सुदर्शनस्य तन्नियन्तृत्वम् ॥ ७१ ॥ पञ्चरूपेति ॥ पञ्चरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसवर्णा । भूतहेतुसङ्घातः तन्मात्रसमुदायः । भूतमाला च महाभूतावलिश्च सूक्ष्मस्थूलभूतमयीत्यर्थः । भूतहेतुसञ्जातभूतमालेति पाठे तन्मात्रसङ्घातः तदुद्भूतभूतमाला चेत्यर्थः । कृष्णशुक्लशोणितपीतश्यामाः पृथिव्यादय इति भूतमालायाश्च पाञ्चरूप्यम् ॥ ७२ ॥

दत्तात्रेयीयम् ।

यथा हरेः कण्ठे कौस्तुभरत्नेन वर्तते" इति तत्त्वभागवतोक्तेः ॥ ६८ ॥ प्रधानं श्रीवत्ससंस्थानधरं । श्रीवत्साकारधरं सत् अनन्ते हरौ समाश्रितमास्ते । बुद्धिरपि बुद्धितत्त्वमपि गदारूपेण शार्ङ्गरूपेणच स्थितं बिभर्ति ॥ ६९ ॥ अत्यन्तं चलत्स्वरूपं । शीघ्रं गन्तृ अतएव जवेन वेगेनान्तरितो अनिलो येन । तन्मनः सात्त्विकाहङ्कारात्मकं करे स्थितं चक्रस्वरूपं धत्ते ॥ ७१ ॥ पञ्चरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्ररूपपञ्चरत्नसमानवर्णा गदाभृतो या वैजयन्त्याख्या माला । भूतहेतूनां पञ्चतन्मात्राणां संघातः समूहः । भूतमालाच पृथिव्यादिमहाभूतपङ्क्तिश्च सा सूक्ष्मस्थूलभूतपङ्क्तिमालारूपेण

रत्नगर्भीयम् ।

रहितं च तम ॥ ६८ ॥ चलत्स्वरूपमिति पाठे चलत्स्वरूपं सर्वसामर्थ्यरूपं ॥ ७१ ॥ इदानीं हरेः म-

[ पा० ] १ क. ख. छ. ममनन्तेन । [दत्ता० पा०] धरमनन्तेन म. धरमनन्तेन. २ ज. ग. ट—ढ. चलत्स्वरू । म. चलत्स्वरू. ३ [चि० पा०] जवेन स्वरितानिलं. ४ [विष्णु चि० पा०] सङ्घात [रत्न० पा०] भूतहेतुसमन्वा.

यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै ।
शररूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥ ७३ ॥
बिभर्ति यचासिरत्नमच्युतोऽत्यन्तनिर्मलम् ।
विद्यामयं तु तज्ज्ञानमविद्याकोशसंस्थितम् ७४ ॥
इत्थं पुमान्प्रधानं च बुद्ध्यहङ्कारमेव च ।
भूतानि च हृषीकेशे मनः सर्वेन्द्रियाणि च ।
विद्याविद्ये च मैत्रेय सर्वमेतत्समाश्रितम् ॥ ७५ ॥

अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितः ।
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः ७६

सविकारं प्रधानं च पुमांश्चैवाखिलं जगत् ।
बिभर्ति पुण्डरीकाक्षस्तदेवं परमेश्वरः ॥ ७७ ॥

चित्सुखीयम् ।

पृथिव्यादिस्थूलभूतरूपा ॥ ७२ ॥ अविद्यैव चर्मकोशः तत्र संस्थित ॥ ७४ ॥ उक्तमेवार्थं पुनः

श्रीधरीयम् ।

न्तरेऽप्ययमेवार्थः ॥ ७२ ॥ ७३ ॥ बिभर्तीति ॥ अविद्यैव ज्ञानावरकः कोशः तत्र संस्थितम् ॥ ७४ ॥ उक्तमेव भूषणादिस्वरूपमनुवदन्नेवकारणप्रयोजनमाह—इत्थमित्यादिसार्धद्वाभ्याम् ॥ ७५ ॥ अस्त्रेति ॥ अस्त्रभूषणसंस्थानस्वरूपं समाहितमेतत्सर्वं बिभर्तीत्यन्वयः ॥ श्रेयसे उपासकानां पुरुषार्थसिद्धये ॥ ७६ ॥

विष्णुचित्तीयम् ।

यानीति ॥ इन्द्रियाणां विषयेषु प्रेर्यमाणत्वाच्छरसाम्यम् ॥ ७३ ॥ बिभर्तीति ॥ असियद्ब्रह्मविद्यायाः संसारच्छेदकत्व तदसिरत्न विद्यामय विद्यामयज्ञानाधिदैवतमित्यर्थः । असिर्विद्यात्मकमित्यर्थः । अविद्या अज्ञान तस्यात्मतिरोधायकत्वाच्चर्मसाम्यम् ॥ ७४ ॥ उक्तमर्थं निगमयति—इत्थमिति ॥ उक्तार्थेऽभियुक्तवचनम् । "भास्वर दिव्यवपुषमास्पद चाखिलात्मनाम् । कौस्तुभ पुरतो विष्णोर्भास्कराभमनुस्मरेत् । प्रधानतत्त्वस्याधार स्वमक्षेणातिसुन्दरम् । श्रीवत्स पुरतो विष्णोर्हेमप्रभमनुस्मरेत् । देवस्य दक्षिणे पार्श्वे दैतिराज सुदर्शनम् । चलत्स्वरूपमस्तुम मनस्तत्त्वाधिदैवतम् । या वदन्ति पुराणज्ञा भूतमाद्यां मनीषिण. । आधारभूता भूतानाम्" इत्यादि ॥ ७५ ॥ अस्त्रभूषणसंस्थानस्वरूपमिति ॥ उक्तप्रकाराणामस्त्रभूषणानां संस्थानमास्पद स्वरूप विग्रहः । रूपवर्जित कर्मनिमित्तप्राकृतरूपरहितः । मायारूपोऽनन्ताश्चर्यरूपः ॥ श्रेयसे दर्शनानुस्मरणनामसङ्कीर्तनादिना जगतोऽभ्युदयाय । धर्मसंस्थापनार्थं च । यथा वक्ष्यति—समस्तानशक्तयश्चैता इत्यारभ्य न सा कर्मनिमित्तजेत्यन्तेन । न ते रूप न चाकार इत्यादि च ॥ ७६ ॥ यथाऽस्त्रभूषणादिरूपेणावस्थित प्रधानादितस्य बिभर्ति एव जगद्बिभर्तीत्याह—सविका-

दत्तात्रेयीयम् ।

वर्तेत इत्यर्थः ॥ ७२ ॥ बुद्धिकर्मात्मिकानीन्द्रियाणि ज्ञानेन्द्रियकर्मेन्द्रियाणि ॥ ७३ ॥ यदसिरत्नं असिश्रेष्ठ बिभर्ति । विद्यामय विद्यात्मक ज्ञान विद्यारूप ज्ञानमसित्वेन बिभर्तीत्यर्थः । अविद्याचर्मसंस्थित चर्मरूपेण संस्थित ॥ ७४ ॥ उक्तच भूषणादिस्वरूपमनूद्यास्मदुपसंहरन्नेवद्धारणप्रयोजनमाह—इत्थमित्यादिना ॥ हृषीकेशे समाश्रितमेतत्पुरुषादिक ॥ ७५ ॥ रूपवर्जितः प्राकृतरूपरहितः । मायारूपः ज्ञानरूप । "मायावयुन" इति वैदिकनिघण्टुः । असौ हरिः प्राणिना श्रेयसे पुरुषार्थसिद्धये । अस्त्रभूषणसंस्थानस्वरूप बिभर्तीत्यन्वयः ॥ ७६ ॥ यथाऽस्त्रभूषणादिरूपेण प्रधानादि बिभर्ति एव जगत् बिभर्तीत्याह—सविकारमिति ॥ सविकार महदादिविकारसहित ॥ ७७ ॥

[ पा० ] १ क वरमच्युतो २ क—ख ॥ चर्मसंस्थित ३ घ स्येण. ४ ग पुमास चाखिल

या विद्या या तथाऽविद्या यत्सद्यच्चासदव्ययम् ।
तत्सर्वं सर्वभूतेशे मैत्रेय मधुसूदने ॥ ७८ ॥
कलाकाष्ठानिमेषादिदिनर्त्वयनहायनैः ।
कालस्वरूपो भगवानपापो हरिरव्ययः ॥ ७९ ॥
भूर्लोकोऽथ भुवर्लोकः स्वर्लोको मुनिसत्तम ।
महर्जनस्तपः सत्यं सप्त लोका इमे विभुः ॥ ८० ॥
लोकात्ममूर्तिः सर्वेषां पूर्वेषामपि पूर्वजः ।
आधारः सर्वविद्यानां स्वयमेव हरिः स्थितः ॥ ८१ ॥
देवमानुषपश्वादिस्वरूपैर्बहुभिः स्थितः ।
ततः सर्वेश्वरोऽनन्तो भूतमूर्तिरमूर्तिमान् ॥ ८२ ॥
ऋचो यजूंषि सामानि तथैवाथर्वणानि वै ।
इतिहासोपवेदाश्च वेदान्तेषु तथोक्तयः ॥ ८३ ॥
वेदाङ्गानि समस्तानि मन्वादिगदितानि च ।
शास्त्राण्यशेषाण्याख्यानान्यनुवाकाश्च ये क्वचित्

विष्णुचित्तीयम् ।

संक्षिप्याह—सविकारमिति ॥ ७७ ॥ लोकात्ममूर्तिः लोकमूर्तिः आत्ममूर्तिश्च ॥ ८१ ॥ उपवेदाः

श्रीधरीयम् ।

उक्तं भूषणागुपासनं निगमयति—सविकारमित्यादिश्लोकद्वयेन ॥ ७७ ॥ ७८ ॥ इदानीं हरौ सर्वात्मदृष्टिदार्ढ्याय तच्छक्तिकालरूपेण च तत्तल्लोकतत्स्थभूतरूपेण च तद्बोधकशब्दब्रह्मरूपेण च चतुर्धोपासनार्थमाह—कलाकाष्ठेत्यादिसप्तभिः ॥ ७९ ॥ भूरिति ॥ सप्तलोकानिमानिति पाठे व्याप्नोति शेषः ॥ ८० ॥ लोकात्मेति ॥ लोकात्मिका मूर्तिर्यस्य स लोकात्ममूर्तिः ॥ ८१ ॥ ८२ ॥ ऋच इति ॥ ऋगादयो वेदाः । इतिहासो भारतादिः । उपवेदा आयुर्वेदादयः ॥ ८३ ॥ वेदाङ्गानीति ॥ मन्वादि-

विष्णुचित्तीयम् ।

रमिति ॥ ७७ ॥ प्रसङ्गाद्विभूतिविस्तारमाह—या विद्येति ॥ ७८ ॥ कलेति ॥ हायनैरिति इत्थंभूतलक्षणे तृतीया ॥ ७९ ॥ भूरिति ॥ सप्तलोकान् बिभर्तीति शेषः ॥ ८० ॥ लोकात्ममूर्तिरिति ॥ लोका आत्ममूर्तिर्यस्य स लोकात्ममूर्तिः ॥ ८१ ॥ ८२ ॥ ऋच इति । इतिहासो भारतादिः । उपवेदा आयुर्धनुर्वेदगान्धर्वप्रभृतयः । वेदान्तेष्विति पृथग्ग्रहणं प्राधान्यात् ॥ ८३ ॥ वेदाङ्गानीति ॥ आख्या-

वृत्ताश्रेयीयम् ।

सत् कार्यं । असत् कारणं । अन्वये मधुसूदने तिष्ठतीति शेषः ॥ ७८ ॥ विद्यादिकमिव कालोऽपि भगवन्नियम्य इत्याह—कलेति ॥ हायनैरिति इत्थंभूतलक्षणे तृतीया । कालस्वरूपः कलाकाष्ठादिकालनियामकतत्तच्छब्दवाच्यः परमात्मा । तदुक्तं ब्रह्मवैवर्ते "अण्वादिकालस्यात्मभोक्तृत्वात्परमेश्वरः । अण्वादिनामभाग्योऽसौ कालश्चेत्यभिधीयते" इति । कालस्वरूप इत्यर्थः । अपारोऽपरिच्छिन्नः । अनेनानन्तकालनियामकत्वमुपपादितं । अव्यय इत्यनेन कलाकाष्ठाद्यात्मत्वं व्यावर्तितं ॥ ७९ ॥ सप्तलोकान् बिभर्तीति शेषः ॥ ८० ॥ लोकात्ममूर्तिः लोका आत्ममूर्तिर्यस्य स तथा । पूर्वेषां ब्रह्मादीनां आधारः स्थितः ॥ ८१ ॥ देवमानुषपश्वादिस्वरूपैर्देवादिषु स्थितः । तत्तदाकारस्वरूपैः । भूतमूर्तिः भूतानि मूर्तिः प्रतिमा यस्य तथा । अमूर्तिमान् प्राकृतमूर्तिरहितः । अनेन भूतादीनां स्वरूपत्वं व्यावर्तयति ॥ ८२ ॥ लोकानां भगवन्मूर्तित्ववत्सर्वशब्दजातस्यापि भगवन्मूर्तित्वमाह—ऋच इत्यादिना ॥ ऋगादयो वेदाः । इतिहासो भारतादिः । उपवेदा आयुर्वेदादयः । वेदान्तेषु वेदानामन्तो निर्णयो येभ्यः तेषु ब्रह्मसूत्रेषु ॥ ८३ ॥ वेदाङ्गानि शिक्षादीनि । मन्वादिगदितानि धर्मशास्त्राणि । आख्या-

[ पा० ] १ ग ङ छ व्यये २ ज मुहूर्तादि ३ क ग ङ च ज ञ ट ठ वपो । घ म छ नपरो । ४ नरूपो ४ घ ङ च य लोकानिमानिव ।

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्तिधरस्यैतद्वपुर्विष्णोर्महात्मनः ॥ ८५ ॥

यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित् ।
सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः ॥ ८६ ॥

अहं हरिः सर्वमिदं जनार्दनो
नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो
भवोद्भवा द्वन्द्वगदा भवन्ति ॥ ८७ ॥

इत्येष तेंऽशः प्रथमः पुराणस्यास्य वै द्विज ।
यथावत्कथितो यस्मिञ्छ्रुते पापैः प्रमुच्यते ॥ ८८ ॥

कार्तिक्यां पुष्करस्नाने द्वादशाब्देन यत्फलम् ।
तदस्य श्रवणात्सर्वं मैत्रेयाप्नोति मानवः ॥ ८९ ॥

श्रीधरीयम् ।

स्मृतानि धर्मशास्त्राणि । आख्यानानि पुराणानि । अनुवाकाः यजुःसमूहाः ॥ ८४ ॥ ८५ ॥ विष्णोरेव सर्वाणि वस्तुजातानि तन्मूर्तिरित्याह—यानीति ॥ ८६ ॥ उपदेशसर्वस्वं तत्त्वं प्राह—अहमिति ॥ भवतीति भवः देहस्तस्मादुद्भवन्तीति भवोद्भवाः । द्वन्द्वगदाः रागद्वेषादयो हृद्रोगाः न

विष्णुचित्तीयम् ।

यानि सौपर्णादीनि । मन्त्रसमूहविशेषः । सूक्तं सूक्तसमूहोऽनुवाकः यजुःसमूहश्च ॥ ८४ ॥ काव्यालापा इति । गीतकानि मातृकाप्रबन्धादीनि ॥ ८५ ॥ ८६ ॥ अहं हरिरिति । अहमर्थः प्रत्यगात्मा ।

[illegible]

तानि पुराणानि । अनुवाकाः यजुःसमूहविशेषाः ॥ ८४ ॥ गीतकानि मातृकाप्रबन्धादीनि । शब्दमूर्तिधरस्य शब्दाद्यमूर्तिधरस्य । एतद्गानादिकं रूपं प्रतिमा ॥ ८५ ॥ मूर्तानि परिच्छिन्नानि । अमूर्तानि अपरिच्छिन्नानि । अत्र भूलोके । अन्यत्र लोकान्तरे । तद्वपुः तस्य विष्णोः प्रतिमा ॥ ८६ ॥ एवं सर्वान्तर्यामित्वमुक्त्वा तदनुवादपूर्वकं तज्ज्ञानस्य मोक्षसाधनत्वमाह—अहमिति ॥ अहं सर्वान्तर्यामी हरिः । इदं सर्वं सर्वान्तर्यामी । अस्मच्छब्दादीनां भगवद्वाचित्वं "सर्वान्तर्यामिणि हरौ अस्मच्छब्दविभक्तयः । युष्मच्छब्दगताश्चैव सर्वाश्शब्दगता अपि" इति पूर्वोदाहृतवचनादवगन्तव्यं । कार्यकारणजातं ततोऽन्यन्नास्ति स्वातन्त्र्येण नास्ति । ननु स्वरूपेण निषेधः । "पारमार्थ्येन नान्येन तदन्यं तद्वशं यतः । अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम्" इति मायावैभववचनात् । भवोद्भवा द्वन्द्वगदा भवन्ति । भवे संसारे उद्भवो येषां ते भवोद्भवाः । द्वन्द्वगदाः रागद्वेषादयो हृद्रोगाः न भवन्ति ॥८७॥ प्रथमांशं तच्छ्रवणफलनिरूपणपूर्वकमुपसंहरति—इतीति ॥ ८८ ॥ इति दशमांशेन समग्रं शृण्वतः पुंसः

रत्नगर्भीयम् ।

धर्मस्वरूपत्वादानाय जडानां चेतनोपाधीनां देवादिदेहानां तदात्मकत्वमाह—भूर्लोकेत्यादिना सर्वाणि तद्वपुरित्यन्तेन ॥ ८० ॥ एवं सर्वात्मकविष्णुज्ञानस्य समाप्त्युद्देशः फलमित्याह—अहमिति । भवतीति भवो देहः तदुद्भवा द्वन्द्वगदा रागादिहृद्रोगा न भवन्तीति सर्वपुराणार्थः ॥ ८७ ॥ श्रवणस्यापि

[पा०] १ क ख ग—ड श्रुते
ि २ १४

देवर्षिपितृगन्धर्वयक्षादीनां च सम्भवम् ।
भवन्ति शृण्वतः पुंसो देवाद्या वरदा मुने ॥ ९० ॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे प्रथमांशे
द्वाविंशोऽध्यायः ॥ २२ ॥
समाप्तोऽयं प्रथमांशः ।

श्रीवेदव्यासाय नमः ।
अतःपरं द्वितीयांशः । तस्यायमाद्यः श्लोकः ।
मैत्रेय उवाच ॥
भगवन्सम्यगाख्यातं ममैतदखिलं त्वया ।
जगतस्सर्गसम्बन्धि यत्पृष्टोऽसि गुरो मया ॥१॥

विष्णुसूरीयम् ।

आयुर्वैद्यायः ॥ ८३ ॥ द्वन्द्वगदाः द्वन्द्वान्येव गदाः रोगाः । त एव भयोद्भवाः ॥ ८७ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां प्रथमांशे द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीधरीयम् ।

भवन्ति । स्पष्टमन्यत् ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वाविंशोऽध्यायः ॥ २२ ॥

विष्णुचित्तीयम् ।

सोऽपि हरिः तच्छरीरक इत्यर्थः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वाविंशोऽध्यायः ॥ २२ ॥

दत्तात्रेयीयम् ।

देवाद्याः वरदा भवन्तीत्यन्वयः ॥ ९० ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां प्रथमांशे द्वाविंशोऽध्यायः ॥२२॥ भारतीरमणमुख्यप्राणान्तर्गतश्रीवेदव्यासार्पणमस्तु । श्रीरस्तु ॥

रत्नगर्भीयम् ।

फलमाह—कार्तिकयामिति । स्पष्टमन्यत् ॥ ८९ ॥ इति श्रीरत्नग० विरचितश्रीविष्णुपु० व्याख्यासारे प्रथमांशे द्वाविंशोऽध्यायः ॥ २२ ॥

प्रथमांशः समाप्तः ॥



[ पा० ] ग घ. भक्तित श्रुण्वतां.

अयं प्रथमांशः श्रीकुम्भघोणनगरनिवासिना श्रीवेङ्कटेशभवनपुस्तकालयाधिपतिना टी. आर् व्यासाचार्येण मुम्बय्यां "निर्णयसागर"मुद्रालये मुद्रयित्वा प्रकाशितम् । शकाब्दाः १८३७ । सन १९१५ ॥

श्रीः ।

# श्रीमद्विष्णुपुराणम् ।

## पूर्वभागः ।

### मतत्रव्याख्यानरत्नसमलंकृतः ।

### द्वितीयांशः ॥ २ ॥

### प्रथमोऽध्यायः ॥ १ ॥

पराशरंप्रति प्रियव्रतवंशकथने मैत्रेयप्रश्नः ॥ १ ॥ प्रियव्रतवंशविस्तारकथनप्रस्तावे पराशरकृतप्रियव्रतसत्-पुत्रवर्णनम् ॥ २ ॥ तेषां मध्ये त्रयाणां योगाभ्यासकथनम् ॥ ३ ॥ अन्येषां आग्नीध्रादिसप्तपुत्राणां सप्तद्वीप-विभागः ॥ ४ ॥ जम्बूद्वीपेश्वरस्य आग्नीध्रस्य नाभ्यादिनवपुत्रोत्पत्तिकथनम् ॥ तेषां जम्बूद्वीपविभागश्च ॥ ५ ॥ आग्नीध्रेण तपस्यार्थं शालग्रामक्षेत्रगमनम् ॥ ६ ॥ भरतोत्पत्तिः ॥ भारतवंशविस्तारकथनं च ॥ ७ ॥

श्रीवेदव्यासाय नमः ॥
मैत्रेय उवाच ॥
भगवन्सम्यगाख्यातं ममैतदखिलं त्वया ।
जगतः सर्गसम्बन्धि यत्पृष्टोऽसि गुरो मया ॥१॥
योऽयमंशो जगत्सृष्टिसम्बन्धो गदितस्त्वया ।
तत्राहं श्रोतुमिच्छामि भूयोऽपि मुनिसत्तम ॥२॥

श्रीधरीयम् ।

संश्रितश्रीपरानन्दनृहरिः श्रीधरो यतिः । पुराणे वैष्णवे व्याख्यात्स्वप्रकाशाख्यटीकया ॥ १ ॥ द्वितीयांशे चतुःप्रश्नः [सृष्टिशेषः] प्रसङ्गेनानुवर्ण्यते । भूमण्डलं सपातालं ज्योतिश्चक्रादिलक्षणम् ॥ १ ॥ उक्तानुवादपूर्वकं प्रियव्रतवंशं पृच्छति—भगवन्नित्यादिचतुर्भिः—भगवन्निति ॥ सर्गसम्बन्धि यथा जगद्बभूवेत्यादि यत्पृष्टोऽसि ॥ १ ॥ योऽयमिति ॥ जगत्स्रष्टौ व्याख्यातायां वाचकत्वेन सम्बन्धः ॥२॥

विष्णुचित्तीयम् ।

श्रीमते रामानुजाय नमः ॥ अथ द्वितीयांशे सृष्टिविशेषः तत्प्रसङ्गात्सृष्टानां निवासश्चोच्यते । तत्र प्रथमांशेऽवशेषितं प्रियव्रतान्वयं पृच्छति—भगवन्निति ॥ सर्गसम्बन्धि सृष्टमनुवर्त्म यस्तु यथा जगद्बभूव यन्मयमित्यादिकम् ॥ १ ॥ योऽयमिति ॥ सृष्टिसम्बन्धः सृष्टा वाचकत्वेन सम्बन्धः । सृष्टिवाची

वृत्तात्रेयीयम् ।

श्रीवेदव्यासायनमः ॥ उक्तानुवादपूर्वकं पूर्वोक्तप्रियव्रतवंशं पृच्छति—भगवन्नित्यादिना ॥ जगतः सर्गसम्बन्धि यथाजगद्बभूवेत्यादिना यत्पृष्टोऽसि तत्सर्वमखिलं निःशेषं यथा भवति तथा त्वयाऽऽख्यातं ॥ १ ॥ जगत्सृष्टिसम्बन्धः जगत्सृष्टौ वाच्यत्वं केन सम्बन्धेन यो जगत्सृष्टिवाचीत्यर्थः । तत्र प्रथमांशे

रत्नगर्भीयम् ।

अस्य टीकास्वनुसृत्य व्याख्यासारं मनीषया । श्रीरत्नगर्भकृतिना प्रथमांशो निरूपितः । सृष्टिशेषप्रसङ्गानुप्रसङ्गेनानुवर्ण्यते । द्वितीयांशेऽथ भूगोलज्योतिश्चक्रादिसंस्थितिः । तत्रापि प्रथमाध्याये

[पा०] १ क. ख. घ—ङ. सर्वमाख्यातं. २ घ. च. ज. ड. सर्वे. ३ छ. ज. मंशे. ४ ध. स. तमहं । ग. तथाहं.

प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य यौ ।
तयोरुत्तानपादस्य ध्रुवः पुत्रस्त्वयोदितः ॥ ३ ॥
प्रियव्रतस्य नैवोक्ता भवता द्विज सन्ततिः ।
तामहं श्रोतुमिच्छामि प्रसन्नो वक्तुमर्हसि ॥ ४ ॥

श्रीपराशर उवाच ॥

कर्दमस्यात्मजां कन्यामुपयेमे प्रियव्रतः ।
सम्राट् कुक्षी च तत्कन्ये दशपुत्रास्तथाऽपरे ॥५॥
महाप्रज्ञा महावीर्या विनीता दयिताः पितुः ।
प्रियव्रतसुताः ख्यातास्तेषां नामानि मे शृणु ॥६॥
आग्नीध्रश्चाग्निबाहुश्च वपुष्मान्द्युतिमांस्तथा ।
मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ॥७॥
ज्योतिष्मान्दशमस्तेषां सत्यनामा सुतोऽभवत् ।
प्रियव्रतस्य पुत्रास्ते प्रख्याता बलवीर्यतः ॥ ८ ॥
मेधाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः ।
जातिस्मरा महाभागा न राज्याय मनो दधुः ॥९॥
निर्मलाः सर्वकालन्तु समस्तार्थेषु वै मुने ।
चक्रुः क्रिया यथान्याय्यमफलाकांक्षिणो हि ते १०
प्रियव्रतो ददौ तेषां सप्तानां मुनिसत्तम ।
सप्तद्वीपानि मैत्रेय विभज्य सुमहात्मनाम् ॥११॥
जम्बूद्वीपं महाभाग सोऽग्नीध्राय ददौ पिता ।
मेधातिथेस्तथा प्रादात्प्लक्षद्वीपं तथाऽपरम् ॥१२॥
शाल्मलं च वपुष्मन्तं नरेन्द्रमभिषिक्तवान् ।
ज्योतिष्मन्तं कुशद्वीपे राजानं कृतवान्प्रभुः १३ ॥

विष्णुचित्तीयम् ।

सृष्टिसंबन्धः सृष्टिप्रतिपादकत्वात् ॥ ७ ॥ दयिता. प्रियाः ॥ ६ ॥ सत्यनामा यथार्थनामा ज्योतिष्मत्त्वादेव ॥ ८ ॥ प्रियव्रतस्य पुत्राणां मध्ये मेधासंज्ञः अग्निबाहुसंज्ञः पुत्रसंज्ञश्चेति त्रयः ॥ ९ ॥

श्रीधरीयम् ।

प्रियव्रतेति ॥ ध्रुवो वंशप्रवर्तकस्त्वयोक्तः ॥ ३ ॥ ४ ॥ कर्दमस्येति ॥ आत्मजामौरसीं कन्याम् । कन्यासंज्ञामिति वा । दशपुत्राः पुत्रसंज्ञाः ॥ ५ ॥ ६ ॥ ७ ॥ ज्योतिष्मानिति ॥ अपर तु ज्योतिष्मान् सत्यनामा अन्वर्थसंज्ञस्तेजस्वीत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ प्रियव्रत इति ॥ तेषां विरक्तत्रयातिरिक्तानां विभज्य द्वीपानि ददौ । रथचक्रनेमिभिः परिखाभूतगर्तेजातैस्समुद्रैर्द्वीपानि स्वयं विभक्तानि कृत्वा दत्ता-

विष्णुचित्तीयम् ।

हि प्रथमांशः ॥ ७ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ आग्नीध्र इति ॥ नवमस्य पुत्र इति संज्ञा ॥ ७ ॥ ज्योतिष्मानिति । दशमो ज्योतिष्मान् । सत्यनामा यथार्थनामा ज्योतिष्मत्त्वात् ॥ ८ ॥ ९ ॥ १० ॥

दत्तात्रेयीयम् ।

कथावशिष्टमिति शेषः ॥ २ ॥ अवशिष्टाश्च दर्शयन्पृच्छति—प्रियव्रतोत्तानपादावित्यादिना ॥ ध्रुवः पुत्रः वंशप्रवर्तकत्वेनोक्तः ॥ ३ ॥ ४ ॥ आत्मजामौरसीं कन्याम् । कन्यासंज्ञामिति केचित् । तत्कन्ये प्रियव्रतकन्ये ॥ ५ ॥ पुत्रः पुत्रसंज्ञो नवमः ॥ ७ ॥ तेषां मध्ये दशमो ज्योतिष्मान् सत्यनामाऽन्वर्थसंज्ञः तेजस्वीत्यर्थः । प्रियव्रतस्य पुत्राणां मध्ये ॥ ८ ॥ समस्तार्थेषु सर्वकालं निर्ममाः । अफलाकांक्षिणः नश्वरादिफलाकांक्षारहिताः ॥ १० ॥ ११ ॥ १२ ॥ शाल्मले शाल्मलद्वीपे ॥ १३ ॥

रत्नगर्भीयम् ।

प्रैयव्रतकथाऽस्य च । वंशप्रस्तावतो यत्र भूगोलमपि सूचितम् । अगत्सृष्टे वाचकत्वेन सम्बद्धो योऽप्रदो भागस्तयोक्तस्तत्र सूक्ष्मे शेषभूतां सृष्टिं श्रोतुमिच्छामि ॥ २ ॥ शेषमेव पृच्छति—प्रियव्रत-

[ पा० ] १ ङ धैरक्ष नैवोक्ता द्विज सन्ततिः २ य कशीवत कन्ये । क ङ. च छ कुक्षिश्च. ३ घ. च य. ञ. ४ ख. घ—ङ पुत्राणां ५ क ख ग—ङ ङ निर्ममा

द्युतिमन्तं च राजानं क्रौञ्चद्वीपे समादिशत् ।
शाकद्वीपेश्वरं चापि भव्यं चक्रे प्रियव्रतः ॥ १४ ॥
पुष्कराधिपतिं चक्रे सवनं चापि स प्रभुः ।
जम्बूद्वीपेश्वरो यस्तु आग्नीध्रो मुनिसत्तम ॥१५॥
तस्य पुत्रा बभूवुस्ते प्रजापतिसमा नव ।
नाभिः किंपुरुषश्चैव हरिवर्ष इलावृतः ॥ १६ ॥
रम्यो हिरण्वान्षष्ठश्च कुरुर्भद्राश्व एव च ।
केतुमालस्तथैवान्यः साधुचेष्टोऽभवन्नृपः ॥१७॥
जम्बूद्वीपविभागांश्च तेषां विप्र निशामय ।
पित्रा दत्तं हिमाह्वं तु वर्षं नाभेस्तु दक्षिणम् १८ ॥
हेमकूटं तथा वर्षं ददौ किंपुरुषाय सः ।
तृतीयं नैषधं वर्षं हरिवर्षाय दत्तवान् ॥ १९ ॥
इलावृताय प्रददौ मेरुर्यत्र तु मध्यमः ।
नीलाचलाश्रितं वर्षं रम्याय प्रददौ पिता २० ॥
श्वेतं यदुत्तरं तस्मात्पित्रा दत्तं हिरण्वते ॥ २१ ॥
यदुत्तरं शृङ्गवतो वर्षं तत्कुरवे ददौ ।
मेरोः पूर्वेण यद्वर्षं भद्राश्वाय प्रदत्तवान् ॥ २२ ॥
गन्धमादनवर्षं तु केतुमालाय दत्तवान् ।
इत्येतानि ददौ तेभ्यः पुत्रेभ्यः स नरेश्वरः ॥२३॥
वर्षेष्वेतेषु तान्पुत्रानभिषिच्य स भूमिपः ।
सालग्रामं महापुण्यं मैत्रेय तपसे ययौ ॥ २४ ॥

चित्सुखीयम् ।

क्रियाः नित्यनैमित्तिकाः ॥ १० ॥ हिमेन हिमवता आह्वा समाख्या यस्य तद्वर्षं हिमाह्वं ॥ १८ ॥

श्रीधरीयम् ।

विति भागवतोक्तरीत्या द्रष्टव्यम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ जम्बूद्वीपेति ॥ जम्बुद्वीपसन्निवेशं चोत्तराध्याये वक्ष्यति । हिमाह्वं हिमवतो दक्षिणं भारतवर्षं नाम यथासुखं वासस्थानं । तदुक्तं मात्स्ये—"वसन्ति भूपमन्तो वर्षेषु प्रजा येषु चतुर्विधाः । आपिरिलेख दगणे वर्षत्वं तेन तेषु च" । इति ॥ १८ ॥ हेमकूटमिति ॥ हेमकूटं हिमवत उत्तरं हेमकूटगिरेर्दक्षिणं नैषधम् ॥ १९ ॥ इलावृतायेति ॥ हेमकूटादुत्तरं निषधगिरेर्दक्षिणं नैषधादुत्तरमिलावृतं प्रददौ । यत्र मध्ये मेरुस्तिष्ठति इलावृतादुत्तरतो नीलाचलः तदाश्रितम् ॥ २० ॥ श्वेतमिति ॥ तस्मादुत्तरं श्वेतम् ॥ २१ ॥ यदिति ॥

विष्णुचित्तीयम् ।

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तस्येति ॥ प्रजापतिसमाः भृग्वादिनवप्रजापतिभिस्तुल्याः ॥ १६ ॥ १७ ॥ जम्बूद्वीपेति ॥ हिमाह्वं भारतं दक्षिणं हिमवतः हिमवद्धेमकूटनिषधैर्गिरिभिः स्वस्मात्स्वस्माद्दक्षिणाना नीलश्वेतशृङ्गिभिरुत्तरेषां वर्षाणामेतद्व्यपदेशः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

वृत्तात्रेयीयम् ।

"अथह्दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मती नाम" इत्यादिना भागवते प्रियव्रतस्य पत्नीपुत्राणां प्रकारान्तरेणोक्तिः कल्पभेदविषयेति नतद्विरोध इति द्रष्टव्यम् । प्रजापतिसमाः भृग्वादिनवब्रह्मेश्वरतुल्याः । आग्नीध्रपुत्राणां नवानां नामान्याह—नाभिरित्यादिना ॥ १६ ॥ साधुचेष्टो नृपोऽभवदित्यस्य नाभिरित्यादिभिः प्रत्येकं सम्बन्धः ॥ १७ ॥ हिमवतो दक्षिणं हिमाह्ववर्षं हिमवद्धेमकूटनिषधानां पर्वतानां प्रत्येकं दक्षिणभागस्थत्वेन तत्सम्बन्धितया त्रयाणां वर्षाणां हिमाह्वमित्यादि व्यपदेशः ॥ १८ ॥ ॥ १९ ॥ यत्र वर्षे मेरुर्मध्यमः मध्यभागे तिष्ठति तद्वर्षमिलावृताय ददौ । नीलाचलाश्रितं नीलाचलोत्तरभागाश्रितं नीलनामकं वर्षं ॥ २० ॥ तस्मान्नीलवर्षादुत्तरं श्वेतगिरेरुत्तरभागाश्रितं वर्षं ॥ २१ ॥

रत्नगर्भीयम् ।

स्येति ॥ ४ ॥ हिमेन हिमवता आह्वा संज्ञा यस्य तत् । एवमुत्तरत्रापि तत्तत्पर्वतोपलक्षितं तत्तद्-

[ पा० ] १ च. म पुत्रान्तथैव राजानं. २ ग. ङ. छ. ञ. समादिशत्. ३ ग. घ. ङ. झ. ग. गन्धमे । ज. ट— मध्यग . ४ झ. ग. मेरोस्तु पश्चिमं वर्षं केतुमालाय. ५ म वर्षाणि

यानि किंपुरुषादीनि वर्षाण्यष्टौ महामुने ।
तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः २५
विपर्ययो न तेष्वस्ति जरामृत्युभयं न च ।
धर्माधर्मौ न तेष्वास्तां नोत्तमाधममध्यमाः २६ ॥
न तेष्वस्ति युगावस्था क्षेत्रेष्वष्टसु सर्वदा ।
हिमाह्वयं तु वै वर्षं नाभेरासीन्महात्मनः ।
तस्यर्षभोऽभवत्पुत्रो मेरुदेव्यां महाद्युतिः ॥२७॥
ऋषभाद्भरतो जज्ञे ज्येष्ठः पुत्रशतस्य सः ।
कृत्वा राज्यं स्वधर्मेण तथेष्ट्वा विविधान्मखान् २८
अभिषिच्य सुतं वीरं भरतं पृथिवीपतिः ।
तपसे स महाभागः पुलहस्याश्रमं ययौ ॥ २९ ॥
वानप्रस्थविधानेन तत्रापि कृतनिश्चयः ।
तपस्तेपे यथान्यायमियाज स महीपतिः ॥ ३० ॥

विष्णुचित्तीयम् ।

स्वाभाविकी सिद्धिः न क्रियासाध्या । सुखप्राया सुखबहुला ॥ २५ ॥ विपर्ययो विहितातिक्रमः ॥२६॥ युगावस्था युगानां कृतादीनां उत्तमाद्यवस्था युगावस्था । हिमाह्वयं वर्षं भारतमेवेति कथं

श्रीधरीयम् ।

श्वेतगिरेरुत्तरं वर्षं गन्धमादनवर्षं मेरोः पश्चिमम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ विपर्यय इति ॥ विपर्ययोऽसुखमकालमृत्युश्च तेषु धर्माधर्मौ नास्तां न स्तः । तेषां भौमस्वर्गत्वेन धर्माद्यधीनत्वाभावात् ॥ २६ ॥ २७ ॥ ऋषभादिति ॥ स ऋषभो राज्यं कृत्वा तपस्तप्तुं पुलहस्याश्रमं सालग्रामक्षेत्रं यया-

विष्णुचित्तीयम् ।

यदिति ॥ गन्धमादनवर्षं मेरोः पश्चिमम् ॥ २१ ॥ २३ ॥ २४ ॥ यानीति ॥ सिद्धिर्भोगानां स्वाभाविकी न कृष्यादिसाध्या ॥ २५ ॥ विपर्यय इति । विपर्ययो दुःखप्राप्त्यादिर्जरामृत्युभयं । तत्तत्प्रावायुरवधेः प्राक् न धर्माधर्मौ वर्णाश्रमनियमाभावेन कर्माधिकाराभावात् ॥ २६ ॥ नेति ॥ अतः पूर्वोक्तहेतोः न युगावस्था । सा हि धर्माधर्महासवृद्धिकृता । देहादिह्रासलक्षणेत्येकेन पत्रपाठश्च ॥ २७ ॥

दधात्रेयीयम् ।

शृङ्गवतः पर्वतादुत्तरं वर्षं शृङ्गवत्संज्ञं । गन्धमादनवर्षं मेरोः पश्चिमं ॥ २२ ॥ तेषां तेषु भोगानां सिद्धिः सुखप्राया सुखबहुला स्वाभाविकी स्वभावसिद्धा हि यस्मादयत्नतः कृष्यादियत्नं नैव भवति ॥ २५ ॥ विपर्ययो दुःखं । मृत्युरकालमृत्युः । धर्माधर्मौ नतेष्वास्तां तेषु नस्तः । कर्मभूमौ भारतखण्डएव कर्माधिकारो नत्वितरेष्वितस्ततो न तत्र धर्माधर्मौ स्त इति भावः । नोत्तमाधममध्यमाः पुण्यपापयोरभावेन तत्कृतनीचोच्चत्वाद्यभावादिति भावः ॥ २६ ॥ युगावस्था युगकृतावस्था ह्रासवृद्धिलक्षणा । महामतिरित्यनेन ऋषभस्य विष्णववतारत्वं दर्शितं । तच्चभागवते स्पष्टं ॥ २७ ॥ स ऋषभः तपसे तपः कर्तुं पुलहस्याश्रमं सालग्रामाख्यं क्षेत्रं ययाविस्युत्तरेणान्वयः । भगवदवतारस्य ऋषभस्य तपआदिचरणं लोकशिक्षणार्थं । तदुक्तं भागवते "अयमवतारोरजसोपप्लुतकैवल्योपशिक्षणार्थ" इति ॥ २८ ॥

रत्नगर्भीयम् ।

र्यन्ताम क्षेयम् ॥ १८ ॥ सालग्रामं हरिक्षेत्रम् ॥ २४ ॥ विपर्ययोऽकालमरणादिः । नमृत्युभयं परिच्छिन्नादायुषः प्रागितिशेषः । नोत्तमाधममध्यमाः शीलादीनां समत्वात् । जात्यादीनां तु वैषम्यमस्त्येव ॥ २६ ॥ अष्टसु वर्षेषु सामान्यतो व्यवस्थामुक्त्वा नाभेर्वंशस्य भारतसंज्ञाकारणं वक्तुमाह—हिमा-

[ पा० ] १ घ. सुखप्रायाः २ घ. देहादिह्रासलक्षणा. ३ [दत्ता० पा०] महामतिः. ४ घ. वीरं । ड. ह. ट—ड. ध्येत्र. ५ घ. तावं इतनिश्चय .

तपसा कर्शितोऽत्यर्थं कृशो धमनिसन्ततः ।
नग्नो [2]वीटा मुखे कृत्वा [3]वीराध्वानं ततो गतः ३१
ततश्च भारतं वर्षमेतल्लोकेषु गीयते ।
भरताय यतः पित्रा दत्तं प्रातिष्ठता वनम् ॥ ३२ ॥
सुमतिर्भरतस्याभूत्पुत्रः परमधार्मिकः ।
कृत्वा सम्यग्ददौ तस्मै राज्यमिष्टमखः पिता ३३॥
पुत्रसङ्क्रामितश्रीस्तु भरतः स महीपतिः ।
योगाभ्यासरतः प्राणान्सालग्रामेऽत्यजन्मुने ३४
अजायत च विप्रोऽसौ योगिनां प्रवरे कुले ।
मैत्रेय तस्य चरितं कथयिष्यामि ते पुनः ॥ ३५ ॥

चित्सुखीयम् ।

सशैलापकाशायां तद्वत्सुमाह—हिमाह्वयमिति ॥ २७ ॥ धमनीभिः शिराभिः प्रकटाभिः सन्ततः व्याप्तदेहः । वीटा लोहगुडः । वीराध्वानं देहरक्षानिरपेक्षां गतिं ॥ ३१ ॥ प्रातिष्ठता प्रकर्षेण आतिष्ठता

श्रीधरीयम् ।

चित्सुखेरणान्वयः ॥ २८ ॥ २९ ॥ ३० ॥ तपसेति ॥ धमनीभिश्शिराभिस्सन्ततो व्याप्तः । तपसा कृशदेहत्वात् । विटः कन्तुकसदृशमश्मकवलं "वेपा तु क्रीडमानानामुदपानेऽङ्गुलीयकम् । पपात धर्मराजस्य विटस्तत्रैव चापतत्"। इति सम्भवोक्ते । विटशब्देन कन्तुको गम्यते । 'आस्ये कृत्वाश्मकवलम्' इति श्रीभागवतोक्तेश्च तत्सादृश्यं लक्ष्यते । वीराध्वानं महाप्रस्थानम् ॥ ३१ ॥ तत इति ॥ ततश्च ऋषभादनन्तरं भरतेन पालितत्वात् भारतमेतद्वर्षं गीयते । प्रातिष्ठता प्रस्थानं कुर्वतेत्यर्थः ॥ ३२ ॥ सुमतिरिति ॥ इष्टमखः पूजितयज्ञः सन् सम्यग्राज्यं कृत्वा पश्चात्तस्मै पुत्राय तद्राज्यं ददौ ॥ ३३ ॥ पुत्रसङ्क्रामितश्रीरिति ॥ पुत्रे सङ्क्रामिता श्रीः राज्यलक्ष्मीर्येन सः ॥ ३४ ॥ अजायतेति ॥ पुनः कथयिष्यामीत्यस्यायं भावः । स्थूलत्वेन सगृहत्वात्प्रथमं तावत्प्रस्तुतं भुवनकोशं शृणु । ततः "स्थूले निर्जितमात्मानं शनैस्सूक्ष्मे धिया नयेत्" इति भागवतोक्तक्रमेण ग्रहणयोग्यं सूक्ष्मतत्त्वसम्बन्धं च भरतस्य चरित

विष्णुचित्तीयम् ।

॥ २८ ॥ अभिषिच्येति ॥ पुलहस्याश्रमं सालग्रामम् ॥ २९ ॥ ३० ॥ तपसेति ॥ वीटा कन्दुकः । सन्धानं मौनानशनव्रतस्यैः शिलामयं कार्यं । वीराध्वानं महाप्रस्थानम् ॥ ३१ ॥ तत इति ॥ प्रातिष्ठता

दत्तात्रेयीयम् ।

॥ २९ ॥ ३० ॥ धमनिसन्ततः धमनीभिः शिराभिर्व्याप्तः । वीटा कन्दुकसदृशाश्मकवलः । "वेपा तु क्रीडमानानामुदपानेऽङ्गुलीयकम् । पपात धर्मराजस्य वीटा तत्रैव चापतत्" इति आदिपर्वोक्तेः । वीटाशब्देन कन्दुको गम्यते । "आस्ये कृत्वाश्मकवलं" इति भागवतोक्तेस्तत्सादृश्यं लक्ष्यते । तप कर्शितत्वादिकं लोकानुकरणमात्रं नवस्तुतोऽस्ति । "देवत्वे देववच्चेष्टा मानुषत्वे तु मानुषी" तिवचनात् । वीराध्वानं महाप्रस्थानमपुनरावृत्तिरूपं ॥ ३१ ॥ वनं प्रातिष्ठता प्रस्थानं कुर्वता पित्रा ऋषभेण यत इदं वर्षं भरताय दत्तं तस्माद्भारतमिति गीयते ॥ ३२ ॥ इष्टमखः कृतयज्ञः पिता भरतः स्वयं सम्यक् राज्यं कृत्वा तस्मै पुत्राय राज्यं ददौ ॥ ३३ ॥ पुत्रसङ्क्रामितश्री पुत्रे सङ्क्रामिता आर्पिता श्रीः राज्यलक्ष्मी-

रत्नगर्भीयम् ।

ह्वमिति ॥ २७ ॥ वीटा कन्दुकं शिलामयं "गोकर्णकृष्णमश्मर्यो वीटा वत्स्युन्ति पुनः । मुखे धृत ॥ वीराणां वीटं सत्त्राणधारणम्' इत्यौपधिविशेषं व्याख्यातवन्तः श्रीविमलबोधपादाः ॥ ३१ ॥

[ पा० ] १ ध—छ ग कृशोऽथ मुनिसत्तम २ [श्रीध० पा०] विट ३ ट महाध्वानं ४ छ राज्यमिष्टमख । च राज्यमिष्टसलक्षित

सुमतेस्तेजसस्तस्मादिन्द्रद्युम्नो व्यजायत ।
परमेष्ठी ततस्तस्मात्प्रतिहारस्तदन्वयः ॥ ३६ ॥
प्रतिहर्तेति विख्यात उत्पन्नस्तस्य चात्मजः ।
भवस्तस्मादथोद्गीथः प्रस्तावस्तत्सुतो विभुः ३७
पृथुस्ततस्ततो नक्तो नक्तस्यापि गयः सुतः ।
नरो गयस्य तनयस्तत्पुत्रोऽभूद्विराट् ततः ॥३८॥
तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत ।
महान्तस्तत्सुतश्चाभून्मनस्युस्तस्य चात्मजः ३९॥
त्वष्टा त्वष्टुश्च विरजो रजस्तस्याप्यभूत्सुतः ।
शतजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने ॥ ४० ॥
विष्वग्ज्योतिप्रधानास्ते यैरिमा वर्धिताः प्रजाः ।
तैरिदं भारतं वर्षं नवभेदमलङ्कृतम् ॥ ४१ ॥
तेषां वंशप्रसूतैश्च भुक्तेयं भारती पुरा ।
कृतत्रेतादिसर्गेण युगाख्यामेकसप्ततिम् ॥४२॥

विष्णुचित्तीयम् ।

गच्छता ॥ ३२ ॥ मुने सन्नामिता निक्षिप्ता श्रीः स्वीया राज्यलक्ष्मीर्येन स तथोक्तः ॥ ३४ ॥ तेजसः शुक्लात् ॥ ३६ ॥ भारती भूमिरिति शेषः । कृतत्रेतादीनां चतुर्णामपि सर्गेण ससर्गेण मेलनेन युगा-

श्रीधरीयम् ।

पश्चाद्वक्ष्यामीति ॥ ३५ ॥ सुमतेरिति ॥ तस्मात् भरतादनन्तरं सुमतेस्तेजसो वीर्यादिन्द्रद्युम्नो जात-स्तदन्वयः प्रतिहारः ॥ ३६ ॥ प्रतिहर्तेति ॥ प्रतिहारस्य पुत्रः प्रतिहर्ता ॥ ३७ ॥ ३८ ॥ ३९ ॥ त्वष्टेति ॥ शतजितः पुत्रशतम् ॥ ४० ॥ विष्वग्ज्योतिप्रधाना इति ॥ विष्वग्ज्योतिः प्रधानो मुख्यो येषां ते । नवभेदं नवभेदास्तृतीयाध्याये वक्ष्यति ॥ ४१ ॥ ननु पूर्वमुत्तानपादादयोऽपि सार्वभौमाः । इदानीं

विष्णुचित्तीयम् ।

प्रतिष्ठमानेन ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ सुमतेरिति ॥ तेजसो वीर्यात् ॥ ३६ ॥ प्रतिहर्तेति ॥ भवद्गति यस्यचिन्नाम । भुवनस्मादिति च पाठः ॥ ३७ ॥ ३८ ॥ तस्येति ॥ महान्त इति कस्यचि-न्नाम ॥ ३९ ॥ त्वष्टेति ॥ शतजित्पुत्रशतम् ॥ ४० ॥ विष्वग्ज्योतिप्रधाना इति ॥ ते शतजित्पुत्राः ॥ ४१ ॥ तेषामिति ॥ भारती भरतस्येयम् भूरिति भारती । कृतत्रेतादिसर्गेयुगाख्या कृतादिचतु-

रत्नगर्भीयम् ।

र्येन स तथोक्तः ॥ ३४ ॥ पुनः पश्चात् भुवनकोशवर्णनानन्तरमित्यर्थः ॥ ३५ ॥ तस्माद्भरतादन-न्तर सुमतेर्भरतपुत्रस्य तेजसो वीर्यादिन्द्रद्युम्नो व्यजायत । तदन्वयः प्रतिहारः ॥ ३६ ॥ प्रतिहारस्य पुनःप्रतिहर्ता सुतो महान्त इत्युभयं नाम ॥ ३७ ॥ ३८ ॥ ३९ ॥ रजसः शतजित्पुत्रस्तस्य शत-जितः पुत्रशतं शतं पुत्राः ॥ ४० ॥ विष्वग्ज्योतिः प्रधानः प्रमुखो येषां ते तथोक्ताः । नव भेदाः यस्मिंस्तत् नवभेदं । नवभेदाश्च तृतीयेऽध्याये वक्ष्यन्ते ॥ ४१ ॥ तेषां प्रियव्रतवंश्यानां भारती भर-तस्येयं भारती भूः । पुरा स्वायंभुवमन्वन्तरे । पराशरमैत्रेयसंवादस्य वैवस्वतमन्वन्तरे प्रवृत्त्यापु-रैयुक्ता । रियन्तं कालमेतैर्भुक्तेत्यत्राह—कृतेत्यादिना ॥ कृतत्रेतादिसर्गेण कृतत्रेतादीनां परंपरया यु-गाख्या चतुर्युगैराख्यायते या एकसप्ततिः मन्वन्तराख्यः कालः एकमन्वन्तरमित्यर्थः । कालाख्यनेरि-

स्वामीयम् ।

यद्वा स्वायंभुवस्य मनोः सर्गो वंश एषः एकसप्ततिकालावच्छिन्न इत्यर्थः । येनेदं जगदापूरितमिति सर्गो-

[ पा० ] १ क. उमेशा तस्य. २ ख. प—ख. ट ठ. सुत. ३ ग ट ह्यो हि ४ घ ट ठ ख. ए. तस्य पुत्रो विरोहन । घ न तस्य पुत्रो विरोहन . ५ घ धीमतोऽपि तस्माप्युत्पन्नस्तस्मात् ६ घ ए. ख. प. उपस्म-स्तम । ग. प्रावनस्य. ७ ग. विरजा ८ घ ट विश्वज्योति । ख. विश्वोति. ९ घ ङ भेदं । ग वंशप्रसूतैश्च. १० ए—ई ख. घ ठ. युगाख्यामि । ज. ठ नेकमामि

एष स्वायंभुवः सर्गो येनेदं पूरितं जगत् ।
वाराहे तु मुने कल्पे पूर्वमन्वन्तराधिपः ॥४३॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

---

चित्सुखीयम् ।

ख्या युगसङ्केतो भवति । तस्य च युगाख्यस्य चतुर्युगरूपस्य एकसप्ततिः ॥ ४२ ॥ स्वायंभुवः स्वायंभुवमनुकृतः सर्गः । एतावत्कालपरिच्छिन्न इत्यर्थः । वाराहे कल्पे ब्रह्मदिने वर्तमाने पूर्वः प्रथमो मन्वन्तराधिपः स्वायंभुवो मनुरित्यर्थः ॥ ४३ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

श्रीधरीयम् ।

प्रियव्रतादयोऽपि सार्वभौमा एवोच्यन्ते । तत्र समकाले न सङ्गच्छते अतः क्रमो वक्तव्यस्तत्राह—तेषामिति । तेषां प्रियव्रतान्वयप्रसूतानां वंशे प्रसूतैः पुरा प्रथममियं भारतीभूमिर्भुक्ता । पश्चादुत्तानपादादिभिः कियन्तं कालमेतैर्भुक्तेत्यपाह—कृतेति । कृतत्रेतादीनां सर्गेण प्रवृत्त्या युगाख्या चतुर्युगैराख्यायते या एकसप्ततिर्मन्वन्तराख्यः कालः तावन्तं कालमित्यर्थः । कृतत्रेतादिसंज्ञेयमेति पाठेऽप्येवमेव योज्यम् । युगाख्यामेकसप्ततिमिति पाठे तु स्फुटोऽयमर्थः ॥ ४२ ॥ एतदेव स्पष्टयति—एष इति । वाराहेऽस्मिन् कल्पे यदा स्वायंभुवः सर्वस्य प्रथममन्वन्तराधिपोऽभूत्तदा एषः प्रियव्रतवंश्यानां राज्ञां सर्गः । ततः स्वारोचिषादावुत्तानपादवंश्यानामित्यर्थः । अत एवोत्तानपादवंश्यस्य प्राचेतसदक्षस्य कन्यायामादित्यानां जन्म वैवस्वतमन्वन्तरे प्रोक्तं । पूर्वमन्वन्तराधिपे इति सप्तम्यन्तपाठे प्रथममन्वन्तराधिपे स्वायंभुवे वर्तमाने स्वायंभुवस्स्वयंभुवोंऽशभूतो यस्मादेव मनोः प्रियव्रतादिसर्गः प्रथमं प्रवृत्त इत्यर्थः । यद्वा—पूर्वोक्तसर्वसृष्टिनिगमनमेतत्—एष इति ॥ ४३ ॥ इति श्रीश्रीधरस्वामिविरचितायां आत्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

विष्णुचित्तीयम् ।

देवैर्युगैराख्येया चतुर्युगैकसप्ततिरियं भारती भूर्भुक्ता । एकसप्ततिमिति कालाध्वनोरिति द्वितीया प्राप्ता । एकसप्ततिरिति प्रथमाप्रयोग आर्षत्वात्साधुः । एकमन्वन्तरं भुक्तेत्यर्थः । यद्वा युगैकसप्ततिमितो यः कालस्तं कालं भूर्भुक्तेति यत्तच्छब्दयोरध्याहारः । कृतत्रेतादिसर्गेण युगाख्यामेकसप्ततिमिति पाठे कृतादिस्वभावेन युगाख्येयामेकसप्ततिं कालं भूर्भुक्तेति ॥ ४२ ॥ एष इति । पूर्वमन्वन्तराधिपे स्वायंभुवमनौ सति एष एकसप्ततियुगावच्छिन्नः सर्गः स्वायंभुवः स्वायंभुवस्य मनोः सम्बन्धी प्रियव्रतादिः ॥ ४३ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

दत्तात्रेयीयम् ।

त्यादिना द्वितीयाप्राप्तावपि छान्दसत्वात्प्रथमा । युगाख्यामेकसप्ततिमितिपाठे स्फुटोऽर्थः । कृतत्रेतादिसंज्ञेयमिति पाठेऽप्येवमेव योज्यं ॥ ४२ ॥ पूर्वमन्वन्तराधिपे स्वायंभुवमनौ सति एषः स्वायंभुवः स्वायंभुवस्य मनोः सम्बन्धी सर्गः प्रियव्रतादिसर्गः । पूर्वमन्वन्तराधिप इति प्रथमान्तपाठे स्वायंभुवो मनुर्यदा पूर्वमन्वन्तरस्याधिपोऽभूत्तदैष सर्ग इति योज्यं ॥ ४३ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

रत्नगर्भीयम् ।

स्यैव विशेषणम् । मन्वन्तराधिपः मन्वन्तरं व्याप्य राजेत्यर्थः ॥ ४३ ॥ इति श्रीरत्नगर्भ०विरचितश्रीविष्णुपु०व्याख्यासारे द्वितीयांशे प्रथमोऽध्यायः ॥ १ ॥

---

[ पा० ] १ क. घ—ङ. य. मन्वन्तराधिपे.

# द्वितीयोऽध्यायः ॥ २ ॥

प्रियव्रतवंशकथने द्वीपवर्षविभागोक्त्या सूचितं भुवनकोशं सविशेषं जिज्ञासोः मैत्रेयस्य प्रश्नः ॥ १ ॥
मैत्रेयकृतप्रश्नानामुत्तरत्वेन पराशरकृतसकलभूमण्डलवर्णनम् ॥ २ ॥

श्रीमैत्रेय उवाच ॥

कथितो भवता ब्रह्मन्सर्गः स्वायम्भुवश्च मे
श्रोतुमिच्छाम्यहं त्वत्तः सकलं मण्डलं भुवः ॥१॥
यावन्तः सागरा द्वीपास्तथा वर्षाणि पर्वताः ।
वनानि सरितः पुर्यो देवादीनां तथा मुने ॥ २ ॥
यत्प्रमाणमिदं सर्वं यदाधारं यदात्मकम् ।
संस्थानमस्य च मुने यथावद्वक्तुमर्हसि ॥ ३ ॥

श्रीपराशर उवाच ॥

मैत्रेय श्रूयतामेतत्संक्षेपाद्वदतो मम ।
नास्य वर्षशतेनापि वक्तुं शक्यो हि विस्तरः ॥४॥
जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥५॥
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ ६ ॥
जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः ।
तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः ॥ ७ ॥

विष्णुचित्तीयम् ।

देवादीनां यत्प्रमाणमित्यन्वयः । संस्थानं अवयवविन्यासप्रकारः ॥ ३ ॥ समं समन्तात् ॥ ६ ॥

श्रीधरीयम् ।

उक्तानुवादेन भुवनकोशं सविशेषं बुभुत्सुः पृच्छति—कथित इति । स्वयम्भुवोंऽशत्वान्मनुरेव स्वयम्भूस्तदीयः प्रियव्रतादिसर्गः कथितः तत्कथने च द्वीपवर्षादिविभागोक्त्या सूचितं भूमण्डलं श्रोतुमिच्छामि ॥ १ ॥ यावन्त इति । देवादीनां पुर्यो नगर्यः ॥ २ ॥ यत्प्रमाणमिति । एवमेते द्वादश प्रश्नाः एतेषां च वक्ष्यमाणैस्तत्संख्यासंस्थानादिभिः यथायोगमुत्तराणि द्रष्टव्यानि ॥ ३ ॥ ४ ॥ ५ ॥ एत इति । जम्ब्वादिसप्तद्वीपाः सप्तभिर्लवणादिसंज्ञैः समुद्रैः समं यथा भवत्येवं सर्वत आवृताः ॥ ६ ॥ ७ ॥

विष्णुचित्तीयम् ।

॥ १ ॥ यावन्त इति । द्विरापत्वात् द्वीपाः । वर्षाणि कुलाचलच्छिन्ना द्वीपांशाः । वर्षशब्दनिर्वचनं मात्स्योक्तम् "वसन्त्यृषभस्तो वर्षेषु प्रजा येषु चतुर्विधाः । ऋषिरित्येष रमणे वर्षत्वं तेन तेषु तत्" इति ॥ २ ॥ ३ ॥ ४ ॥ भूमण्डलं वक्तुमादौ तदवयवद्वीपाद्युत्पत्तिमाह जंबूप्लक्षाह्वयाविति ॥ ५ ॥

दत्तात्रेयीयम् ।

पूर्वाध्याये प्रियव्रतवंशकथनावसरे सामान्यतो भूमण्डलविभागस्य प्रस्तुतत्वमेवोक्तानुवादपूर्वकं भुवनकोशं विशेषतो जिज्ञासुः पृच्छति—कथित इति । स्वायंभुवस्य स्वायंभुवसंबन्धिनः प्रियव्रतादेः ॥ १ ॥ देवादीनां पुर्यो नगर्यो यावत्यः ॥ २ ॥ इदं भूमण्डलं यत्प्रमाणं यत्परिमाणं । यदाधारं यदाश्रयं यदात्मकं यत्स्वरूपं संस्थानं अवस्थितिप्रकारं ॥ ३ ॥ एते जंब्वादिद्वीपाः सप्त लवणादिसंज्ञैः सप्तभिः समुद्रैः समं तत्तद्द्वीपसमानं परिमाणं यथा भवति तथा परित आवृताः ॥ ६ ॥ समस्तानामेतेषां मध्ये जंबूद्वीपः मध्यतः स्थितः । तस्य जंबूद्वीपस्य मध्ये कनकपर्वतः मेरुः स्थितः ॥ ७ ॥

रत्नगर्भीयम् ।

प्रियव्रतचरित्रोक्तिसूचितं भूमिमण्डलम् । प्रश्नोत्तराभ्यां गदितुं द्वितीय उपचक्रमे । तत्सारस्येत्यत्र

[ पा० ] १ स. घ—छ च. स्वायंभुवस्य मे । ग. स्वायंभुवो मुने. २ ङ. पुण्या. ३ क. शतोऽपि विस्तरः । ग.

चतुराशीतिसाहस्रो योजनैरस्य चोच्छ्रयः ॥ ८ ॥
प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
मूले षोडशसाहस्रो विस्तारस्तस्य सर्वशः ॥ ९ ॥
भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः १० ॥
हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ ११ ॥

विष्णुचित्तीयम् ।

षोडशसहस्राणि द्वात्रिंशत्सहस्राणि च ॥ ९ ॥ मध्ये निषधनीलौ लक्षप्रमाणौ । प्राक्पश्चिमदैर्घ्येण हेम-

श्रीधरीयम् ।

चतुरिति । अशीतिरेव आशीतिः सहस्रमेव साहस्रं चतुरधिकान्याशीतिसाहस्राणि प्रमाणं यस्य स मेरोरुच्छ्रायः । लक्षयोजनप्रमाणो मेरुः तस्योच्छ्रायो बहिश्चतुरशीतियोजनसाहस्रो दृश्यते ॥ ८ ॥ प्रविष्ट इति । षोडशयोजनसाहस्राण्यधस्ताद्भूम्यां प्रविष्टः स्यात् । द्वात्रिंशद्योजनसहस्राणि मूर्ध्नि विस्तृतः ॥ ९ ॥ भूपद्मस्येति । अत एव मूर्ध्नि विस्तृतत्वान्मूले सङ्कुचितत्वाच्च भूमध्यावस्थानाच्च भूरूपस्य पद्मस्य कर्णिकाकारेण संस्थितः ॥ १० ॥ भारतवर्षमारभ्य मेरोर्दक्षिणोत्तरस्थितानां षण्णां वर्षाणां मर्यादापर्वतानाह—हिमवानिति । वर्षाणां व्यवच्छेदकाः पर्वताः ॥ ११ ॥

विष्णुचित्तीयम् ।

एत इति । समं स्वस्वावरणीयद्वीपतुल्यविस्तारं यथा तथा एते आवृताः ॥ ६ ॥ ७ ॥ चतुरिति । सहस्रमेव साहस्रम् अशीतिरेव आशीतिः । योजनैश्चतुरधिकाशीतिसाहस्राणि यस्य स चतुच्छ्रायश्चतु-राशीतिसाहस्रः । अस्योच्छ्रायश्चतुरधिकाशीतिसहस्रयोजन इत्यर्थः ॥ ८ ॥ प्रविष्ट इति । योजनानां षोडशसहस्राणि भुवि स्थितः "हस्तोऽङ्गुलिर्विंशत्या चतुरन्वितया चतुष्करो दण्डः । तद्द्विसहस्रं क्रोशो योजनमेकं भवेच्चतुष्क्रोशम्" इति गणिते । "अष्टभिर्यवमध्यैः स्यादङ्गुलं" इति च । द्वात्रिंशत्सहस्राणि मूर्ध्नि व्यासः "सर्वत्र हि समवृत्ते व्यासस्त्रिगुणस्ततो भवेत्परिधिः" इति गणितज्ञाः । मूल इति । मूले भूमेरुपरि चतुर्दशयोजनसाहस्रमात्रमधिकं ॥ ९ ॥ भूपद्मस्येति । "पद्माद्धि कर्णिकामूलमिति मत्तं-प्रकीर्तितम् । तद्योजनसाहस्राणां सप्ततीनामधः स्मृतम्" इति वायुपुराणे । मात्स्ये च मेरुसन्निवेश उक्तः "वृत्ताकृतिप्रमाणश्च चतुरस्रः समुत्थितः । विस्तारस्त्रिगुणश्चास्य परिणाहे तु मण्डलः" इति ॥ १० ॥

दत्तात्रेयीयम् ।

अस्य मेरोरुच्छ्रयः औन्नत्यं योजनैश्चतुरशीतिसाहस्रः । अशीतिरेवाशीतिः सहस्रमेव साहस्रं । चतुर-धिकान्यशीतिसहस्राणि मानं यस्येति तथा ॥ ८ ॥ अधस्ताद्भूम्यां षोडशयोजनसहस्राणि प्रविष्टः स्यात् । भूमेरुपरि चतुरशीतिसाहस्रयोजनोच्छ्रितः । भूम्यन्तः षोडशसहस्रयोजनप्रविष्टः । इत्येवं मिलित्वा लक्षयोजनोच्छ्रितो मेरुरित्युक्तं भवति । द्वात्रिंशन्मूर्ध्नि विस्तृतः मूर्ध्नि द्वात्रिंशद्योजनविस्तारयुक्तः । अस्य मेरोर्मूले मूलदेशे षोडशसहस्रयोजनपरिमितो विस्तारः ॥ ९ ॥ अतएव मूर्ध्नि विस्तृतत्वान्मूले । सङ्कु-चितत्वाद्भूमध्यावस्थानाच्च भूरूपस्य पद्मस्य कर्णिकाकारेण स्थितः ॥ १० ॥ भारतवर्षमारभ्य मेरोर्द-क्षिणोत्तरस्थितानां षण्णां वर्षाणां मर्यादापर्वतानाह—हिमवानित्यादिना । वर्षपर्वता इत्यत्र वृक्षिण

रङ्गनाथीयम् ।

नवेत्यन्तं पीठार्थं ज्ञेयम् । चतुर्दिशं जलजसाहस्रमित्यर्थः । येन इत्याहृतं मेरुणा सहस्राणि चतुरि-

[ पा० ] १ ग घ. ब. ग. भाष्ये . २ घ ज. झ. ट. ढ. मूद्रा. । म. सर्वत-. १ घ. मूल .

लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथापरे ।
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥१२॥
भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ १३ ॥

विष्णुचित्तीयम् ।

कूटश्वेतौ नवतिसहस्रयोजनपरिमाणौ । हिमवच्छृङ्गिणौ अशीतिसहस्रयोजनायामौ ॥ १२ ॥ यथा

श्रीधरीयम् ।

लक्षप्रमाणाविति । लक्षप्रमाणौ द्वौ प्राक्पश्चिमतो दैर्घ्येण निषधनीलौ । यद्यपि जम्बूद्वीपस्य मण्डलाकारस्य लक्षयोजनप्रमाणत्वात्तन्मध्यरेखाया एव मुख्यं लक्षप्रमाणत्वं । निषधनीलौ तु तन्मध्यरेखातो दक्षिणतश्चोत्तरतश्च सप्तसहस्रयोजनान्तरितत्वादीषन्न्यूनौ । तथापि स्थूलदृष्ट्या लक्षप्रमाणावित्युक्तम् । अपरे तु हेमकूटादयो दशहीनाः दशांशहीनाः । हेमकूटश्वेतौ नवतियोजनसहस्रप्रमाणौ । हिमवच्छृङ्गिणौ चाशीतियोजनसहस्रप्रमाणौ यदुक्तं वाराहे "द्वीपस्य मण्डलीभावाद्ध्रासवृद्धी प्रकीर्तिते" इति ॥ १२ ॥ १३ ॥

विष्णुचित्तीयम् ।

हिमवानिति । वर्षपर्वताः वर्षाणां विभेदकाः पर्वताः ॥ ११ ॥ लक्षप्रमाणाविति । उक्तानां षण्णां वर्षाणां मध्ये मेरुमभितः स्थितौ नीलनिषधौ लक्षप्रमाणदैर्घ्यौ । मध्य इति पाठे जम्बूद्वीपस्येति शेषः । परे चत्वारो लक्षाद्दशांशेन दशसहस्रेण हीनाः । यथा वाराहे "जम्बूद्वीपप्रमाणेन निषधः परिकीर्तितः । तस्माच्च दशभागेन हेमकूटः प्रहीयते । विंशद्भागेन हिमवांस्तथैव प्रहीयते । द्वीपस्य मण्डलीभावाद्ध्रासवृद्धी प्रकीर्तिते ।" इति । अन्यत्र च "वृत्तभावात्समुद्रस्य महीमण्डलभागतः । अत्यामात्परिहीयन्ते

सत्यव्रतीयम् ।

इत्यत्रापि सम्बन्धः वर्षमर्यादापर्वताः ॥ ११ ॥ मध्ये एतेषां षण्णां मध्ये द्वौ निषधनीलौ लक्षप्रमाणौ प्राक्पश्चिमतो दैर्घ्येण लक्षयोजनप्रमाणौ मण्डलाकारस्य जंबूद्वीपस्य मध्यरेखायामेव लक्षप्रमाणत्वात्तन्मध्ये रेखातस्तु उत्तरतो दक्षिणतश्च सप्तयोजनसहस्रान्तरितत्वादीषन्न्यूनस्थितयोः पूर्वपश्चिमसमुद्राव-धिकयोर्नीलनिषधयोरपि स्थूलदृष्ट्या लक्षयोजनप्रमाणत्वमुक्तं । अपरे हेमकूटादयो दशहीनाःदशांशन्यूनाः । हेमकूटश्वेतौ नवतिसहस्रयोजनप्रमाणौ । हिमवच्छृङ्गिणौ चैकाशीतिसहस्रयोजनप्रमाणावित्यर्थः । द्वी-पस्य मण्डलाकारत्वेन तदन्तर्वर्तिनां षण्णां पर्वतानां ह्रासवृद्धी युक्तं । तदुक्तं वाराहे । "द्वीपस्य मण्ड-लीभावाद्ध्रासवृद्धी प्रकीर्तिते" इति । एवं षण्णामायाममुक्त्वा उच्छ्रायविस्तारावाह—सहस्रेति । सह-स्रद्वितयोच्छ्रायाःसहस्रद्वितयोन्नताः । तावद्विस्तारिणः सहस्रद्वयविस्तारवन्तः । सहस्रद्वितयोच्छ्राया इत्य-त्रोन्नतत्वेन सहस्रद्वितययोजनमात्रं विवक्षितं । तथात्वे "अयुतयोजनोत्सेधाः" इति भागवते अयुतयो-जनोन्नतत्वोक्तिविरोधात् । अत्राप्ययुतयोजनोन्नतत्वमेवेति विवक्षितम् । अयुते सहस्रद्वयस्यापि संभ-वात् । तथोक्तेरविरोधात् । कुत एवं कल्प्यनेति चेत् । भुवनकोशविषये भागवतोक्तप्रकारस्यैवेतरपुरा-णानां योग्यत्वात् । तदुक्तं ब्रह्माण्डे । "यथा भागवतेऽप्युक्तं भौवनं कोशलक्षणम् । तस्यान्तर्गतमेवेदं योऽन्यमन्यद्ग्रन्थान्तरे स्थितं" इति ॥ १२ ॥ वर्षपर्वता इत्युक्तं यानि तानि वर्षाणीत्यपेक्षायामाह— भारतमित्यादिना । मेरोर्दक्षिणतः दक्षिणसमुद्रमारभ्य मेरुदक्षिणभागे विभक्तानि मेरोरुत्तरभागे रम्यकादीनि त्रीणि वर्षाणि नीलपर्वतमारभ्योत्तरसमुद्रपर्यन्तानि । यथा भारतंनथा । यथा मेरोर्दक्षि-णभागस्थितानां वर्षाणां भारतं वर्षमन्तिमभागस्थितं तथा मेरोरुत्तरभागे स्थितानां वर्षाणां कुरुवर्ष-

[ पा० ] १ ध—ज. म—ठ. मध्ये.

रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ १४ ॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तम ।
इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥१५॥
मेरोश्चतुर्दिशं तत्तु नवसाहस्रविस्तृतम् ।
इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥ १६ ॥
विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः ।
नवैः सरोभिश्च समं दिक्ष्वेते केशवाचलाः ॥१७॥
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ॥१८॥
कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ।
एकादशशतायामाः पादपा गिरिकेतवः ॥१९॥

---

चित्सुखीयम् ।

वै भारतं तथेति । यथा भारतं धनुराकृति तथा तदपि कुरुवर्षं धनुराकारमित्यर्थः ॥ १४ ॥ विष्कंभा

श्रीधरीयम् ।

रम्यकमिति । यथा वै भारतमिति । द्वीपमण्डलान्तर्वर्तित्वाद्धनुराकारं कुरुवर्षमित्यर्थः ॥१४॥ नवसाहस्रमिति । एतेषां भारतादीनां मध्ये एकैकं वर्षं विस्तारतो नवसाहस्रयोजनविस्तारप्रमाणं । इलावृतं च नवसहस्रं । विस्तारसाम्येऽपि तत्र तद्विशेषमाह—तन्मध्य इति । तदाह—वायुः । 'धनुःसंस्थे स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् ।" इति ॥ १५ ॥ मेरोरिति । किंचात्र इलावृते अन्येऽचत्वारः पर्वताः मेरोश्चतुर्दिशम् ॥ १६ ॥ विष्कंभा इति । विष्कंभाः दार्ढ्यार्थमवष्टंभा ईश्वरेण रचिताः । अन्यथा मूलभागान्मूर्धभागस्य द्विगुणविस्ताराद्गौरवेण भङ्गप्रसङ्गात् ॥१७॥ ॥ १८ ॥ कदंब इति । तेष्ववष्टंभपर्वतेषु पूर्वादिक्रमेण चत्वारः पादपाः एकादशशतयोजनोच्छ्रायाः

विष्णुचित्तीयम् ।

चतुरस्र समा मता" । इति । एवं नीलादिष्वपि द्रष्टव्यम् ॥ १२ ॥ १३ ॥ रम्यकमिति । यथा वै भारतं तथा धनुराकारमित्यर्थः । "धनुःसंस्थे स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम्" इति वायूक्तेः ॥ १४ ॥ नवसाहस्रमिति । इलावृतं चतुस्त्रिंशत्सहस्रयोजनविस्तारं । भद्राश्वकेतुमालौ प्राक्प्रत्यग्द्वात्रिंशद्योजनाविस्तार्थसिद्धं । 'साहस्रे माल्यवद्गन्धमादनौ' इति वायूक्तेः

दत्तात्रेयीयम् ।

न्तिमित्यर्थः । एतेषां भारतादीनां मध्ये एकैकं विस्तारतो नवसहस्रं तन्मध्ये तेषां षण्णां मध्ये इलावृतंवर्षं तन्मध्ये इलावृतमध्ये मेरुः ॥ १४ ॥ मेरोश्चतुर्दिशं चतुर्दिक्षु प्रत्येकशो नवसहस्रं । मेरुव्याप्तेलावृतमध्यभागो दक्षिणोत्तरयोः पूर्वपश्चिमयोर्वा षोडशसाहस्रयोजनात्मकः उर्वरितपार्श्वचतुष्टये दक्षिणोत्तरयोः पूर्वपश्चिमयोर्वा अष्टादशसहस्रमिति चतुस्त्रिंशत्सहस्रयोजनविस्तारमिलावृतमित्युक्तं भवति । तेन इलावृतं चतुरस्रमिति सिद्ध्यति । तदुक्तं वायुपुराणे "धनुःसंस्थे स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतं इति" ॥ १५ ॥ अत्र इलावृते योजनायुतमुच्छ्रिताश्चत्वारः पर्वताः मेरोर्विष्कंभाः ॥ १६ ॥ दार्ढ्यार्थं कीलकाश्चतुर्दिक्षु ईश्वरेण रचिताः ॥ १७ ॥ तानेव निर्दिशति—पूर्वेणेति । गन्धमादनविपुलशब्दौ मेरुमन्दरकुमुदयोर्नामान्तरे । सुपार्श्वः पश्चिमे विपुल उत्तर इति व्यत्यासेन योज्यं ॥ १८ ॥ तेष्ववष्टंभपर्वतेषु । पिप्पलशब्देन चूतो विवक्षितः । पिप्पलजंबूकदंब-

रत्नगर्भीयम् ।

शन् । भद्राश्वकेतुमाले प्रत्येकं द्वात्रिंशदित्यर्थसिद्धम् । 'सहस्रे माल्यवद्गन्धमादनौ' इति पूर्वपश्चिमतो

---

[पा०] १ प. रम्यं तथोत्तरं. २ च. तन्मध्ये मेरुरुच्छ्रितः । ३—प. ए. झ. तन्मध्ये मेरुरुच्छ्रितः. ३ क शत. ४ म. केसराचला. ५ ज. ट. ठ. स्थित.

भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्यमिलावृतं ॥ २४ ॥
वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम् ।
वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ॥ २५ ॥
अरुणोदं महाभद्रम[1]सितोदं समानसम् ।
सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ॥२६॥
[2]शीताम्भश्च कुमुन्दश्च कुररी माल्यवांस्तथा ।
[3]वैकङ्कप्रमुखा मेरोः पूर्वतः केसराचलाः ॥ २७ ॥
त्रिकूटः [4]शिशिरश्चैव पतङ्गो रुचकस्तथा ।
निषदाद्या दक्षिणतस्तस्य केसरपर्वताः ॥ २८ ॥
शिखिवासा सवैडूर्यः कपिलो गन्धमादनः ।
[5]जारुधिप्रमुखास्तद्वत्पश्चिमे केसराचलाः ॥ २९ ॥
मेरोरनन्तराङ्गेषु [6]जठरादिष्ववस्थिताः ।
शङ्खकूटोऽथ ऋषभो हंसो नागस्तथा परः
[7]कालञ्जराद्याश्च तथा उत्तरे केसराचलाः ॥३०॥

चित्सुखीयम् ।

हेतुः नामनिरुक्तिहेतुः ॥ २० ॥ मेरोः कर्णिकास्थानीयत्वात् शीतान्ताख्यः पर्वताः तस्य केसरस्थानीयाः ॥ २७ ॥ मेरोरनन्तराङ्गेषु जठरादिषु संस्थिता इति । जठरादिषु पूर्वमर्यादापर्वतेषु मेरोरनन्त-

श्रीधरीयम् ।

मृत्सारिचीरम्रारिका सिद्धानां भूषणं सुवर्णं भवति ॥ २३ ॥ भद्राश्वमिति । तयोर्मध्यमित्यनुवादः तत्रस्थविष्कम्भाद्रिसानुषु चैत्ररथादिवनानामरुणोदादिसरसां कथनार्थः ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥ २९ ॥ वक्ष्यमाणानां च केसराचलानां स्थानान्याह—मेरोरिति । मेरो-

विष्णुचित्तीयम् ।

॥ २३ ॥ २४ ॥ वनमिति । विष्कम्भाद्रिप्रस्थेषु चैत्ररथादिवनानि तद्बहिः सरांसि तद्बहिः केसराचला इति क्रमो बायुक्त ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ मेरोरिति । मेरोरनन्तराङ्गेषु मेरो-

दत्तात्रेयीयम् ।

विशोषितासती जाम्बूनदाख्यं सिद्धानां देवानां भूषणं सुवर्णं भवति ॥ २३ ॥ भारतादिसप्तवर्षाण्युक्त्वा इदानीमवशिष्टवर्षद्वयमाह—भद्राश्वमिति । तयोर्भद्राश्वकेतुमालयोर्मध्यमिलावृतम् । अनेन भद्राश्वकेतुमालयोः प्राक्प्रत्यक्दैर्घ्यं प्रमाणं दर्शितं । यथेलावृतस्य प्राक्प्रत्यक्चतुस्त्रिंशत्सहस्रयोजनात्मकत्वान्मर्यादागिरी माल्यवद्गन्धमादनयोः प्रत्येकं द्विसहस्रयोजनविस्तृतत्वेन भागवतोक्तत्वाच्च प्राक्प्रत्यग्लक्षयोजनात्मकजंबूद्वीपमध्यरेखायामष्टत्रिंशत्सहस्रयोजनानि संपन्नानि । उर्वरितद्विषष्टिसहस्राणि भद्राश्वकेतुमालयोः प्रत्येकमेकत्रिंशत्सहस्रयोजनप्राक्प्रत्यग्दैर्घ्याणि संपन्नानीति जंबूद्वीपस्य प्राक्प्रत्यग्लक्षयोजनतायाः सिद्धिरिति ॥ २४ ॥ विष्कम्भपर्वतशिखरस्थितवनानि सरांसि चाह—वनमित्यादिना । नन्दनं चैत्ररथं वैभ्राजिकं सर्वतोभद्रमिति पूर्वादिक्रमेण भागवतोक्तप्रकारमनुसृत्य अत्रापि योजनीयं । अत्र गन्धमादनशब्देन सर्वतोभद्रमुच्यते ॥ २५ ॥ २६ ॥ भूपद्मकर्णिकास्तु मेरोः केसरपर्वतान्पूर्वादिक्रमेणाह—शीताम्भ इत्यादिना ॥ २७ ॥ उक्तानां वक्ष्यमाणानां च केसराचलानां पूर्वादिभेदेनोक्तवक्ष्यमाणस्थानानां सन्निहितदूरदेशसाधारणत्वेन सन्देहजनकत्वात्तन्निरासाय स्थानानि निष्कृष्याह—

रङ्गनाथीयम् ।

तयोर्मध्यमित्यनुवादस्तत्स्थपर्वतेषु वनादिकथनार्थः । तथा च मार्कण्डेयपुराणम् "शैलेषु मन्दराद्येषु च-

[पा०] १ ग सितोदमथमानस २ ख ठ शीताम्भश्च कुमुदश्च । च शीताम्भश्चाप्तुकश्च । क शीतांशुश्च कुमुन्दश्च । ग घ छ शीताम्भश्च कुमुद्वांश्च [नि० पा०] शीतान्ताश्च कुमुन्दश्च ३ च वैकुण्ठ ४ ख घ च छ शिखरश्चैव ५ ज ट ठ. जारुधि ६ [श्रीध० पा०] जठरादिषु संस्थिता. ७ ख—छ. कालञ्जनाद्याश्च । न कालञ्जराद्याश्च

चित्सुखीयम् ।

राङ्गेषु अव्यवहिताङ्गेषु स्थिताः । यद्वा मेरोरनन्तराङ्गेषु समीपावयवेषु कल्पनात्संभवस् । प्रथिता वायु-

श्रीधरीयम् ।

रनन्तराणि सन्निहितानि यान्यङ्गानि मूलसमीपस्थानि तान्येव जठरादीनि पूर्वदक्षिणपश्चिमोत्तरदेशव-र्तितया जठरपार्श्वदक्षिणवर्तिपृष्ठनामसाम्याच्चेष्ववस्थिताः । मेरोः कर्णिकाया इव केसरभूताः मूलदेशे

विष्णुचित्तीयम् ।

रनन्तरं वर्षम् इलावृतं तस्याङ्गेष्ववयवेषु माल्यवन्निषधगन्धमादननीलाख्यवर्षाद्रिषु तथा इलावृतस्यैव वक्ष्यमाणयोः प्राक्सीमाभूतयोर्जठरदेवकूटयोः पश्चात्सीमाभूतयोर्निषधपारियात्रयोश्चावस्थिताः केसर-पर्वताः । एषामन्तस्था अन्ये शैलाः । एते च केसराचलत्वेन गण्यन्ते । तेषां माल्यवन्निषधगन्धमादनानां स्वशब्देन नीलस्य तु कालाञ्जनशब्देन च केसरेषु उक्तत्वात् "पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः" इति वक्ष्यमाणत्वाच्च जठरादीनामपि केसरत्वं युक्तम् । एते स्ववर्षापेक्षया वर्षाद्रयः पत्रापेक्षया मर्या-दाद्रयः मेर्वपेक्षया केसराद्रयश्चेति अयमर्थो गङ्गाचतुर्भेदप्रस्तावे पठिष्यमाणवायूक्त्या व्यक्तीभविष्यति । एतेषां केसराणां "केसरास्तु शतोच्छ्रायाश्चत्वशीतिपृथुलायताः" इति वायूक्तं मानं ज्ञेयम् ॥ ३० ॥

रत्नगर्भीयम् ।

मेरोरिति । मेरोरनन्तराणि सन्निहितानि यान्यङ्गानि मेरोर्मूलदेशसमीपस्थानि तान्येव जठरादीनि मेरुसन्निहितपूर्वभागादीनां पूर्वपश्चिमदक्षिणोत्तरदेशवर्तितया जठरपृष्ठपार्श्वद्वयानामसाम्यात् तेष्वव-स्थिताः । तदुक्तं भागवते "मेरोः कर्णिकाया इव केसरभूताः मूलदेशे परित उपक्लृप्ताः" इति । के-चित्तु मेरोरनन्तराङ्गेष्वित्यर्थं प्रकारान्तरेण व्याचक्षते । तद्यथा । मेरोरनन्तरं वर्षमिलावृतं तस्याङ्गे-ष्ववयवेषु माल्यवन्निषधगन्धमादननीलाख्यवर्षाद्रिषु तथा इलावृतस्यैव वक्ष्यमाणयोः प्राक्सीमाभूतयोः जठरदेवकूटयोः पश्चात्सीमाभूतयोः निषधपारियात्रयोश्चावस्थिताः केसरपर्वताः एषामन्तस्था अन्ये शैलाः एतेच केसराचलत्वेन गण्यन्ते । तेषां माल्यवन्निषधगन्धमादनानां स्वशब्देन नीलस्यतु काला-ञ्जनशब्देनच केसरेषूक्तत्वात् "पत्राणिलोकपद्मस्यमर्यादाशैलबाह्यतः" इति वक्ष्यमाणत्वाच्च जठरा-दीनामपि केसरत्वं युक्तं । एते स्ववर्षापेक्षया वर्षाद्रयः पत्रापेक्षया मर्यादाद्रयः मेर्वपेक्षया केसराद्रय-श्चेति अयमर्थो गङ्गाचतुर्भेदप्रस्तावे पठिष्यमाणवायूक्त्या व्यक्तीभविष्यतीति । अत्र माल्यवदादीन-चतुर्णां वर्षपर्वतानां वक्ष्यमाणजठराद्यादीनां चतुर्णां केसराचलत्वेनोक्तौ न किञ्चिन्नियामकं पश्यामः । "सीताम्बुशिखरभ्रष्टा" इत्यादिवायूक्तौ केसराचलैर्माल्यवदादीनां सहपठितत्वमेव नियामकमिति केचित् । तद्वचनस्य गङ्गागमनप्रकारनिरूपणप्रकरणत्वेन केसराचलनिरूपणप्रकरणत्वाभावात् । तत्प्रकरणत्वा-भावेऽपि वस्तुतः केसराचलभूतांमाद्रिभिः सहपठितत्वेन माल्यवदादीनां केसराचलत्वमितिचेत्सदस्तु । वर्षमर्यादाभूतमाल्यवदादीनां माल्यवदादिशब्दप्रयोगमात्रेण केसराचलत्वायोगात् । प्रत्युत मेरोः पूर्वभागवर्तिकेसराचलैः सह मूले पठितस्य माल्यवतः मेरोः पश्चिमकेसराचलेषु पठितगन्धमादन-स्यच वर्षमर्यादाहेतुभूतमाल्यवद्गन्धमादनाभ्यां मेरोः पश्चिमपूर्वदेशवर्तिभ्यां अन्योन्ययोरेतच्छब्दाभ्यां प्राप्तत्वात् । उत्तरवर्षमर्यादाभूतनीलस्य मूले ग्रहणमेव नास्ति । कालाञ्जनपदेन कथंचिद्ग्रहणेऽपि तस्य दूरस्थत्वादेव मेरुकेसरत्वायोगात् । "मेरोः कर्णिकाया इव केसरभूताः मूलदेशे परित उपक्लृप्ताः" इति भागवते केसराचलानां मेरोरतिसन्निहितत्वोक्त्या तद्विरोधापाताच्च । जठरदेवकूटादीनां वायुपु-राणे गङ्गागमनमार्गत्वेनैवग्रहणात् । भागवतादौ तेषां केसरत्वेनगणनाच्च । तेषां केसरान्तर्भूतत्वस्य-

केसरास्तु शतोच्छ्रायास्तेऽशीतिपृथुलायताः ।
चतुर्दशसहस्राणि योजनानां महापुरी ।
मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि ॥ ३१ ॥
तस्यास्समन्ततश्चाष्टौ दिशासु विदिशासु च ।
इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः ३२

विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ।
समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिवः ॥ ३३ ॥
सा तत्र पतिता दिक्षु चतुर्धा प्रतिपद्यते ।
[3]सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ३४

विष्णुचित्तीयम् ।

पुराणे ॥ ३० ॥ इदानीमिलावृतभद्राश्वयोरिलावृतकेतुमालयोश्च मर्यादापर्वतौ दर्शयति—आनीलेति ॥ यत्रापि "पूर्वतो माल्यवान् मेरोः पश्चिमो गन्धमादनः । माल्यसाह्वे पर्वते तु तत्र पूर्वान्तगण्डिका ।

श्रीधरीयम् ।

परित उपक्लृप्ताः" इति शुकोक्तेः ॥ ३० ॥ ३१ ॥ तस्या इति ॥ लोकपालानां पुरः सार्धत्रिसहस्रयोजनमानपरिमिताः "लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः" इति शुकोक्तेः ॥ ३२ ॥ तत्र गङ्गागमनमाह—विष्णुपादेति ॥ त्रिधा विक्रमतो विष्णोर्वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणाधःप्रविष्टबाह्यजलधारा हि । महाद्रवार्घ्यजलधर्मद्रवसंयुता गङ्गा । सा च विष्णोर्वामपादाङ्गुष्ठाद्विनिष्क्रान्ता सती दिवोऽन्तरिक्षात्पतिता ब्रह्मणः पुर्यां पतति ॥ ३३ ॥ सेति ॥ सा तत्र पतिता

विष्णुचित्तीयम् ।

॥ ३१ ॥ ३२ ॥ विष्णुपादविनिष्क्रान्तेति ॥ दिवः आकाशात् । ज्योतिश्चक्रभ्रामकप्रवहानिलेन चतुर्धा विभक्ता ब्रह्मपुर्या बहिश्चतुर्दिक्षु मेरुशृङ्गेषु पतति । तथाऽऽह वायुः "विभज्यमानसलिलास्तैजसेना-

रत्नगर्भीयम् ।

नमरिसाहस्र । अतः क्रममेषामायुष्मतो व्याख्यास्यामीत्युक्तं ॥ ३० ॥ अशीतिपृथुलायताः अशीतियोजनचतुष्कस्थेन विस्तृताः । मेरोरुपरि चतुर्दशसहस्रयोजनातिविस्तृता दिवि स्वर्गेऽपि प्रथिता प्रसिद्धा ब्रह्मणः पुरी वर्तते । भागवते ब्रह्मपुर्याः अयुतयोजनसहस्रमिति दशयोजनसाहस्रपरिमितत्वमुक्तं । तदन्यस्यस्थाद्विपश्चेतिन्यायेन चतुर्दशसहस्रयोजनपरिमितत्वपरमेवेति न तद्विरोधः ॥ ३१ ॥ इन्द्रादिलोकपालानां पुरीप्रमाणं सार्धत्रिसहस्रयोजनं । तदुक्तं भागवते "तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयभागेन पुरोऽष्टावुपक्लृप्ताः" इति ॥ ३२ ॥ विष्णुपादविनिष्क्रान्ता त्रिविक्रमस्य पादविनिष्क्रान्ता । वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टेत्यर्थः । तथोक्तं भागवते "विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तः प्रविष्टा" इत्यादि ॥ ३३ ॥ सा तादृशी गङ्गा इन्दुमण्डलं समन्तात्प्लावयित्वा दिव अन्तरिक्षाद्ब्रह्मणः पुर्यां पतति । तत्र ब्रह्मणः पुर्यां पतिता सा गङ्गा चतुर्दिक्षु चतुर्धा चतुःप्रकारा भूत्वा प्रतिपद्यते गच्छति । तानेव चतुःप्रकारानाह—सीतेति ॥ सीता मेरोः पूर्वभागान्तरिक्षगा भूत्वा शैलाच्छैलं पतति । अत्र क्रमश्च वायुपुराणोक्तः "सीतांशुकेसरश्रेष्ठा कुमुदे वरपर्वते । निपपात महाभागा तस्मादपि कुर-

रत्नगर्भीयम् ।

तुर्येऽपि द्विजोत्तम । वनानि यानि चत्वारि सरांसि च निबोध मे" । इति ॥ ३४ ॥ एवं चक्षुर्भद्रेऽपि

[ पा० ] १ अघमर्षं क घ. न योजेष्वेव वर्तते. २ घ. शाढ्येश्चाम्. ३ [ श्रीध० पा० ] सिता.

१ मत्स्यपुराणेऽदर्शनात्त्वाऽशुद्धिर्ज्ञायते.

पूर्वेण शैला[1]च्छीता तु शैलं यात्यन्तरिक्षगा ।
ततश्च पूर्ववर्षेण भद्राश्वेनैति सार्णवम् ॥ ३५ ॥
तथैवालकनन्दाऽपि दक्षिणेनैत्य भारतम् ।
प्रयाति सागरं भूत्वा सप्त भेदा महामुने ॥ ३६ ॥
[2]चक्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः ।
पश्चिमं केतुमालाख्यं वर्षं गत्वैति सागरम् ॥३७॥
भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् ।
अतीत्योत्तरमम्भोधिं समभ्येति महामुने ॥३८॥

चित्सुखीयम् ।

द्वात्रिंशच्च सहस्राणि तत्रापि शुभमुच्यते । भद्राश्वस्तत्र विज्ञेयो नित्यं मुदितमानसः । गन्धमादनपार्श्वे

श्रीधरीयम् ।

सती चक्षुर्भा भेदं प्राप्नोति । सितेति च पाठान्तरम् ॥ ३४ ॥ पूर्वेणेति ॥ शैलाच्छैलं यातीत्यत्र श्रुकोक्तिः "सीता तु ब्रह्मसदनात्केसराचलादिशिखरेभ्योऽधः प्रस्रवन्ती" इत्यादि । वायुना चोक्तं 'सीतान्तुशिखरभ्रष्टा' इत्युपक्रम्य "एवं शैलसहस्राणि दारयन्ती महानदी । निपपात तदा सीता जठरे सिद्धसेविते । तस्मादुपागता शैलं देवकूटं तरङ्गिणी" इत्यादि ॥ ३५ ॥ तथैवेति ॥ तथैवालकनन्दापीति । केसराचलादिक्रमेण निषधहेमकूटादीनतिक्रम्येत्यर्थः । सप्तभेदा भूत्वेति । ते च भेदाः मात्स्ये प्रोक्ताः "नलिनी ह्लादिनी चैव पावनी चैव प्राच्यगाः । सीताच चक्षुस्सिन्धुश्च तिस्रस्ता वै प्रतीच्यगाः । सप्तमी त्वन्वगा-

विष्णुचित्तीयम् ।

मिलेन सा । मेरोरन्तरकूटेषु निपपात चतुर्ष्वपि" इति ॥ ३३ ॥ ३४ ॥ पूर्वेणेति ॥ शैलाच्छैलमित्यत्र क्रमोक्तौ वायुः "सीताम्बुशिखरभ्रष्टा कुमुञ्जे वरपर्वते । निपपात महाभागा तस्मादपि कुरङ्गम् । तस्मान्माल्यवतं शैलम्" इत्युपक्रम्य "एवं शैलसहस्राणि दारयन्ती महानदी । निपपात तदा सीता जठरे सिद्धसेविते । तस्मादुपगता शैलं देवकूटं तरङ्गिणी" इत्यादि ॥ ३५ ॥ तथैवेति ॥ अलकनन्दां चाभिकृत्य "हेमकूटात्तु कैलासं वेगाधारां ततोऽपि च । हिमवत्सुसमनदी निपपात शिलोच्चये" इत्यादि "कैलासो हिमवांश्चैव मर्यादापर्वतावुभौ" इति वायूक्तेः । गन्धमादनस्य हिमवत्पादाद्रित्वादिमवच्छब्देनोक्तिः ॥ ३६ ॥ चक्षुरिति ॥ चक्षुःप्रकरणे "वैडूर्यात्कपिलं शैलं कपिलाद्गन्धमादनम् । एवं शैलसहस्राणि दारयन्ती महानदी" इत्यन्तेन निषधमप्यत्र संसूच्य "पारियात्रे महाशैले निपपातानुगामिनी" इत्याद्युक्तम् ॥ ३७ ॥ भद्रेति ॥ भद्रां प्रकृत्य "त्रिशृङ्गं शृङ्गकलिलं मर्यादापर्वतं गता । त्रिशृङ्गतः

वृत्तार्थ्यीयम् ।

चैलं । तस्मान्माल्यवतं शैलम्"इत्युपक्रम्य "एवं शैलसहस्राणि दारयन्ती महानदी । निपपात तदा सीता जठरे सिद्धसेविते । तस्मादुपगता शैलं देवकूटं तरङ्गिणी"इत्यादि । ततःशैलाच्छैलगमनानन्तरं ॥ ३४ ॥ ३५ ॥ तथैवालकनन्दाऽपि केसराचलादिक्रमेण निषधहेमकूटहिमवदादीनतिक्रम्य दक्षिणेन मेरोः दक्षिणभागेन भारतवर्षमेत्य सप्तभेदा भूत्वा सागरं प्रविशति । तेष सप्तभेदा मत्स्यपुराणोक्ताः । "स्रोतांसि त्रिपथगायास्तु प्रत्यपद्यन्त सप्तधा । नलिनी ह्लादिनी चैव पावनी चैव प्राच्यगाः । सीताच चक्षुस्सिन्धुश्च तिस्रस्तावै प्रतीच्यगाः । सप्तमी त्वन्वगात्तासां दक्षिणेनभगीरथम्"इति ॥ ३६ ॥ पश्चिमगिरीन् मेरोः पश्चिमभागे स्थितान् केसराचलादिमाल्यवदन्तान् ॥ ३७ ॥ मेरोरुत्तरगिरीन्

रत्नगर्भीयम् ।

केसराचलान् वर्षमर्यादागिरींश्चातीत्य पश्चिमोत्तरसमुद्रौ गच्छतः ॥ ३७ ॥ केचित्तुमर्यादाशैलत्वाद्गत

[ पा० ] १ ग. ङ. ञ. शैलाच्चीर्ले तु धीता । क. शैलच्छैलाय. २ ग. सा चभ्रु.

आनीलनिषधायामौ माल्यवद्गन्धमादनौ ।
तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ॥३९॥
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ।
पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥४०॥

चित्सुखीयम् ।

तु सूबेरेमरगन्धिका । द्वात्रिंशच्च सहस्राणि योजनैः सर्वतः समा । तत्र ते शुभकर्माणः केतुमालाकृतिः स्मृतः"। इति मत्स्यपुराणदर्शनात् ॥ ३९ ॥ मर्यादांशे या नव पूर्वादिदिक्षु द्वन्द्वशः क्रमेण दर्शयति—

श्रीधरीयम् ।

ङ्गा दक्षिणेन भगीरथम्"। इति ॥ ३६ ॥ ३७ ॥ ३८ ॥ एवं तावद्दक्षिणोत्तरतो हिमादिभिष्षड्भिर्मर्यादागिरिभिर्विभक्तानि भारतादिसप्तवर्षाण्युक्तानि । इलावृतमेरुमूर्धरचनाविशेषगङ्गागमनप्रकाराश्चोक्ताः । इदानीं [illegible] "भद्राश्वं पूर्वतो मेरोः केतुमालं तु पश्चिमे" इति पूर्वोक्तयोर्वर्षयोर्मर्यादापर्वतानाह—आनीलेति । उत्तरो नीलः । दक्षिणो निषधः । तत्पर्यन्त आयामो दैर्घ्यं ययोस्तावानीलनिषधायामौ । तत्र पश्चिमो माल्यवान् । पूर्वो गन्धमादनः । अथवा । "इलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ" इति शुकोक्तेः । केचित्त्वनयोर्वैपरीत्यमाहुः तयोर्मध्यगतो मेरुः इलावृतेन सहित इति द्रष्टव्यम् । "मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम्" इत्युक्तत्वादनेन चतुस्त्रिंशद्योजनसहस्रायामौ तावित्युक्तं भवति । तदाह वायुः "चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः । उदग्दक्षिणतश्चैव आनीलनिषधायतः" । इत्यादि ॥ ३९ ॥ भारता इति ॥ लोको जम्बूद्वीपं तदेव पद्मं तस्य पत्राणि भारत-

विष्णुचित्तीयम् ।

परिभ्रष्टा जाह्नवी पर्वतं गता" इत्यादि । भारतवर्षे अलकनन्दाभेदाः सप्त मात्स्योक्ताः "नलिनी ह्लादिनी चैव पावनी प्राच्यगास्त्रयः । सीता चक्षुश्च सिन्धुश्च तिस्रस्ता वै प्रतीच्यगाः । सप्तमी त्वन्वगाद्गङ्गा दक्षिणेन भगीरथम्" इति ॥ ३८ ॥ आनीलेति ॥ पूर्वं केसरेषूक्तौ माल्यवद्गन्धमादनौ भद्राश्वकेतुमालवर्षपर्वतौ दक्षिणोत्तरौ चतुस्त्रिंशत्सहस्रायामौ । अत्र वायुः "चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः । उदग्दक्षिणतश्चैव आनीलनिषधायतः । चत्वारिंशत्सहस्राणि परिघूढो महीतलात् । सहस्रमयगावश्च तावदेव च विस्तृतः । पूर्वेण माल्यवाञ्छैलस्तत्प्रमाणः प्रकीर्तितः ।" इति ॥३९॥ भारता

दत्तात्रेयीयम् ।

मेरोरुत्तरभागेस्थितान् केसराचलादिश्रृङ्गवदन्तान् । कुरून् कुरुवर्षस्थदेशान् ॥ ३८ ॥ एवं तावद्दक्षिणोत्तरतो हिमाचलादिभिः षड्भिः मर्यादागिरिभिर्विभक्तानि भारतादिसप्तवर्षाण्युक्तानि । इदानींतु "भद्राश्वं पूर्वतो मेरोः केतुमालं तु पश्चिमे" इतिपूर्वोक्तयोर्वर्षयोर्मर्यादापर्वतानाह—आनीलेति ॥ इलावृतादुत्तरतो नीलः दक्षिणतो निषधः तत्पर्यन्त आयामो दैर्घ्यञ्च ययोस्तौ तथा । अत्रेलावृतात्पश्चिमे स्थितः केतुमालवर्षपर्वतो माल्यवान् । पूर्वभागस्थभद्राश्ववर्षमर्यादापर्वतो गन्धमादन इति द्रष्टव्यं । तथाचोक्तं भागवते "इलावृतमपरेण पूर्वेणच माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रपृथू केतुमालभद्राश्वयोः सीमानं विदधाते" इति । अनेन माल्यवद्गन्धमादनयोर्दक्षिणोत्तरतश्चतुस्त्रिंशद्योजनदैर्घ्यलाभात्केतुमालभद्राश्वयोरपि दक्षिणोत्तरत्वस्तावान्विस्तार इत्युक्तं भवति । वायुपुराणेऽपि "चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः । उदग्दक्षिणतश्चैव आनीलनिषधायतः"इत्यादि ॥ ३९ ॥ मर्या-

रत्नगर्भीयम् ।

इत्यमेनापि संबध्यते । तेन गन्धमादनादिमर्यादापर्वतेभ्यः परत एव भद्राश्वादिचतुर्वर्षसीमामूल-

जठरो देवकूटश्च मर्यादापर्वतावुभौ ।
तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥४१॥
गन्धमादनकैलासौ पूर्वपश्चायतावुभौ ।
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥४२॥

विष्णुचित्तीयम् ।

जठर इत्यादिना ॥ माल्यवतः पूर्वे भद्राश्वसीमानभूते—जठरदेवकूटौ मर्यादापर्वतौ स्थितौ ॥ ४१ ॥ इदानीं भारतवर्षस्य मर्यादापर्वतावाह—गन्धमादनेति ॥ तावपि हिमवतो दक्षिणतो भारतवर्षसीमानभूते पूर्वपश्चायतौ स्थितौ । तत्राशीतियोजनायामावित्यपि द्रष्टव्यं । आयामशब्देन विस्तारलासं चाभि-

श्रीधरीयम् ।

कुरुवर्षयोर्भद्राश्वकेतुमालयोः परस्परं समानत्वादाभिमुख्येनावस्थानाच पश्चात्स्वयमुक्तम् ॥ ४० ॥ इदानीं मेरोश्चतुर्दिक्षु द्वौ द्वौ परिधिपर्वतौ प्रमाणसंस्थानाभ्यां दर्शयति—जठर इत्यादिपञ्चभिः—जठर इति ॥ देवकूटश्चेति च पाठः । इलावृतवर्षे एवान्तर्विभागहेतुत्वान्मर्यादावर्षपर्वतावित्ति ध्येयम् । नववर्षमर्यादापर्वतानां पूर्वमुक्तत्वादन्यस्यासम्भवात् ॥ ४१ ॥ गन्धमादनकैलासाविति ॥ अशीतियोजन

विष्णुचित्तीयम् ।

इति ॥ मर्यादाशैलयाहारा इति । मर्यादापर्वतयोऽष्टौ जठरादाः तेभ्यो बहिर्भद्राश्वादीनि चतुःपत्त्राणि । तेषु च मर्यादाद्रिषु माल्यवतः प्राच्यां जठरः तत्प्राच्यां देवकूटः एवं हिमवतो दक्षिणतः कैलासस्ततो गन्धमादनः । तौ च हिमवत्समायामौ । तथा गन्धमादनवर्षाद्रेः पश्चिमो निषधः तद्वहिः पा-

रत्नगर्भीयम् ।

रियात्रायाः सर्वमर्यादापर्वतानेनोक्तनीलनिषधाग्रदेशैलाद्बहिर्विभागमानाः भारतादिवर्षभेदाः लोकपद्मस्य भूपद्मस्य पत्त्राणि । भारतकुरुवर्षयोर्भद्राश्वकेतुमालयोश्च परस्परं समानत्वादाभिमुख्येनावस्थानाच पश्चात्स्वयमुक्तं ॥ ४० ॥ इदानीं मेरोश्चतुर्दिक्षु द्वौद्वौपरिस्तरणपर्वतावाह—जठरइत्यादिना ॥ मर्यादापर्वतौ उभौ । इलावृतवर्षस्यान्तर्विभागहेतुत्वान्मर्यादापर्वतावित्युक्तं । नववर्षमर्यादापर्वतानां पूर्वमेवोक्तत्वात् । तौ जठरदेवकूटौ दक्षिणोत्तरायामौ दक्षिणोत्तरदीर्घौ । दैर्घ्यमेवाह—आनीलनिषधायताविति ॥ अत्र आनीलनिषधायतावित्युक्तिश्चतुस्त्रिंशद्योजनात्मकनिषधगाध्यदेशव्यापदैर्घ्याभिप्रायेण न भवति । किन्तु तस्मिन्मेरुमध्यदेशे अष्टादशसहस्रयोजनात्मकबहुदेशव्यापदैर्घ्याभिप्रायेण । यथाश्रुतार्थत्वे "अष्टादशयोजनसाहस्रमुदगायतौ" इतिभागवतवचनविरोधात् । भागवतविरोधस्यापरिहार्यत्वं तत्प्रमाणकं प्रागेवोक्तं । यद्वा आनीलनिषधे नीलनिषधावधिके तयोर्मध्यप्रदेशे आयतौ दीर्घौ । दैर्घ्यप्रमाणं च अष्टादशसाहस्रयोजनात्मकं भागवतोक्तं द्रष्टव्यं । इदमेव च इतरेषां पण्णामपि दैर्घ्यप्रमाणं ॥ ४१ ॥ गन्धमादनकैलासौ मेरोर्दक्षिणभागस्थितपरिस्तरणपर्वतौ । पूर्वपश्चायतौ पूर्वपश्चिमदीर्घौ । अशीतियोजनायामौ अशीतियोजन आयामो विस्तार उन्नतत्वं च ययोस्तौ तथा । अशीतिपदं च द्विसहस्रपरं । "द्विसहस्रयोजनोत्तुङ्गौ" इति भागवतोक्तेः । इदं च विस्तारतुङ्गप्रमाणं पूर्वोक्तजठरदेवकूटयोरन्यमाणचतुर्णाञ्च समं द्रष्टव्यं । अर्णवान्तर्व्यवस्थितौ माल्यवद्गन्धमादनमध्यादर्णवान्तर्व्यवस्थितौ ॥ ४२ ॥

रत्नगर्भीयम् ।

स्थिता जठरादयः पर्वताः प्रतीयन्ते । पाण्डवानां तीर्थयात्रायां हिमवतो दक्षिणत एव गन्धमादनारोहणश्रवणात् । अशीतियोजनायामावित्यत्र अशीतिसहस्रयोजनेति ज्ञेयं । मेरोश्चतुर्दिशमिति व्यवधानेऽपि

[ पा० ] १ ग, ट, घ, ज—क. देवकूटश्च. २ ख, प, इ, ज, ग—ट. पश्चायतावुभौ । ग. प्रागायतं मन्युभौ.

निषधः पारियात्रश्च मर्यादापर्वतावुभौ ।
मेरोः पश्चिमदिग्भागे यथा पूर्वे तथा स्थितौ ४३ ॥
त्रिशृङ्गो जारुधिश्चैव उत्तरौ वर्षपर्वतौ ।
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥ ४४ ॥
इत्येते मुनिवर्योक्ता मर्यादापर्वतास्तव ।
जठराद्याः स्थिता मेरोस्तेषां द्वौ द्वौ चतुर्दिशम् ४५॥
मेरोश्चतुर्दिशं ये तु प्रोक्ताः केसरपर्वताः ।
शीतान्ताद्या मुने तेषामतीव हि मनोरमाः ।
शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः ४६ ॥
सुरम्याणि तथा तासु काननानि पुराणि च ।
लक्ष्मीविष्ण्वग्निसूर्यादिदेवानां मुनिसत्तम ।
तास्वायतनवर्याणि जुष्टानि वरकिन्नरैः ॥ ४७ ॥
गन्धर्वयक्षरक्षांसि तथा दैतेयदानवाः ।
क्रीडन्ति तासु रम्यासु शैलद्रोणीष्वहर्निशम् ४८

श्रीधरीयम् ।

धानं ॥ ४२ ॥ केतुमालस्य मर्यादापर्वतावाह—निषध इति ॥ ४३ ॥ कुरुवर्षस्य मर्यादापर्वतावाह—त्रिशृङ्ग इति ॥ तत्रापि पूर्ववत्तद्वर्षपर्वतभूमौ मर्यादापर्वतावस्थानं द्रष्टव्यं । वायुपुराणे ▮ विशेषः स्मर्यते "चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः । उदग्दक्षिणतश्चायमानीलनिषधायतः । चत्वारिंशत्सहस्राणि परिवृद्धो महीतलात् । सहस्रमवगाढश्च तावदेव च विस्तृतः । पूर्वेण माल्यवाञ्छैलस्तत्प्रमाणः प्रकीर्तितः । दक्षिणेन तु नीलस्य निषधस्योत्तरे च सः । तेषां गिरिसहस्राणामनेकेषां महोच्छ्रयाः । दिक्षु सर्वासु एवं ते मर्यादापर्वताः स्थिताः । हस्तवाद्भुविकृष्टाश्च एकैकस्तेषु पर्वतः । धारा आभ्यन्तरीये तु त्रिसहस्रान्तरा मताः" इति ॥ ४४ ॥ सिद्धाः प्राप्ताणिमाद्यैश्वर्याः । चारणाः देवगायकाः

श्रीधरीयम् ।

आयामो विस्तारो ययोस्तौ माल्यवद्गन्धमादनयोर्मध्ये अर्णवान्तर्व्यवस्थितौ ॥ ४२ ॥ निषध इति ॥ पूर्वे जठरदेवकूटौ यथा आनीलनिषधायतौ तथैव व्यवस्थितौ ॥ ४३ ॥ त्रिशृङ्ग इति ॥ त्रिशृङ्गो जारुधिश्चैव उत्तरे यथा दक्षिणे तथा स्थितौ "अष्टाभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः" इति शुकोक्तिः ॥ ४४ ॥ ४५ ॥ मेरोरिति—तेषां शैलानामन्तरे मध्ये द्रोण्यः दरीविशेषाः सन्ति ।

विष्णुचित्तीयम् ।

रियात्रः । एवं शृङ्गिण उत्तरतस्त्रिशृङ्गस्ततो जारुधिः । अत्रार्थे प्राग्दर्शितो वायुपुराणप्रवाहक्रमः प्रमाणम् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ इत्येत इति ॥ एते जठराद्या मर्यादापर्वता उक्ताः । मेरोश्चतुर्दिशं पद्ममूलेषु येषां द्वौ द्वौ स्थितावुक्तौ ॥ ४५ ॥ मेरोरिति ॥ द्रोण्यः पुष्करिण्यः "श्रीसरस्वत्यपर्णश्च केसरं रमणी तथा" इत्याद्याः । अणिमाद्यष्टगुणैश्वर्याः सिद्धाः । चारणा देवगायकाः ॥ ४६ ॥ सुरम्याणीति ॥ काननानि "श्रीवनं किंशुकवनं नलं च पनसं तथा" इत्यादीनि । पुराणि "हैमचित्रं

दत्तात्रेयीयम् ।

यथा पूर्वे मेरोः पूर्वभागे जठरदेवकूटौ दक्षिणोत्तरायामौ तथा निषधपारियात्रावपि स्थितावित्यर्थः ॥४३॥ उत्तरे मेरोरुत्तरभागे । वर्षपर्वतावित्यावृत्तवर्षस्थितौ पर्वतौ । इदं च विशेषणमितरपरिस्तरणपर्वतसाधारणं द्रष्टव्यं ॥ ४४ ॥ जठराद्या एते मर्यादापर्वतास्तव प्रोक्ताः । एषां जठरादीनां मध्ये मेरोश्चतुर्दिशं द्वौ द्वौ स्थितावित्यर्थः । अनेन तेषां परिस्तरणसाम्यमुक्तं । तदुक्तं भागवते "अष्टाभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः" इति । अत्र गन्धमादननिषधजारुधिशब्दैर्भागवतोक्तकरवीरपवनमकरनागभेदेन गृह्णन्त इति न तद्विरोधः ॥ ४५ ॥ मेरोश्चतुर्दिशं शीतांभाद्या ये केसरपर्वताः प्रोक्तास्तेषां शैलानामन्तरे मध्ये द्रोण्यो दरीविशेषाः सन्ति ता अतीव मनोहराः अतएव सिद्धचारणसेविताः ॥ ४६ ॥ केतुमालादिषु कामदेवान्तर्गतकामदेवस्वरूपादिना पूज्य इति रूपान्तराण्येवोक्तानि । वराहादि-

[ पा० ] १ ग. ङ—म. ठ. ड. पूर्वो. २ ण. उत्तरे. ३ ग. शिताद्याश्च । थ. शीताद्याश्च. ४ ग. द. नर । ग. सुर.

भौमा ह्येते स्मृताः स्वर्गा धर्मिणामालया मुने ।
नैतेषु पापकर्माणो यान्ति जन्मशतैरपि ॥ ४९ ॥
भद्राश्वे भगवान्विष्णुरास्ते हयशिरा द्विज ।
वराहः केतुमाले तु भारते कूर्मरूपधृक् ॥ ५० ॥
मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते जनार्दनः ।
विश्वरूपेण सर्वत्र सर्वः सर्वत्रगो हरिः ॥ ५१ ॥
सर्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः ॥ ५२ ॥
यानि किंपुरुषादीनि वर्षाण्यष्टौ महामुने ।
न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम् ॥ ५३ ॥
स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः ।
दश द्वादशवर्षाणां सहस्राणि स्थिरायुषः ॥ ५४ ॥
न तेषु वर्षते देवो भौमान्यम्भांसि तेषु वै ।
कृतत्रेतादिकं नैव तेषु स्थानेषु कल्पना ॥ ५५ ॥
सर्वेष्वेतेषु वर्षेषु सप्तसप्तकुलाचलाः ।
नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम ॥ ५६ ॥

इति श्रीमद्विष्णुमहापुराणे-पूर्वभागे द्वितीयांशे
द्वितीयोऽध्यायः ॥ २ ॥

चित्सुखीयम् ।

॥ ४६ ॥ निरातङ्काः निर्भयाः । निरामया इति वा ॥ ५४ ॥ एतेषु नवस्वपि वर्षेषु प्रत्येकं सप्तसप्त कुलपर्वताः । वर्षाचलेन सह गणने स्वष्टौ भवन्ति ॥ ५६ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां द्वितीयांशे द्वितीयोऽध्यायः ॥ २ ॥

श्रीधरीयम् ।

सिद्धा अणिमाद्यैश्वर्ययुक्ताश्चारणा देवगायकाः तैस्सेविताः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥ ५३ ॥ स्वस्था इति ॥ नीरोगाः वर्षाणां सहस्राणि दश वा द्वादश वा स्थिरायुष इति विकल्पोक्तिरिलावृतादिदेशभेदव्यवस्थया ॥ ५४ ॥ नेति ॥ तेषु देवो न वर्षति ततो भौमान्येवांभांसि नित्यं सन्ति ॥ ५५ ॥ सर्वेष्विति ॥ कुलाचलाः मुख्याः पर्वतास्तेभ्यः प्रसूता या नद्यः ताश्च शतशः सन्ति ॥ ५६ ॥ इति श्रीश्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे द्वितीयोऽध्यायः ॥ २ ॥

विष्णुचित्तीयम् ।

भूलवनं नक्षपार्श्वे सुनाभकम्" इत्यादीनि ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ स्वस्था इति ॥ दश द्वादशेत्यनियमोक्तिः लैङ्गाद्युक्तस्थानविशेषाच्चतुर्दशसहस्रपर्यन्तमायुःस्थितिं लक्षयति ॥ ५४ ॥ ५५ ॥ ५६ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां द्वितीयांशे द्वितीयोऽध्यायः ॥ २ ॥

दत्तात्रेयीयम् ।

रूपमपि तत्र पूज्यमित्यविरोधः ॥ ५० ॥ सर्वत्र सर्ववर्षेषु विश्वरूपेण नानारूपेण सर्वः पूर्णः सर्वेश्वरो हरिरास्ते । तानिचरूपाणि भागवतोक्तप्रकारेण द्रष्टव्यानि ॥ ५१ ॥ अखिलात्मकः अखिलस्यादानादिकर्ता ॥ ५२ ॥ निरातङ्का नीरोगाः । वर्षाणां सहस्राणि दश द्वादशवा स्थिरायुष इति विकल्पोक्तिरिलावृतादिदेशभेदव्यवस्थया ॥ ५४ ॥ तेष्वष्टवर्षेषु देव इन्द्रो नवर्षति । किन्तु तेषु भौमान्येवांभांसि नित्यं सन्तीत्यर्थः । कृतत्रेतादिकल्पना कृतत्रेतादिरूपा युगकल्पना ॥ ५५ ॥ कुलाचलाः मुख्यपर्वताः तेभ्यः प्रसूता या नद्यस्ताश्च शतशः सन्ति ॥ ५६ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां द्वितीयांशे द्वितीयोऽध्यायः ॥ २ ॥

रत्नगर्भीयम् ।

बोद्धव्यमिति वदन्ति ॥ ४२ ॥ भौमा भूम्युद्भवाः । स्वर्गाः सुखविशेषास्तदाश्रयाः ॥ ४९ ॥ विश्वरूपेण व्यापकभावेन सर्वत्र । तत्रहेतुः सर्वआधाराधेयरूपः ॥ ५१ ॥ इति श्रीरत्नगर्भ०विर०श्रीविष्णुपु० व्याख्यासारे द्वितीयांशे द्वितीयोऽध्यायः ॥ २ ॥

[ पा० ] १ ख. घ—ठ. पापकर्तारो. २ ख. ग. ङ—ज झ—ठ. सनातन. ३ ख—ङ. झ—ठ. सर्वेश्वरो.

## तृतीयोऽध्यायः ॥ ३ ॥

भारतवर्षस्थितिनिरूपणम् ॥ १ ॥ जंबूद्वीपे भारतवर्षस्य श्रैष्ठ्यकथनम् ॥ २ ॥ अत्र भारते वर्षे मनुष्यजन्मप्रशंसा ॥ मनुष्याणां स्थानाद्यनेककर्मफलमाहात्म्यवर्णनं च ॥ ३ ॥

श्रीपराशर उवाच ॥
उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ १ ॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने ।
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ॥ २ ॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥ ३ ॥
अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयान्ति वै ।
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ॥ ४ ॥

### श्रीधरीयम् ।

जम्बूद्वीपस्य संस्थानमुक्तं वर्षविभागतः । तत्रापि भारतं श्रेष्ठमाह तत्रच पुंवपुः ॥ उत्तरमिति ॥ भारती भरतस्य संबन्धिनी सन्ततिः ॥ १ ॥ नवयोजनेति ॥ तत्रैव श्रेयःसाधनमनुष्ठेयमन्यत्र तदसंभवादिति दर्शयन्नाह—कर्मभूमिरिति । स्वर्गमपवर्गं च गच्छतां पुंसां उभयसाधनभूतानां प्रवृत्तिनिवृत्तिकर्मणां भूमिरियं किंपुरुषादिवर्षाष्टके पुष्करद्वीपे च कर्माणि एवाभावात् प्लक्षादिद्वीपपञ्चके च निवृत्तमेव । नान्यत् । वक्ष्यतिहि "यथोक्तकर्मकर्तृत्वात्स्वाधिकारक्षयाय हि । तत्र ते तु कुशद्वीपे ब्रह्मभूतं जनार्दनम् । यजन्तः क्षपयन्त्युग्रमधिकारं फलप्रदम् ।" इति ॥ २ ॥ समस्तपुरुषार्थसाधने गङ्गादिनदीनां जन्मभूमयश्शैलाश्चात्रैव सन्तीत्याह—महेन्द्र इति ॥ ३ ॥ तस्माच्छुभाशुभं सर्वमत्रत्येनैव कर्मणा प्राप्यत इत्याह—अत इति ॥ अतोऽस्माद्वर्षात्स्वर्गः स्वर्गलोकः प्राप्यते । क्रमशुक्तिं चास्मात्प्रयान्ति ॥ ४ ॥

### विष्णुचित्तीयम् ।

उत्तरमिति ॥ समुद्रस्य पुरातनस्य न तु सगरसुतखातस्य । भारती भरतस्य राज्ञः सम्बन्धिनी ॥ १ ॥ नवयोजनेति ॥ विस्तारः दक्षिणोत्तरतः । आयामस्तु हिमवत्पार्श्वे हिमवता समः दक्षिणतः किञ्चित्किञ्चिन्न्यूनः ॥ २ ॥ ३ ॥ अत इति ॥ अतो मुक्तिं प्रयान्ति चेति वचनम् अस्मिन्भारतवर्षे मुक्तिः स्यादित्येतावदुक्तं । न त्वन्यत्र निषेद्धुं । कर्मभूमेरन्यत्रापि ब्रह्मविद्यासाध्यस्य मोक्षस्योपपत्तेः । सूत्रकारेण

### दत्तात्रेयीयम् ।

यानि किंपुरुषादीनीत्यादिना अष्टवर्षाणां तत्रत्यप्रजानां च स्थितिरुक्ता । इदानीं भारतवर्षस्य तत्रत्यप्रजानांच स्थितिमाह—उत्तरमित्यादिना ॥ लवणसमुद्रस्योत्तरं हिमाद्रेर्दक्षिणं तद्भारतं नाम वर्षं । भारती ऋषभपुत्रभरतसम्बन्धिनी ॥ १ ॥ विस्तारो दक्षिणोत्तरः । स्वर्गमपवर्गंच गच्छतां कर्मभूमिः कर्मकरणभूमिः । स्वर्गापवर्गसाधनकर्मानुष्ठानमत्रैव कर्तव्यं अन्येषु तदसंभवादितिभावः ॥ २ ॥ अत्र भारतवर्षे ॥ ३ ॥ प्रवृत्तिकर्मानुष्ठाने इतो भारतवर्षात्स्वर्गं प्राप्नुवन्ति । निवृत्तिकर्मानुष्ठाने मुक्तिं प्रया-

### रत्नगर्भीयम् ।

नदीनां पर्वतानां च यथास्थानं विभागशः । भारतस्य प्रशंसाच तृतीय इति वर्ण्यते ॥ अपित-

[ पा० ] 1 ग. अतो मुक्तिं ।

इतः स्वर्गश्च मोक्षश्च मध्यं चान्तश्च गम्यते ।
न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते ॥५॥
भारतस्यास्य वर्षस्य नवभेदान्निशामय ।
इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान् ॥ ६ ॥
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ७ ॥

चित्सुखीयम् ।

मध्यमन्तरिक्षं । अन्तः पातालः । भारतादन्यत्र कर्म न विधीयते ॥ ५ ॥ आसां सरितां सलिलं

श्रीधरीयम् ।

इत इति ॥ स्वर्गश्च भौम इलावृतादिः । मोक्षश्च सद्यो मुक्तिः । मध्यमन्तरिक्षलोकः । अन्तः पातालादिरित एव गम्यते । नान्यतः । तत्साधनस्यात्रैव सुलभत्वात् । यस्मादन्यत्र भूमौ वर्षान्तरादौ शास्त्रेषु कर्म न विधीयते ॥ ५ ॥ ६ ॥ नागद्वीप इति ॥ अयमिति समुद्रप्रान्तवर्ती द्वीपः सागरसंवृतः प-

विष्णुचित्तीयम् ।

तदुपर्यपीत्यादिना सूत्रेण देवादीनामपि ब्रह्मविद्याधिकारस्योक्तत्वात् ॥ ४ ॥ उक्तमर्थमुपपादयति—इत इत्यादिना ॥ मध्यम् अन्तरिक्षादि । अन्तः नरकः । पूर्वं फलकथनम्, अत्र तदाधारलोककथनमित्यपुनरुक्तं । न खल्वित्यादि । खलुशब्दः प्रसिद्धपरः । अन्यत्र भूमौ किंपुरुषादिवर्षाष्टके पुष्करद्वीपे च कर्म न विधीयते अर्थात् निषिध्यते च । प्लक्षादिद्वीपपञ्चके तु आपवर्गिकेतरत्कर्म न विधीयते । आपवर्गिककर्मणां तत्राप्यनुष्ठानोक्तेः "यथोक्तकर्मकर्तृत्वात् स्वाधिकारक्षयाय ते । यजन्तः क्षपयन्त्युग्रमधिकारं फलप्रदम्" इति वक्ष्यमाणत्वात् । "दानानि यात्र दीयन्ते परलोकार्थमादरात्" इत्युक्तेर्भारतविषयत्वाच्च ॥ ५ ॥ भारतस्येति ॥ समुद्रवेलामारभ्याहिमवदन्तमिन्द्रद्वीपाद्या मध्ये मध्ये सागरसुतरणासान्तरिताः सहस्रयोजनविस्तारा भारतवर्षान्तरद्वीपा नव । तेन सागरसंवृतत्वं नवानां । न त्वेकस्यैवास्य नवमस्य भारताख्यस्य "भारतस्यास्य वर्षस्य नवभेदान्निबोधत । सागरान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम्" इति मात्स्योक्तेः ॥ ६ ॥ नागद्वीप इति ॥ अयन्तु द्वीपो भारताख्यः । तदुक्तं मायदे

दत्तात्रेयीयम् ।

त्वित्यर्थः । पापानुष्ठाने तिर्यक्त्वं नरकं चाप्यस्माद्वर्षाद्यान्ति प्राप्नुवन्ति ॥ ४ ॥ स्वर्गो भौमः इलावृतादिप्रदेशः । मोक्षः कर्मक्षयः । मध्यं अन्तरिक्षादिलोकः । अन्तस्तमः । तस्यापि लोकत्रयान्ते विद्यमानत्वात् । अन्यत्र भूमौ किंपुरुषादिवर्षाष्टके पुष्करद्वीपे च । मर्त्यानां कर्म शास्त्रेण न विधीयते ॥ ५ ॥ नवभेदान् नवभेदभेदान् । तानेवाह—इन्द्रद्वीप इत्यादिना ॥ ६ ॥ अयं समुद्रप्रान्तवर्ती भारताख्यो

रत्नगर्भीयम् ।

स्मात् कर्मसाध्यानन्यान्नपि लोकानित्यर्थः ॥ ४ ॥ इहैव प्रवृत्तिनिवृत्त्युभयकर्मसाध्यस्वर्गापवर्गादिप्राप्तिमनुवदन्नन्यत्रतदभावं दर्शयति—इत इति ॥ केवला मुक्तिश्चान्यत्रापि स्यात् । "तदुपर्यपि बादरायणः सम्भवात्" इति देवादीनामपि ब्रह्मविद्याधिकारस्य सूचनात् । मध्यो भूर्लोकः । अन्तो नरकादिः । कर्म उभयात्मकं नविधीयते शास्त्रेण नप्रतिपाद्यते ॥ ५ ॥ अयंतु सम्बाराश्रयदेशे भारताख्यस्तेषां नवम इति संबन्धः । तुशब्दादन्योऽपि सागरान्तरितः सहस्रयोजनात्मकश्चेत्यर्थः । केचिद्भरताख्यान्तरं कुर्वते । तथाहि । भारतस्यास्य वर्षस्य नवभेदाः प्रकीर्तिताः । अष्टाभिर्गिरिभिर्भिन्ना येत्वगम्याः परस्-

[ पा० ] १ ख. ह. च. कुशेरुश्च । ज. ट—ड. कशेरुमांस्तथा. २ घ. ज. ट—ड. वर्णो. ३ क. ग—त. ठ. ड. वारुण°. ४ [ वि० पा० ] द्वीपाः सागरसंवृता°.

योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरात् ।
पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः ८ ॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः ।
इज्यायुधवणिज्याद्यैर्वर्तयन्तो व्यवस्थिताः ॥ ९ ॥
शतद्रूचन्द्रभागाद्या हिमवत्पादनिर्गताः ।
वेदस्मृतिमुखाद्याश्च पारियात्रोद्भवा मुने ॥१०॥
नर्मदा सुरसाद्याश्च नद्यो विन्ध्याद्रिनिर्गताः ।
तापीपयोष्णीनिर्विन्ध्याप्रमुखा ऋक्षसंभवाः ११
गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ।
सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः १२॥
कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः ।
त्रिसामा ऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः ॥
ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवाः ।
आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः ॥ १४॥

श्रीधरीयम् ।

समुद्रेणैकीभूतेन सागरेण सगरसुतखातेन संवृत इति ज्ञेयम् । सामान्यतः सगरसुतखातसागरसंवृतत्वं सहस्रयोजनान्तरतः । प्रत्येकमन्येषामस्त्येव । यथाह वायुः "भारतस्यास्य वर्षस्य नव भेदान्निबोधत । सागरान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम्" इति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ १३ ॥ ऋषिकुल्येति । अत्र क्रमाविवक्षया शुक्तिमत्पादनिःसृतानां पश्चान्निर्देशः ॥ १४ ॥

विष्णुचित्तीयम् ।

"इन्द्रः कशेरुस्ताम्रवर्णो गभस्तिमान् नागः सौम्यो गान्धर्वो वारुणो भारतः" इति । सागरसंवृत इति । द्वीपाः सागरसंवृता इति वा पाठः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

दत्तात्रेयीयम् ।

नवमो द्वीपः सागरसंवृतः समुद्रेणैकीभूतेन सागरेण सगरसुतखातेन संवृतः । दक्षिणोत्तरयोजनसहस्रप्रमाणश्च । सगरसुतखातसागरसंवृतत्वं सहस्रयोजनपरिमितत्वमन्येषामप्यष्टद्वीपानां साधारणं । तदुक्तं वायुपुराणे "इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् । नागः सौम्योऽथ गान्धर्वो वारुणो भारतस्तथा" इति । सागरसंवृतः । एकैकस्य योजनसहस्रप्रमाणमिति । इन्द्रद्वीपादीनामष्टानां सागरान्तरत्वेन तत्परिवेष्टितत्वात्सागरसंवृतत्वं नवमस्य भारतसंज्ञस्य सागरान्तरितत्वेन तत्परिवेष्टितत्वोक्तिः । भागवते एतेषां मध्येऽष्टद्वीपानां एवं नामभेदोक्तिः भारताख्यद्वीपव्यतिरिक्तद्वीपपरेति न तद्विरोधः ॥७॥८॥ यस्य भारताख्यनवमद्वीपस्य मध्ये मध्यदेशे ब्राह्मणाद्याश्चत्वारो वर्णा भागशः पृथक् इज्यादिभिः स्वस्वविहितकर्मभिः वर्तयन्तो व्यवस्थिताः । आदिपदात्त्रिवर्णशुश्रूषारूपकर्म गृह्यते ॥ ९ ॥ शतद्रूचन्द्रभागाद्याः शादितः । इदानीं भारतवर्षस्थितकुलपर्वतप्रभवनदीभेदानाह—वेदस्मृतीत्यादिना ॥ १० ॥ ११ ॥ १२ ॥ अत्र क्रमाविवक्षया शुक्तिमत्पादनिःसृतानां नदीनां पश्चान्निर्देशः ॥ १३ ॥ उपनद्य अल्पप्रवाहाः ॥ १४ ॥

रत्नगर्भीयम् ।

रम् । हिमाचलादासमुद्रं गिरयस्ते व्यवस्थिताः । याम्योत्तरेण राजेन्द्र नामतस्तान्निबोध मे । सुमाली हेममाली च शम्भुः पार्तसुराकरः । वैडूर्यपर्वतश्चैव राजतो मणिमान्गिरी । इन्द्रद्वीपः कशेरुमांस्ताम्रपर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः । तेषां तु नवमो मध्ये द्वीपो नाम्ना तु मध्यमः । अस्मिन्मन्वन्तरे क्षिप्तः सागरैस्तु चतुर्दिशम् । वैडूर्यपर्वतात्पूर्वे दक्षिणेन हिमालयात् । पश्चाच्च काञ्चनगिरेरुदगेव तु लावणात् । वेष्टितैः सागरैः सर्वैर्नानासत्त्वालयैर्नृप । इत्यत्र व्याख्याने चतुर्दिशं खनने सहस्रयोजनत्वानुपपत्तिः ॥ ७ ॥ लक्षयोजनविस्तारमिति । इत्याद्युक्तं विहाय षड्पूर्वैः

[ पा० ] १ घ. स्थिताः. २ घ. शुद्र ३ घ. याद्या. ४ ख. ट. ठ. प्रभवाश्च. ५ ग. विपाशा ऋषिकुल्याद्या.

तास्विमे कुरुपाञ्चाला मध्यदेशादयो जनाः ।
पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥ १५ ॥
पुण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च सर्वशः ।
तथापरान्ताः सौराष्ट्राः शूराभीरास्तथार्बुदाः १६
कारूषा मालवाश्चैव पारियात्रनिवासिनः ।
सौवीराः सैन्धवा हूणाः साल्वाः कोसलवासिनः॥
माद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा ।
आसां पिबन्ति सलिलं वसन्ति संहिताः सदा ।
समीपतो महाभाग हृष्टपुष्टजनाकुलाः ॥ १८ ॥
चत्वारि भारते वर्षे युगान्यत्र महामुने ।
कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न कचित् ॥१९॥

तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्वनः ।
दानानि चात्र दीयन्ते परलोकार्थमादरात् २०॥
पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ।
यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ॥ २१ ॥
अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः ॥ २२॥
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥२३॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ २४ ॥

चित्सुखीयम् ।

पिबन्ति वसन्ति च । सास्विसन्वयः ॥ १८ ॥ स्वर्गश्चापवर्गश्च स्वर्गापवर्गौ तावास्पदमालम्बनं यस्य मार्गस्य तद्भूते । सुरत्वात् सुरभावात् । भूयोऽनन्तरं ये भवन्ति ते धन्या इत्यन्वयः ॥ २४ ॥

श्रीधरीयम् ।

तास्विति । इमे कुरुपाञ्चालादिनानादेशवर्तिनो जनास्तासु नदीषु वसन्ति । आसां सरितां जलं पिबन्ति चेति यथुर्थेनान्वयः ॥ १५ ॥ १६ ॥ १७ ॥ चत्वारीति । कृते युगे चतुष्पाद्धर्मः त्रेतायां पादन्यूनः द्वापरे द्विपात् कलौ पादावशेष इत्यादिचतुर्युगव्यवस्था चेत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ पुरुषैरिति । यज्ञपुरुषरूपो विष्णुरत्रेज्यते अन्यद्वीपेषु प्लक्षादिष्वन्यथा सोमवायुसूर्यादिरूपः ॥ २१ ॥ २२ ॥ २३ ॥ स्वर्गे देवत्वप्राप्तेरपि अत्र मनुष्यत्वं दुर्लभमित्यस्मिन्नर्थे देवगीतं प्रमाणयति—गायन्तीति । स्वर्गश्चा-

विष्णुचित्तीयम् ।

तास्विति । कामरूपो देशः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ चत्वारीति । चत्वारि युगानि धर्मवृद्ध्यवस्थया युगव्यवस्था ॥ १९ ॥ २० ॥ पुरुषैरित्यादि । यज्ञपुरुषो विष्णुः अत्र यज्ञरूप इज्यते अन्यथा सोमवाय्वादिरूपः ॥ २१ ॥ २२ ॥ २३ ॥ गायन्तीति । ये देवाः सुरत्वात् सुरत्वानन्तरं

दत्तात्रेयीयम् ।

इमे कुरुपाञ्चालादिप्रदेशवर्तिनो जनास्तासु नदीषु तासां तीरेषु आसां सरितां सलिलं सदा पिबन्तो वसन्तीति चतुर्णामेकान्वयः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ धर्मवृद्धिह्रासभावाच्चतुर्युगकल्पना भारतवर्षादन्यत्र वर्षेषु नास्ति ॥ १९ ॥ २० ॥ यज्ञमयो यज्ञात्मको विष्णुः "यज्ञोवैविष्णुः" इति श्रुतेः । जंबूद्वीपे सदा यज्ञैरिज्यते अन्यद्वीपेषु प्लक्षादिष्वन्यथा । तत्तद्वीपकथनावसरे वक्ष्यमाणत्वात् ॥ २१ ॥ अत्र जम्बूद्वीपे भारतवर्षं श्रेष्ठं इतरवर्षापेक्षया अधिकं । आधिक्यहेतुमाह—यत इति । एषा भारतभूः स्वर्गापवर्गहेतुभूतकर्मकरणभूः । अतो भारतवर्षादन्याः भोगभूमयः ॥२२॥२३॥ भारते मानुष्यं पुण्यसञ्चयलभ्यमित्युक्तं । अत्र देवगीतं प्रमाणयति—गायन्तिदेवा इत्यादिना । स्वर्गश्चापवर्गश्च तयोरास्पदं प्रा-

[ पा० ] १ ख म. च छ. आन्ध्रा । घ ऊडा । घ औण्ड्रा. २ क—ग च—ठ. कृत्स्नश. ३ च ग. शूद्राभीराश्च बर्बराः । ख. म. छ. शूद्राभीरा ४ क—ध. च—ठ. मारुका. ५ ख. घ ज. थ शाला: शाकलवासिन. ६ क—घ. च—ड. सरितौ ७ ग. समन्ततो.

कर्माण्यसङ्कल्पिततत्फलानि
सन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्ममहीमनन्ते
तस्मिँल्लयं ये त्वमलाः प्रयान्ति ॥ २५ ॥

जानीम नैतत्क वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीनाः ॥ २६ ॥

चित्सुखीयम् ।

न सङ्कल्पितान्यसङ्कल्पितानि । तेषां कर्मणां फलानि तत्फलानि । असङ्कल्पितानि तत्फलानि येषां तानि कर्माण्यसङ्कल्पिततत्फलानि । तां कर्ममहीमवाप्य विष्णौ सन्यस्य समर्प्य तस्मिन्ननन्ते ये लयं यान्ति ॥ २५ ॥ देहबन्धं देहसंबन्धं जन्म स्वर्गप्रदे कर्मणि विलीने सति क वयं प्राप्स्याम इति न जानीमः ।

श्रीधरीयम् ।

स्वर्गोऽपि तयोरास्पदं प्राप्यस्थानं तस्य मार्गभूते भारताख्ये भूमिभागे ये पुरुषा भवन्ति ते तु सुरत्वात्सुरत्वं प्राप्तानस्मानप्यपेक्ष्य भूयोऽभ्यधिकं धन्याः सुकृतिन इत्यर्थः ॥ २४ ॥ अत्र हेतुमाह—कर्माणीति । तां कर्मभूमिं प्राप्य न सङ्कल्पितानि तानि प्रसिद्धानि दृष्टादृष्टानि फलानि येषां तान्यसङ्कल्पिततत्फलानि निष्कामानि कर्माणि विष्णौ सन्यस्य ये चामलाः सन्तस्तमेवालयं स्थानं प्रयान्ति । तमालयमिति पाठः । तस्मिँल्लयमिति पाठान्तरे तस्मिँल्लयमैक्यं प्रयान्ति । ते धन्या इति पूर्वेण सम्बन्धः ॥२५॥ युष्माकमपि स्वर्गभोगानन्तरं भारते जन्म भविष्यतीति चेत्तत्तु न ज्ञायत इत्याहुः—जानीमेति । स्वर्गप्रदे कर्मणि भोगेन विलीने सति कुत्र देहसम्बन्धं जन्म प्राप्स्याम इति न जानीमः । ये त्वद्य भारते मनुष्या जाताः सन्ति ते खलु निश्चितं धन्याः । अनायासेन मोक्षप्राप्तेः । तदाहुर्नेन्द्रियविप्रहीनाः अन्धपङ्ग्वादयो यदि न भवन्तीति । इन्द्रियबन्धमात्रेण तत्र मोक्षः । न संसार इति भावः ॥ २६ ॥

विष्णुचित्तीयम् ।

तत्र भारते भूयः पुरुषा मनुष्याः स्युस्ते धन्याः ॥ २४ ॥ एतत्समर्थयति—कर्माणीति । अत्रापि ते धन्या इत्यनुषङ्गः ॥ २५ ॥ जानीमेति । नेन्द्रियविप्रहीनाः कर्माभ्यासादियोग्यपटुकरणाः ॥ २६ ॥

दत्तात्रेयीयम् ।

स्वस्थानं तस्य मार्गभूते भारताख्यभूमिभागे सुरत्वादनन्तर ये पुरुषाः मानवाः भवन्ति ते धन्या इति गीतकानि देवाः गायन्तीत्यन्वयः । अनेन देवानामपि भारते जन्म प्रार्थ्यमिति दर्शितत्वादत्र मानुष्यं पुण्यसञ्चयलभ्यमिति । देवानामत्र मानुष्यप्रार्थनमनधिकारिणां कर्मकरणेनाधिकारसंपादनार्थं । अधिकारिणां तु सुखानन्दोद्रेकार्थं इति बोध्य । तदुक्तं कौर्मे "अनधिकारिणो देवाः स्वर्गस्था भारतोद्भवं । वाञ्छन्त्यात्मविमोक्षार्थमुद्रेकार्थेऽधिकारिणः" इति ॥ २४ ॥ देवगीतकान्तरमाह—कर्माणीत्यादिना । तां कर्ममहीं प्राप्य । असङ्कल्पिततत्फलानि असङ्कल्पितान्यकामितानि तत्तत्कर्मसाध्यानि स्वर्गादिफलानि येषां तानि तथोक्तानि निष्कामकर्माणि ये विष्णौ सन्यस्य समर्प्य अमलाः सन्तः तस्मिन्ननन्ते ये लयं यान्ति ते धन्या इति पूर्वेणान्वयः ॥ २५ ॥ स्वर्गप्रदे कर्मणि स्वर्गभोगाद्विलीने क्षीणे सति वयं देहबन्धं जन्म क प्राप्स्याम इति न जानीमः । ये भारते जाता मनुष्या इन्द्रियविहीना न भवन्ति कर्म-

रत्नगर्भीयम् ।

चतुःपञ्चाशद्योजनसहस्राणि हिमवदादिषट्पर्वतैर्दशसहस्राणि इलावृत्तसुमेरुभ्यां चतुस्त्रिंशत्सहस्रा-

[ पा० ] १ क—ड, त्यो २ [ श्रीध० पा० ] तमालयं

नववर्षं तु मैत्रेय जम्बूद्वीपमिदं मया ।
लक्षयोजनविस्तारं संक्षेपात्कथितं तव ॥ २७ ॥
जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः ।
मैत्रेय वलयाकारः स्थितः क्षारोदधिर्बहिः ॥२८॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे
द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

पञ्चाशत्कोटिविस्तृतभूमण्डलस्थप्लक्ष-शाल्मली-कुश-क्रौञ्च-शाक-पुष्करद्वीपानां तत्तद्वीपस्थवर्षाब्धिसरित्पर्वतादिभिः सह अण्डकटाहपर्यन्तं पृथ्व्या वर्णनम् ॥ १ ॥

श्रीपराशर उवाच ॥

क्षारोदेन यथा द्वीपो जम्बूसंज्ञोऽभिवेष्टितः ।
संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः ॥ १ ॥
जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितः ।
स एवं द्विगुणो ब्रह्मन् प्लक्षद्वीप उदाहृतः ॥ २ ॥
सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै ।
ज्येष्ठः शान्तहयो नाम शिशिरस्तदनन्तरः ॥३॥

चित्सुखीयम् ।

ये पुनर्भारते देहं प्राप्य इन्द्रियविप्रहीना न भवन्ति ते धन्या इत्यर्थः ॥ २६ ॥ इति श्रीचित्सुख० श्री-विष्णुपु०टि० द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥

श्रीधरीयम् ।

॥ २७ ॥ २८ ॥ इति श्रीश्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥

अथ प्लक्षादिकान्द्वीपान्वर्षाब्धिसरिद्गिरिभिः । वर्णपूज्यादिभेदेन वर्णयन्नाकटाहतः ॥ १ ॥ अत्र जम्बूद्वीपो लवणाब्धिश्च विस्तारतो लक्षयोजनप्रमाणौ एवमुत्तरोत्तरं द्वीपाब्धियुग्मं पूर्वस्मात्पूर्वस्माद्द्वीपाब्धियुग्माद्द्विगुणं द्रष्टव्यम् । प्लक्षादिद्वीपपञ्चके च द्वीपविस्तारप्रमाणैरुभयतस्समुद्रस्पर्शिभिर्मर्यादागिरिभिर्विभक्तान्युभयतस्समुद्रस्पर्शीनि सप्त वर्षाणि । पुष्करद्वीपे तु मध्यतो वलयाकारेण मानसोत्तरेण विभक्ते द्वे वर्षे । सर्वत्र वर्षाधिपतिसंज्ञाभिरेव वर्षाणां संज्ञा । शैलनद्यश्च स्वस्वसंज्ञाभिरेव सर्वत्र स्पष्टं

विष्णुचित्तीयम् ।

॥ २७ ॥ २८ ॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥

दत्तात्रेयीयम् ।

ध्यानादियोग्यपटुकरणास्ते धन्याः ॥ २६ ॥ जंबूद्वीपवर्णनमुपसंहरति—नववर्षमिति ॥ २७ ॥ क्षारोदधिर्लवणसमुद्रः ॥ २८ ॥ इति श्रीदत्तात्रेयाचार्यविरचितायां सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥

एवं जंबूद्वीपस्वरूपनिरूपणपूर्वकं तद्वर्षविभागमुक्त्वा प्लक्षादिद्वीपस्वरूपनिरूपणपूर्वकं तद्वर्षविभागमाह—क्षारोदेनेत्यादिना । तथास्थितः वलयाकारत्वेन स्थितः । प्लक्षद्वीपः विस्तारतो द्विगुणः लक्षद्वययोजनप्रमाणः ॥ १ ॥ २ ॥ प्लक्षद्वीपेश्वरस्य मेधातिथेः पुत्राः सप्त । तानेव नामभिर्निर्दिशति—ज्येष्ठ

रत्नगर्भीयम् ।

मीत्येवं लक्षयोजनविस्तारमिति ॥ २७ ॥ इति श्रीरत्नगर्भ०विर०श्रीविष्णुपु०व्याख्यासारे द्वितीयांशे तृतीयोऽध्यायः ॥ ३ ॥

[ पा० ] १ घ. तस्मात्तु द्विगुणो । ग. स एव द्विगुणो. २ ग. ख. ड—म. ह. मखो । ट. सभो । ठ. नवो.

सुखोदयस्तथानन्दः शिवः क्षेमक एव च ।
ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा हि ते ॥ ४ ॥
पूर्वं शान्तहयं वर्षं शिशिरं च सुखं तथा ।
आनन्दं च शिवं चैव क्षेमकं ध्रुवमेव च ॥ ५ ॥
मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः ।
सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ॥ ६ ॥
गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ।
सोमकः सुमनाश्चैव वैभ्राजश्चैव सप्तमः ॥ ७ ॥
वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चानघाः ।
वसन्ति देवगन्धर्वसहिताः सततं प्रजाः ॥ ८ ॥
तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः ।
नाधयो व्याधयो वापि सर्वकालसुखं हि तत् ॥ ९ ॥
तेषां नद्यस्तु सप्तैव वर्षाणां च समुद्रगाः ।
नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः ॥ १० ॥
अनुतप्ता शिखी चैव विपाशा त्रिदिवाऽक्लमा ।
अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥ ११ ॥
एते शैलास्तथा नद्यः प्रधानाः कथितास्तव ।
क्षुद्रशैलास्तथा नद्यस्तत्र सन्ति सहस्रशः ।
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ॥ १२ ॥
अपसर्पिणी न तेषां वै न चैवोत्सर्पिणी द्विज ।
न त्वेवास्ति युगावस्था तेषु स्थानेषु सप्तसु ॥ १३ ॥

विष्णुचित्तीयम् ।

अपसर्पिणी ह्रासवती । उत्सर्पिणी वृद्धिमती नदी नास्ति तासां नदीनां वृद्धिहेतुकत्वाभावात् । युगा-

श्रीधरीयम् ।

निर्दिष्टाः । तथैव स्थिते तत्र तत्र किञ्चिद्व्याख्यायते ॥ २ ॥ प्लक्षद्वीपेश्वरानाह—सप्तेति ॥ ३ ॥ ४ ॥ तन्नामकवर्षाण्याह—पूर्वमिति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ तेष्विति । जनः चिरात्पञ्चवर्षसहस्रान्ते म्रियते ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ अपसर्पिणीति । अपसर्पिणी ह्रसावस्था । उत्सर्पिणी वृद्ध्यवस्था । भारते हि कृतादित्रेतान्त प्रजा उत्तरोत्तरं वर्धन्ते । ततो द्वापरादि कलियुगान्तं ह्रसन्ति । एतेषां न-

विष्णुचित्तीयम् ।

क्षारोदेनेति । तथा स्थित. वलयाकारत्वेन स्थित ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ८ ॥ तेष्विति । चिरात्पञ्चसहस्राब्दान्ते । तत् प्लक्षद्वीपम् ॥ ९ ॥ १० ॥ अनुतप्तेति । त्रिदिवाऽक्लमेति पाठः । अक्लमाख्या पञ्चमी नदी ॥ ११ ॥ १२ ॥ अपसर्पिणीति । अपसर्पिणी द्वापरादि-कल्यन्त प्रजानामवरोहक्रमाद्ध्रासावस्था । उत्सर्पिणी कृतादित्रेतान्तमारोहक्रमाद्वृद्ध्यवस्था "उत्सर्पिणी

दत्तात्रेयीयम् ।

इत्यादिना ॥ ३ ॥ ४ ॥ वर्षाधिपतिसप्तैव तद्वर्षाणां सप्तेत्याह—पूर्वमित्यादिना ॥ ५ ॥ तेषां सप्त वर्षाणां तथाऽन्ये वर्षपर्वताः यत्र जम्बूद्वीपे वर्षमर्यादाकारका पर्वता. सन्ति तथाऽत्रापि सप्तवर्षमर्यादाका-रकाः सप्त पर्वता सन्तीत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ चिराद्वक्ष्यमाणरीत्या पञ्चसहस्रवर्षान्ते हि यस्मात्तेषु वर्षेषु नाधयो व्याधय । तत्तस्मात्सर्वकालसुखं सर्वस्मिन्काले सुखमित्यर्थः ॥ ९ ॥ १० ॥ अक्लमा पञ्चमी नदी ॥ ११ ॥ जनपदा उक्तदेशजना ॥ १२ ॥ अपसर्पिणी द्वापरादिकल्यन्त प्रजानामवरोहक्रमाद्ध्रासा-वस्था । उत्सर्पिणी कृतादित्रेतान्तमारोहक्रमाद्वृद्ध्यवस्था । "उत्सर्पिणी युगार्धं पश्चादपसर्पिणीयुगार्धं च"-

रत्नगर्भीयम् ।

प्लक्षद्वीपादिवर्षाद्रिसरिद्वर्णेऽभ्यकल्पना. । क्षारोदादिसमुद्रांश्च चतुर्थेऽवर्णयन्मुनि. । पूर्वादिक्रमेण

[ पा० ] १ क ज म—ट सुखद तथा　२ ट म वैभ्राजश्चैव　३ म सप्तम　४ म तासां प्रवक्ष्यामि　५ ग. घ—ज म ठ विपाशा　६ख क्रमात् । ग. क्षमा । ड अस्तु । म ड अमृ　७ छ अपसर्पिणस्तेषां । [illegible] अपसर्पिणस्तेषां　८ [illegible] त्रेषां त्रियुगावस्था

त्रेतायुगसमः कालः सर्वदैव महामते ।
प्लक्षद्वीपादिषु ब्रह्मञ्छाकद्वीपान्तिकेषु वै ॥ १४ ॥
पञ्च वर्षसहस्राणि जना जीवन्त्यनामयाः ।
धर्मः पञ्चस्वथैतेषु वर्णाश्रमविभागशः ॥ १५ ॥
वर्णाश्च तत्र चत्वारस्तान्निबोध वदामि ते ॥ १६ ॥
आर्यकाः कुरराश्चैव विविंश्या भाविनश्च ते ।
विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनिसत्तम ॥ १७ ॥
जम्बूवृक्षप्रमाणस्तु तन्मध्ये सुमहांस्तरुः ।
प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तम ॥ १८ ॥
इज्यते तत्र भगवांस्तैर्वर्णैरार्यकादिभिः ।
सोमरूपी जगत्स्रष्टा सर्वः सर्वेश्वरो हरिः ॥१९॥
प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपः समावृतः ।
तथैवेक्षुरसोदेन परिवेषानुकारिणा ॥ २० ॥
इत्येवं तव मैत्रेय प्लक्षद्वीप उदाहृतः ।
संक्षेपेण मया भूयः शाल्मलं मे निशामय ॥२१॥
शाल्मलस्येश्वरो वीरो वपुष्मांस्तत्सुताञ्छृणु ।
तेषां तु नामसंज्ञानि सप्तवर्षाणि तानि वै ॥२२॥
श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा ।
वैद्युतो मानसश्चैव सुप्रभश्च महामुने ॥ २३ ॥

### चित्सुखीयम् ।

वस्था वा । विशेषणमपसर्पिणीत्यादि ॥ १३ ॥ तस्य प्लक्षस्य नाम्ना संज्ञा यस्य स तन्नामसंज्ञः ॥ १८ ॥

### श्रीधरीयम् ।

त्यर्थः । युगावस्थेति । "कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया" इति सूर्यसिद्धान्तादिप्रोक्ता युगावस्था च तेषु नास्ति ॥ १३ ॥ त्रेतेति । त्रिपाद्धर्मं सस्यादिसमृद्धिर्युगाद्यनुष्ठानादित्यादिना त्रेतायुगसमः कालः ॥ १४ ॥ १५ ॥ १६ ॥ आर्यका इति । कुरवः कुरराश्चेति च पाठः ॥ १७ ॥ जम्बूवृक्षेति । तस्य प्लक्षस्य नाम्ना संज्ञा यस्य सः तन्नामसंज्ञः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

### विष्णुचित्तीयम् ।

युगार्धे पश्चादपसर्पिणी युगार्धं च" इत्यार्यभटोक्तेः । युगावस्था धर्मपादव्यवस्था । तेषु प्लक्षद्वीपस्य वर्षेषु ॥ १३ ॥ त्रेतेति । युगाविकृतत्वं त्रिपाद्धर्मत्वम् । सस्यादिसत्त्वं च त्रेतासाम्यम् ॥ १४ ॥ १५ ॥

### दत्तात्रेयीयम् ।

इत्यार्यभटोक्तेः युगावस्था युगादीनां कृतादीनामवस्था उत्तरोत्तर धर्मपादह्रासावस्था ॥ १३ ॥ त्रिपाद्धर्मं सस्यादिसमृद्धिः यागादिना त्रेतादियुगसमत्व ॥ १४ ॥ प्लक्षादिषु पञ्चद्वीपेष्वायुःपरिमाणादिकमेकरूपमित्याह्—पञ्चेत्यादिना ॥ १५ ॥ तत्र प्लक्षद्वीपे ॥ १६ ॥ ये आर्यकादयश्चत्वारस्ते क्रमेण विप्रादय इत्यर्थः ॥ १७ ॥ तन्मध्ये प्लक्षद्वीपमध्ये । तन्नामसंज्ञः तस्य प्लक्षस्य नाम्ना संज्ञा यस्य स तथा ॥ १८ ॥ तत्र प्लक्षद्वीपे । सोमरूपी सोमश्चन्द्रः स एव रूपं प्रतिमा तदस्यास्तीति तथा । सर्वः सर्वत्र व्याप्तः । यद्यपि भागवते प्लक्षादिषट्सु द्वीपेषु सूर्यसोमाग्निवारिवायुचतुर्मुखेषु स्थितानां भगवद्रूपाणां यथाक्रममुपास्यत्वमुक्तं । तथैव कूर्मपुराणेऽपि सूर्यसोमाग्निवारिरविविधात्रृषु यथाक्रमं । प्लक्षादिद्वीपसस्थासु स्थितं हरिमुपासत इति ॥ अत्र सोमवायुब्रह्मरुद्रसूर्यचतुर्मुखस्थितानां भगवद्रूपाणामपि तत्तद्द्वीपेषूपास्यत्वमिति न तद्विरोध इति बोध्यं ॥ १९ ॥ प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपलक्षद्वययोजनविस्तारेण परिवेषानुकारिणा परिधिरूपेणेक्षुरसोदेन प्लक्षद्वीपः समावृतः । विस्तारद्विगुणेनेक्षुरससमुद्रापे-

### रत्नगर्भीयम् ।

प्लक्षद्वीपमाह । पूर्वं पूर्वदिग्भागे स्थितम् ॥ ५ ॥ पुण्याः पुण्यशालिनः ॥ ९ ॥ एतेषु प्लक्षादिशाकान्तेषु पञ्चसु । एतेन पुष्करे तदभावः सूचितः । पञ्चतथैतेष्विति पाठे पञ्चधर्मा ब्रह्मचर्याहिंसास्तेयापरिग्रहा इत्युक्ताः । सामान्यधर्मा वर्णाश्रमजन्या विशेषधर्माश्चेत्यर्थः ॥ १५ ॥ परिवेषो मण्डलं

[ पा० ] १ [ श्रीध० पा० ] कुरवाश्चैव २ ज. ड. विविंशा । क ग. घ. विदशा । घ विपन्थाद्यादिनश्चैते ३ स घ. द्वीप ४ ज सर्वैर्

शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः ।
विस्तारद्विगुणेनाथ सर्वतः संवृतः स्थितः ॥२४॥
तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ।
वर्षाभिव्यञ्जका ये तु तथा सप्त च निम्नगाः २५॥
कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः ।
द्रोणो यत्र महौषध्यः स चतुर्थो महीधरः ॥२६॥
कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा ।
ककुद्मान्पर्वतवरः सरिन्नामानि मे शृणु ॥ २७॥
योनितोया वितृष्णा च चन्द्रा शुक्ला विमोचनी ।
निवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः
श्वेतश्च हरितं चैव वैद्युतं मानसं तथा ।
जीमूतं रोहितं चैव सुप्रभं चापि शोभनम् ।
सप्तैतानि तु वर्षाणि चातुर्वर्ण्ययुतानि वै ॥ २९ ॥
शाल्मले ये तु वर्णाश्च वसन्त्येते महामुने ।
कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्ति तम् ।
भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् ।
वायुभूतं मखश्रेष्ठैर्यज्वानो यज्ञसंस्थितिम् ॥ ३१ ॥
देवानामत्र सांनिध्यमतीव सुमनोहरे ।
शाल्मलिः सुमहान्वृक्षो नाम्ना निर्वृतिकारकः ३२
एष द्वीपः समुद्रेण सुरोदेन समावृतः ।
विस्ताराच्छाल्मलस्यैव समेन तु समन्ततः ॥३३॥
सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ।
शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥३४॥
ज्योतिष्मतः कुशद्वीपे सप्त पुत्राञ्छृणुष्व तान् ३५
उद्भिदो वेणुमांश्चैव वैरथो लम्बनो धृतिः ।
प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः ॥ ३६ ॥

चित्सुखीयम् ।

मे वचनाभिरामय जानीहि ॥ २१ ॥ यज्ञे संस्थितिर्यस्य स यज्ञसंस्थितिः ॥ ३१ ॥ नामनिर्वृत्तिः नामनिष्पत्तिः । मतुक्तिः ॥ ३२ ॥ वर्षाणां पद्धतिः पङ्क्तिः । तेषां नामान्येव नामानि यस्य तन्नामा

श्रीधरीयम् ।

॥ २३ ॥ २४ ॥ २५ ॥ कुमुद इति । "विशल्यकरणी चैव मृतसञ्जीवनी तथा । सौवर्णकरणी चान्या सन्धिनी च महौषधी ॥" एवंभूता महौषध्यः यत्र यस्मिन्द्रोणे यो हनूमताऽऽनीय प्रतिनीतः स द्रोणश्चतुर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ब्राह्मणा इति । यज्ञानां संस्थितिर्यस्मिंस्तं यज्ञसंस्थितिम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ उद्भिद इति । तेषां नामान्येव नामानि यस्य

विष्णुचित्तीयम् ।

वर्णोऽस्मिन्निति । तत्र प्लक्षद्वीपे ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ कुमुदश्चेति । महौषध्यः मृतसञ्जीवन्याद्याः । अयं द्रोणाद्रिर्हनुमताऽऽनीतः ॥ २६ ॥ २७ ॥

दत्तात्रेयीयम् ।

अथा द्विगुणविस्तारेण चतुर्लक्षयोजनप्रमाणविस्तारेणेत्यर्थः ॥२०॥२१-२४॥ रत्नभूमयः रत्नोत्पत्तिभूमयः। वर्षाभिव्यञ्जकाः वर्षमर्यादाहेतवः ॥ २५ ॥ पर्वतानां नदीनांच नामानि क्रमेणाह—कुमुदमित्यादिना ॥ यत्र यस्मिन्महौषध्यो मृतसञ्जीवन्याद्याः स द्रोणः चतुर्थः॥२६॥२७॥२८॥ वर्षाधिपतिनामान्येव वर्षनामानीत्याह—श्वेतं चेत्यादिना ॥२९॥३०॥ वायुभूतं वायौ भूतं स्थितं । यज्ञे संस्थितं यज्ञसंस्थितिमिति पाठे यज्ञे संस्थितिर्यस्य स तथोक्तस्तमित्यर्थः ॥३१॥३२॥ शाल्मलस्य समेन प्रमाणेन सुरोदस्य विस्तार इत्यर्थः। शाल्मलस्य विस्तारद्विगुणेनाष्टलक्षयोजनप्रमाणविस्तारेणेत्यर्थः । कुशद्वीपाधिपतित्वेन स्थितस्येति शेषः ॥ ३३ ॥ ३४ ॥ तन्नामा तेषां नामान्येव नामानि यस्याः सा तथोक्ता ॥ वर्षपद्धतिः वर्षपङ्क्तिः

[ पा० ] १ [ दत्ता० पा० ] भूमय. २ क—च च—ञ. ट. ठ. चन्द्रा शुक्ला विमोचनी ३ घ. चन्द्रा शुक्ला विमोहिनी. ३ ञ परमात्मा. ४ न. सद्दितं । [ रत्न० पा० ] सस्थितं. ५ [ चि० पा० ] नामानिर्वृतिकारक. ६ ग. समन्ततः. ७ ख. च. छ. समावृत. ८ ष. महामुने. ९ ग. वैरथो.

तस्मिन्वसन्ति मनुजाः सह दैतेयदानवैः ।
तथैव देवगन्धर्वयक्षकिंपुरुषादयः ॥ ३७ ॥
वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः ।
दमिनः शुष्मिणः स्नेहा मन्देहाश्च महामुने ॥३८॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥
यथोक्तकर्मकर्तृत्वात्स्वाधिकारक्षयाय ते ।
तत्रैव तं कुशद्वीपे ब्रह्मरूपं जनार्दनम् ।
यजन्तः क्षपयन्त्युग्रमधिकारं फलप्रदम् ॥ ४० ॥
विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा ।
कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ ४१ ॥
वर्षाचलास्तु सप्तैते तत्र द्वीपे महामुने ।
नद्यश्च सप्त तासां तु शृणु नामान्यनुक्रमात् ॥४२॥
धूतपापा शिवा चैव पवित्रा संमतिस्तथा ।
विद्युदम्भा मही चान्या सर्वपापहरास्त्विमाः ४३
अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाचलाः ।
कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत्स्मृतम् ४४ ॥
तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः ।
घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः ॥ ४५ ॥
क्रौञ्चद्वीपो महाभाग श्रूयतां चापरो महान् ।
कुशद्वीपस्य विस्ताराद्द्विगुणो यस्य विस्तरः ॥४६॥
क्रौञ्चद्वीपे द्युतिमतः पुत्रास्तस्य महात्मनः ।
तन्नामानि च वर्षाणि तेषां चक्रे महीपतिः ॥४७॥

विष्णुचित्तीयम् ।

॥ ३६ ॥ यथोक्तकर्मकर्तृत्वात् निषिद्धत्यागेन नित्यनैमित्तिककर्मानुष्ठातृत्वात् । स्वाधिकारस्य प्रारब्धकर्मणः उपभोगेन क्षयाय । उग्रं भयानकं बन्धहेतुत्वात् । अधिकारो भोगसाधनसम्बन्धः । तदेव-

श्रीधरीयम् ।

तन्नामा । वर्षपद्धतिः वर्षाणां पंक्तिः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ यथेति । स्वाधिकारक्षयाय

विष्णुचित्तीयम् ।

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ यथोक्तेति । यथोक्तं कर्म नित्यं नैमित्तिकं च । स्वाधिकारक्षयाय च स्वस्वात्मज्ञानेन कर्मण्यधिकारं विहितकैङ्कर्यं निवर्तयितुं । अधिकारं प्राग्जन्मजं कर्म ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ॥ ४६ ॥ क्रौञ्चद्वीप इति । "क्रौञ्चद्वीपे गिरिः क्रौञ्चस्तस्य नाम्ना स उच्यते" इति मात्स्ये ॥ ४७ ॥

रत्नगर्भीयम् ।

॥ ३६ ॥ यथोक्तकर्मकर्तृत्वात् । "नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम्" इत्याद्युक्तानुसन्धानपूर्वकं शास्त्रोक्तकर्मकर्तृत्वात् । स्वाधिकारक्षयाय स्वकर्तृत्वाभिमाननिवृत्त्यर्थं । तत्र कुशद्वीपे । ते ब्राह्मणाद्याः । ब्रह्मस्वरूपं ब्रह्मणि स्वरूपं यस्य स तथोक्तस्तं ब्रह्मरूपं जनार्दनं यजन्तः सन्तः उग्रं रागद्वेषादिहेतुत्वेन क्रूरफलप्रदं संसारफलप्रदमधिकारस्वात्वस्येव कर्तृत्वाभिमानं च क्षपयन्ति क्रमेण त्यजन्तीत्यर्थः । एतच्च प्लक्षादिपञ्चद्वीपसाधारणं बोद्धव्यं । धर्मः पञ्चस्वथैतेष्विति पञ्चानां साधर्म्योक्तेः ॥ ४० ॥ तत्प्रमाणेन कुशद्वीपसमानविस्तारेण अष्टलक्षयोजनविस्तारेणेत्यर्थः ॥ ४५ ॥ यस्य क्रौञ्चद्वीपस्य कुशद्वीपात् द्विगुणो विस्तारः षोडशलक्षयोजनपरिमितः ॥ ४६ ॥ क्रौञ्चः प्रथमवर्षपर्वतः । सप्त तस्य द्वी-

रत्नगर्भीयम् ।

तदनुकारिणा तत्सदृशेन ॥ २० ॥ संस्थितमिति पाठे यत्रसंस्थितमित्यर्थः ॥ ३१ ॥ भारते ये ब्राह्मणादयस्तेऽत्र कुशद्वीपे दम्याद्यश्चत्वारो वर्णाः क्रमोदिताः ॥ ३८ ॥ ३९ ॥ वर्णत्वे हेतुः स्वस्वाधिकारः संसारस्तस्य क्षयाय यथोक्तं नियुक्तं कर्म तत्कारित्वात् । पूर्वं दर्शनपूर्वोक्तमर्थं स्पष्टयति—तत्रैति । अधिक्रियते नियुज्यते जीवोऽस्मिन्निति अधिकारः संसारस्तदेव फलं तत्प्रदकर्म क्षपयन्तो यज-

[ पा० ] १ च. दमिनः । क. रमिणः. २ ग. पुष्प. ३ क. ख. ग. न. झ. सम्मता तथा । ग. सुमतिस्तथा. ४ 1. घ. च. छ. ज. ग. ड. पुत्रा. सप्त महात्मनः.

कुशलो मेलगश्चोष्णः पीवरोऽथान्धकारकः ।
मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने ॥ ४८ ॥
तत्रापि देवगन्धर्वसेविताः सुमनोहराः ।
वर्षाचला महाबुद्धे तेषां नामानि मे शृणु ॥ ४९ ॥
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः ।
चतुर्थो रत्नशैलश्च स्वाहिनी हयसन्निभः ॥ ५० ॥
दिवावृत्पञ्चमश्चात्र तथान्यः पुण्डरीकवान् ।
दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् ।
द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा ॥ ५१ ॥

विष्णुचित्तीयम् ।

फलं तत्फलं प्रयच्छतीति तत्प्रदं ॥ ४० ॥ पञ्चमश्चैवेतिपाठान्तरं । ते शैलान् द्वीपादन्यस्मात् द्वीपेषु परस्परं द्विगुणाः । यथैकस्माद्द्वीपादपरं द्विगुणं तथा पूर्वपूर्वद्वीपशैलेभ्यः उत्तरोत्तरद्वीपस्थशैला अपि

श्रीधरीयम् ।

सत्त्वशुद्धा अकर्मात्मज्ञानेन कर्माधिकारनिवृत्त्यर्थम् । अधिकारम् अधिक्रियतेऽनेनेत्यधिकारः अहङ्कारस्तमुं रागद्वेषादिहेतुं क्षपयन्ति । एतच्च शूद्रादिषु पञ्चस्वपि द्रष्टव्यम् । धर्मः पञ्चस्विति पञ्चानां साधर्म्यस्योक्तत्वात् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ क्रौञ्चश्चेति । प्रथमशैलः क्रौञ्चः तेनैव द्वीपोऽपि क्रौञ्चः ॥ ५० ॥ दिवावृदिति । सप्तमो महाशैलः । पञ्चमश्चैनरथ इति पाठे महाशैल इति दुन्दुभेर्विशेषणम् । पूर्वस्मात्पूर्वस्मात्परस्परमुत्तरोत्तर ते द्वीपा द्वि-

विष्णुचित्तीयम् ।

॥ ४८ ॥ ४९ ॥ क्रौञ्चश्चेति । स्वाहिनी हयसन्निभः वडवासुराभः ॥ ५० ॥ दिवावृदिति । द्विगुणा इत्यादि ये द्वीपाः द्वीपेषु स्थिता ये च शैलास्ते परस्परमुत्तरोत्तरं द्विगुणाः पूर्वपूर्वद्वीपेभ्य उत्तरोत्तरद्वीपाः द्विगुणविस्ताराः । एवं पूर्वपूर्वद्वीपशैलेभ्य उत्तरोत्तरद्वीपशैलाः द्विगुणविस्ताराः । यथा द्वीपेषु ते तथेति । द्वीपेषु यथा यावन्मानं तथा तावन्मानास्ते शैला इत्यर्थः । एतदुक्तं भवति लक्षसंख्याविस्तृते जम्बूद्वीपे स्थिताः शैलाः द्विसहस्रविस्तारा उभयतोऽब्धिस्पृशः द्विलक्षादिमिते प्लक्षद्वीपादौ

सत्यात्रेयीयम् ।

पस्य नामनिर्वर्तकः उक्तंच भागवते । "यस्मिन्क्रौञ्चोनाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते" इति । मात्स्ये च । "क्रौञ्चद्वीपे गिरिः क्रौञ्चस्तस्य नाम्ना स उच्यते" इति ॥ ४७ ॥ अन्यः अपरः महाशैलः सप्तमः । परस्परं पूर्वस्मात्पूर्वस्मादुत्तरोत्तरं ते सर्वे प्लक्षादिद्वीपाः द्वीपेषु ये शैलास्ते द्विगुणाः पूर्वपूर्वद्वीपापेक्षया उत्तरोत्तरद्वीपाः द्विगुणाः द्विगुणविस्ताराः । पूर्वपूर्वद्वीपशैलापेक्षया उत्तरोत्तरद्वीपशैलाः द्विगुणविस्ताराः द्विगुणोच्छ्रयाश्चेत्यर्थः । ते शैलाः यथा द्वीपानि तथा द्वीपविस्तारप्रमाणतुल्यदीर्घा इत्यर्थः ॥ यथा द्वीपे द्वितीयेपीति पाठे यथा यावद्विस्तारं मानं तावद्दीर्घा इत्यर्थः । तत्र द्वीपवर्षमर्यादाशैलानामुत्तरोत्तरद्वैगुण्यं द्वीपविस्तारप्रमाणतुल्यदैर्घ्यंच प्लक्षादिपञ्चद्वीपस्थितशैलानामेवेति बोद्धव्यं ॥ ५१ ॥

रत्नगर्भीयम् ।

न्तीत्यर्थः ॥ ४० ॥ तस्य कुशस्तम्बस्य संज्ञया तत्सृतम कुशद्वीपमिति प्रसिद्धं ॥ ४४ ॥ नद्यो नदीः

[ पा० ] १ घ. ठ. मानुरश्चोष्ण. । क—ग. ड. च. ट. मानुगश्चोष्ण । ध. माऽनुगश्चैव पीवरो २ ग. सीवरो. ३ ग. रत्न. ४ घ. ब. ठ. स्वभाभिर्भाव्यथम. ५ ठ. ड. देवाह्न ६ [ श्रीध० पा० ] चैत्ररथोऽन्यः । चैत्ररथाऽन्यः. ७ [ विष्णु० पा० ] द्वीपाद्वीपेषु । [ सत्या० पा० ] यथाद्वीपे द्वितीयेऽपि. ८ ग. द्वीपेषु.

वर्षेष्वेतेषु रम्येषु तथा शैलवरेषु च ।
निवसन्ति निरातङ्काः सह देवगणैः प्रजाः ॥५२॥
पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥
नदीर्मैत्रेय ते तत्र याः पिबन्ति शृणुष्व ताः ।
सप्त प्रधानाः शतशस्तत्रान्याः क्षुद्रनिम्नगाः ५४॥
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ।
क्षान्तिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः ५५ ॥
तत्रापि विष्णुर्भगवान्पुष्कराद्यैर्जनार्दनः ।
यागै रुद्रस्वरूपश्च इज्यते यज्ञसंनिधौ ॥ ५६ ॥
क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च ।
आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः ॥५७॥
दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः ।
क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन महामुने ॥ ५८ ॥
शाकद्वीपेश्वरस्यापि भव्यस्य सुमहात्मनः ।
सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त सः ॥५९
जलदश्च कुमारश्च सुकुमारो मरीचकः ।
कुसुमोदश्च मौदाकिः सप्तमश्च महाद्रुमः ॥६०
तत्संज्ञान्येव तत्रापि सप्त वर्षाण्यनुक्रमात् ।
तत्रापि पर्वताः सप्त वर्षविच्छेदकारिणः ॥ ६१
पूर्वस्तत्रोदयगिरिर्जलधारस्तथापरः ।
तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विज ।
आम्बिकेयस्तथा रम्यः केसरी पर्वतोत्तमः ॥६२
शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः ।
यत्पत्रवातसंस्पर्शादाह्लादो जायते परः ॥ ६३
तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ।
नद्यश्चात्र महापुण्याः सर्वपापभयापहाः ॥ ६४
सुकुमारी कुमारी च नलिनी धेनुका च या
इक्षुश्च वेणुका चैव गभस्ती सप्तमी तथा ॥ ६५

विष्णुचित्तीयम् ।

द्विगुणाः ॥ ५१ ॥ स्वर्गादभ्येत्य स्वर्गोपभोगानन्तर अत्र जन्म प्राप्य ये स्थिताः ते ताः पिबन्तीः

श्रीधरीयम् ।

गुणा', तेषु द्वीपेषु ये शैलास्तेऽपि यथा द्वीपास्तथा उत्तरोत्तर द्विगुणा इत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ क्रौञ्चद्वीप इति । दध्नो मण्डः सारः स एवोदकं यस्मिंस्तेन ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ शाक इति । शाको नाम वृक्षविशेषः । यस्य पत्राण्यन्त

विष्णुचित्तीयम् ।

चतुःसहस्रादिविस्तारा उभयतोऽप्यिसम्प्रा इति ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ क्रौञ्चद्वीप इति । दध्नो मण्डः सारः स पयोदक यस्य तेन ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१

दत्तात्रेयीयम् ।

पतेषु क्रौञ्चद्वीपस्थितेषु ॥ ५२ ॥ रुद्रस्वरूपस्थः रुद्रस्वरूपे तिष्ठतीति रुद्रस्वरूपस्थः । अनेन सोमरूपि त्वावापि सोमाद्यन्तर्गतस्यैव पूज्यत्वमिति दर्शितं । यज्ञसंनिधौ सम्यक् यज्ञानुष्ठाने ॥ ५६ ॥ दध्नो मण्ड स पयोदकं यस्मिन्स तथा तेन ॥ ५७ ॥ क्रौञ्चद्वीपस्य विस्तारात् द्विगुणेन द्वात्रिंशल्लक्षयोजनायामे ॥ ५८ ॥ अन्तः खरस्पर्शानि बहिर्मृदुस्पर्शानि यस्य पत्राणि स वृक्षविशेषः शाकः । "अन्तःखर बहिःस्निग्धाःछिद्रश्शाकदलोपमाः" इति वसिष्ठोक्तेः ॥ ६३ ॥ स्वर्गादभ्येत्यमेदिनीं स्वर्गभोगानन्त

रत्नगर्भीयम् ।

॥ ५४ ॥ धर्महानिः नित्यादिक्रियाविरहः । सङ्घर्षः कलहः । मर्यादा श्रुतिस्मृत्युक्त आचारस्तस्याति

[ पा० ]१ क वर्षेष्वेतेषु । ख वर्षेवर्षेषु २ ग पर्वतेश्वरेषु च ३ ख—ज. ञ. ट ड तिष्यास्याश्च ४ ठ ते तत्र नद्यो मैत्रेय ५ च—ज ञ—ठ सप्ताथिय ६ ख—घ च—ञ ट ठ वर्षाणि । ७ ख—ग ञ ठ इत्यस्य ८ च छ सविभौ ९ ज हव्यस्य सुमहात्मन । घ हर्यंघस्य महात्मन १० घ च—ज ट ड मणीचर , ११ घ ङ कुसुमदा समीकश्च । च कुसुमोद सुमोदश्च १२ ग—छ ज आसोगिरि १३ क—घ च छ झ ठ यत्पत्रवात १४ ज, ट रेणुका च या १५ क वेनुका

अन्याश्च शतशस्तत्र क्षुद्रनद्यो महामुने ।
महीधरास्तथा सन्ति शतशोऽथ सहस्रशः ॥६६॥
ताः पिबन्ति मुदा युक्ता जलदादिषु ये स्थिताः ।
वर्षेषु ते जानपदाः स्वर्गादभ्येत्य मेदिनीम् ॥६७॥
धर्महानिर्न तेष्वस्ति न सङ्घर्षः परस्परम् ।
मर्यादाव्युत्क्रमो वाऽपि तेषु देशेषु सप्तसु ॥६८॥
वङ्गाश्च मागधाश्चैव मानसा मन्दगास्तथा ।
वङ्गा ब्राह्मणभूयिष्ठा मागधाः क्षत्रियास्तथा ।
वैश्यास्तु मानसास्तेषां शूद्रास्तेषां तु मन्दगाः ६९
शाकद्वीपे तु तैर्विष्णुः सूर्यरूपधरो मुने ।
यथोक्तैरिज्यते सम्यक्कर्मभिर्नियतात्मभिः ॥७०॥
शाकद्वीपस्तु मैत्रेय क्षीरोदेन समावृतः ।
शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः ॥ ७१ ॥
क्षीराब्धिः सर्वतो ब्रह्मन्पुष्कराख्येन वेष्टितः ।
द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः ॥ ७२ ॥
पुष्करे सवनस्यापि महावीरोऽभवत्सुतः ।
धातकिश्च तयोस्तत्र द्वे वर्षे नामचिह्निते ।
महावीरं तथैवान्यद्धातकीखण्डसंज्ञितम् ॥७३॥
एकश्चात्र महाभाग प्रख्यातो वर्षपर्वतः ।
मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः ॥ ७४ ॥
योजनानां सहस्राणि ऊर्ध्वं पञ्चाशदुच्छ्रितः ।
तावदेव च विस्तीर्णः सर्वतः परिमण्डलः ॥ ७५ ॥

श्रीधरीयम् ।

खरस्पर्शानि बहिर्मृदुस्पर्शानि "अन्तः खरा बहिः स्निग्धाः शिरीषस्ताककल्लोपमाः" इति वसिष्ठोक्तेः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ता इति । स्वर्गादभ्येत्येति । स्वर्गभोगानन्तरं पुण्यशेषेण मेदिनीमभ्येत्य जलदादिषु वर्षेषु स्थिता जाता जानपदा जनास्ते ता नदीः पिबन्तीत्यन्वयः ॥ ६७ ॥ धर्महानिरिति । सङ्घर्षः कलहः ॥ ६८ ॥ वङ्गा इति । ब्राह्मणभूयिष्ठाः पूर्वोक्तेषु ब्राह्मणेष्वन्यतमाः श्रेष्ठाः

विष्णुचित्तीयम् ।

॥ ६२ ॥ शाक इति । खरमृदुस्पर्शोभयपार्श्वपर्णो वृक्षविशेषः शाकः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ता पिबन्तीति । स्वर्गभदृष्कर्मक्षये तच्छेषात्सुखमभ्येत्य जलदादिवर्षेषु ये स्थिता जाता जानपदा जना ते ता नदीः पिबन्ति ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ पुष्कर इति । धातकी षण्ड इति च तस्यैव राज्ञो नाम ॥ ७३ ॥ एकश्चेति । पुष्करे मानसोत्तराद्रेर्वलयाकारत्वोक्त्या लक्ष्या

दत्तात्रेयीयम् ।

पुण्यशेषेण मेदिनीमभ्येत्य जलदादिषु वर्षेषु ये जानपदाः स्थिता ते ता नदीः पिबन्तीत्यन्वयः ॥६७॥ सङ्घर्षः कलहः ॥ ६८ ॥ ब्राह्मणभूयिष्ठा ब्रह्म वेदस्तज्ज्ञानं यस्य स ब्राह्मणः । अण् मतावितिधातोः । इष्ठन्प्रत्ययस्त्वाधिक्यार्थे । तेन भूयिष्ठाः प्रचुरा इत्यर्थः । अनेन ब्राह्मणशब्दार्थो निरुक्तो भवति ॥ ६९ ॥ सूर्यरूपधरः सूर्यो रूपं यस्य इति सूर्यरूपधरः सूर्यान्तर्गत इत्यर्थः ॥ ७० ॥ क्षीराब्धिः शाकद्वीपात् द्विगुणेन चतुःषष्टियोजनविस्तारेण ॥ ७२ ॥ तयोर्नाम्ना चिह्निते तन्नामसहिते ॥ ७३ ॥ वर्षपर्वतः वर्षद्वयविभाजकः पर्वतः ॥ ७४ ॥ मध्यतः वर्षद्वयमध्यतः पुष्करे मानसोत्तराद्रेर्वलयाकारत्वोक्त्या प्लक्षादिषु वर्षाद्रयस्तिर्यगायताकारा अभितोऽधिरूढो वर्षविभेदिन इति मन्यते ॥ ७४ ॥ योजनानां सहस्राणीति बहुवचनेन दशसहस्राणीति विवक्षितम् ॥ "द्वीपमध्ये मानसोत्तरो नामैक एवार्वाचीनयोर्वर्षयोर्मर्यादाचलोऽयुतयोजनोत्सेधायाम" इति भागवतवचनात् । ऊर्ध्वं दशसहस्रयोजनादूर्ध्वं । पञ्चा

रत्नगर्भीयम् ।

धर्मो लङ्घनम् ॥ ६८ ॥ ये भारते ब्राह्मणेषु मध्ये भूयिष्ठाः श्रेष्ठास्ते तत्र मगा मगनामानः ॥ ६९ ॥

[पा०] १ ख—घ च—छ अन्याश्चस्तुतनत्र २ क ...नलदादिषु । ख जलधारासु ३ ख [illegible]
[रत्न० पा०] मगा ज ४ ङ च ग—ङ समन्ततः ५ ग ङ सवनस्यापि ६ ङ छ ज—ठ धीतो । [illegible]
७ ग महापीत

पुष्करद्वीपवलयं मध्येन विभजन्निव ।
स्थितोऽसौ तेन विच्छिन्नं जातं तद्वर्षकद्वयम् ७६॥
वलयाकारमेकैकं तयोर्वर्षं तथा गिरिः ॥ ७७ ॥
दशवर्षसहस्राणि तत्र जीवन्ति मानवाः ।
निरामया विशोकाश्च रागद्वेषादिवर्जिताः ॥७८॥
अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विज ।
नेर्ष्यासूया भयं द्वेषो दोषो लोभादिको न च ७९॥
महावीतं बहिर्वर्षं धातकीखण्डमन्ततः ।
मानसोत्तरशैलस्य देवदैत्यादिसेवितम् ॥ ८० ॥
सत्यानृते न तत्रास्तां द्वीपे पुष्करसंज्ञिते ।
न तत्र नद्यः शैला वा द्वीपे वर्षद्वयान्विते ॥ ८१ ॥
तुल्यवेषास्तु मनुजा देवास्तत्रैकरूपिणः ॥ ८२ ॥
वर्णाश्रमाचारहीनं धर्माचरणवर्जितम् ।
त्रयीवार्तादण्डनीतिशुश्रूषारहितञ्च यत् ॥८३॥
वर्षद्वयं तु मैत्रेय भौमः स्वर्गोऽयमुत्तमः ।
सर्वर्तुसुखदः कालो जरारोगादिवर्जितः ।
धातकीखण्डसंज्ञेऽथ महावीरे च वै मुने ॥ ८४ ॥
न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् ।
तस्मिन्निवसति ब्रह्मा पूज्यमानः सुरासुरैः ॥८५॥

विष्णुचित्तीयम् ।

न्वयः ॥ ६७ ॥ मानसाद्बहिः बाह्यतो महावीतं ॥ ८० ॥ अन्यूनानतिरिक्ता एव शिथिलावयवसंयो-

श्रीधरीयम् ।

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ महावीत-मिति । ततः मानसोत्तराद्रेः अन्त इत्यर्थः ॥ ८० ॥ ८१ ॥ तुल्यवेषा इति । तुल्यवेशा इति पाठे वेशो भोगस्तुल्यसुखा इत्यर्थः ॥ ८२ ॥ वर्णाश्रमाचारहीनमिति । नित्यनैमित्तिकैरवश्यकैर्वर्णाश्रमा-चारैर्हीनं, धर्माचरणं काम्यधर्मानुष्ठानं तेन च वर्जितम् ॥ ८३ ॥ ८४ ॥ न्यग्रोध इति । न्यक् ति-

विष्णुचित्तीयम् ।

तिषु वर्षद्वयस्थितिर्मेरवाकाया अभितोऽब्धिस्पृशो वर्षविभेदिन इति गम्यते ॥ ७४ ॥ ७५ ॥ ७६ ॥ ॥ ७७ ॥ ७८ ॥ ७९ ॥ महावीतमिति । अन्ततः मानसोत्तराद्रेरन्तरित्यर्थः । धातकीसंज्ञमन्तत इति च पाठः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ न्यग्रोध इति । अस्य न्यग्रोधस्य पुष्कर इति

वृत्तान्त्रेयीयम् ।

शयोजनानिचोच्छ्रितः । भागवते अल्पत्वादविवक्षया पञ्चाशद्योजनानुक्तिः ॥ ७५ ॥ मानसोत्तरशैलस्य बहिर्महावीतं वर्षं ततोऽन्तर्धातकीसंज्ञं । धातकीसंज्ञमन्तत इति पाठे अन्तत इत्यस्य मानसोत्तराद्रेरन्त इत्यर्थः ॥ ८० ॥ सत्यानृते अन्योन्यसहिते नास्तां केवलं सत्यमेव तत्रेत्यर्थः ॥ ८१ ॥ देवैर्मनुजास्तु-ल्यवेषाः समानवेषाः । एकरूपिणः यावज्जीवमेकप्रकाराः ॥ ८२ ॥ वर्णाश्रमाचारहीनं वर्णाश्रमैस्त-दाचारैश्च हीनं । अतएवधर्माधर्मविहीनं । त्रयी वेदः ब्राह्मणजीवनोपायः । वार्ता वाणिज्यं कृष्यादिः वैश्यजीवनोपायः । दण्डनीतिः नीतिशास्त्रं राज्ञां । शुश्रूषा शूद्रस्य । वर्णविभागाभावात्तज्जीवनोपायो-ऽपि तत्र नास्तीति ॥ ८३ ॥ पुष्करद्वीपे न्यग्रोधः न्यक् तिर्यक् समन्ततः भूमिं रुणद्धीति न्यग्रोधः ।

रत्नगर्भीयम् ।

द्वीपवलयं वलयाकारं द्वीपम् । तेन पर्वतेन विच्छिन्नं वर्षद्वयमपि वलयाकारं जातम् ॥ ७६ ॥ सत्या-नृते नचास्तां फलजनकत्वाभिप्रायेण प्रोक्ते ॥ ८१ ॥ तुल्यवेषाः समानभूषणाः । तुल्यमुखा इति वा । एकरूपिणः समानाङ्गसन्निवेशाः ॥ ८२ ॥ परमवृद्धिह्रासयोः प्रमाणमाह—दशेति । अङ्गुलीनां

[ पा० ] १ श. घ. क्रोधः । ग. च—ढ. रोष. २ ग. सात्त्विक सत । घ भवन्तत । [दत्ता० पा०] ततमन्तत. ३ ख वर्णास्तु । [श्रीध० पा०] वेषास्तु. ४ ख—ध. च. छ. झ. ञ. देवै. ५ ध. दानग्रहणवर्जितं । छ. धर्मा-धर्मविवर्जितं । ज. झ. ट—ढ. धर्माहरणवर्जितं. ६ ख. ङ. च. ज—ढ. सर्वेश सुखदः. ७ ग. रोगा. ८ ख—ढ. पुष्करे धातकीखण्डे.

लोकालोकस्ततश्शैलो योजनायुतविस्तृतः । | उच्छ्रायेणापि तावन्ति सहस्राण्यचलो हि सः ९४

चित्सुखीयम् ।

गाद्वर्द्धन्ते ॥ ९० ॥ द्विगुणा स्वादूदकात्काञ्चनी भूमिः ॥ ९३ ॥ जंबूद्वीपलवणसमुद्रौ द्वौ मिलितौ

श्रीधरीयम् ।

॥ ९३ ॥ लोकालोक इति । तावन्ति अयुतव्यवहारकारकाणि सहस्राणि योजनायुतमेवोच्छ्रित इत्यर्थः । यद्वा तावन्ति अयुतसंख्याकानि सहस्राणीत्यर्थः । "यस्मात्सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभ-

विष्णुचित्तीयम् ।

लोकालोक इति । ततो लोकालोकाद्रिः । एवं संहत्य मेरोरेकतो लोकालोकान्तं कोट्यो द्वादशलक्षाणि सप्तपष्टिः । पञ्चाशत्सहस्राणि च "एतेनहलोकपरिमाणं च व्याख्यातम्" इति भागवतोक्त्या किंचिदून-

वृत्ताग्रेयीयम् ।

साधिकचतुर्नवतिलक्षयोजनपरिमितः सिध्यति । तथाच सुवर्णभूमेः तत्समानपरिमाणत्वोक्त्या तावत्परिमाणत्वमेव प्रमाणान्तरसिद्धसुवर्णभूमिबहिर्भूतवज्रलेपस्य सार्धलक्षयोजनविस्तारत्वेन तत्सहितसुवर्णभूमेः षण्णवतिलक्षयोजनविस्तारत्वसिद्ध्या स्वादूदकात् द्विगुणोक्तिःपादन्यूनद्विगुणत्वाभिप्रायेण पर्यवस्यतीति बोद्धव्यं । तदुक्तं तात्पर्यनिर्णये । "अन्त्याप्यर्धस्थलं हैमं चाद्रतो वज्रलेपकं" । वज्रलेपसहितं हैमस्थलमन्त्याध्यर्धं अन्त्यस्य स्वादूदकसमुद्रस्य विस्तारप्रमाणापेक्षया अध्यर्धमधिकार्धयुक्तमित्यर्थः । एतद्वचनानुसारेणैव मानसमेर्वोरन्तरमित्येवद्भागवतवचनं समुद्रान्विहाय द्वीपमात्रपरिच्छेदेन योजितं । तात्पर्यनिर्णयस्य सर्वपुराणार्थनिर्णायकत्वेन तदनुसारेणैव भागवतस्यापि योज्यत्वात् । सुवर्णभूमेरुक्तपरिमाणस्य एव भूमेः पञ्चाशत्कोटिविस्तारस्योपपत्तेश्च । "ततो हेममयीभूमिःदशकोट्यो धरानने । देवानां क्रीडनार्थाय लोकालोकस्ततःपरम्" इति शैवतत्त्ववचनंच । सुवर्णभूमिपरिमितेस्य दशकोटिप्रमाणपरिमितत्वपरत्वेन योज्यं । विस्तारप्रमाणपरत्वे भागवतविरोधात् । पञ्चाशत्कोटिभूमिविस्तारगणनायासस्सहृतत्वाच्च । पुराणान्तराणां भूगोलविषये भागवतानुसारेण योज्यत्वे प्रमाणं पूर्वमेवोक्तं । सर्वजन्तुविवर्जितेत्येतद्देयतदनुगव्यतिरिक्तसर्वजन्तुनिषेधाभिप्रायं । अन्यथा देवानां क्रीडनार्थायेति तद्वचनविरोधात् ॥ ९३ ॥ ततः सुवर्णभूमेरनन्तरं लोकालोकः । अलोकस्तमः तमसा तत्संबन्धात् । लोकालोकाख्यशैलः उच्छ्रयेण सहस्रयोजनायुतविस्तृतः उच्छ्रायविस्तारयोर्मिलित्वाऽयुतप्रमाणमित्यर्थः । अयुतशब्दस्य विवक्षितमर्थं दर्शयन् उक्तमेव स्पष्टयति—तावन्तीति ॥ स अचलस्तावन्त्ययुतसंख्याकानि सहस्राणि विस्तृतः उच्छ्रितश्च अयुतसहस्रयोजनंच । विस्तारोच्छ्रययोर्मिलितं प्रमाणं तेन विस्तारः पञ्चाशल्लक्षपरिमाणः उच्छ्रायश्च तावानिति बोद्धव्यम् । हिशब्देन उक्तार्थे प्रमाणसिद्धिं द्योतयति । उक्तंच भागवते "सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनांस्त्रीँल्लोकानावितन्वाना न कदाचित्पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः"इति । अत्र त्रीन्लोकानित्यादिना भूम्यादिलोकत्रयविस्ताराणां गभस्तीनां लोकालोकपर्वतान्तरेऽवस्थितत्वोक्त्या तस्य तावदुन्नहनायाम इत्यनेन लोकत्रयोच्छ्रितत्वं तावद्विस्तारत्वं चोच्यत इति गम्यते । लोकत्रयप्रमाणंच भूलोकादूर्ध्वं लक्षयोजनपरिमितमन्तरिक्षं । तत अर्धकोटिपरिमितः स्वर्ग इत्येकपञ्चाशल्लक्षयोजनपरिमितं । तथाच लोकालोकस्तावदुच्छ्रितः । आयामे

रत्नगर्भीयम् ।

मपीति भावः । अन्येतु प्रतिपदारभ्योत्तरोत्तरमेकैकाङ्गुलवृद्ध्या विंशत्युत्तरशताङ्गुलं भवति । पञ्चेति

[ पा० ] १ घ. योजनान्यचलो.

ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् ।
तमश्चाण्डकटाहेन समन्तात्परिवेष्टितम् ॥ ९५ ॥

पञ्चाशत्कोटिविस्तारा सेयमुर्वी महामुने ।
सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा ॥ ९६ ॥

चित्सुखीयम् ।

लक्षौ । एवं प्लक्षद्वीपसमुद्रावपि प्रत्येकं द्विद्विलक्षप्रमाणौ । एवमुत्तरद्वीपसमुद्राणां उत्तरोत्तरद्विगुणवृद्ध्या स्वादूदकपर्यन्तेन चतुःपञ्चाशल्लक्षाधिककोटिद्वयं योजनानां संपद्यते । ततश्चतुष्षष्टिलक्षप्रमाणात्स्वादूदकात्काञ्चनभूमेर्द्विगुणत्वादष्टाविंशतिलक्षाधिककोटिप्रमाणतया वक्ष्यमाणेन सह त्र्यशीतिलक्षाधिककोटित्रयप्रमाणा पृथिवी । तथा मेरुप्रभृतिपर्वतानामुच्छ्रायः पृथिव्या एव विस्तार इति तैः किञ्चिन्यूना-

श्रीधरीयम् ।

सयोऽर्वाचीनांर्वाक्लोकान्तराचितन्वाना न कदाचित्पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः" इति शुकोक्तेः । अत्रायं गणनाक्रमः—पूर्वोक्तद्वीपाब्धिद्वैगुण्यक्रमेण मेरोः सर्वतः सप्तलक्षाधिकपञ्चकोटिप्रमाणा साब्धिसप्तद्वीपवती भूमिः । ततो द्विगुणा चतुर्दशलक्षोत्तरदशकोटिप्रमाणा काञ्चनी भूमिर्मेरोरेकतः । उभयतस्त्वष्टाविंशतिलक्षाधिकविंशतिकोटिप्रमाणा । तदेवं साब्धिद्वीपभूम्या सह काञ्चनी भूमिः पञ्चत्रिंशल्लक्षोत्तरपञ्चविंशतिकोटिप्रमाणा संपद्यते । ततो लोकालोकशैलोऽयुतयोजनविस्तारस्सर्वतो वलयाकृतिः ॥ ९४ ॥ तत इति । ततस्तं शैलं सर्वतस्तम आवृत्य तिष्ठति । तत्र विंशतिसहस्राऽधिकपञ्चविंशतिलक्षन्यूनपञ्चविंशतिकोटिपरिमितम् "एतेन ह्यलोकपरिमाणं च व्याख्यातम्" इति शुकोक्तेः ॥ ९५ ॥ पञ्चाशत्कोटिविस्तारेति । तदेवं पञ्चाशत्कोटियोजनविस्तारा सेयमुर्वीततोऽण्डकटाहः सर्वतस्समयर्हिलोऽन्तः पञ्चाशत्कोटिविस्तारः । "अण्डमध्यगतस्सूर्यो द्यावाभूम्योर्यदन्तरम् । सूर्याण्ड-

विष्णुचित्तीयम् ।

सार्धद्वादशकोट्यादिकमलोकाख्यम् ॥ ९४ ॥ तत इति । तत्रैव तमोगर्वोदौ च तामसभूतावासभूतौ सगर्तोदात्तमसः परस्तात् परितः प्रतिदिशामण्डकटाहादर्वाग्महापुरुषनिवासभूतो वैकुण्ठलोकः । ततः कटाह इति ज्ञेयः । भागवते हरिवंशे च ब्राह्मणपुत्रानयनप्रस्तावे भगवत्स्थानस्य तथोपवर्णितत्वात् ॥ ९५ ॥ पञ्चाशदिति । एवं मेरोरेकतः कटाहान्तं पञ्चविंशति कोटिकं भूविस्तारार्धम् अन्य-

रङ्गाचेशीयम् ।

भागवते प्रमाणान्तरानुसारात् किञ्चिन्न्यूनमवगन्तव्यं । उक्तं च तात्पर्यनिर्णये "लोकालोकप्रदेशश्च पञ्चाशल्लक्षविस्तृतः । सपञ्चाशत्सहस्रश्च" इति । तन्नु सहस्राणिच तावन्तीति विस्तारोच्छ्रायोः प्रत्येकं पञ्चाशल्लक्षपरिमितत्वोक्तिः भागवतोक्ताधिकांशसमुच्चयार्थोऽपिशब्दः । तथाचैकपञ्चाशल्लक्षयोजनोच्छ्रितः पञ्चाशत्सहस्राधिकपञ्चाशल्लक्षविस्तारो लोकालोक इत्युक्तं भवति ॥ ९४ ॥ ततो लोकपरिवेषरूपलोकालोकानन्तरं समस्तं शैलं समावृत्य सर्वतः परिवेष्टयित्वा स्थितः । तमश्चेति चशब्देन तमोनन्तरप्रदेशे विद्यमानं घनोदकं "ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम्" इति दशमस्कन्धोक्तं समुच्चीयते । तमसो घनोदकस्य च विस्तारं तात्पर्यनिर्णयोक्तं द्रष्टव्यं । तमो घनोदकं चाण्डकटाहेन कटाहाकारमहाण्डेन समन्तात्परिवारितं । तमो घनोदकेन परिवारितं तच्च महाण्डेन परिवारितमित्यर्थः ॥ ९५ ॥ एवं जंबूद्वीपमारभ्य घनोदकपर्यन्तं द्वीपसमुद्रादीनां प्रत्येकपरिमाणमुक्त्वा मिलित्वा सर्वभूमेः परिमाणमाह—पञ्चाशदिति ॥ सा महाण्डकटाहवर्तिनी या उर्वी पञ्चाशत्कोटि-

[ पा० ] १ स. ट. कपाटेन.

चित्सुखीयम् ।

र्धयोजनाधिकपञ्चचत्वारिंशद्योजनाधिकपञ्चशतोत्तरचतुःपञ्चाशत्सहस्रोत्तरद्विसप्ततिलक्षयोजनपरिमितैः सहितत्वात्सार्धपञ्चचत्वारिंशद्योजनोत्तरपञ्चशताधिकचतुःपञ्चाशत्सहस्रोत्तरचतुःपञ्चाशल्लक्षाधिककोटिचतुष्टयप्रमाणा भूः । एतद्दशगुणोऽण्डकटाहः । दशोत्तराण्यदोषाणीति वक्ष्यमाणत्वात् । एवमप्यण्ड-

श्रीधरीयम् ।

गोलयोर्मध्ये कोटयः स्युः पञ्चविंशतिः" इति शुकोक्तेः । "कश्चित्कश्चित्पुराणेषु विरोधो यदि लक्ष्यते । कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥" सहैवाण्डकटाहेनेति तन्मध्यपरिकल्पितेत्यर्थः ॥ ९६ ॥

विष्णुचित्तीयम् ।

तच्च तथा । इत्थं संहत्य पञ्चाशत्कोटिर्भूविस्तारः । एवमूर्ध्वाधःकटाहावधिब्रह्माण्डोच्छ्रायः पञ्चाशत्कोटिः "सूर्याण्डगोलयोर्मध्ये कोटयः स्युः पञ्चविंशतिः" इति शुकोक्तेः । यद्वा—एकत एव लोकालोकान्तस्सार्धनिलक्षाध्यर्धद्विकोट्यात्मकाद्वैगुण्यं काञ्चनभूमेस्ससप्तलक्षपञ्चकोट्यात्मकं कृत्वा शिष्टं सप्तदशकोट्यादिकमन्तःकटाहादिमानत्वेन योज्यं । पुराणकारस्य हि वैराग्योत्पादने भगवन्माहात्म्यज्ञापने च तात्पर्यांश लोकसङ्ख्यागणितेष्वतादरः । ततो यथाकथञ्चिदपि पञ्चाशत्कोटिविस्तारस्य भुवो ज्ञेयम् । अन्ये तु विस्तारशब्दं व्यासार्धपरं कृत्वा मेरोरभितः पञ्चाशत्कोटित्वं वर्णयन्तो भूमेः शतकोटिविस्तारत्वं प्राहुः । तथा च वाराहे—"भूमण्डलं तु शतकोटिविस्तारं साण्डकटाहम्" इति । अयमेव पक्षः स्कान्दे शिवरहस्ये विस्तारेणोक्तः । शैवतन्त्रान्तरे च "कोटिद्वयं त्रिपञ्चाशल्लक्षाणि च ततः परम् । पञ्चाशच्च सहस्राणि सप्तद्वीपाः ससागराः ॥ ततो हिरण्मयी भूमिर्दशकोट्यो वरानने । देवानां क्रीडनार्थाय लोकालोकस्ततः परम् ॥ पर्वतो वलयाकारो योजनायुतविस्तृतः । तस्माद्बाह्ये तमो घोरं दुष्प्रेक्ष्यं जीववर्जितम् ॥ पञ्चत्रिंशत्स्मृताः कोट्यो लक्षाण्येकोनविंशतिः । चत्वारिंशत्सहस्राणि योजनानां वरानने ॥ सप्तसागरमानस्तु गर्भोदस्तदनन्तरम् । कोटियोजनमानस्तु कटाहः सम्यवस्थितः ॥" इति । अस्मिंस्तु पक्षे "सूर्याण्डगोलयोर्मध्ये कोटयः स्युः पञ्चविंशतिः" इति भागवतश्लोकस्थसूर्यशब्दस्तत्प्रकाश्यदेशपरो योज्यः । "रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । ससमुद्रसरिच्छैला तावती पृथिवी स्मृता ॥" इति वक्ष्यमाणत्वात् । "प्रकाश्य पृथिवीमानं पञ्चविंशतिकोटिकम्" तत्प्रकाशकमेव सूर्यं कल्पयित्वा ततः परं यावदण्डकटाहं पञ्चविंशतिरित्येवार्थः । यद्वाऽण्डकटाहान्तः पञ्चाशत्कोटिः पृथिवी बहिरावरणभूता तावतीति । एवं शतकोटित्वं वराहपुराणानुसारायोज्यम् । यद्वा शास्त्रीयाद्गु-

दत्तात्रेयीयम् ।

विस्तारा । अथ गणनाक्रमः । समस्तभूमण्डलमध्यस्थो जम्बूद्वीपो लक्षयोजनविस्तारात्मकः तन्मध्यस्थो मेरुः तमारभ्योत्तरतो महाण्डकटाहपर्यन्तं पञ्चविंशतिकोट्यात्मकं भूविस्तारार्धं । तथाहि लक्षयोजनात्मकस्य जम्बूद्वीपस्य तन्मध्यवर्तिमेरुमारभ्योत्तरतः पञ्चाशत्सहस्रयोजनविस्तारः । ततो लवणसमुद्रः जम्बूद्वीपसमानप्रमाणविस्तारस्तावल्लक्षयोजनविस्तारः । तदुत्तरतो विद्यमानाः प्लक्षादयः षट् द्वीपाः षट् समुद्राश्च पूर्वपूर्वापेक्षयोत्तरोत्तरद्विगुणाः । ततश्च समुद्रसप्तद्वीपभूप्रदेशस्य पञ्चाशत्सहस्रन्यूनचतुःपञ्चाशल्लक्षोत्तरकोटिद्वयं सप्तम । ततः सुवर्णभूमिः षण्णवतिलक्षयोजनविस्तारा । ततो लोकालोकः पञ्चाशत्सहस्राधिकपञ्चाशल्लक्षयोजनविस्तारः । तथाच सप्तसमुद्रसप्तद्वीपसुवर्णभूमिलोकालोकानां मिलित्वा विस्तारः कोटिचतुष्टययोजनात्मकः । लोकालोकाद्बहिः तमः सप्तकोटिविस्तारं । ततो घनोदकं चतुर्दश-

## पञ्चमोऽध्यायः ॥ ५ ॥

अतलादिसप्तपातालवर्णनम् ॥ १ ॥ पातालानामधोभागे विद्यमानशेषाख्यानन्तस्वरूपिणो भगवतः स्वरूपगुणमाहात्म्यादिवर्णनम् ॥ २ ॥

श्रीपराशर उवाच ॥

विस्तार एष कथितः पृथिव्या भवतो मया ।
सप्ततिस्तु सहस्राणि द्विजोच्छ्रायोऽपि कथ्यते ॥१॥
दशसाहस्रमेकैकं पातालं मुनिसत्तम ।
अतलं वितलं चैव नितलं च गभस्तिमत् ।
महाख्यं सुतलं चाग्र्यं पातालं चापि सप्तमम् ॥२॥
शुक्लाः कृष्णारुणाः पीताः शर्कराः शैलकाञ्चनाः ।
भूमयो यत्र मैत्रेय वरप्रासादमण्डिताः ॥ ३ ॥
तेषु दानवदैतेया यक्षाश्च शतशस्तथा ।
निवसन्ति महानागजातयश्च महामुने ॥ ४ ॥
स्वर्लोकादपि रम्याणि पातालानीति नारदः ।
प्राह स्वर्गसदां मध्ये पातालाभ्यागतो दिवि ५ ॥

चित्सुखीयम् ।

अथाण्डकटाहादारभ्य भूर्लोकपर्यन्तेन सप्ततिसहस्राणि भूमेरुच्छ्रायः ॥ १ ॥ स्वर्गसदां देवानां मध्ये

श्रीधरीयम् ।

सप्तभूमिकविशालप्रासादवदधो भुवः । सप्तपातालपङ्क्तिस्तु वर्ण्यतेऽनन्तसम्पत्के ॥१॥ दशसाहस्रमिति ॥ दशसाहस्रमिति प्रत्येकं सहस्रयोजनोच्छ्रिता भूमिः । ततो नवसहस्रोच्छ्रितमेकैकं पातालं । भूमिविवरमित्यर्थः । "सहस्रयोजनान्येषां दलान्यन्तरभूमयः । प्रत्येकशोऽन्तराण्येषां सहस्राणि नवाध्वनाम् ॥" इति शिवरहस्योक्तेः । महाख्यं महातलम् ॥ ० ॥ ३ ॥ ४ ॥ स्वर्लोकादिति ॥ पातालेभ्यो दिवमागतः सन् स्वर्ग-

विष्णुचित्तीयम् ।

विस्तार इति ॥ सप्ततिसहस्रोच्छ्रायत्वं सप्तभूमिकप्रासादन्यायेन ॥ १ ॥ दशसाहस्रमिति ॥ दशसहस्रेण भूमितद्विवरमानविभागः शिवरहस्योक्तः "सहस्रसम्पुटाः सप्त भागाः सुरसमाश्रयाः । योजनानां चायुतानि सप्त सप्तार्थचिन्तकैः ॥ सहस्रयोजनान्येषां दलान्यन्तरनेमयः । प्रत्येकशोऽन्तराण्येषां सहस्राणि नवाध्वनाम् ॥" इति । अध्वनां योजनानामित्यर्थः । अत्र विशेषो वायुना "पृथिव्याश्चोदकं सा च पृथ्व्यपामुपरि स्थिता । आकाशाच्चापरमपः पुनर्भूमिः पुनर्जलम् ॥" इति । महाख्यं महातलम् ॥२॥

वृषात्रेयीयम् ।

एवं ब्रह्माण्डान्तर्गतभूप्रदेशस्य पञ्चाशत्कोटिविस्तारमुक्त्वा ततोऽधस्तात्सप्तभूविवररूपलोकान्याह पातालमारभ्य भूमेरुच्छ्रायपरिमाणमाह—विस्तार इति ॥ १ ॥ एकैकं पातालं दश । तत्र तत्पातालवर्तिनी भूः प्रत्येकं सहस्रयोजनोच्छ्रिता । भूविवररूपं एकैकं पातालं नवसहस्रयोजनोच्छ्रितमिति । तदुक्तं शिवरहस्ये "सहस्रयोजनान्येषां दलान्यन्तरभूमयः । प्रत्येकशोऽन्तराण्येषां सहस्राणि नवाध्वनाम्" इति । अध्वनां योजनानामित्यर्थः । सप्तपातालानामुच्छ्रायप्रमाणसमानएव विस्तारः । तदुक्तं भागवते "एकैकशो योजनायुतायामविस्तारः" इति । आयाम उच्छ्रायः । महाख्यं महातलं ॥ २ ॥ यत्र तलादिषु सिताः शर्कराः स्थूलवालुकाः यासु ताः । शैलाः शिलामयाः काञ्चनाः काञ्चनमय्यश्च तास्तथा । इत्यत्रान्वयः ॥ ३ ॥ तेषु पातालादिषु ॥ ४ ॥ पातालेभ्यो दिवंगतो नारदः स्वर्गसदां देवा-

[ पा० ] १ घ. च. तलम्. २ क. शिरसंदा. ३ क. शैलकाञ्चना. ४ ग. ग. ख—ज. झ. ट—ढ. प्रासादभवनैर्भिताः. ५ ग—ङ छ—झ. ट. ढ. दैतेयाश्च नागसङ्घाः । घ. दैतेयाश्च महासुराः । च. दैतेयाश्च शन्ति सहस्र. ६ ए. घ—छ. पातालाभ्ये.

आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः ।
नागाभरणभूषासु पातालं केन तत्समम् ॥ ६ ॥
दैत्यदानवकन्याभिरितश्चेतश्च शोभिते ।
पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते ॥७॥
दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ।
शशिरश्मिर्न शीताय निशि द्योताय केवलम् ॥८॥
भक्ष्यभोज्यमहापानमुदितैरपि भोगिभिः ।
यत्र न ज्ञायते कालो गतोऽपि दनुजादिभिः ॥९॥
वनानि नद्यो रम्याणि सरांसि कमलाकराः ।
पुंस्कोकिलाभिलापाश्च मनोज्ञान्यम्बराणि च १०
भूषणान्यतिशुभ्राणि गन्धाढ्यं चानुलेपनम् ।
वीणावेणुमृदङ्गानां स्वनैरापूरितानि च ॥ ११ ॥
एतान्यन्यानि चोदारभाग्यभोग्यानि दानवैः ।
दैत्योरगैश्च भुज्यन्ते पातालान्तरगोचरैः ॥ १२ ॥
पातालानामधश्चास्ते विष्णोर्या तामसी तनुः ।
शेषाख्या यद्गुणान्वक्तुं न शक्ता दैत्यदानवाः १३

चित्सुखीयम् ।

पातालेभ्यो दिवमभ्यागतः ॥ ५ ॥ नागाभरणभूषासु नागानामाभरणलक्षणालङ्कारेषु मणयः । यत्र पाताले । तत्पातालं केन समं नकेनापि । सर्वोत्तमत्वात् ॥ ६ ॥ उदारभाग्यभोग्यानि उत्कृष्टपुण्यो-

श्रीधरीयम् ।

सर्वा देवानां मध्ये प्राह ॥ ५ ॥ आह्लादकारिण इति ॥ शुभ्राः शुद्धा मणयो नागैराध्रियमाणासु भूषासु । यत्र पाताले । तत्पातालं केन समं न केनापि समं निरुपममित्यर्थः ॥ ६ ॥ दैत्यदानवकन्याभिरिति ॥ विमुक्तस्य वीतरागस्यापि ॥ ७ ॥ ८ ॥ ९ ॥ वनानीति ॥ पुंस्कोकिलानामभिलापाः कूजितानि च ॥ १० ॥ भूषणानीति ॥ तूर्याणि नृत्तगीतवाद्यानि ॥ ११ ॥ एतानीति ॥ उदारैर्भाग्यैः पुण्यैः भो-

विष्णुचित्तीयम् ।

शुक्लेति ॥ सर्व वालुकामयम् ॥ ३ ॥ ४ ॥ ५ ॥ आह्लादकारिण इति ॥ नागाभरणेति ॥ आध्रियत इत्याभरणं नागैर्ध्रियमाणासु भूषासु । यद्वा भूषाश्चूडाद्यलङ्काराः नित्याः फणामणिप्रभृतयो या । नागाहरणभूषास्विति च पाठः ॥ ६ ॥ दैत्यदानवकन्याभिरिति ॥ विमुक्तस्य विषयरागविमुक्तस्य ॥ ७ ॥ दिवेति ॥ रश्मिप्रवेशवचनाद्द्वारसद्भावोऽनुमेयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ पातालानामिति ॥ "तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्याताऽनन्त" इति भागवतोक्तिः । तामसी संहारहेतुभूततमोधिष्ठात्री । अत एवास्य वदनात् कालाग्निरुद्रनिष्क्रमणमुत्तर-

दत्तात्रेयीयम् ।

वीनां मध्ये प्राह ॥ ५ ॥ यत्र पाताले । नागाभरणभूषासु नागैराध्रियत इति नागाभरणाः । नागैः आध्रियमाणासु भूषासु शुभ्राःशुद्धाःमणयःसन्ति ।तत्पातालं केन समं निरुपममित्यर्थः ॥६॥ विमुक्तस्यापि वीतरागस्यापि ॥७॥ शशिन इत्यनन्तरं भुक्ष्या विविक्तस्य रश्मय इत्यस्यसंबन्धः ॥८॥ भक्ष्यं लड्डुकादि । भोज्यं ओदनादि । महापानं मद्यादि तैर्मुदितैः । अतिभोगिभिः सुखातिशयशालिभिः ॥ ९ ॥ पुंस्कोकिलानामभिलापाः कूजितानि ॥ १० ॥ तूर्याणि नृत्तगीतवादित्राणि । सुनादैर्नादितानीतिपाठे च नदीनां विशेषणं ॥ ११ ॥ उदारभाग्यभोग्यानि उदारैरुत्कृष्टैर्भाग्यैः पुण्यैः भोग्यानि भोक्तुं योग्यानि ।

रत्नगर्भीयम् ।

प्रसङ्गात्सप्तपातालं सप्तभूमिकभेदवत् । भुवोऽधो वर्ण्यतेऽनन्तसत्त्वकेऽणुप्रमाणकम् । प्रभामालो-

[ पा० ] १ च. नागाला फणभूषासु । ड. नागैराध्रियमाणासु । [ वि. चि. पा. ] नागाहरणभूषासु. २ क. ग. घ—च. ज—ड. शशिनश्च न शीताय. ३ [ द० पा० ] रतिभोगिभि. ४ ख. शिवाद्याय. ५ क. च्यपिरम्याणि. ६ ख. च. सुनादैर्नादितानि च । ख—ड. ज. म. ड. तानातूर्याणि च द्विज. ७ क. भोगभोग्यानि । घ. भक्ष्यभोज्यानि.

योऽनन्तः पठ्यते सिद्धैर्दैवो देवर्षिपूजितः ।
स सहस्रशिरा व्यक्तस्वस्तिकामलभूषणः ॥ १४ ॥
फणामणिसहस्रेण यः स विद्योतयन्दिशः ।
सर्वान्करोति निर्वीर्यान्हिताय जगतोऽसुरान् १५
मदाघूर्णितनेत्रोऽसौ यः सदैवैककुण्डलः ।
किरीटी स्रग्धरो भाति साग्निः श्वेत इवाचलः १६
नीलवासा मदोत्सिक्तः श्वेतहारोपशोभितः ।
साभ्रगङ्गाप्रवाहोऽसौ कैलासाद्रिरिवापरः ॥ १७ ॥
लाङ्गलासक्तहस्ताग्रो बिभ्रन्मुसलमुत्तमम् ।
उपास्यते स्वयं कान्त्या यो वारुण्या च मूर्तया १८

कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः ।
सङ्कर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् १९
स बिभ्रच्छेखरीभूतमशेषं क्षितिमण्डलम् ।
आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः ॥ २० ॥
तस्य वीर्यं प्रभावश्च स्वरूपं रूपमेव च ।
न हि वर्णयितुं शक्यं ज्ञातुं च त्रिदशैरपि ॥ २१ ॥
यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ।
आस्ते कुसुममालेव कस्तद्वीर्यं वदिष्यति ॥ २२ ॥
यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः ।
तदा चलति भूरेषा साब्धितोया सकानना २३ ॥

चित्सुखीयम् ।

पभोग्यानि ॥ १२ ॥ वीर्यं सामर्थ्यं । प्रभावः प्रतापः । स्वरूपं तत्त्वं । रूपमाकृतिः ॥ २१ ॥ विधू-

श्रीधरीयम् ।

ग्यानि । पातालानामन्तरं मध्यं गोचरो विषयो येषां तैः ॥ १२ ॥ १३ ॥ य इति ॥ स्वस्तिकं फणा-स्थरेखाचिह्नविशेषः । व्यक्तं स्वस्तिकमेवामलं भूषणं यस्य सः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ला-ङ्गलासक्तेति ॥ कान्त्या श्रिया । वारुण्या मदिराधिष्ठातृदेवतया ॥ १८ ॥ १९ ॥ स इति ॥ शेखरीभूतं मुकुटवत्स्थितम् ॥ २० ॥ तस्येति ॥ वीर्यं बलं । प्रभावः प्रतापः । स्वरूपं तत्त्वं । रूपमाकारः ॥ २१ ॥

विष्णुचित्तीयम् ।

प्रोच्यते ॥ १३ ॥ य इति स्वस्तिकं फणास्थरेखाचिह्नविशेषः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ कल्पान्त इति ॥ सङ्कर्षणात्मकः सङ्कर्षणाधिष्ठितः ॥ १९ ॥ २० ॥ तस्येति ॥ वीर्यमुत्साहः । प्रभावः शक्तिः ।

वृत्तान्तेवीयम् ।

पातालान्तरगोचरैः पातालानां अन्तरं गर्भं गोचरो विषयो येषां ते तथोक्तास्तैः ॥ १२ ॥ पातालानां सप्तानामधः तामसी संहारकारणभूता तमोगुणप्रवर्तिनी शेषाख्या शेषान्तर्गता शेषशब्दवाच्या विष्णोर्मे तनुर्मूर्तिरास्ते यद्गुणान्वक्तुं दैत्यदानवाः नसमर्थाः ॥ १३ ॥ व्यक्तस्वस्तिकामलभूषणः व्यक्तं स्वस्तिकं फणास्थरेखाचिह्नविशेष एवामलं भूषणं यस्य सः ॥ १४ ॥ साग्निरिति किरीटतेजः अग्निसदृशं ॥ १६ ॥ अभ्रं मेघः गंगैव प्रपातः निर्झररवः ताभ्यां सहितः ॥ १७ ॥ मूर्तया मूर्तिमत्या वारुण्या तदात्मक-मदिराभिमानिन्या स्वस्त्रिया उपास्यते ॥ १८ ॥ कल्पान्ते प्रलयकाले सङ्कर्षणात्मकः सङ्कर्षणः आत्मा अन्तर्यामी यस्य स तथा । सङ्कर्षणात्मकभगवन्मूर्त्यधिष्ठित इत्यर्थः ॥ १९ ॥ शेखरीभूतं मुकुटाकार-तया स्थितं । पातालमूलस्थ इति ॥ पातालमूलशब्देन पातालादधस्त्रिंशत्सहस्रयोजनान्तरितप्रदेशो ग्राह्यः । तदुक्तं भागवते । "तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते । या वै कला भगवतस्तामसी समाख्याताऽन-न्त" इति ॥ २० ॥ वीर्यं पराक्रमः । प्रभावः शक्तिः । स्वरूपं तत्त्वं । रूपमाकारः ॥ २१ ॥ अशक्यत्वे हे-तुमाह—यस्येति ॥ पुष्पमालासादृश्यमतिलघुत्वद्योतनाय । कइति । नकोऽपीत्यर्थः ॥ २२ ॥ असह्यत्वे-

रत्नगर्भीयम् ।

कमात्मम् ॥ ८ ॥ सहस्रशिरसेति विशेषणे तृतीया । सहस्रशिरस इति वा पाठः ॥ १४ ॥

[ पा० ] १ ग. दैवदेवर्षिपूजित. २ [ रत्न० पा० ] सहस्रशिरस- । ठ सहस्रशिरसा. ३ च मण्डलः ४ क—ङ. पातोऽसौ. ५ क—ख. घ ड. ञ—ड. विद्योत° ६ घ श्रोतुं वा. ७ क. ख. ड. साब्धितोयाब्धि. कानना । ग—ज. ट. ठ. साब्धितोया सकानना । ड. साद्रिद्वीपा सकानना.

गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः ।
नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः २४
यस्य नागवधूहस्तैर्लेपितं हरिचन्दनम् ।
मुहुः श्वासानिलापास्तं याति दिक्क्षोदवासताम् ॥
यमाराध्य पुराणर्षिर्गर्गो ज्योतींषि तत्त्वतः ।
ज्ञातवान्सकलं चैव निमित्तपठितं फलम् ॥२६॥
तेनेयं नागवर्येण शिरसा विधृता मही ।
बिभर्ति मालां लोकानां सदेवासुरमानुषाम् २७॥

इति श्रीमद्विष्णुपुराणे पूर्वभागे द्वितीयांशे
पञ्चमोऽध्यायः ॥ ५ ॥

चित्सुखीयम् ।

द्वासतां । दिक्पटवासतामिति पाठे गन्धवासनरूपतां यातीत्यर्थः ॥२५॥ निमित्तेषु चेष्टादिषु पठितं फलं ज्ञातवानित्यन्वयः ॥ २६ ॥ देवासुरमानुषैः सहितां मालां पङ्क्तिं । तेन विधृतेयं मही बिभर्तीत्यन्वयः ॥ २७ ॥ इति श्रीचित्सुखमुनिविरचितायां श्रीविष्णुपुराणटिप्पण्यां द्वितीयांशे पञ्चमोऽध्यायः ॥ ५ ॥

श्रीधरीयम् ।

॥ २२ ॥ ॥ २३ ॥ २४ ॥ यस्येति ॥ लेपितं चर्चितम् अनुलिप्तं । यस्य श्वासानिलैरपास्तं विक्षिप्तं । दिक्षु उद्वासतां याति । उदकं वासयतीत्युद्वासः एलादिः तत्तां तत्करणचूर्णतां यातीत्यर्थः । दिक्ष्वधिवासतामिति पाठे अधिवासनचूर्णत्वं । दिक्क्षोदवासतामिति पाठे दिक्षु क्षोदवासतां याति । हरिद्रादिरजस्थानीयं भवतीत्यर्थः । दिक्पटवासतामिति वा पाठः ॥ २५ ॥ यमिति ॥ ज्योतींषि ग्रहनक्षत्रादीनि । निमित्ते उत्पातशकुनादौ फलितं शुभाशुभलक्षणं फलं च ज्ञातवान् ॥ २६ ॥ तेनेति ॥ सदेवासुरमानुषां सुरासुरमनुष्यैः सहितां । लोकानां पातालादीनां । मालां श्रेणिम् । तेन नागवर्येण शिरसा विधृता सतीयं मेदिनी बिभर्ति । लोकानामाधारभूताया भूमेरपि स आधार इत्यर्थः ॥ २७ ॥ इति श्रीश्रीधरस्वामिविरचितात्मप्रकाशाख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे पञ्चमोऽध्यायः ॥ ५ ॥

विष्णुचित्तीयम् ।

स्वरूपं तत्त्वं । रूपमाकारः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ यस्येति ॥ गालितम् इति पाठे पक्षशोधितम् । लम्भितं हरिचन्दनमिति पाठे लम्भितं समालम्भनीकृतम् अङ्गरागीकृतमित्यर्थः । दिक्क्षोदवासतां दिशां क्षोदवासताम् अधिवासनचूर्णत्वम् । दिक्षूद्वासतामिति पाठे जलाधिवासनचूर्णत्वमिति ॥ २५ ॥ यमिति ॥ निमित्ते ग्रहचारोत्पातशकुनादौ शुभाशुभसूचके पठितम् । निमित्तफलितमिति च पाठः ॥२६॥ ॥२७॥ इति श्रीविष्णुचित्तार्यविरचितायां श्रीविष्णुपुराणव्याख्यायां द्वितीयांशे पञ्चमोऽध्यायः ॥ ५ ॥

दत्तात्रेयीयम् ।

नान्तामायादितिभावः ॥ २४ ॥ नागवधूहस्तैर्लेपितमनुलिप्तं हरिचन्दनं यस्यानन्तस्य श्वासानिलापास्तं विक्षिप्तं दिक्षूद्वासतां जलाधिवासनचूर्णत्वं । दिक्क्षोदवासतामिति पाठे दिशां क्षोदवासतां अधिवासनचूर्णत्वं । दिक्पटवासतामिति पाठेऽप्ययमेवार्थः ॥ २५ ॥ ज्योतींषि ग्रहनक्षत्रादीनि । निमित्तपठितं निमित्ते ग्रहचारोत्पातशकुनादौ शुभाशुभसूचके पठितं प्रतिपादितं शुभाशुभलक्षणं फलं च ज्ञातवान् ॥२६॥ तेन नागवर्येण मही धृता सती लोकानां पातालादीनां मालां पङ्क्तिं बिभर्ति । लोकाधारभूमेरपि आधार इत्यर्थः ॥२७॥ इति श्रीदत्ता०विर०सुबोधिन्याख्यश्रीविष्णुपुराणव्याख्यायां द्वितीयांशे पञ्चमोऽध्यायः ॥५॥

रत्नगर्भीयम् ।

शेखरीभूतं मुकुटवत्स्थितम् । अनायासेन धृतमित्यर्थः ॥ २० ॥ इति श्रीरत्नगर्भ०विर० श्रीविष्णुपु० व्याख्यासारे द्वितीयांशे पञ्चमोऽध्यायः ॥ ५ ॥

[ पा० ] १ क. लिप्तं । ख. च. छ लाञ्छितं । ग. लेपितं । घ लोलितं । ड. लेपित । ज—ट. लोलितं । [विष्णु० चि० पा० ] गालितं. २ च मुहुश्श्वासानिलापास्तं. ३ क. ड. च. दिक्ष्वधिवासतां । ज. झ. ट. ठ. दिक्पटवासतां । [श्रीध० पा० ] दिक्षूद्वासतां. ४ ग. फलितं

## षष्ठोऽध्यायः ॥ ६ ॥

नरकाणां नामकथनम् ॥ १ ॥ तत्तन्नरकेषु तत्तदुष्कर्मनिमित्तदु सविशेषवर्णनम् ॥ २ ॥ पापनिर्णाशकसर्वविधप्रायश्चित्तेषु श्रीकृष्णानुस्मरणरूपप्रायश्चित्तस्यैव सर्वोत्कृष्टत्वकथनम् ॥ ३ ॥

श्रीपराशर उवाच ॥

ततश्च नरका विप्र भुवोऽधः सलिलस्य च ।
पापिनो येषु पात्यन्ते ताञ्छृणुष्व महामुने ॥१॥
रौरवः सूकरो रोधस्तालो विशसनस्तथा ।
महाज्वालस्तप्तकुम्भो लवणोऽथ विलोहितः ॥२॥
रुधिराम्भो वैतरणिः कृमिशः कृमिभोजनः ।
असिपत्रवनं कृष्णो लालाभक्षश्च दारुणः ॥ ३ ॥
तथा पूयवहः पापो वह्निज्वालो ह्यधःशिराः ।
सन्दंशः कालसूत्रश्च तमश्चावीचिरेव च ॥ ४ ॥
श्वभोजनोऽथाप्रतिष्ठो ह्यवीचिश्च तथा परः ।
इत्येवमादयश्चान्ये नरका भृशदारुणाः ॥ ५ ॥

श्रीधरीयम् ।

भारतो कृतपुण्यानामुक्ता भोगप्रदा भुवः । तत्रैव कृतपापानां यातनाभूरथोच्यते ॥ १ ॥ ततश्चेति ॥ सलिलस्य चेति तमोगर्तोदकस्याधः ब्रह्माण्डगर्भोदकादूर्ध्वमेव । "दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च-

विष्णुचित्तीयम् ।

उक्ता पुण्यभोगभूमिः । अथ पापभोगभूमिरुच्यते—ततश्चेति ॥ सलिलस्य तमोगर्तोदकस्याधः ॥१॥ रौरव इति ॥ रौरवसूकरौ रुरुमृगाद्युक्तपीडालयौ । निरुध्यत्र यत्र रुध्यते स रोधः । तालद्रुमात्पातन तत्पर्णकाण्डेन च छेदनं यत्र स तालः । करपत्रादिना तीक्ष्णशस्त्रेण यत्र छेदनं स विशसनः "गुरुतल्पगोऽस्य शङ्कितः शेते सम्प्राप्य निर्वृतिम्" इत्युक्तो महाज्वालः । यत्र तैलकुम्भेषु पच्यन्ते स तप्तकुम्भः । छित्त्वा छित्त्वा तप्तक्षारोत्क्षेपण यत्र स लवणः । लोहितस्य रुधिरस्य शोषणं यत्र स विलोहितः ॥ २ ॥ रुधिराम्भ इति । तप्तरुधिरमयोदको देशो रुधिराम्भः । रुधिरमयी दुस्तरा नदी वैतरणी । यत्र कृमिषु शय्यते स कृमिशः । यत्र कृमयो भुज्यन्ते स कृमिभोजनः । कार्ष्णायसशङ्कुः निरन्तरं यत्र सञ्चार्यते स कृष्णः । अतिशीतात्मा दारुणः ॥ ३ ॥ तथेति ॥ सन्दंशैर्यत्र जिह्वोत्पाटनं स सन्दंशः । यथोक्तम् "उत्पाट्यन्ते तथा जिह्वाः सन्दंशैर्भृशदारुणैः । आक्रोशपराणां दुष्टानां सदैवासद्भाषिणाम् ॥ शस्त्रधारा सदैवैता मृणालप्रसरं नरः । मन्यते नारकैः शस्त्रैर्विक्षतो द्विजसत्तम ॥

रत्नगर्भीयम् ।

एवं प्रवृत्तिपुण्यभोगभूमय उक्ताः । इदानीं पापभोगभूमीराह—ततश्चेत्यादिना ॥ ततः पातालेभ्यः । पातालानि सहरायोक्तं कौर्मे "तेषामधस्तान्नरका रौरवाद्याः प्रकीर्तिताः" इत्यादिना । भुवोऽधः भूप्रदेशादधः सलिलस्य ब्रह्माण्डगर्भोदकस्योपरिष्टादिति शेषः । चशब्दात्त्रिलोक्यन्तराले दक्षिणस्यां दिशीत्यपि प्राह । उक्तं च भागवते "अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च जलाद्यस्यामग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसन्ति ॥ यत्र ह वाव भगवान् पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु संपरेतेषु यथा कर्मावद्यं दोषमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति" इति ॥१॥ तानेव नरकान्प्राधान्यविवक्षया

रत्नगर्भीयम् ।

भूर्लोकाधःप्रसङ्गेन नरके तीव्रयातना । अघादिभुक्त्योत्तुवैराग्यायेह वर्ण्यते ॥ रौरवादीनां ना-

[ पा० ] १ च ज. म—ड तत सनरकान्विप्र २ म पच्यन्ते ३ ए तीक्ष्ण ४ स म ६—ज म ड, धरेश . ५ म—ड कृष्णसूत्रश्च

यमस्य विषये घोराः शस्त्राग्निभयदायिनः ।
पतन्ति येषु पुरुषाः पापकर्मरतास्तु ये ॥ ६ ॥
कूटसाक्षी तथाऽसम्यक्पक्षपातेन यो वदेत् ।
यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥७॥
भ्रूणहा पुरहन्ता च गोघ्नश्च मुनिसत्तम ।
यान्ति ते नरकं रोधं यश्चोच्छ्वासनिरोधकः ॥८॥
सुरापो ब्रह्महा हर्ता सुवर्णस्य च सूकरे ।
प्रयान्ति नरके यश्च तैः संसर्गमुपैति वै ॥ ९ ॥
राजन्यवैश्यहन्ता च तथैव गुरुतल्पगः ।
तप्तकुण्डे स्वसागामी हन्ति राजभटांश्च यः ॥१०॥

चित्सुखीयम् ।

सलिलस्य समुद्रस्य ॥ १ ॥ कूटसाक्षी मिथ्यावादी साक्षी ॥ ७ ॥ स्वसा भगिनी ॥ १० ॥

श्रीधरीयम् ।

महजलाशयस्य" इति श्रुकोक्तेः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ कूटसाक्षीति ॥ जानन्नप्यन्यवदन् अन्यथा वा वदन्कूटसाक्षी । यश्च धर्माधिकृतः सन् असम्यक् अन्याय्यं वदेत् यश्चान्यदनृतं वक्ति ॥ ७ ॥ भ्रूणहेति ॥ भ्रूणहा गर्भहन्ता । पुरहन्ता पुरविलुम्पकः ॥ ८ ॥ सुराप इति ॥ तैः संसर्गमिति । "संवत्सरेण संसर्गी पतितेन समाचरन् । याजनाध्यापनाद्यानात्सद्यः पतति तत्समः ॥" इति स्मृति-

विष्णुचित्तीयम् ।

हिमखण्डं च यच्छन्नो निवातं मन्यते नरः । विमुक्तो नरकाच्छीतत्रप्रकाशं तमस्ततः ॥ कृमिकीट-जलूकादितीक्ष्णदंष्ट्रप्रविक्षताः । भ्राम्यन्ते चान्धतामिस्रे वृथा मांसाशिनो हि ये ॥ कालसूत्रेण भिद्यन्ते घनारूढास्तु मानवाः । पादाङ्गुलिस्थेन सदा ह्यापादतलमस्तकम् ॥ एकीभूतशरीरश्चाविवेकेऽन्योऽनिचिरेण च" इति ॥ ४ ॥ ५ ॥ ६ ॥ कूटसाक्षीति ॥ साक्ष्यं जानन्नप्यवदन्नन्यथा वा वदन् यः स कूटसाक्षी । तथा यो धर्माधिकृतः सभ्यसम्यगयथार्थं वदति । साक्षिवादादन्यत्रासौ विप्रतिरिक्तमनृतम् ॥ ७ ॥ भ्रूणहेति ॥ भ्रूणो गर्भः । सूत्रप्रवचनाध्यायी वा । यथाऽऽह बोधायनः "उपनीतमात्रो व्रतचारी वेदानां किञ्चिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचानः, कल्पाध्यायी ऋषिकल्पः, सूत्रप्रवचनाध्यायी भ्रूणः, चतुर्वेदी ऋषिः, अत ऊर्ध्वं देवः" इति ॥ ८ ॥ सुराप इति ॥ सुवर्णस्य विप्रसम्बन्धिनो हेममात्रस्य षोडशमाषमानस्य वा हेम्नः । संसर्गम् अब्दं सह शय्यासनादिना सकृद्याजनादिना वा "संवत्सरेण पतति पतितेन समाचरन् । याजनाध्यापनाध्ययनात्सद्यः पतति तत्समः ॥" इति स्मृतेः ॥ ९ ॥ राजन्येति ॥ 'राजन्यवैश्यौ यागस्थौ' 'सवनगतौ हि क्षत्रियवैश्यौ' इत्यादिस्मृतेः । राजभटान्

रत्नगर्भीयम् ।

निर्दिशति—रौरव इत्यादिना ॥ २ ॥ यमस्य विषये यमस्य विद्यमानदेशे नरकाः सन्तीति पूर्वेणान्वयः ॥ ६ ॥ कूटसाक्षी साक्ष्यं जानन्नपि अन्यथा वदति मवदतिवा । यश्चधर्माधिकृतःसन् एकाभिन्यक्षपातेनासम्यगन्याय्यं वदेत् । साक्षिवादादन्यत्रासौनुपयुक्तमनृतं ॥ ७ ॥ भ्रूणहा गर्भहन्ता । पुरहन्ता पुरविलुंपकः । यान्ति ते नरकं रोधमिति पाठः । उच्छ्वासनिरोधकः उच्छ्वासं निरुध्य प्राणिघाती ॥ ८ ॥ सुवर्णस्य ब्राह्मणसंबन्धिनो हेममात्रस्य षोडशमाषमानस्य वा हेम्नः । संसर्गं अब्दं शय्यासनादिना सकृद्याजनादिनावा "संवत्सरेण पतति पतितेन समाचरन् ॥ याजनाध्यापनाद्यानात्सद्यः पतति तत्समः"इतिस्मृतेः ॥ ९ ॥ राजन्यवैश्यहन्ताच तथैव गुरुतल्पग इति पाठः ॥ राजन्यवैश्यौ या-

सत्यधर्मीयम् ।

भभिः स्वरूपं ज्ञेयम् ॥ २ ॥ विषये अधिकारे ॥ ६ ॥ भ्रूणो गर्भः । त्रिविष्टब्राह्मणो वा । "सूत्रप्र-

[ पा० ] १ ग. ङ. शस्त्रास्त्रदाः । घ. ञ. विषाग्नि- । ङ. च. भयदाग्नाः. २ घ. कृतघ्न ये. ३ घ. ग. ठ. पुरहन्ता. ४ ङ. ञ. झ. ट. ठ. रोधं. ५ [ र० पा० ] राजन्यवैश्यहा पाठे.

साध्वीविक्रयकृद्बन्धपालः केसरिविक्रयी ।
तप्तलोहे पतन्त्येते यश्च भक्तं परित्यजेत् ॥ ११ ॥
स्नुषां सुतां वापि गत्वा महाज्वाले निपात्यते ।
अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः १२ ॥
वेददूषयिता यश्च वेदविक्रयिकश्च यः ।
अगम्यगामी यश्च स्यात्ते यान्ति लवणं द्विज १३
चौरो विलोहे पतति मर्यादादूषकस्तथा ॥ १४ ॥
देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ।
स याति कृमिभक्षे वै कृमिशे च दुरिष्टकृत् ॥१५॥
पितृदेवातिथींस्त्यक्त्वा पर्यश्नाति नराधमः ।
लालाभक्षे स यात्युग्रे शरकर्ता च वेधके ॥ १६ ॥
करोति कर्णिनो यश्च यश्च खड्गादिकृन्नरः ।
प्रयान्त्येते विशसने नरके सुदारुणे ॥ १७ ॥

चित्सुखीयम् ।

केसरी अश्वः । भक्त अनुरक्त ॥ ११ ॥ स्नुषा पुत्रवधूः ॥ १२ ॥ मर्यादा शिष्टसमयः ॥ १४ ॥ दुरिष्ट-

श्रीधरीयम् ।

प्रसिद्ध ससर्गेम् ॥ ९ ॥ राजन्येति ॥ राजभटान् राज्ञा भटान्दूतान् ॥ १० ॥ साध्वीति ॥ साध्वी भार्या तस्याः विक्रयकृत् विक्रयकर्ता । बन्धपालः कारागृहरक्षकः । केसरिविक्रयी अश्वविक्रेता । भक्त दासम् ॥ ११ ॥ १२ ॥ वेददूषयिता वेदनिन्दकः । यश्च भृतकाध्यापकः ॥ १३ ॥ १४ ॥ देवद्विजेति ॥ मर्यादादूषकः शिष्टाचारनिन्दकः । दुरिष्टकृत् अभिचारकर्ता ॥ १५ ॥ पितृदेवा-तिथीनिति ॥ पर्यश्नाति परित्यज्यादौ भुङ्क्ते ॥ १६ ॥ करोतीति ॥ कर्णिनो बाणविशेषान् ॥ १७ ॥

विष्णुचित्तीयम् ।

युद्धस्थान् ॥ १० ॥ साध्वीविक्रयकृदिति । साध्वी भार्या । बन्धपालः कारागृहाधिकारी । केसरी अश्वः "तप्तलोहेऽश्वपणिक् तथा बन्धनरक्षिता । भार्याविक्रयकर्ता च यश्च भक्त परित्यजेत्" इति वायु. । 'ब्रह्महा मुच्यते येन न तेन हयविक्रयी' इति स्मृतिः । भक्त शरणागतम् ॥ ११ ॥ स्नुषा-मिति । अवमन्ताऽलीकनिर्बन्धकर्ता । आक्रोष्टा गुरूणा विप्राणां चाधिक्षेप्ता । शप्ता वा ॥ १२ ॥ वेदेति । वेददूषयिता निन्दको विसर्ता च । अगम्या मातुलान्यन्त्यजालाद्याः ॥ १३ ॥ चोर इति । सदाचा-रादिसिद्धसमयधर्ममर्यादाः ॥ १४ ॥ देवद्विजेति । दुरिष्टं विकलो यागः । अभिचारो वा ॥ १५ ॥ पितृदेवातिथीनिति । पित्रादीन्वर्जयित्वा आद्यावशन पर्यशनम् ॥ १६ ॥ करोतीति । कर्णिनश्शर-

वृत्ताशेषीयम् ।

गत्वौ "सवनगतौ क्षत्रियवैश्यौ निघ्नन् ब्रह्महा भवति" इति स्मृतेः । सूकरे भयान्तीति पूर्वेणान्वयः । राजन्यवैश्यहावाल इति कचित्पाठ । वाले वालाख्ये नरके । राजभटान् अयुद्धस्थभूतान् वा ॥ १० ॥ साध्वी भार्या । तस्या विक्रयकर्ता । बन्धपाल. कारागृहाधिकारी । केसरिविक्रयी अश्वविक्रेता । भक्त शरणागत । "तप्तलोहेऽश्वपणिक् तथा बन्धनरक्षिता । भार्याविक्रयकर्ता च यश्च भक्त परित्यजेत्" इति वायूक्तेः ॥ ११ ॥ अवमन्ता अवमानकर्ता । आक्रोष्टा अधिक्षेप्ता । शप्ता वा ॥ १२ ॥ वेददूषयिता वेद-निन्दक । वेदविक्रयिक वेतनेनवेदाध्यापक. । अगम्या मातुलान्याद्याः । लवण लवणाख्य नरक ॥ १३ ॥ चोरो विलोहे इति वा पाठ । शास्त्रविहितवर्णाश्रमधर्मो मर्यादा ॥ १४ ॥ रत्नदूषयिता श्रेष्ठदूषक' । दुरिष्टकृत् अभिचाररूपदुर्यागकर्ता ॥ १५ ॥ पर्यश्नाति भोज्यान्परित्यज्यादौ भुङ्क्ते । वेधक इत्येतद्विशसन इत्यस्य विशेषण ॥ १६ ॥ कर्णिनो दुराकर्षणाणविशेषान् ॥ १७ ॥ असत्प्रतिगृहीता

[ पा० ] १ च झ साध्वी २ ठ दृध्यपाल ड. बद्धपाल ३ व तप्तकुः ४ क ख ज—ट चोरो विगोदे । ग चोरे विमोदे ५ च कृमिसेवीन दुष्कृत्

असत्प्रतिगृहीता तु नरके यात्यधोमुखे ।
अयाज्ययाजकश्चैव तथा नक्षत्रसूचकः ॥ १८ ॥
[४]वेगी पूयवहं चैको याति मिष्टान्नभुङ्नरः ॥१९॥
लाक्षामांसरसानां च तिलानां लवणस्य च ।
विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ॥२०॥
मार्जारकुक्कुटच्छागश्ववराहविहङ्गमान् ।
पोषयन्नरकं याति तमेव द्विजसत्तम ॥ २१ ॥
रङ्गोपजीवी कैवर्तः कुण्डाशी गरदस्तथा ।
सूची माहिषिकश्चैव पर्वकारी च यो द्विज ॥२२॥

विष्णुचित्तीयम् ।

कृष्ण तुर्यस्तरून ॥ १५ ॥ पर्वभाति स तथा ॥ १६ ॥ रङ्गोपजीवी नर्तकः । कुण्डाशी यताशी ।

श्रीधरीयम् ।

असत्प्रतिगृहीतेति ॥ नक्षत्रसूचकः नक्षत्रजीवी ॥ १८ ॥ वेगीति ॥ पुत्रादीन्वञ्चयित्वा एक एव मिष्टान्नभुक् । वेगी साहसकारी ॥ १९ ॥ २० ॥ मार्जारेति ॥ तमेव कृमिपुयं पूयवहमेव ॥ २१ ॥ रङ्गोपजीवीति ॥ रङ्गोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । पत्यौ जीवति जारजातः कुण्डः तदन्नभोजी कुण्डाशी । सूची पिशुनः । माहिषिको महिष्युपजीवी । यद्वा "महिषीत्युच्यते भार्या भगेनोपार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः" ॥ इति स्मृतिभेदः । पर्वकारी पर्वादिलो-

विष्णुचित्तीयम् ।

पितेषाः ॥ १७ ॥ असत्प्रतिगृहीतेति । असत्कृष्णाजिनमेवादि । असतो म्लेच्छादिरपात्रा । अयाज्याः शूद्राद्याः । पतितशाल्या वा "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" नक्षत्रजीवी वा ॥ १८ ॥ वेगीति । वेगी साहसिकः । मिष्टान्नभुक् एक एव स्वादुभुक् ॥ १९ ॥ लाक्षेति । लाक्षा जतु । रसाः क्षीरगव्याद्याः ॥ २० ॥ २१ ॥ रङ्गोपजीवीति । रङ्गोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । जीवति भर्तरि जारजः कुण्डः तदन्नभोजी कुण्डाशी । आश्रितकुण्डभोजी वा । गरदः विषदः । सूची राजगामी पैशुनः "महिषीत्युच्यते भार्या भगेनोपार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः" इति ॥ कुलटार्थोपजीवी वा । पर्वकारी

इत्यादेशीयम् ।

असत्कृष्णाजिनमेवादि । असतो म्लेच्छादिपात्रात् ॥ १७ ॥ अयाज्ययाजकः अयाज्याः शूद्राद्याः । पतितमान्या वा । नक्षत्रसूचकः । "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" इति स्मृत्युक्तः । नक्षत्रोपजीवको वा ॥ १८ ॥ वेगी साहसी । यो मिष्टान्नभुक् पुत्रादीन्वञ्चयित्वा एक एव मिष्टान्नभोक्ता ॥ १९ ॥ रसादीनां क्षीरमध्वादीनां । ब्राह्मण इति पश्चादेव संबध्यते । तमेव पूयवहमेव ॥ २० ॥ कुक्कुटादीनां पृथगुपादानम् दोषातिशयसूचनाय ॥ २१ ॥ रङ्गोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । कुण्डाशी भर्तरि जीवति जारजः कुण्डः । तदन्नभुक् कुण्डाशी । सूची राजगामी पैशुनः । माहिषिकः महिष्युपजीवी "महिषीत्युच्यते भार्या भगेनोपार्जितं धनं । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः" इति । "महिषीत्युच्यते भार्या या चैव व्यभिचारिणी । तद्दोषं सहते यस्तु स वै माहिषिकः स्मृतः" इति च स्मृत्युक्तः पर्वकारी धनलोभेन अपर्वसु पर्वक्रियाकर-

रत्नगर्भीयम् ।

धनाप्यायी भूणः" इति बोधायनोक्तेः ॥ ८ ॥ आक्रोश्य परपाकस्वयम् ॥ १२ ॥ कुण्डाशी परपुरपि-

[ पा० ] १ ट. दुष्टिदृष्टवर्णं वैद्यो. २ क ख. कलपातक. ३ भ्रामितकैर्वकैः कुण्डाशीगरदस्तथा—स्वदर्पं गां अनुपाकर्मा वेद तथा कुलजीवी—ङ देवस्वं (ग. म) कुलजोरंदवी. ४ [ पठित० पा० ] वसेनी.

अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ।
रुधिरान्धे पतन्त्येते सोमविक्रयिणश्च ये ॥ २३ ॥
मखहा ग्रामहन्ता च याति वैतरणीं नरः ॥ २४ ॥
रेतःपातादिकर्तारो मर्यादाभेदिनो हि ये ।
ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये २५ ॥
असिपत्रवनं याति वनच्छेदी वृथैव यः ॥
औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै २६॥
यान्त्येते द्विज तत्रैव ये चापाकेषु वह्निदाः ॥२७॥
व्रतानां लोपको यश्च स्वाश्रमाद्विच्युतश्च यः ।
सन्दंशे यातनामध्ये पततस्तावुभावपि ॥ २८ ॥
दिवा स्वप्ने च स्कन्दन्ते ये नरा ब्रह्मचारिणः ।
पुत्रैरध्यापिता ये च वै पतन्ति श्वभोजने ॥२९॥

चित्सुखीयम् ।

अथवा कुण्डाशी जीवद्भर्तृकायाः जारजातस्यान्नाशी । सूची सूचकः पिशुन इति यावत् । माहिषिकः महिषीपालः । पर्वगामी पर्वमैथुनकृत् ॥ २२ ॥ कुहकमिन्द्रजालादि ॥ २५ ॥ औरभ्रिको मेषाजीवी ॥ २६ ॥ अपाकः कुलालपचनं । तत्र वह्निदः कुंभकारव्यतिरिक्तः ॥ २७ ॥ स्कन्दन्ते रेतस्त्यजन्ति

श्रीधरीयम् ।

येन अपर्वस्वमावास्यादिक्रियाप्रवर्तकः । पर्वगामीति पाठे पर्वसु स्त्रीगामी ॥ २२ ॥ अगारदाहीति ॥ शाकुनिः पक्षिजीवी । शुभाशुभनिमित्तशकुनोपजीवी वा । ग्रामयाजकः ग्रामार्थं यष्टा । अङ्गारदाहीति च पाठः ॥ २३ ॥ २४ ॥ धनेति ॥ मर्यादाभेदिनः क्षेत्रादिसीमातिक्रमकारिणः । कुहकं परवञ्चनम् इन्द्रजालादिकं वा आजीवो वृत्तिर्येषान्ते । कृष्णे कालसूत्रे ॥ २५ ॥ असिपत्रवनमिति ॥ यज्ञार्थं समित्पत्रादिकार्यं विना वृथैव वनच्छेदी असिपत्रवनमेति । औरभ्रिको मेषोपजीवी । मृगव्याधश्च ॥ २६ ॥ यान्तीति ॥ मृगव्याधश्च अपाकेषु वह्निदाश्च वह्निज्वाले पतन्ति । अपाकदाहो मृद्भाण्डेष्टकादौ । एते पूर्वोक्ता वक्ष्यमाणाः पापिनस्तत्तत्साधारणनरकभोगानन्तरं वह्निज्वालनरकं यान्तीत्यर्थः । शिवधर्मोत्तरादिषु पापाधिक्यात्पापिनां क्रमेणानेकनरकपातोक्तेः ॥ २७ ॥ २८ ॥ दिवेति ॥ स्कन्दन्ति रेतोऽपकिरन्ति

विष्णुचित्तीयम् ।

अपर्वसु पर्वक्रियादिकर्ता पर्वकारी । पर्वसु तैलस्त्रीमांसादि भोगकारी वा ॥ २२ ॥ अगारदाहीति ॥ शाकुनिः पक्ष्यादिजीवः । निमित्तशकुनजीवी वा ॥ २३ ॥ २४ ॥ रेतःपातादीति ॥ मर्यादाभेदिनः ग्रामादिसीमोल्लङ्घिनः । कुहकं शाठ्यम् । इन्द्रजालादि वा ॥ २५ ॥ असिपत्रवनमिति ॥ औरभ्रिको मेषाजीवी ॥ २६ ॥ यान्तीति ॥ अपाकोऽग्राह्यमृत्पिण्डेष्टकादिगर्भे इन्धनचयः ॥ २७ ॥ २८ ॥

असत्प्रतिगृहीता तु नरके यात्यधोमुखे ।
अयाज्ययाजकश्चैव तथा नक्षत्रसूचकः ॥ १८ ॥
[1]वेगी पूयवहे चैको याति मिष्टान्नभुङ्नरः ॥१९॥
लाक्षामांसरसानां च तिलानां लवणस्य च ।
विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ॥ २० ॥

मार्जारकुक्कुटच्छागश्ववराहविहङ्गमान् ।
पोषयन्नरकं याति तमेव द्विजसत्तम ॥ २१
रङ्गोपजीवी कैवर्तः कुण्डाशी गरदस्तथा ।
सूची माहिषिकश्चैव पर्वकारी च यो द्विज ॥२

चित्सुखीयम् ।

कृत् पुर्यसकृत् ॥ १५ ॥ पर्यभाति स यथा ॥ १६ ॥ रङ्गोपजीवी नर्तकः । कुण्डाशी यज्ञाशी

श्रीधरीयम् ।

असत्प्रतिगृहीतेति ॥ नक्षत्रसूचकः नक्षत्रजीवी ॥ १८ ॥ वेगीति ॥ पुत्रादीन्वञ्चयित्वा एक : मिष्टान्नभुक् । वेगी साहसकारी ॥ १९ ॥ २० ॥ मार्जारेति ॥ तमेव कृमियुक्तं पूयवहमेव ॥ २१ रङ्गोपजीवीति ॥ रङ्गोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । पत्यौ जीवति जाराज्जातः कुण्ड तदन्नभोजी कुण्डाशी ।सूची पिशुनः । माहिषिको महिषोपजीवी । यद्वा "महिषीत्युच्यते भार्या भगेनं पार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः" ॥ इति स्मृतिप्रोक्तः । पर्वकारी धनादिलं

विष्णुचित्तीयम् ।

विशेषः ॥ १७ ॥ असत्प्रतिगृहीतेति । असत्कृष्णाजिनमेषादि । असतो म्लेच्छादिकाद्वा । अयाज्या शूद्राद्याः । पतितप्रायाः वा "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" नक्षत्रजीवी वा ॥ १८ ॥ वेगीति । वेगी साहसिकः । मिष्टान्नभुक् एक एव स्वादुभु ॥ १९ ॥ लाक्षेति । लाक्षा जतु । रसाः क्षीरमध्वादयः ॥ २० ॥ २१ ॥ रङ्गोपजीवीति । रङ्गोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । जीवति भर्तरि जारजः कुण्डः तदन्नभोजी कुण्डाशी आश्रितसङ्घातान्नभोजी वा । गरदः विषदः । सूची राजगामी पैशुनः "महिषीत्युच्यते भार्या भगेनो पार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः" इति ॥ कुलटाजीवी वा । लोभादिना

दत्तात्रेयीयम् ।

असत्कृष्णाजिनमेषादि । असतोम्लेच्छादिकाद्वा ॥ १७ ॥ अयाज्ययाजकः अयाज्याः शूद्राद्याः । पतितप्राया वा । नक्षत्रसूचकः । "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" इति स्मृत्युक्तः । नक्षत्रोपजीवकोवा ॥ १८ ॥ वेगी साहसी । एको मिष्टान्नभुक् पुत्रादीन्वञ्चयित्वा एकएव मिष्टान्नभोक्ता ॥ १९ ॥ रसादीनां क्षीरमध्वादीनां । ब्राह्मण इति पश्चादप्येव संबध्यते । तमेव पूयवहमेव ॥ २० ॥ कुक्कुटादीनां पृथगुपादानम् दोषातिशयसूचनाय ॥ २१ ॥ रङ्गोपजीवी नटमल्लादिवृत्तिः । कैवर्तो धीवरवृत्तिः । कुण्डाशी भर्तरि जीवति जारजः कुण्डः । तदन्नभुक् कुण्डाशी । सूची राजगामी पैशुनः । माहिषिकः महिषोपजीवी "महिषीत्युच्यते भार्या भगेनोपार्जितं धनं । उपजीवति यस्तस्याः सवैमाहिषिकः स्मृतः"इति । "महिषीत्युच्यते भार्या साचेत्स्यात्स्वैरचारिणी । यद्दोषं सहते यस्तु सवैमाहिषिकः स्मृतः" इति च स्मृत्युक्तः पर्वकारी धनलोभेन अपर्वसु पर्वक्रियाप्रव-

रत्नगर्भीयम् ।

चनाध्यायी भ्रूणः"इति बोधायनोक्तेः ॥ ८ ॥ आक्रोष्टा परापवादवक्ता ॥ १२ ॥ कुण्डाशी चतुःपष्टि-

[ पा० ] १ ङ. कृमिपूयवहे चैको. २ क घ. लाक्षयनरकं. ३ रङ्गोपजीवीकैवर्तः कुण्डाशीगरदस्तथा—एतदर्धात्पूर्वं आपूविक्रयी चैव तथा पुस्तकविक्रयी—इत्येतदर्धं ( ग. च ) पुस्तकयोर्दृश्यते. ४ [ श्रीध० पा० ] पर्वगामी.

अंगारदाही मिश्रः शाकुनिर्ग्रामयाजकः ।
रुधिरान्धे पतन्त्येते सोमविक्रयिणश्च ये ॥ २३ ॥
मधुहा ग्रामहन्ता च याति वैतरणीं नरः ॥ २४ ॥
रेतःपातादिकर्तारो मर्यादाभेदिनो हि ये ।
ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये २५ ॥
असिपत्रवनं याति वनच्छेदी वृथैव यः ॥
औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै २६ ॥
यान्त्येते द्विज तत्रैव ये चापाकेषु वह्निदाः ॥२७॥
व्रतानां लोपको यश्च स्वाश्रमाद्विच्युतश्च यः ।
सन्दंशे यातनामध्ये पततस्तावुभावपि ॥ २८ ॥
दिवा स्वप्ने च स्कन्दन्ते ये नरा ब्रह्मचारिणः ।
पुत्रैरध्यापिता ये च ते पतन्ति श्वभोजने ॥२९॥

चित्सुखीयम् ।

अथवा कुण्डाशी जीवत्कुंडकायाः जारजातस्यान्नाशी । सूची सूचकः पिशुन इति यावत् । माहिषिकः महिषीपालः । पर्वगामी पर्वमैथुनकृत् ॥ २२ ॥ कुहकमिन्द्रजालादि ॥ २५ ॥ औरभ्रिको मेषाजीवी ॥ २६ ॥ अपाकः कुलालपचनं । तत्र वह्निदः कुंभकारइत्यर्थः ॥ २७ ॥ स्कन्दन्ते रेतस्स्खलन्ति

श्रीधरीयम् ।

येन अपर्वस्वमावास्यादिक्रियाप्रवर्तकः । पर्वगामीति पाठे पर्वसु स्त्रीगामी ॥ २२ ॥ अगारदाहीति ॥ शाकुनिः पक्षिजीवी । शुभाशुभनिमित्तशकुनोपजीवी वा । ग्रामयाजकः ग्रामार्थं यष्टा । अङ्गारदाहीति च पाठः ॥ २३ ॥ २४ ॥ वनेति ॥ मर्यादाभेदिनः क्षेत्रादिसीमातिक्रमकारिणः । कुहकं परवञ्चनम् इन्द्रजालादिकं वा आजीवो वृत्तिर्येषान्ते । कृष्णे कालसूत्रे ॥ २५ ॥ असिपत्रवनमिति ॥ यज्ञार्थं समित्पत्रादिकार्यं विना वृथैव वनच्छेदी असिपत्रवनमेति । औरभ्रिको मेषोपजीवी । मृगव्याधश्च ॥ २६ ॥ यान्तीति ॥ मृगव्याधश्च अपाकेषु वह्निदाश्च वह्निज्वाले पतन्ति । अपाकवाहो मृद्भाण्डेष्टकादी । एते पूर्वोक्ता वक्ष्यमाणाः पापिनस्तत्तत्साधारणनरकभोगानन्तरं वह्निज्वालनरकं यान्तीत्यर्थः । शिवधर्मोत्तरादिषु पापाधिक्यात्पापिनां क्रमेणानेकनरकपातोक्तेः ॥ २७ ॥ २८ ॥ दिवेति ॥ स्कन्दन्ति रेतोऽवकिरन्ति

विष्णुचित्तीयम् ।

अपर्वसु पर्वक्रियादिकर्ता पर्वकारी । पर्वसु तैलस्त्रीमांसादि भोगकारी वा ॥ २२ ॥ अगारदाहीति ॥ शाकुनिः पक्ष्यादिजीवः । निमित्तशकुनाजीवो वा ॥ २३ ॥ २४ ॥ रेतःपातादीति ॥ मर्यादाभेदिनः ग्रामादिसीमोल्लंघिनः । कुहकं शाठ्यम् । इन्द्रजालादि वा ॥ २५ ॥ असिपत्रवनमिति ॥ औरभ्रिको मेषाजीवी ॥ २६ ॥ यान्तीति ॥ अपाकोऽदाहमृत्पिण्डेष्टकादिगर्भं इन्धनचयः ॥ २७ ॥ २८ ॥

दत्तात्रेयीयम् ।

*सेकः । पर्वगामीति पाठे पर्वसु स्त्रीगामी ॥ २२ ॥ शाकुनिः पक्षिजीवी । शुभाशुभनिमित्तशकुनोप-*
जीवी वा । ग्रामयाजकः ग्रामार्थे यष्टा । सोमं सोमलतां । यागं वा ॥ २३ ॥ मधुहा मध्वानाशघातकः ॥ २४ ॥ मर्यादाभेदिनः ग्रामक्षेत्रादिसीमोल्लंघिनः । कृष्णे कृष्णाख्ये नरके । कुहकं परवञ्चनं इन्द्रजालादिकं वा आजीवो वृत्तिर्येषां ते ॥ २५ ॥ वृथा यज्ञोपयोगं विना । औरभ्रिकः मेषोपजीविनः । मृगव्याधाः मृगहिंसकाः ॥ २६ ॥ ये चाऽपाकेषु अपाकमृद्भाण्डादिषु । वह्निदः कुंभकारवृत्तिरित्यर्थः । पात्यते नीयते । पात्यन्त इति पाठे पूर्वोक्ता वक्ष्यमाणाश्च पापक्लेशेनात्र पात्यन्ते । अपाकेषु वह्निदाः अपाकोऽदाहमृद्भाण्डेष्टकादिगर्भइन्धनचयः ॥ २७ ॥ व्रतेषु लोपकः आरब्धचान्द्रायणादिव्रतत्यागी । स्वस्माच्याश्रमाद्विच्युतः ॥२८॥ स्कन्दन्ते शुक्रमवकिरन्ति पात्यन्ते । चशब्दात्पुत्रैरध्यापिताश्च पत्यन्ते धर्मेणेति

[ पा० ] १ [ श्री० पा० ] अङ्गारदाही. २ ग. रुधिरान्धे. ३ क. गुरुहा । घ. ङ. अ—ङ. मधुहा. ४ क. ग. घ. ज. ञ. भगर्यादनमताश्च मर्यादा । ङ. रेत पातादि. ५ ६ च. चापाकेषु ६ ङ. च. व्रतेज्यालोपको यश्च । [ द० पा० ] व्रतेषु लोपको यश्च.

एते चान्ये च नरकाः शतशोऽथ सहस्रशः ।
येषु दुष्कृतकर्माणः पच्यन्ते यातनागताः ॥३०॥
यथैव पापान्येतानि तथाऽन्यानि सहस्रशः ।
भुज्यन्ते तानि पुरुषैर्नरकान्तरगोचरैः ॥ ३१ ॥
वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः ।
कर्मणा मनसा वाचा निरयेषु पतन्ति ते ॥ ३२॥
अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः ।
देवाश्चाधोमुखान्सर्वानधः पश्यन्ति नारकान् ३३
स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ।
धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ३४

श्रीधरीयम् ।

॥ २९ ॥ ३० ॥ ३१ ॥ वर्णाश्रमेति ॥ वर्णाश्रमविरुद्धं नृत्यगीतादिव्यसनरूपं कर्म । निरयेषु तत्तन्नर-केषु ॥ ३२ ॥ नरकस्थानां दुःखातिशयं दर्शयितुं स्वर्गस्थदेवदर्शनं देवानां वैराग्यार्थं नारकदर्शनं चाह —अधःशिरोभिरिति ॥ ३३ ॥ पापिनां नरकभोगानन्तरं स्थावराद्युत्तरोत्तरमुत्कृष्टासु नानाविधयो-निषु जन्मक्रममाह—स्थावरा इति ॥ अब्जा मत्स्यादयः । एतेष्वेव पुण्यविशेषेण केचिन्मोक्षिणः

विष्णुचित्तीयम् ।

त्रिवेति ॥ स्कन्दन्ते शुक्रमयकिरन्ति । चशब्दात्पुत्रैरध्यापिताश्च पच्यन्ते क्रमेणेति शेषः । पातकिन-स्तत्तदुक्तं नरकं पूर्वं भुक्त्वा तच्छेषेण सर्वनरकान् पर्यायेण भुञ्जत इत्यर्थः ॥ २९ ॥ ३० ॥ ३१ । ॥ ३२ ॥ नारकिणां सुरिसनो देवान्दृष्ट्वा क्लेशोऽधिकः स्यादित्याह—अधःशिरोभिरिति ॥ देवाश्चेति ॥ ३३ ॥ नारकान् पश्यतां देवानामपि पुण्यक्षये पापान्नरके पतिष्याम इति नित्यं साशङ्कत्वात्स्वर्गे नातिसुखं स्यात् । स्वर्गोऽपि पातभीतस्येति हि वक्ष्यति । एवं पापिनोऽनुभूतनानाविधनरकाणां छेषेण तामसादिगुणसङ्करतारतम्येन नवधा भिन्नानि स्थावरादिजन्मानि यावन्मोक्षं क्रमेणारोहन्तीत्याह— स्थावरा इत्यादिश्लोकद्वयेन । स्थावरा इति ॥ अब्जाः यादांसि । धार्मिका मनुष्येष्वेव केचित् । मो-

दत्तात्रेयीयम् ।

शेषः ॥ २९ ॥ यथैवेति ॥ पापिनस्तत्पापानुरूपं नरकं पूर्वं भुक्त्वा तच्छेषेण सर्वान्नरकान् पर्यायेण भुञ्जत इत्यर्थः ॥ ३१ ॥ वर्णाश्रमविरुद्धं नृत्तगीतादिव्यसनरूपं कर्म । अत्र नरा इत्युक्त्या विरु-द्धकर्माचरणेऽपि देवानां निरयो नास्तीति सूचितं । तदुक्तं । "देवानां निरयो नास्ति समाचारे कथ-ञ्चन" इत्युक्तेः । "नियमेनोर्ध्वगन्तारो देवा मोक्षैकभागिनः" इति भाष्योक्तेश्च । तेषां नरकाभावं दर्शयति ॥ ३२ ॥ अधइति ॥ अधःशिरोभिः नारकैः देवाः दिवि दृश्यन्ते दिवि तिष्ठन्तः एव दृश्यन्ते । ते देवाश्चाधःस्थितानधोमुखान्सर्वान् नारकान्पश्यन्ति । ततश्च नारकैर्देवानां दिव्येव दृश्य-मानत्वात् तैश्च नारकाणां अध एव दृश्यमानत्वाच्च देवानां निरयो नास्तीति भावः ॥ ३३ ॥ एवं पुण्यप्राप्यत्वेन स्वर्गपातालादय उक्ताः । पापप्राप्यत्वेन नरका उक्ताः । इदानीं तद्भोगानन्तरं पापपुण्य-शेषतारतम्यात्प्राप्यजन्मभेदतारतम्यमाह—स्थावरा इत्यादिना । स्थावरादिपशुपर्यन्तो जन्मक्रमः पापशे-षप्राप्यः नरादिमोक्षपर्यन्तः पुण्यप्राप्यः । अब्जाः मत्स्यादयः । त्रिदशाः ज्ञानिनः । ज्ञानित्वप्राप्त्येन त्रि-

रत्नगर्भीयम् ।

पर्वैः शुद्धैः पुण्डं प्रश्नचतुष्टयम् । यावदप्रभोजी ॥ २९ ॥ पच्यन्ते क्लिश्यन्ते । याच्यन्त इति पाठे पापाधिक्यक्रमेण याच्यन्त इत्यर्थः । शिष्टधर्मादिषु तथैव दर्शनात् ॥ ३० ॥ नरकस्थानां दुःखातिशयं दर्शयितुं स्वर्गस्थदेवदर्शनम् देवानां च वैराग्यार्थं नरकस्थदर्शनमाह—अधःशिरोभिरिति ॥ तथाहोक्तम्—

[ पा० ] १ [ रत्न० पा० ] याच्यन्ते.

सहस्रभागप्रथमा द्वितीयोनुक्रमास्तथा । | सर्वे ह्येते महाभाग यावन्मुक्तिसमाश्रयाः ॥३५॥

श्रीधरीयम्।

मुमुक्षवो यथाक्रमं भवन्तीति शेषः। तेषां च पूर्वपूर्वबाहुल्यमुत्तरोत्तरास्पत्वं चाह—सहस्रेति॥ द्वितीयानु-क्रमाः द्वितीयोऽनुक्रम उद्देशो येषां । द्वितीयस्थानेऽनुक्रान्ता ये कृमयः ते सहस्रभागप्रथमाः सहस्राणां भागाः प्रथमाः प्रथमं निर्दिष्टाः येषां ते । कृमिभ्यः सहस्रगुणमधिकाः स्थावरा न तु सहस्रतमभागाः कृमय इत्यर्थः । द्वितीयानुक्रमादिति पञ्चम्यन्तपाठेऽपि द्वितीयस्थाने क्रान्तात् कृमिवर्गात्सहस्रगुणाः स्थावरा इत्येवार्थः । तथा सर्वे ह्येत इति । यथा स्थावरस्थानान्तर्निर्देष्टव्याः सहस्रगुणमधिकाः । एवं पश्वादिष्वपि द्रष्टव्यम् । मुक्तिं सम्यगाश्रयन्त इति मुक्तिसमाश्रयाः मुमुक्षवो ज्ञाननिष्ठाः । तत्पर्यन्तमेव पूर्वपूर्वादुत्तरोत्तरन्यूनत्वेन जन्मक्रमः । ततः परं मुक्तिः । एतच्च संसारे भूतजीवबाहुल्यकथनं मोक्षस्य दुर्लभतासूचनार्थम् । अयं च नवधा निर्दिष्टो जन्मक्रमः प्रायिक एव । तदुक्तमादित्यपुराणे—"व्यु-त्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् । विचित्रा गतयः पुंसां कर्मणां गुरुलाघवैः ॥" इति ॥ ३५ ॥

विष्णुचित्तीयम्।

क्षिणः मर्त्यलोकस्थाः ॥ ३४ ॥ सहस्रेति ॥ सहस्रभागप्रथमाः प्राथम्यमुत्तरोत्तरापेक्षया सहस्रतमभा-गीभूताः सहस्रभागास्त एव प्रथमाः । उत्तरोत्तरापेक्षया द्वितीयत्वमुत्तरत्वं । पूर्वेपूर्वे सर्वे एते स्थावरादाः सहस्रतमभागाः सन्तः उत्तरोत्तरं द्वितीयानुक्रमाः स्युः । स्थावरादिपूर्वपूर्वजातीया द्वितीयमुत्तरोत्तरं ज-न्मानुक्रामन्ति । एतदुक्तं भवति—पूर्वपूर्वजन्मसु स्थितेषु जन्तुषु कतिपयेषूत्तरोत्तरं जन्म विन्दतीति । तथाऽऽह वायुः "यः सहस्रतमो भागस्स्थावराणां भवेदिह । पार्थिवाः कृमयस्तावत्संस्वेदाश्च भवन्ति ये ॥ संस्वेदजानां भागेन साहस्रेण हि संमिताः ।" औदका जन्तव इत्युपक्रम्य "यः सहस्रतमो भागो भवेत्तु द्विपदामिह । धार्मिकास्ते भुवि ज्ञेया पुनर्भागेन धार्मिकाः ॥ साहस्रेणैव भागेन धार्मिकेभ्यो दिवं गताः । यः सहस्रतमो भागो धार्मिकाणां भवेद्दिवि ॥ सम्मितास्तेन भागेन मोक्षिणस्तावदेव हि । एवं सुदुर्लभाः शान्ता धार्मिकाः स्वर्गवासिनः" इति । अयं च क्रमः प्रायिकः "तिर्यग्योनिगतः क-श्चिन्मनुष्यते नारकी परः । अनुग्रहप्रकारस्य क्रमोऽयं न विवक्षितः" इति वायूक्तेः । "व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् । विचित्रा गतयः पुंसां कर्मणां गुरुलाघवैः" इत्यादित्यपुराणोक्तेश्च । इदं च स्थावरादिश्लोकद्वयं मोक्षदौर्लभ्यप्रतिपादनपरं । न तु जीवैयत्याक्रमपरं । स्वर्गनरकादिस्थानां जीवानामा-

दत्तात्रेयीयम्।

दयादयः प्रयुक्तः । तथाक्रममनुभूतनरका अनुभूतस्वर्गाश्च भवन्तीति शेषः ॥ ३४ ॥ तेषां च पूर्वपूर्व-बाहुल्यं उत्तरोत्तरास्पत्वं चाह—सहस्रेति ॥ द्वितीयानुक्रमाः द्वितीयोऽनुक्रम उद्देशो येषां ते । द्वितीय-स्थानेऽनुक्रान्ता ये कृमयस्ते सहस्रभागप्रथमाः सहस्राणां भागाः सहस्रगुणाः प्रथमाः प्रथमं निर्दिष्टाः स्थावरा येषां ते । तथा कृमिभ्यः सहस्रगुणमधिकाः स्थावराः नतुसहस्रतमभागाः कृमयइत्यर्थः । द्विती-यानुक्रमादिति क्वचित्पाठः । तत्रद्वितीयस्थानेऽनुक्रान्तात्कृमिवर्गात्सहस्रगुणाःस्थावरा इत्यर्थः । याव-न्मुक्तिसमाश्रयाः मोक्षपर्यन्ताः । अस्मादयस्तथा कृमिवर्गबहुत्वोत्तरापेक्षया सहस्रभागप्रथमाः । यथा

रंगरामीयम्।

सलिलतटासन्नानभवाद्भुतो दृश्यते यथा छाया तद्वत्स्थितिसुराणां मन्यन्ते तेऽप्यधो विबुधानिति । असुराणां नारकिणां तथा वायुः "पश्यन्ति नारकान्सर्वान्यथादेवा अधोमुखान् । नारकाश्च तथा देवा-

[ पा० ] १ म. भाग्यवशात् । ठ. भाग. प्रथम । ढ. भागाः प्रथमा . २ ग—ढ. द्वितीयानुक्रमात्.

यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ।
पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥ ३६ ॥
पापानामनुरूपाणि प्रायश्चित्तानि यद्यथा ।
तथा तथैव संस्मृत्य प्रोक्तानि परमर्षिभिः ३७
पापे गुरूणि गुरूणि स्वल्पान्यल्पे च तद्विदः ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायंभुवादयः ३८ ॥

चित्सुखीयम् ।

॥ २९ ॥ अधःशिरोभिरित्यन्योन्यसुखदुःखातिशयदर्शनं सूच्यते ॥ ३३ ॥ कथं प्रोक्तानीत्यत आह—

श्रीधरीयम् ।

तदेवं नारकाः सर्वे तद्भोगानन्तरं स्थावरादिक्रमेण पापक्षयात्पुण्यवशाच्च कदाचित्त्रिदशा भवन्तीत्युक्तम् । इदानीं त्रिदशा अपि सर्वे पुण्यक्षयात्पापवशाच्च कदाचिन्नारका भवन्तीति वैराग्यार्थमाह—यावन्त इति ॥ नरकौकसो भवन्तीति शेषः । इदानीं पापिनो नरकपरिहारोपायमाह—पापकृदिति । प्रायश्चित्तं यो न करोति स एव नरकं याति । न तु कृतप्रायश्चित्तः ॥ ३६ ॥ तच्च प्रायश्चित्तं कर्मभक्तिज्ञानरूपेण त्रिविधं । तत्र पापतारतम्येन कर्मात्मकप्रायश्चित्ततारतम्यमाह—पापानामिति ॥ यत्पापं महदल्पं वा यथा ज्ञात्वा वा पापमज्ञात्वा वा पापं कृतं तथा तदेव तदनुरूपाणि प्रायश्चित्तानि वेदार्थं संस्मृत्य प्रो-

विष्णुचित्तीयम् ।

मन्त्यात् 'यावन्मुक्तिसमाश्रयाः' इति । मुक्तास्तु द्वितीयानुक्रमा न भवन्तीत्यर्थः ॥ ३५ ॥ कृतादिकाले तद्वर्गाधिक्येऽपि स्वर्गिनारकिणोऽप्यनन्ता इत्याह यावन्त इति ॥ ३६ ॥ पापानां मध्ये यस्य यथा प्रायश्चित्तं श्रुतावुक्तं तस्य तथाऽनुस्मृत्य प्रायश्चित्तान्युक्तानीत्याह—पापानामिति ॥ ३७ ॥ पाप इति ॥ गुरूणिप्रायश्चित्तानि साक्षात्कर्तुः प्राणान्तिकादीनि । गुरुणि पापे मतिपूर्वकमत्यन्ताभ्यासे स्वल्पानि कृच्छ्र-प्रायश्चित्तादीनि । अल्पे सकृदज्ञानकृताप्रकाशानुमतिमात्रादिके । तत्र अज्ञानकृते ब्रह्महत्यादिमहापातके द्वादशवार्षिकं । ज्ञानकृते तद्द्विगुणम्, आवृत्तौ तद्द्विगुणम्, अत्यन्तावृत्तौ तद्द्विगुणमिति । साक्षात्कर्तुः अनुग्राहकस्यैतत्पादोनं, प्रयोजकस्यार्धम्, अनुमन्तुः सार्धपादः, प्रोत्साहकादीनां च ततोऽवरमित्यादि-क्रमः । तत्र च महापातकानामज्ञानकृतानां द्वादशवार्षिकं कर्तुः शोधकं संव्यवहार्यत्वकरं च । मत्या कृतानां तु रघुयुक्तं प्राणान्तिकं व्यवहार्यत्वकरं नरकहरं च । द्वादशवार्षिकं तु द्विगुणमपि कामकृतानां

दत्तात्रेयीयम् ।

कृमयः स्थावरसहस्रांशाः । एवमब्जादिरुत्तरोत्तरः पूर्वपूर्वसहस्रांश इत्यर्थः । पूर्वपूर्वापेक्षयोत्तरोत्तरस्य सहस्रांशत्वेनाल्पत्वोक्त्या दुर्लभत्वप्रदर्शनेनोत्तरोत्तरजन्मनः श्रमेण श्रैष्ठ्यं दर्शितं ॥ ३५ ॥ नारकिणः स्वर्गिणश्च यथाक्रमं स्थावराद्या मनुष्याद्याश्च भवन्तीत्युक्तं । तत्र स्थावरादीनां सर्वेषामनन्तत्वाविशेषेऽपि उत्तरोत्तरजन्मापेक्षया पूर्वपूर्वजन्मनः सहस्रभागाधिकत्वमुक्तं । तथा स्वर्गिणो नारकिणामनन्तत्वाविशे-षेऽपि न्यूनाधिकभावः क्रियेत्याह—यावन्त इति ॥ पापी वा नरकं भुङ्क्ते इत्युक्तस्यापवादमाह—पाप-कृदिति ॥ पापिनोऽपि कृतप्रायश्चित्तस्य नरकाभाव इति भावः ॥ ३६ ॥ प्रायश्चित्तपराङ्मुख इत्युक्तं । तच्च प्रायश्चित्तं तत्पापानुरूपमेव तत्तत्पापनिवर्तकमिति दर्शयितुमाह—पापानामित्यादिना ॥ पापानां मध्ये यत्पापं महदल्पं वा यथा ज्ञानादज्ञानाद्वा कृतं तस्य तथातथाऽनुरूपाणि येन प्रकारेणानुरूपाणि प्रायश्चित्तानि संस्मृत्य वेदार्थं संस्मृत्य परमर्षिभिःप्रोक्तानि ॥ ३७ ॥ तदेव स्पष्टयति—पाप इति ॥

रत्नगर्भीयम् ।

न्सर्वान्पश्यन्त्यधोमुखान्" ॥ इति । अधःस्थितानधोमुखान्देवान्नारकांश्च परस्परं पश्यन्ति जानन्ती-त्यर्थः । चिरनिरन्तरजन्माभ्याससंस्कारेण पृथिव्याकृष्टशक्तिविशेषेणाथ गृहतलसञ्चारिणां पिपीलिका-

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥३९॥

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥४०॥

श्रीधरीयम् ।

फलानि ॥ ३७ ॥ अनुरूपत्वमाह—पाप इति ॥ ३८ ॥ कर्ममयैः प्रायश्चित्तैर्निःशेषं सर्वपापक्षया शक्यत्वात्सर्वोत्कृष्टं सुकरं च श्रीकृष्णभक्तिरूपं सर्वप्रायश्चित्तमाह—प्रायश्चित्तानी । कृच्छ्रादीनि । कर्माणि च दानपूजाजपादीनि । तदात्मकानि यानि प्रायश्चित्तानि तेभ्यः स्यानुस्मरणं परं श्रेष्ठम् ॥ ३९ ॥ श्रेष्ठत्वमेवाह—कृत इति ॥ पापे कृते यस्य पुंसोऽनुक्षिपद्भिरधीनैस्तथा- जायते तस्यैव मन्वाद्युक्तानां तपोदानादीनां मध्ये एकं किञ्चित्पापानुरूपं प्रायश्चित्तम् । कृतापेत्यखिलवादि-

विष्णुचित्तीयम् ।

पातकानां कर्तुः व्यवहार्यत्वकरं । न तु नरकहरम् । एवमादिपापस्य प्रायश्चित्तस्य च गुरुलघुत्वादि तारतम्यविद्भिरुदितः ॥ ३८ ॥ अथ मन्वादिभिरुक्तानां प्रायश्चित्तानां तत्तत्पापमात्रनिवर्तकत्वात् यः सकलपापं कुर्यात् "कुर्यादेनस्ततोऽपरम्" इति श्रुत्युक्तयाः पुनस्तत्पातकप्रवृत्तेरनिवारकत्वाच्च तान्युपेक्ष्य सर्वेषामंहसां महीयसामल्पीयसां च देशकालाद्यविशेषेणात्यन्तोच्छेदकत्वादत एव पुनः पापप्रवृत्तेर्निवारकत्वान्मोक्षादिफलप्रदत्वाच्च तेभ्योऽशेषेभ्यो निखिलेभ्यः परं प्रकृष्टं प्रायश्चित्तविशेषं सर्वोपनिषच्छ्रुतिस्मृतिपुराणसम्मतमाह—प्रायश्चित्तानीति ॥ तप उपवासादि । कर्म यज्ञदानादि । अनुस्मरणम् अनुष्ठानार्थे स्वस्य शेषत्वानुसन्धानपूर्वकं स्मरणं यथोक्तम् "आत्मदास्यं हरेः स्वाम्यं स्वभावं [स्वरूपं] च सदा स्मर" इति । परं—"क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता । तथाप्येषीकातूलमग्नौ प्रोतं प्रदूयेत" इत्यादि । इदमनुस्मरणं कीर्तनस्याप्युपलक्षणम् । अनन्तरं "क जपो वासुदेवेति" कीर्तनस्य प्रशंसनात् ॥ ३९ ॥ ननु भगवतः स्मरणकीर्तनयोः "पापक्षयश्च भवति स्मरतां तमहर्निशम्" इत्यादिवचनेषु आवृत्तयोः पापक्षयहेतुत्वं गम्यते । "अवशेनापि यन्नाम्नि" "सकृत्स्मृतोऽपि" इत्यादिषु स्मरणकीर्तनयोः सकृत्कृतयोरेव तत्र कथमविरोध इत्याशंक्याह—कृते पाप इति ॥ एवं सकृत्कृतं कृतानां सर्वांहसां सकृत्कृतं स्मरणादि करिष्यमाणानां तु आवर्त्यमानं पूर्वांहसां संस्कारनाशद्वारेण पुनरुत्पत्ति-

दत्तात्रेयीयम् ।

गुरूणि पापे गुरूणि अल्पे स्वल्पानि प्रायश्चित्तानि । तद्विदो वेदोक्तप्रायश्चित्तविदः स्वायंभुवादयः स्वायंभुवमन्वादयः जगुः स्फुटमूचुः ॥ ३८ ॥ मन्वाद्युक्तानां तपआदिप्रायश्चित्तानां तत्तत्पापपरिहारकत्वात् । "तपसा ब्रह्मचर्येणेत्यारभ्य वेणुगुल्ममिवानलः" इत्यन्तेन भागवते समूलपापनाशकत्वाभावस्योक्तत्वाच्च । तदपेक्षया "केचित्केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः" इति भागवतानुसारेण सर्वपापानां समूलनाशकत्वात् सर्वपापप्रायश्चित्तार्थं श्रीकृष्णानुस्मरणमेव परमित्याह—प्रायश्चित्तानीति ॥ तपांसि कृच्छ्रोपवासादीनि कर्माणि तीर्थयात्राहोमादीनि तदात्मकानि यानि प्रायश्चित्तानि तेषामशेषाणां तेभ्यः सर्वेभ्यः श्रीकृष्णानुस्मरणं परं श्रेष्ठं ॥ ३९ ॥ परत्वमेवोपपादयति—कृत इति ॥ महति अल्पे वा पापे कृते पुंसो वाऽनुतापः प्रजायते प्रकर्षेण जायते तस्य पुंसः हरिस्मरणमेकमेव तत्कृतसर्वपापानां प्रायश्चित्तं । ननु मन्वाद्युक्ततपःकर्मादिवदेकैकपापविशे-

रत्नगर्भीयम् ।

दीनामिव नारकिणां पतनाभावः । अतएव यातनाभावे हेतुत्वेन "आकृष्टिशतिर्महती पृथिव्याः" इति ज्यो-

| | Price. Rs. | As. | Postage. Rs. | As. |
|---|---|---|---|---|
| Saptas'ati (Chaṇḍî pâṭha) with Devî sûkta and the three Rahasyas (Large type, silk binding) ... | 0 | 11 | 0 | 2½ |
| Do. with Prayogas (Small type, silk binding) ... | 0 | 5 | 0 | 1 |
| Do. Do. (Large type, Pothi form) ... | 0 | 8 | 0 | 2¼ |
| Do Do (Medium type, paper binding) ... | 0 | 5½ | 0 | 1¼ |
| Do. Do ( " silk binding) ... | 0 | 7 | 0 | 1 |
| Do Do. (Smallest type, smallest form, silk binding) ... | 0 | 2½ | 0 | ½ |
| arva-pûjâ ... | 0 | 1 | 0 | ½ |
| iva-sahasra-nâmâvali ... | 0 | 1½ | 0 | ½ |
| ûrya-sahasra nâmâvali ... | 0 | 1½ | 0 | ½ |
| rikâla Sandhyâ Ṛigvedîyâ... | 0 | ¾ | 0 | ½ |
| Do Hiranyakes'îyâ ... | 0 | ¾ | 0 | ½ |
| Do Yajurvedîyâ ... | 0 | ¾ | 0 | ½ |
| risuparṇa ... | 0 | ½ | 0 | ½ |
| Jtsarjanopâkaraṇa vidhi (Ṛigvedi S'râvaṇî) ... | 0 | 2 | 0 | ½ |
| Vais vadeva (With Balibaraṇa Maṇḍala) ... | 0 | ¾ | 0 | ½ |
| Vishnu sahasra-nâmâvali ... | 0 | 1½ | 0 | ½ |
| Vivâha-paddhati (Yajurvedîyâ) ... | 0 | 4 | 0 | 1 |

## PURANIC & HISTORICAL.

| | Rs. | As. | Rs. | As. |
|---|---|---|---|---|
| Adhyâtma-râmâyaṇa *(Silk binding)* ... | 0 | 10 | 0 | 1½ |
| Bhâgavata (Text) (small type, Silk binding) ... | 1 | 4 | 0 | 3½ |
| Bhâgavata (Small type) (10th Skandha) with the *commentary* (Toshanîsâra) which is an abridgement of the Brihat-toshaṇi by Kâsinâthopadhyâya, author of *Dharmasindhu*. Moreover the meanings of the several Maxims have been fully explained by the help of several commentaries so as to make the work in every way useful to the preacher ... | 3 | 0 | 0 | 7 |

### BHÂGAVATA

WITH THE COMMENTARY

**CHURNIKA**

| | Rs. | As. | Rs. | As. |
|---|---|---|---|---|
| (Glaze-paper) ... | 6 | 0 | 1 | 0 |
| (Rough paper) ... | 5 | 0 | 1 | 0 |

### BHÂGAVATA

WITH THE COMMENTARY

**(SHRÎDHARÎ) of SHRÎDHARA**

**Second Edition.**

The peculiarity of the additional notes is that the hidden meanings of the different narrations have been brought out and fully explained by them with the help of other commentaries, and the different readings too have been given, at the head of each of the chapters an abstract has been given to facilitate ready reference and pictures have been embodied.

| | Rs. | As. | Rs. | As. |
|---|---|---|---|---|
| (Glaze-paper) ... | 9 | 0 | 1 | 8 |
| (Rough paper) ... | 7 | 8 | 1 | 8 |
| Garuḍa purâṇa, with commentary ... | 0 | 10 | 0 | 1½ |
| Mûla râmâyaṇa ... | 0 | 1 | 0 | ½ |
| Râmâyaṇa of Vâlmîki, with the commentary (Tilakâ) of Râma. (Book-form)... | 7 | 0 | 0 | 14 |
| Do. Text only. (Silk binding) ... | 3 | 0 | 0 | 8 |
| Do. Sundarakâṇḍa, Text only. (Silkbinding)... | 0 | 12 | 0 | 2 |
| Satya Nârâyaṇa Kathâ (Text only) ... | 0 | 1 | 0 | ½ |
| Vidura-niti with notes ... | 0 | 6 | 0 | ½ |
| Vinâyaka Mâhâtmya (text only)... | 0 | 6 | 0 | 2 |